[ अ० २ ब्रा० २ ] [ १ प्र० ६ ब्रा० ]



।।इत्यग्न्याधानम्।।

## अथ पुनराधानम्

[ अ० २ ब्रा० ३ ] [ २ प्र० १ ब्रा० ]

प्रकारान्तरेण तन्मध्यन्दिनाधानप्रशंसनम्।

पुनराधित्सितस्याग्नेः कुशैराधानविधानम्।

सप्रयोजनं व्रीहियवमययोरपूपयोरर्कपर्णद्वयसंगृहीतयोर्गार्हपत्याहवनीयायतनयोर्निधानविधानम्।

पवमानेष्टिस्थाने पञ्चकपालाग्नेयीष्टिविधानम्।

अस्यां पञ्चकपालेष्टौ सर्वस्याप्याज्यभागादेर्यागस्याग्निदेवत्यत्वविधानम्।

अस्या इष्टेः प्रागुत्तमादनुयाजादुपांशुत्वविधानम्।

प्रयाजादिषु सर्वाग्नेयकरणत्वकथनम्।

प्रयाजयाज्यास्वपि क्रमेणाग्निविभक्तियोजनम्।

पञ्चमप्रयाजानुयाजयोर्विशेषविधिः।

प्रथमाज्यभागे बुधिधातुयुक्तामग्निदैवत्यां पुरोऽनुवाक्यां प्रदर्श्य द्वितीयाज्यभागेऽग्निः पवमानोऽग्निरिन्दुमान्वेति देवताविकल्पपुरःसरं तत्तद्दैवत्ययाज्यानुवाक्याप्रदर्शनम्।

प्रधानस्विष्टकृतोरग्निसम्बन्धप्रदर्शनम्।

द्वितीयेऽनुयाजेऽग्निविभक्तियोजनम्।

प्रयाजानुयाजेषूक्तविभक्तीनां सम्भूय प्रशंसनम्।

तासामेव पुनरक्षरसंख्यामुपजीव्य प्रशंसनम्।

पुनराधेयस्य दक्षिणाविधानम्। (खं० १-२८)।

।।इति पुनराधेयम्।।

## अथाग्निहोत्रम्

[अ० २ ब्रा० ४] [२ प्र० २ ब्रा०]

**चतुर्थं ब्राह्मणम्** १०५-११८

अग्निहोत्रब्राह्मणम्।

सायम्प्रातरनुष्ठेयाग्निहोत्रविधायिन्याख्यायिका।

तदवज्योतनविधानं च।

सायम्प्रातरग्निहोत्राहुतीनां चतुरुन्नयनादिधर्मविधानम्।

होमोपमार्जनप्राशनोन्नयनानां संख्यां समुच्चित्य प्रशंसतं तेषामुपयोगकथनं च।

अग्निहोत्रस्य याज्ञवल्क्याभिमतपाकयज्ञत्वविधानम्।

अग्निहोत्रे पूर्वाहुतेः प्रधानदेवताप्रीत्याधायकत्वम्।

द्वितीयाहुतेः स्विष्टकृत्स्थानीयत्वकथनम्।

तयोराहुत्योर्भूतभविष्यदादिद्वन्द्वस्यात्मप्रजारूपत्वाद्धानद्धा-रूपत्वप्रदर्शनं समन्त्रकामन्त्रकत्वधर्मविधानं च।

सायम्प्रातर्होमयोर्ब्रह्मवर्चसकामनया मंत्रविशेषयोर्विधानम्।

अग्निर्ज्योतिः सूर्यो ज्योतिरित्यनयोर्होममंत्रयोःप्रजनन-रूपसद्भावात्ताभ्यां होमे प्रजासम्पत्तिकथनम्।

तच्चोदितहोमपक्षे सम्भवतीति उदितहोमपक्षाश्रयणीयत्व-माशंक्य दोषान्तरमुद्भाव्य च पक्षान्तराश्रयेण सजूर्देवेनेत्यनयोर्मन्त्रयोर्विधानम्।

हुतशिष्टस्थालीस्थपयसो ब्राह्मणानां पानं विधातुमग्नि-होत्रहोमस्याध्वर्योस्तदन्यत्वविधानं चेत्यादि।

**(खं० १-३९)।**

।।इत्यग्निहोत्रहोमविधिः।।

## अथोपस्थानम्

**[ अ० ३ ब्रा० २ ] [ २ प्र० ५ ब्रा० ]**

**द्वितीयं ब्राह्मणम्** **१४५-१५६**

तत्राग्नीनां दैवतरूपतां प्रतिपाद्य स्वरूपप्रतिपादनम्।

एतद्वेदितुः फलकथनं च।

तेषामग्नीनामुपस्थानकथनम्।

अन्वाहार्यपचनस्याहरहर्दक्षिणात आत्मपाम्।

उपवसथ एवाहरणं वा नवावसथे वाऽऽहरणमिति पक्षत्रयविधानम्।

तत्रोत्तरपक्षयोः फलकथनं।

आहवनीयाग्नेरवस्थाविशेषेण रुद्रवरुणेन्द्रादिदेवता-रूपतामभिधाय तत्फलाय काम्यानां होमकाला-नामभिधानम्।

एतेषां रुद्राद्यवस्थाविशेषाणां मध्ये प्रत्यवस्थाविशेषं नैरन्तर्येण संवत्सरपर्यन्तानुष्ठाननियमविधानमन्यथा सदृष्टान्तं दोषोद्भावनम्।

संवत्सरपर्यन्तं नैरन्तर्येणैकं पक्षं कुर्वतो यष्टुरुद्दिष्टफलप्राप्तिकथनम्।

सार्थवादं पूर्वोत्तराहुतिद्रव्ययोरवशिष्टस्य चोत्तरोत्तरं भूयस्त्वं विधाय तदुपपादनं चेत्यादि। (खं० १-१८)।

**[ अ० ३ ब्रा० ३ ] [ २ प्र० ६ ब्रा० ]**



गार्हपत्याऽऽहवनीययोरग्न्योरुपस्थानं विधातुं प्रागग्न्याधानेन जनितस्याग्निहोत्राधिकरणस्याग्नेः भरणरूपेण स्तवनम्।

भरणात्प्राक्तदुद्वासननिषेधकथनम्।

अग्निहोत्रस्यामृतत्वप्राप्तिसाधनत्वं वक्तुं सूर्यस्य मृत्यु-रूपताप्रतिपादनम्।

अग्निहोत्रे तस्य मृत्योरतिमुक्तिमभिधाय तद्द्वारा-इतरयज्ञेष्वप्यतिमुक्तिः सिद्धेति दर्शनम्।

मृत्योरतिमुक्तिरहोरात्राभ्यामपि यजमानेन ज्ञातव्येति सदृष्टान्तं प्रतिपादनम्।

होमार्थमन्त्रागमनं विधाय तत्प्रशंसनम्।

अग्निहोत्रस्य नौरूपेण स्तवनमुत्तरतः प्रवेशविधानं च।

अग्निहोत्रस्य चित्याग्निसम्पत्त्या स्तवनम्।

चित्याग्नेः संवत्सररूपत्त्वात्तावत्कालसाध्यस्याग्निहोत्रस्य संवत्सरसम्पत्तेरुपपादनम्।

अग्निहोत्रस्य महदुक्थसम्पत्त्या स्तवनं चेति। (खं० १-२०)।

**[ अ० ३ ब्रा० ४ ] [ ३ प्र० १ ब्रा० ]**

**चतुर्थ ब्राह्मणम्** **१७०-२००**

साख्यायिकं सायङ्कालीनाग्न्युपस्थानविधानम्।

तत्रानुपस्थानोपस्थानपक्षयोः सकारणं पूर्वोत्तरपक्षाभ्यां प्रतिपादनम्।

उपस्थानसाधनभूतायाः प्रथमाया ऋचो लिङ्गविशेषमुपन्यस्य प्रशंसनम्।

**अथ बृहदुपस्थानम्**

उपस्थानसाधनभूतानां षण्णामृचां तात्पर्याभिधानम्।

तत्र प्रथमोत्तमयोर्लिङ्गविशेषमुपजीव्य स्तवनं त्रिर्जपविधानपूर्वकं प्रशंसनं च।

दोषोद्भावनतत्परिहारपुरःसरं 'तनूपा अग्नेऽसि' इत्यादिमन्त्रैराहवनीयोपस्थानविधानम्।

सधर्मकमुक्तोपस्थानमंत्रतात्पर्याभिधानम्।

तत्र 'चित्रावसो' इत्यादिमंत्रस्य त्रिर्जपविधानम्।

उक्तमंत्रजपप्रयोजनाख्यापकपुरावृत्तकथनम्।

प्रकृताग्न्युपस्थानस्याभिप्रायोपवर्णनम्।

अग्निहोत्रहोमधेनोः समंत्रकमुपगमनमुपस्पर्शनं च विधाय तत्प्रशंसनम्।

गार्हपत्योपस्थानविधानम्।

एतदुपस्थानमंत्राणां तात्पर्याभिधानम्।

आहवनीयगार्हपत्योपस्थानयोः पशुपुरुषयोः प्राप्तिहेतुत्व-कथनम्।

समंत्रकस्य गोसमीपगमनस्य तदुपस्पर्शनस्य च विधानम्।

प्रयोजनसहितः सोमानमित्यस्य त्रिचस्य महित्रीणामित्यस्य त्रिचस्य कदाचनेत्यैन्द्र्यास्तत्सवितुरिति सावित्र्याः परि ते दूडभ इत्याग्नेय्याश्चर्चो जपविधिस्तत्राग्नेय्यास्त्रिर्जपविधिश्च।

दर्शपूर्णमासवदत्रापि पुत्रनामानुध्यानं चेत्यादि। **(खं० १-४१)।**

**।।इति बृहदुपस्थानम्।।**

**।।इति तृतीयोऽध्यायः।।**

●

## अथ द्वितीयकाण्डे चतुर्थोऽध्यायः

### तत्र क्षुल्लकोपस्थानम्

**[ अ० ४ ब्रा० १ ] [ ३ प्र० ३ ब्रा० ]**



समंत्रकमाहवनीयस्य लघूपस्थानविधानम्।

बृहदुपस्थानेन सहास्य समानकार्यकारित्वाद्विकल्पकथनम्।

प्रवत्स्यतो यजमानस्य समंत्रकं गार्हपत्याहवनीययोरुपस्थानम्।

प्रवासादागतोपस्थानस्य प्रवत्स्यदुपस्थानवैपरीत्यप्रदर्शनम्।

तत्र गार्हपत्याहवनीयोपस्थानयोरन्तराऽऽहवनीयसमिदाधानविधानम्।

प्रवत्स्यदागतोपस्थानयोः सोपपत्तिकममंत्रकपक्षकथनम्।
प्रवासादागतस्य यजमानस्य गृह विषयकं कर्तव्यविधानं चेत्यादि। **(खं० १-१४)**।

।।इत्यग्निहोत्रविधिः।।

## अथ पिण्डपितृयज्ञः

**[ अ० ४ ब्रा० २ ] [ ३ प्र० ४ ब्रा० ]**

**द्वितीयं ब्राह्मणम्** २११-२३२

तत्र प्रतिमासममायां पिण्डपितृयज्ञस्य कर्तव्यताविधायिनी आख्यायिका।

पिण्डपितृयज्ञविधिः, तदर्थं सोपपत्तिकमराह्णकाल-विधानम्। हविर्ग्रहणाद्यग्नौकरणहोमान्ता प्रधानात्पूर्वतने तिकर्तव्यता।

प्राच्योदीच्यधर्मसहितं प्रधानभूतं पितृपितामह-प्रपितामहेभ्यः पिण्डदानविधानम्।

नीविविस्रंसनपूर्वकं नमस्करणविधानं तन्मंत्रशेषव्याख्यानं च।

पिण्डशेषावघ्राणादिप्रतिपत्तिकर्मविधानं चेत्यादि। **(खं० १-२४)**।

।।इति पिण्डपितृयज्ञः।।

## अथाग्रयणेष्टिः

**[ अ० ४ ब्रा० ३ ] [ ३ प्र० ५ ब्रा० ]**

**तृतीयं ब्राह्मणम्** २३३-२४५

तत्र पूर्वं–आग्रयणेष्टेः कहोलमतेन प्रयोजनं प्रदर्श्य याज्ञवल्क्यमतेन प्रयोजनं दर्शयितुमितिहासः।

।।इत्याग्रयणेष्टिः।।

## अथ वसिष्ठापरनामको दाक्षायणयज्ञः

**[ अ० ४ ब्रा० ४ ] [ ३ प्र० ६ ब्रा० ]**

पौर्णमास्यां द्वौ पुरोडाशावाग्नेयाग्नीषोमीयौ अमावास्यायामपि द्वावाग्नेयैन्द्राग्नो च तयोः पूर्वोत्तरेद्युर्यथाक्रममेकैकशोऽनुष्ठानकथनम्।

तत्र पूर्वस्यां पौर्णमास्यामनुष्ठेयस्य यागस्य विधानपूर्वकं प्रशंसनम्।

परस्मिन्नहनि यागद्वयं विधाय तत्प्रशंसनम्।

अमावास्यायामपि पूर्वेद्युः कर्तव्यविधानम्।

परेद्युरनुष्ठेयं यागद्वयं विधाय तत्प्रशंसनम्।

दाक्षायणस्य सोमयागरूपत्वप्रतिपादनाय तत्रानुष्ठेयेषु यागेषु सोमयागीयसवनत्रयादिसम्पत्तेरुपपादनम्।

दाक्षायणयज्ञीययागानां प्रशंसार्थमर्थवादाः।

पयस्यावाजिनयोर्मिथुनसम्पत्त्यर्थत्वोक्त्या प्रशंसनपूर्वकं वाजिनयागस्य विधानं तत्कालविधानं च।

हुतशिष्टेन वाजिनेन दिग्व्याघारणविधानम्।

वाजिनशेषस्य भक्षणप्रकारकथनं चेत्यादि। (खं० १-२५)।

।।इति दाक्षायणयज्ञः।।

।।इति चतुर्थोऽध्यायः।।

●

## अथ द्वितीयकाण्डे पञ्चमोऽध्यायः

### चातुर्मास्ययागः

### तत्र प्रथमं वैश्वदेव पर्व

[ अ० ५ ब्रा० १ ] [ ४ प्र० २ ब्रा० ]

**प्रथमं ब्राह्मणम्** २६७-२८७

तत्र वैश्वदेवस्य प्रजासृष्टिहेतुत्वप्रतिपादिन्याख्यायिका।

तस्मां च प्रजापतिसकाशात् प्रजासृष्टिदर्शनम्।

वैश्वदेविकाग्नेयादिहविष्पञ्चकस्यात्रापि विधानम्।

षष्ठस्यैन्द्राग्नयागस्य विधानम्।

वेदिद्वये क्रमाद्वारुण्या मारुत्याश्च पयस्यायाः देवताविधानपूर्वकं सधर्मकं सार्थवादं विधानम्।

अन्तिमस्य काययागस्य विधानम्।

पूर्वेद्युः करम्भपात्रनिर्माणविधानम्।

तच्छेषाद्यवपिष्टाद्वारुणस्य मेषस्य मारुत्या मेष्याश्च सधर्मकं सार्थवादं निर्माणविधानम्।

हविषामासादनविधानम्।

एतदुत्तरमग्निमन्थन-विधानम्।

सार्थवादं सप्रकारकं पत्नीकर्तृककरम्भपात्रहोमस्य विधानम्।

ततोऽग्निसम्मार्जनप्रभृत्याज्यभागान्तं कर्मजातमध्वर्युप्रति-प्रस्थातृभ्यां प्रकृतिवदनुष्ठेयमिति दर्शनम्।

तत्राश्रावणे होतृप्रवरणे प्रयाजाज्यभागप्रधानानुयाजादि-प्रैषसम्प्रदाने चाध्वर्योरेव कर्तृत्वविधानम्।

प्रतिप्रस्थातुः कृतानुकरत्वविधानम्।

पाणावेव स्रुचौ कृत्वा प्रतिप्रस्थातर्युपविष्टे सत्यध्वर्योरेवाग्नेयाद्यैन्द्राग्नान्तैः षड्भिर्हविर्भिः प्रचरणविधानम्।

ततोऽध्वर्युप्रतिप्रस्थात्रोर्वारुणीमारुत्योर्मेषमेषीसहितयोः पयस्ययोः सप्रकारकं प्रचरणविधानम्।

अध्वर्योरेव कायहविःप्रचरणविधानम्।

स्विष्टकृदादि–समिष्टयजुःपर्यन्तानां कर्मणां मध्ये केवलमध्वर्युकर्तृकं किं–केवलं प्रतिप्रस्थातृकर्तृकं किं–उभयकर्तृकं च किमिति तेषां सधर्मकं विधानम्।



चरुणप्रघासाङ्गत्वेनावभृथगमनविधानम्।

तत्रावभृथस्य सौमिकावभृथप्रकृतित्वात्ततः प्राप्तस्य सामगानस्य निषेधकरणं च।

अवभृथमज्जनमन्त्रस्यार्थः।

ततः केशश्मश्रुवपनाग्निसमारोपोदवसानाग्निनिर्मन्थनाद्य-वशिष्टेतिकर्तव्यताविधानञ्चेत्यादि। **(खं० १-४८)।**

**।।इति वरुणप्रघासपर्व।।**

## अथ साकमेधपर्व

## [ अ० ५ ब्रा० ३ ] [ ४ प्र० ४ ब्रा० ]

**तृतीयं ब्राह्मणम्** **३३१-३४९**

तत्र साकमेधपर्वणो वृत्रासुरपापरूपशत्रुजयहेतुत्व-प्रतिपादकवृन्तान्तकथनपुरःसरं तद्विधानम्।

तस्याहर्द्वयसाध्यत्वविधानम्।

तत्रापि पूर्वेद्युरनुष्ठेयानां तिसृणामनीकवती-सान्त-पनीया-गृहमेधीयेष्टीनां द्रव्यदेवताकालनिर्देशपुरःसरं सार्थवादं विधानम्।

तासु गृहमेधीयेष्ट्याः पिशीलकापिशीलकपक्षद्वयेन धर्मविशेषसहितं कर्तव्याकर्तव्याङ्गानामनुक्रमेण विधानम्।

दर्वीहोमार्थं सशेषचरुस्थालीनिधानपूर्वकं हविःशेषप्रतिपत्तिकथनम्।

तदनंतरमनुष्ठेयस्य सायम्प्रातरग्निहोत्रस्य यवाग्वाऽनुष्ठानविधानम्।

रात्रौ वत्ससमवार्जनं कृत्वा प्रातः पितृयज्ञार्थं निवान्या गोर्दोहनं कुर्यादिति विधानम्।

ततः प्रातर्हुतेऽहुते वाऽग्निहोत्रे समंत्रकं गृहीत्वा ऋषभाह्वाने वा ब्रह्मणाजुहुधीत्युक्ते समंत्रकस्य पूर्णदर्वाख्यस्य होमस्य विधानम्।

ततः कर्तव्यतायाः क्रीडिनीयेष्टेर्द्रव्यदेवता-कालनिर्देशपूर्वकं विधानं चेत्यादि। (खं॰ १-२०)।

### महाहविषः प्रयोगविधिः

### [ अ॰ ५ ब्रा॰ ४ ] [ ४ प्र॰ ५ ब्रा॰ ]

**चतुर्थं ब्राह्मणम्** ३५०-३५७

महाहविषेष्टिः।

तत्र उत्तरवेदिनिवपन-पृषदाज्यग्रहणाग्निमन्थनादीनि वरुणप्रघासवदेवात्रापि कर्तव्यानीति प्रयोगानुक्रमकथनम्।

आग्नेयादिपौष्णान्तहविष्पञ्चकस्यानुवादपूर्वकं प्रशंसनम्।

तत ऐन्द्राग्नस्य द्वादशकपालस्य माहेन्द्रस्य चरोर्वैश्वकर्मणस्यैककपालस्य च षष्ठसप्तमाष्टमानां यागानां सार्थवादं विधानम्।

एतस्य च उपक्रमावसरायोदीरितफलसाधनत्वस्य निगमनं चेति। (खं॰ १-११)।

।।इति पञ्चमोऽध्यायः।।

●

## अथ द्वितीयकाण्डे षष्ठोऽध्यायः

### अथ पित्र्येष्टिः

### [ अ॰ ६ ब्रा॰ १ ] [ ४ प्र॰ ६ ब्रा॰ ]

**प्रथमं ब्राह्मणम्** ३५८-३९६

शंय्वन्तः पितृयज्ञः, तत्र–सफलं पितृणामुत्पत्तिकथनम्।

इदानीन्तनानुष्ठानस्यापि सफलत्वकथनम्।

पितृभ्यः सोमवद्भ्यः षट्कपालः पुरोडाशः।

पितृभ्यो बर्हिषद्भ्यो धानाः।

पितृभ्योऽग्निष्वात्तेभ्यो मन्थश्चेति पितृयज्ञिययागत्रयस्य सार्थवादं विधानम्।

तद्देवतानामन्योऽन्यासंकीर्णस्वरूपत्वकथनम्।

अनुक्रमेण चोदकप्राप्तं हविर्ग्रहणादीडाप्रतिपत्त्यन्त-मंगकलापमनूद्य तत्तदङ्गेषु दक्षिणामुखत्वप्राचीनावीति-त्वसकृत्त्वादिकं वेदेश्चतु:स्रक्तित्वं दक्षिणाग्नेराहरणं स्थापनं च।

उपभृत्याज्यग्रहणे द्वित्वं बर्हि:स्तरणादिष्वप्रदक्षिण-परिगमनत्वम्।

परिधिनिधाने दक्षिणाग्रत्वम्।

जुह्वादीनामासादनाभिमर्शनप्रकार:।

पितृयज्ञस्योपांशुचरणत्वम्।

परिवृते कर्तृत्वं च।

सामिधेन्यनुवचने त्रिरावृत्तिविशिष्टाया एकस्या ऋचोऽनुवचनम्।

'सीद होत:' इत्येतावन्मात्रं होतृप्रवरणम्।

प्रधानयागानां याज्यादावाश्रावणवषट्कारयो: पक्षद्वयकथनम्।

प्रधानयागानां स्विष्टकृतश्च याज्याऽनुवाक्यानां प्रैषादिवचनप्रकारस्तथोपस्तरणादिहोमान्तानुष्ठानप्रकारश्च।

प्राशित्रेडावदानं कर्तव्यं न वेति पक्षद्वयविधानं तत्र कस्यचिन्मतेनेडाप्रत्याम्नायत्वेन मन्थस्याधानम्।

इडाप्राशित्रयो: प्राशनमवघ्राणं वेति पक्षद्वयकथनञ्चेत्येतेषां धर्मविशेषाणां विधानम्।

एतत्सहैव मध्ये मध्ये उक्तव्यतिरिक्तेषु चोदकप्राप्तेष्वङ्गेषु प्रकृतिवदनुष्ठेयत्वकथनञ्च।

पितृयज्ञप्रयुक्तं यजमानाध्वर्य्वोरन्यतरकर्तृकमवनेजनादि-

[illegible]

शीर्जपान्तोदीच्याङ्गजातेन च सहितं सप्रकारकं पिण्डपितृयज्ञवत्पिण्डदानविधानम्।

चोदकप्राप्तस्य सविशेषप्रकारस्यानुयाजादि-शंय्वन्तोदीच्याङ्गकलापस्य कथनम्।

तत्रापि स्रुग्व्यूहनादिकं प्रकृतिवदेव कर्तव्यमिति कथनम्।

हवि:शेषस्याप्स्वग्नौ वा प्रक्षेप इति विकल्पेन तत्प्रतिपत्ति विधानं चेत्यादि। **(खं० १-४८)**।

## त्रैयम्बकेष्टि:

**[ अ० ६ ब्रा० २ ] [ ५ प्र० १ ब्रा० ]**

**द्वितीयं ब्राह्मणम्** **३९७-४१३**

त्रैयम्बकेष्टि:।

तस्यां च पूर्वं त्र्यम्बकहविषां शल्यनिर्हरण-हेतुत्वाख्यापकेतिहासकथनद्वारा तद्विध्युन्नयनम्।

तेषां देवतां विधाय प्रशंसनं, संख्यां विधाय(जुहोतिधर्मेण) संस्कारप्रकारकथनं च।

एषां हविषामक्तताार्थमभिघारणपक्षकथनम्।

सकारणमुत्तरदिशि चतुष्पथे होमकरणत्वविधानम्।

ससाधनस्य सर्वेभ्य समवत्तस्य हविष: समंत्रकं होमविधानम्।

अवदानकाले परिशेषितस्यातिरिक्तस्यैकस्य हविषो विनियोगकथनम्।

चतुष्पथादेत्यावरुद्रं भेषजमिति मंत्रद्वयस्य जपविधानम्।

भगप्रसिद्धिहेतुसहितं कुमारीणामप्रदक्षिणं प्रदक्षिणं च त्र्यम्बकमिति द्वाभ्यां मंत्राभ्यां त्रिस्त्रिरग्ने: परिगमनविधानम्।

हुतशिष्टानां पुरोडाशानां प्रतिपत्तिविधानम्।

पुनरागमनं विधाय वरुणप्रघासान्तवदत्रापि केशश्मश्रुवपनादिकमुदवसानाग्निसमारोपपुनर्मन्थनादिकं च कुर्यादिति पर्वसंस्थाकथनं चेत्यादि। (खं० १-१९)।

।।इति साकमेधपर्व।।

## अथ शुनासीरीयपर्व

[ अ० ६ ब्रा० ३ ] [ ५ प्र० २ ब्रा० ]



तत्रादौ–उपोद्घातत्वेन सकलचातुर्मास्यानामक्षय्य-सुकृतफलसाधनत्वम्।

शुनासीरीयपर्वणः श्र्यादिफलसाधनत्वं चेति निरूपणं, प्रयोगक्रमकथनम्।

तत्र–उत्तरवेद्युपकिरण–पृषदाज्यग्रहणाग्निमन्थनवर्जमन्यत्सर्वं प्रकृतिवदेवेति प्रयाजानुयाजसमिष्टयजुषां पञ्चत्रिद्वित्वा-द्युपलक्षणेन प्रतिपादनम्।

वैश्वदेविकस्याग्नेयादिपौष्णान्तस्य हविष्पञ्चकस्यात्रापि विधानम्।

ततः शुनासीर्यवायव्यसौर्याणां षष्ठसप्तमाष्टमानां हविषां सार्थवादं विधानम्।

तत्र सौर्यस्यैककपालस्य स्वतन्त्रो दक्षिणाविधिः।

शुनासीर्यस्य यागस्य कालविधिः–तत्रापि सोमेन यक्ष्यमाणस्य पक्षान्तरकथनं चातुर्मास्यपुनः प्रयुञ्जानस्य पक्षान्तरकथनं च।

चातुर्मास्याङ्गभूतवपनमीमांसा।

अग्न्यादित्ययोः सर्वतोमुखत्वेऽन्नादत्वप्रतिपादनपुरःसरं पुरुषस्य स्वभावस्सद्भावनीयत्वकथनम्।

प्रकारान्तरेण पुनः सर्वतोमुखत्वमुक्त्वा परिवर्तनं न विधेयमिति पक्षान्तरकथनं चेत्यादि। (खं० १-१७)।

।।इति शुनासीरीयपर्व।।

## अथ सर्वशेषः

[ अ० ६ ब्रा० ४ ] [ ५ प्र० ३ ब्रा० ]

**चतुर्थं ब्राह्मणम्** ४२८-४३५

तत्र–सर्वेषां पर्वणां वृत्रवधहेतुत्वं विजयहेतुत्वं च समानमिति प्रतिपादनम्।

वैश्वदेवेन जितस्यार्थस्याख्यायिकया दर्शनम्।

वरुणप्रघासेषु वरुणस्य प्रामुख्यं तैर्विजितत्वं चेति निरूपणम्।

वैश्वदेवादिपर्वसु प्रतिपादितार्थस्य यजमाने क्रमेण सम्पादनम्।

वरुणप्रघासेन जेतव्यफलविधानम्।

इन्द्रप्रधानकेन साकमेधेन जेतव्यफलविधानम्।

वैश्वदेवादिपर्वणामग्न्यादिदेवतासायुज्यरूपफलवत्त्वप्रतिपादनम्।

म्रियमाणस्य चातुर्मास्ययाजिनो मार्गनिदशनद्वारा ब्रह्मलोकप्राप्तिपर्यन्तं फलं भवतीति निरूपणं चेत्यादि। (खं० १-९)।

।।इति चातुर्मास्ययागः।।

।।इति षष्ठोऽध्यायः।।

।।इति द्वितीयमेकपादिकाकाण्डम्।।

●

## परिशिष्टम्-१



## परिशिष्टम्-२

## परिशिष्टम्-३

## परिशिष्टम्-४



●

अथ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितं
हिन्दीभाषानुवादसमन्वितञ्च
माध्यन्दिन-

# शतपथ-ब्राह्मणम्

॥ श्रीगणेशाय नमः ॥ श्रीपरब्रह्मणे नमः ॥

## एकपादिकानाम-द्वितीयकाण्डे प्रथमः प्रपाठकः

### प्रथमोऽध्यायः प्रारभ्यते

### तत्र प्रथमं ब्राह्मणम्

हरिःॐ। स यद्वा ऽइतश्चेतश्च सम्भरति। तत्सम्भाराणा-

---

अथाग्न्याधानम्[1]
तत्र सम्भारब्राह्मणम्[2]

स यद्वा इतश्चेतश्च सम्भरति तत्-सम्भाराणां सम्भारत्वम्। यत्र

---

### सायणभाष्यम्

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥१॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम्॥२॥

---

वह (= अध्वर्यु) इधर-उधर (अर्थात् अनेक स्थानों) से (यज्ञीय पदार्थों को)

---

१-२. एकपादिकाभिधेऽस्मिन् काण्डे प्रकरणचतुष्टयम्। तत्र तावत्सप्तभिर्ब्राह्मणैः प्रथममग्न्याधानप्रकरणम्, ततः षड्ब्राह्मणैर्द्वितीयमग्निहोत्रप्रकरणम्, ततो ब्राह्मणत्रयेणेष्टिप्रकरणं तृतीयम्, ततोऽष्टभिर्ब्राह्मणैरन्तिमं चातुर्मास्यप्रकरणमभिहितम्। तत्र प्रथमेऽग्न्याधानप्रकरणे प्रथमं सम्भारब्राह्मणम्, ततो द्वे मुहूर्तब्राह्मणे, तत्रैकं नक्षत्रविचारात्मकमपरमृतुविचारात्मकम्, तत उपवसथब्राह्मणं चतुर्थम्, ततः पञ्चमं पूर्णाहुतिब्राह्मणम्, षष्ठं दक्षिणाब्राह्मणम्, सप्तमं च पुनराधानब्राह्मणमिति ज्ञेयम्।

**ॐ सम्भारत्वं य॒त्रयत्राग्ने॒र्न्यक्तं त॒तस्ततः स॒म्भरति तद्य॒शसेव**

**यत्राग्नेर्न्यक्तं ततस्ततः सम्भरति। तद् यशसेव त्वद्–एनैनमेतत् समर्द्धयति।**

आद्ये काण्डे प्रपञ्चेन पौर्णमासेष्टिरीरिता।
सा सम्पूर्णोपदेशत्वादन्यासां प्रकृतिर्मता[1]॥३॥

पवमानेष्ट्यादिकानां द्वितीये त्वग्निसिद्धये।
आधानं पवमानेष्टिरग्निहोत्रमुपस्थितिः।
चातुर्मास्यादिकः सर्वो हविर्यज्ञोऽत्र वर्ण्यते॥४॥

तत्र तावत् सर्वेष्टिप्रकृतित्वेन प्राक् प्रतिपादिताया दर्शपूर्णमासेष्टेः, विधास्यमानानामग्निहोत्रादिकर्मणा च त्रेताग्निसाध्यत्वात्[2] तद्धेतुभूतमाधानं प्रतिपाद्यते। तत्र चोदकहिरण्यादिसम्भाराणां[3] पञ्चानां सम्भरणं विधित्सुः सम्भारनामनिर्वचनं करोति—**स यद्वा इति**। 'इतश्च' अस्माद् वक्ष्यमाणादुदक-हिरण्यादिद्रव्यजातात् 'सः' अध्वर्युस्तदेकदेशमाहृत्य 'यद्' यस्मादेकस्थाने 'सम्भरति' समूहीकरोति, ('तत्[4]' तस्मात् 'सम्भ्रियन्ते इति सम्भाराः' इति व्युत्पत्त्या तेषां 'सम्भार'–नाम सम्पन्नमित्यर्थः)। **इतश्चेतश्चेति**। 'नित्यवीप्सयोः'–(पा.सू. ८.१.४) इति द्विर्वचनम्। एतदेव विशदयन् सम्भरणं विव्रियते—**यत्र यत्रेति**। यस्मिन् यस्मिन् पदार्थे 'अग्नेः' सम्बन्धि तेजो 'न्यक्तं' निलीनं भवति, तस्मात् सर्वस्मादपि सम्भरणं कार्यमित्यर्थः। एतत् सम्भरणीयद्रव्य-विशेषोपजीवनेन प्रशंसति—**तद्यशसेवेति**। सम्भरन्नित्युपरिष्टात्सर्वशेषतया श्रुतत्वात् त्रिष्वपि वाक्येषु त्वदित्यनन्तरं सम्बध्यते। त्वच्छब्दश्च एकशब्दपर्यायः 'उत त्वः पश्यन्' (ऋ.सं. १०.७१.७) इत्यादौ तथा दर्शनात्। 'अप्येकः पश्यन्

---

एकत्रित करता है। यह (भिन्न-भिन्न आवश्यक) यज्ञीय-वस्तुओं का इकट्ठा करना (= सम्भरण) ही यज्ञ की तैयारी है। जिस-जिस वस्तु में अग्नि-तत्त्व निलीन रहता

---

१. यत्र सर्वं कर्तव्यं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः। यत्र विशेषरूपमेव कर्तव्यं श्रुत्योपदिश्यते इतरत्सर्वं प्रकृतेरतिदिश्यते सा विकृतिः। प्रकृतिश्च द्विविधा—मूलप्रकृतिरवान्तरप्रकृतिश्चेति। सर्वात्मना कर्मान्तरर्निरपेक्षा मूलप्रकृतिः। कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयं च कैश्चित्कर्मभिरपेक्षणीया भवति सेयमवान्तरप्रकृतिः। सर्वं चेदं मीमांसायां सप्तमेऽष्टमेऽध्याये च निरूपितम्। तथा च न्यायमालायाः ८ अ. १ पा. ३ अ. २ वर्णके इष्ट्यग्निहोत्रसोमानामेव सर्वयागमूलप्रकृतित्वं प्रतिपादितम्। २. 'दक्षिणाग्नि-गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता' इत्यमरः (२.७.२०)। ३. 'उदकम् १ हिरण्यम् २ ऊषाः ३ आखुकरीषम् ४ शर्कराः ५ इति पञ्च सम्भाराः। ४. 'बन्धनीधृतग्रन्थस्थाने 'तच्च हिरण्यादिनानावस्तूनां सम्भारनामत्वमिति' इति पाठ उपलभ्यते क्व पुस्तके।

**त्वदेवैनमेतत्समर्द्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत्सम्भरन्॥१॥**

**(त्र) अथोल्लिखति। तद्यदेवास्यै पृथिव्या ऽअभिष्ठितं वाभिष्ठ्यूतं वा तदेवास्या ऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उल्लिखति॥२॥**

---

**पशुभिरिव त्वत्। मिथुनेनेव त्वत्–सम्भरन्॥१॥**

**अथोल्लिखति, तद्–यदेवास्यै पृथिव्या अभिष्ठितं वा, अभिष्ठ्यूतं वा तदेवास्या एतदुद्धन्ति। अथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उल्लिखति॥२॥**

---

न पश्यति वाचम्[1]' इति यास्कः। (नि. १.६.३) 'तत्' तत्र 'त्वत्[2]' एकं हिरण्याख्यं वस्तु 'सम्भरन्' 'एनम्' अग्निमेतेन सम्भरणेन 'यशसेव समर्द्धयति'। हिरण्यस्य यशोरूपत्वमग्रे (श.प. २.१.१.५) वक्ष्यते। एवमुत्तरवाक्ययोरपि योजना। तत्र त्वदिति पदाभ्यामुषोदकद्रव्ये विवक्षिते तयोश्च पशुमिथुन[3]रूपत्वे उपरिष्टात् (श.प. २.१.१.४-६) समाम्नास्येते॥१॥

तस्य च हिरण्यादिसम्भारस्य निवपनमुल्लेखनाभ्युक्षणसंस्कृतेष्वेव गार्हपत्याद्यायतनेषु कार्यमित्यभिप्रेत्य प्रथममुल्लेखनं विधाय प्रशंसति— **अथोल्लिखतीति**। 'अस्यै पृथिव्यै' इति षष्ठ्यर्थे चतुर्थी (पा.सू. २.३.६१)। अस्याः पृथिव्याः सम्बन्धि, यत् 'अभिष्ठितम्' उपर्यवस्थानेन पादस्पर्शजनित[4]म्, 'अभिष्ठ्यूतम्, तदुपरि निष्ठीवनादिजनितञ्चेत्यर्थः। 'वा'—शब्दौ चार्थौ। **यज्ञियायामिति**। यज्ञार्हायामित्यर्थः॥२॥

---

है उस-उस वस्तु को एकत्रित करता है। उन वस्तुओं में से एक 'हिरण्य' को लेने से, यश से, ऊषा (= ऊषर मृत्तिका) को लेने से, पशुओं से और जल को ग्रहण करने से मिथुन अर्थात् जोड़े से युक्त करता है॥१॥

अब वह यज्ञायतनभूमि में रेखा खींचता है। रेखाकरण का निहितार्थ यह है कि पृथ्वी के जिस भाग को चलकर या थूक कर मनुष्य अपवित्र कर देते हैं उस भाग को पृथक् कर देते हैं (रेखा करने पर उभर आई मिट्टी को अनामिका-अङ्गुष्ठ से हटा कर)। इस प्रकार यज्ञ के योगय पवित्र भूमि में ही अग्न्याधान करते हैं। अतएव (पवित्र यज्ञार्ह भूमि बनाने हेतु) रेखा खींची जाती है॥२॥

---

१. वातमिति पा.। २. 'तत्' इति पा.। ३. यदि च श्रुतौ मिथुनस्याग्रे विधानं, पशूनां तत उत्तरं तथापि 'अल्पाच्तरं' (पा.सू. २.२.३४) इति शासनात्पशुशब्दस्येह द्वन्द्वनिमित्तः पूर्वनिपातो ज्ञेयः। ४. एतदनन्तरम् 'अमेध्यत्वमिति नैकप्रतीकोद्‌गूर्णदूरश्लेष्मादिजममेध्यत्वम्'–इत्यधिकमुपलभ्यते क्व.पु.।

(त्यु) अथाद्भिरभ्युक्षति। (त्ये) एष वा अपाᳬं सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा ऽआपोऽन्नᳬंहि वा ऽआपस्तस्माद्यदेमं लोकमाप आगच्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्द्धयति॥३॥

योषा वा ऽआपः। (पो) व्वृषाग्निर्मिथुनेनैवैनमेतत्प्रजननेन-समर्द्धयत्यद्भिर्व्वा ऽइदᳬंसर्व्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति॥४॥

---

अथाद्भिरभ्युक्षति। एष वा अपां सम्भारो यदद्भिरभ्युक्षति। तद् यद्-अपः सम्भरति-अन्नं वा आपः-अन्नं हि वा आपस्तस्माद् यदेमं लोकमाप आगच्छन्ति अथेहान्नाद्यं जायते। तदन्नाद्येनैवैनमेतत् समर्द्धयति॥३॥

योषा वा आपः, वृषाग्निः। मिथुनेनैवैनमेतत् प्रजननेन समर्द्धयति। अद्भिर्वा इदं सर्वमाप्तम्। अद्भिरेवैनमेतदाप्त्वाधत्ते-तस्मादपः सम्भरति॥४॥

---

उल्लिखितानामग्न्यायतनानामभ्युक्षणं विधत्ते[1]—**अथेति**। एतदभितः सर्वतो यदभ्युक्षणम्, 'एष वा अपां सम्भारः' न तु हिरण्यादिवत् पृथगुपादाय तासां निवपनं कार्यमित्यर्थः। 'अन्नं वै' इत्यादि निगदसिद्धम्॥३॥

एवमन्नाद्यहेतुत्वेनाभ्युक्षणं प्रशस्य मिथुनरूपेण प्रशंसति—**योषा वा इति**। अपां स्त्रीलिङ्गत्वादग्नेः पुंलिङ्गत्वादुभयं मिलितं सदेकं मिथुनम्, तच्च पुत्रपौत्रादिप्रजननहेतुरिति 'एनम्' अग्निं 'समर्द्धयति' एतेन 'मिथुनेन'। त्वदिति प्रागुक्तं तद्विवृतं भवति। एवं लिङ्गोपजीवनेन प्रशस्य अप्शब्दप्रतिपादितार्थ-पर्यालोचनयापि प्रशंसति—**अद्भिर्वा इति**। 'आपो वा इदमग्रे सलिलमासीत्'-

---

अब (उल्लिखित रेखाओं पर) जल छिड़कता है। यह जो जल छिड़कना है यह मानो जलों का यज्ञ में सम्भरण (=जोड़ना) है। जल इसलिये लाया जाता है क्योंकि जल अन्न है। अन्न ही जल है। अतएव जब जल इस लोक में बरसता है, तभी यहाँ अन्न उत्पन्न होता है। इस प्रकार वह अग्नि को अन्न आदि से युक्त करता है॥३॥

'आपः' (जल) स्त्री है। 'अग्नि' पुरुष है। इस प्रकार वह एक प्रजनन-समर्थ जोड़ा बना देता है और चूँकि जल इन लोकों में सर्वत्र व्याप्त है, इसलिये आधेय

---

१. 'स्थानमुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोषाखूत्करान्निवपत्यन्तेषु शर्कराः' इति का.श्रौ. सू. ४.२१०।

(त्य) अथ हिरण्यꣳ सम्भरति। (त्य) अग्निर्ह वाऽअपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसङ्काशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किञ्चन

---

**अथ हिरण्यं सम्भरति। अग्निर्ह वा अपोऽभिदध्यौ–'मिथुन्याभिः स्यामिति'। ताः 'सम्बभूव' तासु रेतः प्रासिञ्चत्–तद्धिरण्यमभवत्; तस्मादेतदग्निसङ्काशम्। अग्नेर्हि रेतः। तस्मादप्सु विन्दन्ति, अप्सु हि प्रासिञ्चत्।**

---

इति श्रुतिः (तै.ब्रा. १.१.३.५) 'सर्वम्' 'इदम्' जगत् 'अद्भिः' खलु 'आप्तम्' अत आपनशीलाभिस्ताभिरद्भिः 'एनम्' अग्निं प्राप्य 'आधत्ते' इत्यर्थः। यस्मादेवं तस्मात् सम्भारनिवपनसमयेऽभ्युक्षणार्थं कस्मिंश्चित् पात्रेऽपः सम्भरेदिति निगमयति **तस्मादिति**।।४।।

हिरण्यस्य सम्भरणं विधत्ते—**अथ हिरण्यमिति**। तस्य हिरण्यस्याग्निरेतस्त्वं प्रतिपादयति—**अग्निर्हवा** इत्यादिना। 'अभिदध्यौ' अभिध्यातवानित्यर्थः। 'ध्यै चिन्तायाम्' (भ्वा.प. ९३३) इत्यस्माल्लिटि 'आत औ णलः' (पा.सू. ७.१.३४) इत्यौत्वम्, अभिध्यानप्रकारमाह—मिथुन्याभिरिति। 'आभिः' अद्भिरभ्युक्षणाद्भिः स्त्रीभिः 'मिथुनी स्याम्' प्रयोगमिथुनं तत्संयोगान्मिथुनं भवानीत्यर्थः। मिथुनशब्दादभूततद्भावे (पा.सू. ५.४.५०, वा. २) च्विः। **तस्मादेतदिति**। यस्मादग्निवीर्यं हिरण्यात्मना परिणतम्, 'तस्मात्' एतत् हिरण्यम् 'अग्निसङ्काशम्' अग्नेः सदृशमेव वर्ण्यतं उपलभ्यते। यस्माच्चाप्सु निषिक्तम्, 'तस्मात्' तद्धिरण्यम् 'अप्सु' 'विन्दन्ति' लभन्त इत्यर्थः। **तस्मादेनेनेति**। यस्मादाग्नेयं हिरण्यम्, 'तस्मादेनेन' दन्तान् 'न धावयेत्'। तथा यदन्यत् किमपि हीनं कर्म, तदपि तेन न कुर्यादित्यर्थः।

---

अग्नि को पहले जल से युक्त करके ही स्थापित करता है। अतएव वह जल को लाता है।।४।।

अब वह हिरण्य (स्वर्ण) लाता है। पुरा काल में अग्नि ने जल की ओर देखा और (आकर्षित होकर) सोचा कि मैं इसके साथ संगत हो जाऊँ। उसने जल के साथ प्रसङ्ग किया और वीर्य सेचन किया, जो कि 'स्वर्ण' हो गया। इसीलिये 'स्वर्ण' अग्नि के समान चमकता है; क्योंकि वह अग्नि का ही रेतस् है। वह (स्वर्ण) जल में पाया जाता है; क्योंकि जल में ही अग्नि ने वीर्य सेचन किया था। अतएव

करोत्यथ यशो देवरेतसꣳहि तद्यशसैवैनमेतत्समर्द्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यꣳ सम्भरति॥५॥

(त्य) अथोषान्सम्भरति। (त्य) असौ ह वै द्यौरस्यै पृथिव्या ऽएतान्पशून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो

---

तस्मादेनेन न धावयति, न किञ्चन करोति। अथ यशो देवरेतसं हि। यद्यशसैवैनमेतत् समर्द्धयति। सरेतसमेव कृत्स्नमग्निमाधत्ते। तस्माद्धिरण्यं सम्भरति॥५॥

अथोषान् सम्भरति। असौ ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ, तस्मात् पशव्यमूषरमित्याहुः। पशवो ह्येवैते साक्षादेव। तत् पशुभिरेवैनमेतत्

---

**अथ यश इति।** 'अथ'—शब्दो वाक्यालङ्कारे। यस्मात्तद्धिरण्यं 'देवरेतसं' देवस्याग्नेर्वीर्यम्, तस्माद् यशोरूपम्। देवरेतसमिति 'अनसन्तात्' (पा.सू. ५.४.१०३) इत्यकारः समासान्तः। तथा च हिरण्यसम्भरणेन 'यशसैव' 'एनम्' अग्निं समृद्धं करोति। एतेन—'यशसेव त्वद्' इति प्रागुक्तं (श.प. २.१.१.१) व्याख्यातं भवति। **सरेतसमेवेति।** हिरण्यस्य सम्भरणाभावे हि रेतसोऽन्यत्र स्थितत्वात् तद्रहित आहितोऽग्निरकृत्स्न एव भवति; तत्सम्भरणे तु सरेतसः सः॥५॥

ऊषाख्यमृद्विशेषस्य सम्भरणं विधत्ते—**अथोषानिति।** ऊषाणां पशुरूपत्वं प्रतिपादयन् तत् समृद्धिहेतुत्वेन स्तौति—**असौ ह वा इति।** यस्मात् 'पृथिव्यै' द्युलोकेन इमे पशवो दत्ताः, 'तस्मात्', तत्सम्बन्धि 'ऊषरम्' ऊषयुक्तं स्थानं पशव्यं पशुभ्यो हितम् 'इति' ब्रह्मवादिनः 'आहुः'। पशवो हि, तादृशं स्थानमासाद्य लिहन्ति; अतः पशुहितत्वात् पश्वात्मकाः 'एवैते' ऊषाः। **ऊषरमिति।** 'ऊषसुषिमुष्कमधो रः' (पा.सू. ५.२.१०७) इति मत्वर्थीयो रः।

---

स्वर्ण से न तो दाँतों को धोना चाहिये और न ही किसी क्षुद्र काम में इसका प्रयोग करना चाहिये (क्योंकि 'स्वर्ण' आग्नेय है)। यतः स्वर्ण (=हिरण्य) अग्निदेव का रेतस् (=तेज) है, अतः यश-रूप है; अतएव देव-वीर्य अर्थात् यश से वह अग्नि को समृद्ध करता है तथा रेतस् सम्पन्न अग्नि का आधान करता है। इसलिये वह 'स्वर्ण' को लेता है॥५॥

अब वह ऊषर मिट्टी को लेता है। उस द्युलोक ने इस पृथ्वी के लिये इन पशुओं को प्रदान किया। इसलिये कहा जाता है कि ऊषर भूमि (नमकीन भूमि) पशुओं को अत्यन्त प्रीतिकर होती है। पशु प्रीतिकर होने से ऊषर मिट्टी पश्वात्मक

ह्येवैते साक्षादेव तत्पशुभिरेवैनमेतत्समर्द्धयति तेऽमुत ऽआगता ऽअस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्द्धयति तस्मादूषान्त्सम्भरति॥६॥

(त्य) अथाखुकरीषꣳसम्भरति। (त्या) आखवो ह वा ऽअस्यै पृथिव्यै रसं व्विदुस्तस्मात्तेऽधोऽध ऽइमां पृथिवीं चरन्तः पीविष्ठा ऽअस्यै हि रसं व्विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं व्विदुस्ततऽउत्किरन्ति तदस्या ऽएवैनमेतत्पृथिव्यै रसेन

---

समर्द्धयति। तेऽमुत आगता अस्यां पृथिव्यां प्रतिष्ठिताः। तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते। तदनयोरेवैनमेतद् द्यावापृथिव्यो रसेन समर्द्धयति। तस्मादूषान् सम्भरति॥६॥

अथाखुकरीषं सम्भरति। आखवो ह वा अस्यै पृथिव्यै रसं विदुः, तस्मात्तेऽधोऽध इमां पृथिवीं चरन्तः पीविष्ठाः अस्यै हि रसं विदुस्ते। यत्र तेऽस्यै पृथिव्यै रसं विदुः; ततः उत्किरन्ति। तदस्या एवैनमेतत् पृथिव्यै

---

स्पष्टमन्यत्। द्यावापृथिव्यो रसत्वेनैतान् प्रशंसति—**तेऽमुत इति**। 'अमुतः' अमुष्माद् द्युलोकात् 'आगताः', 'अस्यां' पृथिव्यां प्रतिष्ठिताः च; अतः पश्वात्मकस्य ऊषद्रव्यस्य द्यावापृथिवीरसत्वम्। किं ततः इत्याह—**तदनयोरिति**॥६॥

द्रव्यान्तरस्य सम्भरणं विधत्ते—**अथाखुकरीषमिति**। आखुभिः खननेन बिलात् बहिर्नीताः पांसव आखुकरीषम्। तदेतत्पृथिवीरसत्वेन स्तौति—**आखवो हेति**। यस्मात् 'आखवः' पृथिवीरसज्ञाः[1] 'तस्मात्' एव पृथिवीमध्ये 'अधोऽधः

---

है। इस प्रकार वह साक्षात् रूप से अग्नि को पशुओं से युक्त कर देता है और पशु-धन उस लोक (द्यौ) से आकर इस पृथ्वी में प्रतिष्ठित हो जाता है। उस ऊषर (नमकीन) मिट्टी को इन द्यौ और पृथ्वी का रस मानते हैं। इसलिये इन्हीं द्यौ और पृथ्वी के रस से आधेय-अग्नि को समृद्ध करता है। अतएव ऊषर (नमकीन) मिट्टी को लेता है॥६॥

अब वह आखु-करीष (चूहों द्वारा निकाली हुई मिट्टी को) लाता है। चूहे इस पृथ्वी के रस को जानते हैं। अतएव वे इस पृथ्वी को गहरा खोदकर भीतर बिलों

---

१. 'रसज्ञाताः' इति क्व.पु.पा.।

**सुमर्द्धयति तुस्मादाखुकरीषꣳ सुम्भरति पुरीष्य ऽइति वै तुमाहुर्यः श्रियं गुच्छति समानं व्वै पुरीषं च कुरीषं च तुदेतुस्यैवावरुद्ध्यै तुस्मादुाखुकरीषꣳ सुम्भरति॥७॥**

**(त्यु) अुथ शुर्क्कराः सुम्भरति। देवुाश्च वा ऽअसुराश्चोभुये**

---

**रसेन समर्द्धयति। तस्मादाखुकरीषं सम्भरति, पुरीष्य इति वैतमाहुः-यः श्रियं गच्छति। समानं वै पुरीषं च करीषं च। तदेतस्यैवावरुद्ध्यै-तस्मादाखुकरीषं सम्भरति॥७॥**

**अथ शर्क्कराः सम्भरति। देवाश्च वा असुराश्च उभये प्राजापत्याः**

---

चरन्तः' पृथिव्या अन्तरधस्तात् समीपे चरन्तः, (तत्रत्यरसास्वादनेन 'पीविष्ठाः' अतिशयेन पीवानो मांसलाः, ते च) (तद्रसास्वादनसम्बन्धिनि यत्र यत्स्थाने 'रसं' 'विदुः' जानन्ति तत् स्थानं गत्वा) 'रसम्' उपजीव्य पांसून् बहिः 'उत्किरन्ति' उत्क्षिपन्ति। 'कृ विक्षेपे' (तु.प. १३९) इति धातुः। अत आखूत्करस्य पृथिवीरसत्वात् तेनैव 'एनम्' अग्निं समृद्धं करोति। प्रकारान्तरेण स्तौति— **पुरीष्य इतीति**। 'यः' खलु 'श्रियं' सम्पदं 'गच्छति', 'तं पुरीष्य इति' लोका वर्णयन्ति। नन्वेवं पुरीषस्यैव श्रीप्राप्तिहेतुता, करीषस्य किमायातमित्यत आह— **समानमिति**। पुरीषकरीषशब्दावत्र समानार्थावित्यर्थः। अतः करीषसम्बन्धादग्निः श्रियं प्राप्नोति। तादृशस्याग्नेरवरोधाय करीषसम्भरणं कार्यमित्यर्थः॥७॥

शर्क्कराणां सम्भरणं विधत्ते—**अथ शर्क्करा इति**। मृन्मिश्रिताः सूक्ष्मपाषाणाः शर्क्कराः। तेषामधिश्रितानां दार्ढ्यहेतुत्वमितिहासेन दर्शयति— **देवाश्च वा इति**। देवा असुरा उभये स्पर्द्धाञ्चक्रिरे। देवासुरेषु युद्धाय कृतोद्यमेषु तद्भयात् 'पृथिवी अलेलायत्'चाञ्चल्यं प्राप्नोत्। तत्र दृष्टान्तमाह—**यथेति**। 'यथा

---

में विचरण करते हैं। इस पृथ्वी के रस (= सारतत्त्व) को प्राप्त करके चूहे मोटे हुए रहते हैं और जहाँ पृथ्वी में उनको रस प्रतीत होता है वहीं वे खोदते हैं और मिट्टी बाहर निकाल डालते हैं। इसलिये वह अग्नि को पृथ्वी के इस रस (आखु-करीष) से युक्त करता है। यही कारण है कि वह आधान-विधि में आखु-करीष को लेता है। जो श्री को प्राप्त कर लेता है, उसे लोक में 'पुरीष्य' कहते हैं। पुरीष और करीष समानार्थक शब्द है। इसलिये आधेय-अग्नि को श्री से समन्वित करने हेतु आखु-करीष को लेता है॥७॥

अब वह बालू मिट्टी (शर्करा) लाता है। (इस सन्दर्भ में इतिहास है कि-) देव और असुर दोनों प्रजापति की सन्तान अपने वर्चस्व के लिये स्पर्द्धा

प्राजापत्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताᳬं᳖ह स्म व्वातः संव्वहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम॥८॥

तद्धोचुः। (हुं) हन्तेमां प्रतिष्ठां दृᳬं᳖हामहै तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधामहै ततोऽस्यै सपत्नान्नि-र्भक्ष्यामऽइति॥९॥

---

पस्पृधिरे। सा हेयं पृथिव्यलेलायत्, यथा–पुष्करपर्णमेवम्। तां ह स्म वातः संवहति। सोपैव देवान् जगामोपासुरान्। सा यत्र देवानुपजगाम॥८॥

तद्धोचुः–'हन्तेमां प्रतिष्ठां दृंहामहै, तस्यां ध्रुवायामशिथिलायामग्नी आदधामहै; ततोऽस्यै सपत्नान् निर्भक्ष्याम इति'॥९॥

---

जलस्योपरि 'पुष्करपर्णम्' इतस्ततश्चञ्चलं भवति, 'एवम्' पृथिव्यपि इतस्ततः कम्पिता। तां तदवस्थामापन्नां पृथिवीं 'वातः' वायुः पुष्करपर्णवदेव 'संवहति स्म' यथा दारुमयीं (नावं) कश्चित् परपारं नयति, स्थानात् स्थानान्तरं प्रापयति। 'सा' त्वेवं कम्पमाना पृथिवी उभयविधानपि तान् 'उपजगाम' पदान्तरे 'सा' 'उप' 'आ' 'एव' इति छेदः॥८॥

यदा च सा देवान् प्राप्नोत्, तदा तत्कृतं परिहारं दर्शयति—**तद्धोचुरिति**। 'प्रतिष्ठां' प्रतिष्ठितां 'दृंहामहै' दृढीकरवामहै। 'ध्रुवायां' निश्चलायाम्, 'अशिथिलायां' दृढायाम् 'अग्नी' गार्हपत्याहवनीयावादध्मः। वाक्यार्थः स्पष्टः। 'ततः' तस्मात् अग्न्याधानात् 'अस्यै' अस्याः पृथिव्याः सकाशात् शत्रुभूतानसुरान् 'निर्भक्ष्यामः' निर्भक्तान् भागरहितान् कुर्यामेत्यर्थः। इत्थं प्रतिज्ञापयामासुः॥९॥

---

करने लगे। तब यह पृथ्वी कमल-दल के समान काँपने लगी; क्योंकि तीव्र वायु इसको दोलायमान कर रही थी। फलतः वह कभी देवों के पास जाती और कभी असुरों के। जब वह देवों के पास पहुँची तो–॥८॥

उन्होंने कहा—आओ, हम इसको दृढ़ कर दें; और जब यह दृढ़ और अचल हो जाय तो इसपर दोनों अग्नियों का आधान करें (तथा यज्ञ करें)। तब हम अपने शत्रुओं को यहाँ से निकाल बाहर कर देंगे॥९॥

तद्यथा शङ्कुभिश्चर्म व्विहन्यात्। (दे) एवमिमां प्रतिष्ठाᳬं शर्क्कराभिः पर्यबृᳬँ॒ हन्त सेयं ध्रुवाऽशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधत ततोऽस्यै सपत्नान्निर-भजन्॥१०॥

(जँस्त) तथो ऽएवैष ऽएतत्। (दि) इमां प्रतिष्ठाᳬं शर्क्कराभिः परिबृᳬँहते तस्यां ध्रुवायामशिथिलायामग्नी ऽआधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्क्कराः सम्भरति॥११॥

---

तद्यथा शङ्कुभिश्चर्म विहन्यात्, एवमिमां प्रतिष्ठां शर्क्कराभिः पर्यबृंहन्त। सेयं ध्रुवाऽशिथिला प्रतिष्ठा। तस्यां ध्रुवायामशिथिलायामग्नी आदधत। ततोऽस्यै सपत्नान्निरभजन्॥१०॥

तथो एवैष एतत् इमां प्रतिष्ठां शर्कराभिः परिबृंहते। तस्यां ध्रुवायामशिथिलायामग्नी आधत्ते। ततोऽस्यै सपत्नान् निर्भजति। तस्माच्छर्कराः सम्भरति॥११॥

---

इत्थं प्रतिज्ञाय तैः कृतं दर्शयति—**तद्यथेति**। 'यथा' आर्द्रं 'चर्म' भूमौ प्रसार्य 'शङ्कुभिः' परितो 'विहन्यात्' 'एवं' 'प्रतिष्ठां' सर्वप्राण्यास्पदभूताम् 'इमां' पृथिवीं शर्क्कराभिः 'पर्यबृंहन्त' परितः शर्करास्थापनेन दृढीकृतवन्तः। निगदसिद्धमन्यत्॥१०॥

एवं पुरावृत्तमुदाहृत्यैतद्दृष्टान्तेन प्रकृतमनुसन्धत्ते—**तथो एवेति**। उक्तार्थमेतत्॥११॥

---

तब देवों ने जैसे खूँटियाँ लगाकर चमड़े को ताना जाता है, उसी प्रकार इस पृथ्वी को पाषाण-बालू से दृढ़ किया और यह चारों ओर से अचल और दृढ़ हो गई। उसी दृढ़ अचल भूमि पर दोनों अग्नियों (=गार्हपत्य-आहवनीय) का आधान किया और तब उन्होंने शत्रुओं को इस पृथ्वी का हकदार होने से वंचित कर दिया॥१०॥

(देवताओं की) तरह ही यह (अध्वर्यु) भी बालू (शर्करा) से इसको दृढ़ करता है और उस दृढ़, निश्चल भूमि पर दो अग्नियों को स्थापित करता है तथा अपने शत्रुओं को पृथ्वी के भाग से वंचित कर देता है, इसलिये पाषाण के छोटे टुकड़ों व बालू को यज्ञार्थ लेता है॥११॥

**ता॒न्वा ऽए॒तान्। (न्प॒) प॒ञ्च स॒म्भारान्त्स॒म्भरति पा॒ङ्क्तो य॒ज्ञः पा॒ङ्क्तः प॒शुः प॒ञ्चऽर्त्त॒वः सं॒व्वत्सर॒स्य॥१२॥**

**तु॒दाहुः। षुडे॒वऽर्त्त॒वः सं॒व्वत्सरस्ये॒ति॒ न्यूनमु तु॒र्हि मिथु॒नं॒ प्र॒ज॒ननं क्रियते॒ न्यूनाद्वा॒ ऽइम॒ाः प्र॒जाः प्र॒जायन्ते तु॒च्छ्रः श्रेयस॒-**

---

**तान्वा एतान् पञ्च सम्भारान् सम्भरति। पाङ्क्तो यज्ञः। पाङ्क्तः पशुः। पञ्चर्तवः संवत्सरस्य॥१२॥**

**तदाहुः–षडेवर्त्तवः संवत्सरस्य इति। न्यूनमु तर्हि मिथुनं प्रजननं क्रियते। न्यूनाद्वा इमाः प्रजाः प्रजायन्ते। तच्छ्वःश्रेयसमुत्तरावत्। तस्मात्पञ्च**

---

विहितसम्भरणमनूद्य तत्सङ्ख्योपजीवनेन प्रशंसति—**तान् वा एतानिति।** तान् पूर्वोक्तान् 'पञ्च सम्भारान्' 'सम्भरति' उदकहिरण्योषाखुकरीषशर्कराःपञ्च सम्भाराः। **पाङ्क्तो यज्ञ इति।** पञ्चपदा पङ्क्तिः, (ऐ.ब्रा. ६.४.४; ५.४.२) तद्भवत्वात्, 'यज्ञः' अपि धानाकरम्भादिपञ्चहविष्क[1] (ऐ.ब्रा. २.३.६) इति पञ्चसङ्ख्यायोगात् 'पाङ्क्तः'। अस्थिमज्जेति पञ्चधातुमयत्वात्[2] 'पशुः' अपि 'पाङ्क्तः' (ऐ.ब्रा. ६.५.३) संवत्सरसम्बन्धिनः 'ऋतवः' वसन्ताद्या अपि पञ्चसङ्ख्याकाः। हेमन्तशिशिरयोः समासाभिप्रायमेतत्। तथा चैतरेयकम्—'हेमन्तशिशिरयोः समासेन' (ऐ.ब्रा. १.१.१) इति॥१२॥

तदेतत् पञ्चत्वं लोकप्रसिद्धिविरूद्धमित्याक्षिपति—**तदाहुरिति।** हेमन्त-शिशिरौ हि पृथक्त्वेन लोके प्रसिद्धौ; अतस्तयोरैक्यं न युक्तमिति भावः। परिहरति—**न्यूनमिति।** 'तर्हि' तथा सति ऋतुषट्के मिथुनत्रयसम्पत्तिः' पञ्चके तु तन्मिथुनत्रयमेकेन 'न्यूनं' भवति, तच्च[3] प्रजननसाधनम्। अत्र लोकप्रसिद्धिमाह—**न्यूनादिति।** स्त्रीपुंसयोर्वीर्यस्य परस्परन्यूनत्वे सति तस्मात् 'न्यूनात्' मिथुनात्

---

इस प्रकार अध्वर्यु इन पाँच (जल, हिरण्य, ऊषरमिट्टी, आखुकरीष एवं शर्करा) वस्तुओं को यज्ञार्थ एकत्रित करता है; क्योंकि यज्ञ पाँच अवयवों वाला (पांक्त) है और पशु भी पाँच अवयवों वाले है तथा वर्ष में ऋतुयें भी पाँच हैं।।१२।।

(ऋतुओं के विषय में) लोगों का कहना है कि—वर्ष में छः ऋतुयें हैं। (हेमन्त-शिशिर को एक मानकर पाँच ऋतुएँ कहना कैसे उचित होगा?)। (इसका

---

१. धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या इति पञ्च हवींषि। २. त्वक्, मांसम्, स्नायुः, अस्थि, मज्जा चेति पञ्चधातवः। यद्यपि धातवः सप्तसंख्याका एवाभिहिताः सर्वत्र, तथापि यज्ञे पञ्चानामेवोपयोगात् पञ्चधातुमयत्वमेवाभिहितं पशूनाम्। ३. 'तथाप्रजननसाधनम्' इति पाठान्तरम्।

मुत्तरावत्तस्मात्पञ्च भवन्ति यद्यु षडेवऽर्त्तवः संव्वत्सरस्ये-त्त्यग्निरेवैतेषाᳪं षष्ठस्तथो ऽएवैतदुन्यूनं भवति॥१३॥

तुदाहुः। (नै) नैवैकञ्चन सम्भारᳪं सम्भरेदित्यस्यां व्वा ऽएते सर्व्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते

---

**भवन्ति। यद्यु षडेवर्तवः संवत्सरस्येति। अग्निरेवैतेषां षष्ठः, तथो एवैतदन्यूनं भवति॥१३॥**

**तदाहुः–नैवैकञ्चन सम्भारं सम्भरेदिति। अस्यां वा एते सर्वे पृथिव्यां**

---

स्त्रीपुंसलक्षणान्यपत्यानि 'जायन्ते'। यस्मादेवं 'तस्मात्' पञ्चसम्भारलक्षणेन यत् मिथुनस्य न्यूनत्वम्; 'तत्' 'श्वःश्रेयसम्' श्वःपरदिवसे, श्रेयसो जनकम्। 'श्वसो वसीयःश्रेयसः' (पा.सू. ५.४.८०) इत्यच् समासान्तः। 'उत्तरावत्', उत्तरा आगामिन्यभिवृद्धिः, तथोपेतमित्यर्थः। एवमृतूनां षट्केऽपि सम्भाराणां पञ्चसङ्ख्याकत्वमुपपाद्याथापि न्यूनत्वं[1] नाम कश्चिन्मन्येतेत्याशङ्क्य परिहरति—**यद्यु इति**। यदि षड़ृतुत्वं संवत्सरस्य सङ्ख्यास्ति, तर्हि एतेषां सम्भाराणामाधीयमानः 'अग्निरेव' 'षष्ठः' षट्सङ्ख्यापूरकः॥१३॥

असम्भारपक्षमाह—**तदाहुरिति**। **एकञ्चनेति**। एकमपीत्यर्थः। अत्रोपपत्तिमाह—**अस्यामिति**। आरोपितसर्वसम्भारभूतायां पृथिव्यामाधानादेव

---

परिहार करते हैं कि–) न्यून के जोड़े से ही सन्तान उत्पन्न होती है। क्योंकि रज और वीर्य के विषम (कीटाणु) भाव से ही ये प्रजायें उत्पन्न होती हैं। अतः यह जो पंचसंभारात्मक मिथुन का न्यूनीभाव है वह (यजमान के लिये) भविष्य का श्रेयोजनक है। इसलिये पाँच संभार होते हैं। और जो वर्ष में छः ऋतुयें होने की बात है तो अग्नि ही इनमें छठा है। इसलिये (मिथुन में) कोई न्यूनता नहीं होती। (तात्पर्य यह है कि संभारों में किसी प्रकार की संख्यागत न्यूनता नहीं माननी चाहिये। पाँच ऋतुएँ है, अतः पाँच यज्ञीय-संभार भी हैं। यदि यह कहा जाय कि ऋतुयें छः होती हैं इसलिये पांच संभार होने से न्यूनता दिखाई पड़ती है, तो इसका उत्तर है कि यह न्यूनता साभिप्राय है, क्योंकि विषमभाव के रजो-वीर्य से ही सन्तान होती है। दूसरी उपपत्ति यह भी है कि यदि छः ऋतुयें मानते हैं तो पांच संभारों (अर्थात् जल, स्वर्ण, ऊषर मिट्टी, आखु-करीष और शर्करा के साथ-साथ छठा अग्नि भी है। इस प्रकार छः संख्या भी पूरी हो जाती है)॥१३॥

कुछ लोगों का मत है कि—एक भी संभार की आवश्यकता नहीं है; क्योंकि

---

१. 'न्यूनत्वं वा न कश्चिद्दोषः' इति क्व पुस्तके।

तत्सुर्व्वान्त्सम्भारानाप्नोति तुस्मान्नैवैकञ्चन सम्भारॐ सुम्भरेदिति तदु सुमेव भरेद्यदुहैवास्युामाधत्ते तत्सुर्व्वान्त्सम्भारानाप्नोति यदु सम्भारैः सुम्भृतैर्भवति तुदु भवति तुस्मादु सुमेवु भरेत्॥१४॥१॥

इति द्वितीयकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम्॥

इति द्वितीयकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम्॥२॥१॥१॥

---

भवन्ति। स यदेवास्यामाधत्ते, तत्सर्वान् सम्भारानाप्नोति। तस्मात्–नैवैकञ्चन सम्भारं सम्भरेदिति। तदु समेव भरेत्। यदहैवास्यामाधत्ते–तत् सर्वान् सम्भारानाप्नोति। यदु सम्भारैः सम्भृतैर्भवति, तदु भवति। तस्मादु समेव भरेत्॥१४॥१॥

।। इत्यग्न्याधानप्रकरणे सम्भारब्राह्मणम् ।।

---

तत्कार्यप्राप्तेर्न पृथक् सम्भारापेक्षेत्यर्थः। सम्भरणपक्षमेव निगमयति—तदु समेवेति। यदु सम्भारैरिति। 'यत्' खल्वाधाने सम्भृतैः 'सम्भारैः' निष्पन्नं भवति, 'तत्' खल्वाधानं भवति, सम्भारविरहे तु तदाधानमेव न भवतीति कुतस्तस्य पृथिवीसम्बन्धवशात् सम्भरणप्राप्तिरित्यर्थः॥१४॥१॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीये काण्डे प्रथमाध्याये प्रथमं ब्राह्मणम्।।१।।१।।

---

इस पृथ्वी में तो ये संभार-वस्तुएँ पूर्वतः हैं। जब इसी पृथ्वी में अग्नि को स्थापित करते हैं तो मानो सभी संभार स्वतः प्राप्त हो गये। इसलिये किसी संभार (के आहरण) की आवश्यकता नहीं। (इस पर याज्ञवल्क्य का समाधान है कि–) अग्नि का आधान करने के लिये संभारों को एकत्रित करना ही चाहिये; क्योंकि जब यज्ञकर्ता इस पृथ्वी पर अग्नि का आधान करता है तब विधिपूर्वक सभी संभारों के स्थापन से ही वह सिद्ध होता है (संभारों के बिना अग्नि-स्थापन (आधान) का कोई प्रयोजन नहीं होता), इसलिये संभारों को इकट्ठा करना ही चाहिये॥१४॥१॥

❋

## प्रथमाध्याये द्वितीयं ब्राह्मणम्

कृत्तिकास्वग्नी ऽआदधीत। (तै) एता वा ऽअग्निनक्षत्रं यत्कृत्तिकास्तद्वै सुलोम् यो ऽग्निनक्षत्रे ऽग्नी ऽआदुधातै तुस्मात्कृत्तिकास्वादधीत॥१॥

(तै) एकं द्वे त्रीणि। चत्वारीति वा ऽअन्यानि नक्षत्राण्यथैता

---

### अथ नक्षत्रब्राह्मणम्

कृत्तिकास्वग्नी आदधीत। एता वा अग्निनक्षत्रं यत् कृत्तिकाः। तद्वै सलोम–योऽग्निनक्षत्रेऽग्नी आदधातै। तस्मात् कृत्तिकास्वादधीत॥१॥

एकं द्वे त्रीणि चत्वारीति वा अन्यानि नक्षत्राणि। अथैता एव भूयिष्ठाः

---

कर्मणः कालसापेक्षत्वादाधानस्य नक्षत्रं विधत्ते—**कृत्तिकास्वित्यादिना** (का.श्रौ.सू. ४.१७६)। 'अग्नी' गार्हपत्याहवनीयावित्यर्थः। अग्निदेवताकत्वादग्निनक्षत्रं कृत्तिकाख्यम्। श्रूयते हि—'कृत्तिकानक्षत्रमग्निर्देवता'[2] इति। तस्मिन्नग्निनक्षत्रेऽग्न्याधानं 'सलोम' सदृशं, योग्यमिति यावत्॥१॥

अथैतस्य नक्षत्रस्य बहुत्वोपजीवनेन प्रशंसति—**एकमिति**। कृत्तिकातः

---

अग्नियों का आधान कृत्तिका नक्षत्रों में करना चाहिये। (क्योंकि) 'कृत्तिका' अग्नि के नक्षत्र हैं। जो आग्नेय नक्षत्र में अग्नियों का आधान करता है वह सलोम (सादृश्य) योग्यता स्थापित करता है। इसलिये कृत्तिका नक्षत्र में अग्न्याधान करे॥१॥

अन्य नक्षत्र एक, दो, तीन, या चार ताराओं के समूह हैं। (जबकि 'कृत्तिका'

---

१. माघादिपञ्चमासेषु श्रावणे चाश्विने तथा। कुर्यान्मृगोत्तमाङ्गे वा आधानं शुक्लपक्षतः॥१॥
हस्तद्वये विशाखासु कृत्तिकादित्रये तथा। पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च॥२॥
भौमार्किवर्जिते वारे नाऽधिमासे तथा क्षये। चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते॥३॥

(इति कारिकायाम्)

'वसन्ते ब्राह्मणोग्नीनादधीत, ग्रीष्मे राजन्यः, वर्षासु वैश्यः' इत्यादिवचनैः त्रैवर्णिकान्प्रति तत्तद्वर्णोद्देशेन 'अमावास्यायामग्न्याधेयम्' (का.श्रौ.सू. ४.७.१) इत्यादिसूत्रेण विहितं कर्म अग्न्याधानम्। तच्च गार्हपत्याहवनीय-दक्षिणाग्नि-सभ्याग्नि-चतुष्टय-सम्पादकं तत्तत्स्थानेषु मन्त्रपुरःसरमग्नीनां स्थापनरूपमिति आचार्यकृतकातीयभूमिकायाम्।

२. 'एतद्वा अग्नेर्नक्षत्रं यत् कृत्तिका' (तै.ब्रा. १.१.२.१)

एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत॥२॥

(तै) एता ह वै प्राच्यै दिशो न च्यवन्ते। सर्व्वाणि ह वाऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात् कृत्तिकास्वादधीत॥३॥

---

यत् कृत्तिकाः तद् भूमानमेवैतदुपैति। तस्मात् कृत्तिकास्वादधीत॥२॥

एता ह वै प्राच्यै दिशो न च्यवन्ते। सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते। तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतः। तस्मात्–कृत्तिकास्वादधीत॥३॥

---

'अन्यानि नक्षत्राणि एक-द्वि-त्रि-चतुः-सङ्ख्याधिष्ठानान्यल्पीयांसि, कृत्तिकास्तु षट्सङ्ख्याधिष्ठानयोगात् 'भूयिष्ठाः' बहुतराः। तत्रा[1]र्द्रादीनाम् 'एकम्' अधिष्ठानम्, फल्गुन्यादीनां 'द्वे' अश्विन्यादीनां 'त्रीणि' पुनर्वस्वादीनां 'चत्वारि'। 'तत्' तस्मात्, एभ्यो भूयिष्ठनक्षत्राधानात् यजमानोऽपि 'भूमानं' बहुत्वमेवोपगच्छतीत्यर्थः॥२॥

नियतदिक्सम्बन्धवशेनैताः प्रशंसति—**एता ह वा इति**। 'प्राच्यै' प्राच्याः 'दिशः' सकाशात् 'न च्यवन्ते' दक्षिणत उत्तरतो वा विक्षेपवशान्न चलन्ति, किन्तु नियमेन शुद्धप्राच्यामेवोद्यन्ति; 'अन्यानि' तु 'नक्षत्राणि' प्राचीदिग्भागाद् दक्षिणत उत्तरतो वा विक्षेपवशाच्चलन्ति, प्राचीदिग्भागाद् दक्षिणत उत्तरतश्च नियमेन परिवर्त्तन्ते। **तत् प्राच्यामित्यादि**। निगदसिद्धम्॥३॥

---

सात ताराओं का समूह है) अतः 'कृत्तिका' भूयिष्ठ-नक्षत्र है। इस प्रकार (जो कृत्तिका नक्षत्र में आधान करता है, वह) बहुत्व को प्राप्त होता है अतः 'कृत्तिका' नक्षत्र में अग्न्याधान करे॥२॥

(दूसरी विशेषता यह है कि–) यह (कृत्तिका) नक्षत्र पूर्व दिशा से हटते नहीं हैं, जबकि अन्य सब नक्षत्र पूर्व दिशा से हटते हैं। ध्रुवता को दृष्टिगत कर ही अग्न्याधान के इच्छुक यजमान की अग्नियाँ भी पूर्व की दिशा में ही स्थापित की जाती हैं, इसलिए 'कृत्तिका' नक्षत्रों में ही अग्न्याधान करे॥३॥

---

१. 'तत्र चित्रादीनाम् इ.क्व. पाठः।

(ता) अथ यस्मान्न कृत्तिकास्वादधीत। (र्क्षा) ऋक्षाणाᳫंह वा ऽएता अग्रे पत्न्य आसुः सप्तऽर्षीनु ह स्म वै पुरऽर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृद्ध्याऽइति तस्मान्न कृत्तिकास्वादधीत॥४॥

---

**अथ यस्मात्–न कृत्तिकास्वादधीत। ऋक्षाणां ह वा एता अग्रे पत्न्य आसुः। सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते। ता मिथुनेन व्यार्ध्यन्त। अमी ह्युत्तराहि सप्तर्षय उद्यन्ति, पुर एताः। अशमिव वै तत्–यो मिथुनेन व्यृद्धः। स नेन्मिथुनेन व्यृद्ध्यै इति। तस्मात्–न कृत्तिकास्वादधीत॥४॥**

---

कृत्तिकास्वाधानपक्षं मिथुनव्यृद्धिहेतुत्वान्निषेधति—**अथ यस्मादिति**। 'यस्माद्' वक्ष्यमाणदोषोऽस्ति, तस्मात् 'कृत्तिकासु न आदधीत'। कोऽसौ दोषः? तमुपन्यस्यति—**ऋक्षाणां हेति**। ऋक्षशब्दार्थमाह—**सप्तर्षीनिति**। 'ऋक्षं' नक्षत्रम्; तद्रूपेणावस्थानात्। इह 'ऋक्ष'—शब्देन सप्तर्षयोऽभिधीयन्ते पुर[1] ऋक्षा इति पुरेत्यस्य 'ऋत्यकः' (पा.सू. ६.१.१२८) इति प्रकृतिभावो ह्रस्वश्च। 'व्यार्द्धयन्त' विगतर्द्धिका अभवन्। वृद्धिमेव देशभेदोदयेन स्पष्टयति—**अमी हीति**। 'अमी' खलु 'सप्तर्षयः' 'उत्तरा हि'। 'आहि च दूरे' (पा.सू. ५.३.३७) इति। 'आहि' प्रत्ययः। दूरदेशे उत्तरदिग्भागे 'उद्यन्ति'। 'एताः' कृत्तिकाः 'पुरः' पूर्वस्यां दिशि। अत[2] एव तासां विभिन्नदेशावस्थानेन पुरुषसम्भोगविरहान्मिथुनव्यृद्धिः। तच्चासमीचीनमित्याह—**अशमिव वैतदिति**। अतः कृत्तिकास्वाधानं कुर्वन्नपि तद्वत् मिथुनेन व्यृद्ध्यते, अतो 'न इत्' नैवाहं 'मिथुनेन' 'व्यृद्ध्यै' व्यृद्धो भवानीत्यभिप्रेत्य तत्र नादधीतेत्यर्थः॥४॥

---

(परन्तु कुछ लोग युक्ति देते है कि–) कृत्तिकाओं में अग्न्याधान नहीं करना चाहिए; क्योंकि ये कृत्तिकायें पुराकाल में ऋक्षों (सप्तर्षियों) की पत्नियाँ थीं। सात ऋषियों को पहले 'ऋक्ष' कहते थे। वे सप्तर्षियों का संगम प्राप्त न कर सकीं क्योंकि उत्तर-दिग्भाग में सप्त-ऋषि (तारा-समूह) निकलते हैं और ये (कृत्तिकायें) पूर्व में। भिन्न देश में अवस्थिति के कारण पुरुषसंभोगाभाव 'युग्म' का दुर्भाग्य (अशम्) है। इसलिए कृत्तिका नक्षत्रों में अग्न्याधान न करे कि कहीं दाम्पत्य-सुख (मिथुनीभाव) से वंचित न हो जाय॥४॥

---

१. यद्यपि मूले 'पुरऽर्क्षाः' इत्येव पाठ उपलभ्यतेऽथापि 'पुर ऋक्षा' इत्येव भाष्यसमतः पाठ इति प्रतीयते।
२. 'अत एवासां संभिन्नदेशावस्थानेन' इति पा.।

**तद्वैव दधीत। (ताग्नि) अग्निर्व्वा ऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादेव दधीत॥५॥**

**रोहिण्यामग्नी ऽआदधीत। रोहिण्याꣳ ह वै प्रजापतिः प्रजाकामोऽग्नी ऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान् रोहिण्यामाधत्ते॥६॥**

---

**तद्वैव दधीत। अग्निर्वा एतासां मिथुनम्। अग्निनैता मिथुनेन समृद्धाः। तस्मादैव दधीत॥५॥**

**रोहिण्यामग्नी आदधीत। रोहिण्यां ह वै प्रजापतिः प्रजाकामोऽग्नी आदधे स प्रजा असृजत। ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थुः, रोहिण्य इवैव।तद्वै रोहिण्यै रोहिणीत्वम्। बहुर्हैव प्रजया पशुभिर्भवति–य एवं विद्वान् रोहिण्यामाधत्ते॥६॥**

---

अथैतद्दोषं परिहरन्नाधानपक्षमेव निगमयति—तद्वैवेति। 'तत् उ[1] आ एव' तस्मिन्नपि[2] नक्षत्रे आदधीतैव। अग्निर्वा इत्यादि। स्पष्टम्[3]॥५॥

नक्षत्रान्तरं विधाय प्रशंसति—**रोहिण्यामिति**। 'आदधे' आधानं कृतवान्। 'उपस्तब्धाः' प्रतिबद्धगतयो विनाशरहिताः पुत्रपौत्रादिरूपेणैकरूपा अविच्छिन्न-प्रवाहाः 'तस्थुः' स्थितवत्यः। ताश्च 'रोहिण्यः' स्वर्गादिलोकारोहणसाधनभूता इव स्थिताः। एतदुपजीवनेन नामनिर्वचनं करोति—**तद्वा इति**। स्पष्टार्थमन्यत्॥६॥

---

परन्तु (याज्ञवल्क्य का मत है कि–) कृत्तिका में अग्न्याधान किया जा सकता है। क्योंकि इन (कृत्तिकाओं) का जोड़ीदार (सहचर) तो अग्नि है। अग्नि के सहवास से ये समृद्ध हैं। इसलिए अग्नि का आधान (कृत्तिका में) करे॥५॥

(नक्षान्तर विकल्प विधान) 'रोहिणी' नक्षत्र में भी अग्न्याधान कर सकता है; क्योंकि रोहिणी नक्षत्र में ही प्रजाओं के इच्छुक प्रजापति ने अग्न्याधान किया था, उसने प्रजाओं की सृष्टि की और वे प्रजायें एक-रूप और अविच्छिन्न रहीं। साथ ही वे रोहिण्य = स्वर्गादिलोकारोहणसाधनभूत भी रहीं। इसलिए रोहिणी नक्षत्र स्वर्गादिलोकारोहणसाधनभूत है। अतएव जो कोई इस रहस्य को समझकर रोहिणी नक्षत्र में अग्न्याधान करता है वह सन्तान और पशुओं से फलता-फूलता है॥६॥

---

१. 'तत्, स, उ, एव' इति पदानि इति क्व.पा.। २. 'तत्रास्मिन्नपि' इति पा.। ३. 'अमावास्याया-मग्न्याधेयं' = 'कृत्तिकारोहिणीमृगशिरःफल्गुनीषु' इति का.श्रौ.सू. ४.१७५-१७६।

रोहिण्यामु ह वै पशवः। (वो) अग्नीऽआदधिरे मनुष्याणां कामँ्रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामँ्रोहति य एवं विद्वान्रोहिण्यामाधत्ते॥७॥

मृगशीर्षेऽग्नीऽआदधीत। (तै) एतद्वै प्रजापतेः शिरो यन्मृगशीर्षँ श्रीर्वैशिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो

---

रोहिण्यामु ह वै पशवोऽग्नी आदधिरे–मनुष्याणां कामं रोहेमेति। ते मनुष्याणां काममरोहन्। यमु हैव तत् पशवो मनुष्येषु काममरोहन्, तमु हैव पशुषु कामं रोहति–य एवं विद्वान् रोहिण्यामाधत्ते॥७॥

मृगशीर्षेऽग्नी आदधीत। एतद्वै प्रजापतेः शिरो यन्मृगशीर्षम्। श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्मात्–योऽर्द्धस्य श्रेष्ठो भवति, असावमुष्यार्द्धस्य शिर

---

रोहिण्याधानं प्रकारान्तरेण प्रशंसति—रोहिण्यामुहेति। मनुष्याणां कामं रोहेमेति। 'मनुष्याणां' 'कामः' भोग्यवस्तुविषयः, तत्पूरणसामर्थ्ययोगेन[1] तं प्राप्नुयामेत्यर्थः। यमु हैवेति। रोहिण्याधानेन काम्यमानभोग्यवस्तु-जातपूरणसामर्थ्यम्[2] 'मनुष्येषु' अवस्थितम् 'यमु' यमेव 'कामं' प्राक् प्राप्नुवन्, 'तम्' एव इदानीं 'पशुषु' अवस्थितं रोहिण्यामाधानतः प्राप्नोति[3]। एतमेव सर्वे जना उपजीव्यत्वेन कामयन्त इति भावः॥७॥

नक्षत्रान्तरं विधाय प्रशंसति—मृगशीर्ष इति। एतद्वा इति। पुरा खलु प्रजापतिः मृगरूपमास्थाय[4] मृगीभूतां स्वदुहितरमेवोपागमत्[5]। एतत् ज्ञात्वा—

---

रोहिणी नक्षत्र में ही पशुओं ने भी अग्नियों का आधान किया इस आशय से कि हम मनुष्यों की इच्छाओं को पूर्ण करें (रोहेम)। उन्होंने मनुष्यों की कामनाओं तक रोहण किया; और जो कामना पशुओं की मनुष्यों के प्रति पूरी हुई वही कामना मनुष्यों की पशुओं के प्रति भी पूरी होगी जो इस रहस्य को समझकर रोहिणी नक्षत्र में अग्न्याधान करता है॥७॥

(अथवा–) 'मृगशीर्ष' नक्षत्र में भी अग्न्याधान कर सकता है। क्योंकि मृगशीर्ष प्रजापति का सिर है। श्री ही शिर है। इसलिए जो मनुष्य जाति में श्रेष्ठ होता है

---

१. 'योग्येन' इति पा.। २. 'काम्यमानं भोग्यवस्तुजातं पूरणसामर्थ्यायोगात्' इति क्व.पा.। ३. 'यो रोहिण्यामग्निमाधत्ते, ऋध्नोत्येव' इति तै.ब्रा. १.१.२.२। ४. 'कृष्णमृगरूपमास्थाय' इति पा.। ५. 'स्वां दुहितरमेवाभ्युपागमत्' इति पा.।

भ॒वत्यसा॒वमुष्या॒र्द्धस्य शि॒र इ॒त्याहुः॒ श्रि॒यꣳ॑ ह गच्छ॒ति य॒ ए॒वं वि॒द्वान् मृगशीर्षऽआधत्ते॥८॥

(त्ते॒ऽथ) अ॒थ य॒स्मान्न॒ मृगशीर्ष ऽआद॒धीत प्रजा॒पतेर्वा॒ एतच्छ॒रीरं य॒त्र वा॒ ऽएनं तद॒विध्यँस्तदि॒षुणा त्रि॒काण्डेनेत्याहुः स॒

---

इत्याहुः। श्रियं ह गच्छति-य एवं विद्वान् मृगशीर्ष आधत्ते॥८॥

अथ यस्मात् न मृगशीर्ष आदधीत। प्रजापतेर्वा एतच्छरीरं यत्र वा एनं तदविध्यँस्तदिषुणा त्रिकाण्डेनेत्याहुः। स एतच्छरीरमजहात्। वास्तु वै

---

अकार्यकारिणः प्रजापतेः शिरश्छेत्तुं देवा कश्चित् क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठिपन्। स चेषुणा तस्य शिरश्चिच्छेद। तच्च मृगशरीरमिषुच्छिन्न-शिरश्चेत्येतदुभयमन्तरिक्षमुत्प्लुत्य नक्षत्रात्मनाऽवस्थितं संदृश्यते। तथा चैतरेयके—'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्' (ऐ.ब्रा. ३.३.९) इत्युपक्रम्य 'वो एवेषुस्त्रिकाण्डा'—इत्यन्तेनायमर्थः प्रतिपादितः। ईदृशी श्रुत्यन्तरप्रसिद्धिरत्र वैशब्देन द्योत्यते। श्रीर्वै शिर इत्यादि। व्याख्यातम्॥८॥

तदेतन्मृगशीर्षाख्यस्य नक्षत्रस्याधाने प्रजापतिशिरश्छेदसंभूतेस्तद्दोषादाधानं निषेधति—**अथ यस्मान्नेति**। मृगशीर्षाधानं न कार्यम्, अत्र हेतुः प्रतिपाद्यत इत्यर्थः। कोऽसौ हेतुः? तमाह—**प्रजापतेरिति**। मृगशीर्षाख्यस्य नक्षत्रस्य प्रजापतिशरीरत्वमाह—'यत्र' यस्मिन् समये 'एनम्' प्रजापतिं मृगरूपम्[2], 'तत्' तेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवाः 'अविध्यन्', 'तत्' तदानीं पत्रदारुशल्यरूपावयवत्रयोपेतेन[3] 'इषुणा' खलु तच्छिरश्छिन्नम् 'इत्याहुः' ब्रह्मवादिनः। 'स' च प्रजापतिस्तदानीम् 'एतच्छरीरम्' त्यक्तवान्। अतो निरात्मकत्वात् 'निर्वीर्यम्' नक्षत्रात्मनाऽवस्थितं मृगशिरः 'वास्तु' शून्यस्थानम्।

---

उसको कहते हैं कि यह जाति का शीर्ष (शिर) है। जो इस रहस्य को समझकर मृगशीर्ष नक्षत्र में अग्न्याधान करता है वह श्री को प्राप्त करता है॥८॥

अब मृगशीर्ष नक्षत्र में अग्न्याधान न करने की (युक्ति कुछ लोग यह देते हैं) कि—यह प्रजापति का शरीर है। जब इसको देवों ने त्रिकाण्ड तीर से बींधा तो कहते हैं कि उसने शरीर त्याग दिया। इसलिए यह मृगशीर्ष नक्षत्र का शरीर

---

१. वेगवशेनेषुश्चशिरश्चेत्येतदुभयम् इति पा.। २. 'कृष्णमृगरूपम्' इति पाठः। ३. 'त्रिकाण्डा, अनीकं, शल्यः, तेजनम् इत्यवयवत्रयोपेता' इति ऐ.ब्रा. ३.३.९ सा.भाष्ये।

ऽएतच्छुरीरमजहाद्वास्तु वै शुरीरमयज्ञियं निर्व्वीर्यं तुस्मान्न मृगशीर्ष ऽआदधीत॥९॥

तुद्वैव दधीत। न वा ऽएतुस्य देवुस्य वास्तु नायज्ञियं न शुरीरमस्ति यत्प्रजापतेस्तुस्मादैव दधीत पुनर्व्वस्वोः पुनराधेयमादधीतेति॥१०॥

---

शरीरमयज्ञियं निर्वीर्यम्। तस्मात्–न मृगशीर्ष आदधीत॥९॥

तद्वैव दधीत। न वा एतस्य देवस्य वास्तु, नायज्ञियम्, न शरीरमस्ति; यत्–प्रजापतेः। तस्मादैव दधीत। पुनर्वस्वोः पुनराधेयमादधीतेति॥१०॥

---

यत एवात्मना त्यक्तम्, अत एव 'शरीरम्' विशरणशीलम् अत एव च 'अयज्ञियम्' यज्ञानर्हम्, न हि मृतशरीरस्य यज्ञात्मत्वं सम्भवति। 'तस्मात्' तदात्मके मृगशीर्षाख्ये नक्षत्रे आधानं न युक्तमित्यर्थः॥९॥

इमं दोषं परिहरन् प्रागुक्तमेव पक्षं निगमयति—**तद्वैवेति। देवस्येति।** मनुष्येण त्यक्तस्य शरीरस्य हि वास्त्वादिरूपत्वम्। अयं हि प्रजापतिर्देवः, तेन त्यक्तस्य[1] तत्त्वाभावात् वास्त्वादिरूपो दोषो नास्ति; मृगरूपस्य तस्य शिरः स्वमहिम्नैव नक्षत्ररूपेण सम्पन्नम्, न खलु मानुषं शिरस्तथा भवितुमर्हति। तस्मात् तत् सवीर्यमेवेति तत्राधाने नोक्तदोष इत्यर्थः।

पुनर्वस्वाख्यस्य नक्षत्रस्य लिङ्गवशात्[3] पुनराधेयविषयतामाह—**पुनर्वस्वोरिति।** आहितानामप्यग्नीनां[4] पुनर्निमित्तवशादाधानं पुनराधेयम्। (पुनर्वस्वोरिति द्विवचनं पुष्याभिप्रायम्) नक्षत्रं चैतत् नष्टस्य वसुनः पुनःप्राप्तिहेतुत्वात् पुनर्वस्वाख्यम्। तथा च तैत्तिरीयके स्पष्टमाम्नातम्—'स पुनर्वस्वोरग्निमादधीत, पुनरेवैनं वामं वसूपावर्तते' (तै.ब्रा. १.१.२.३) इति॥१०॥

---

केवल वास्तु (=चैतन्यशून्य); अयज्ञिय (यज्ञ न करने योग्य) और निर्वीर्य हो गया। इसलिए मृगशीर्ष-नक्षत्र में अग्न्याधान न करे॥९॥

परन्तु (मृगशीर्ष नक्षत्र में भी अग्न्याधान) कर सकता है। यह जो प्रजापति का शरीर है (वह मानव-शरीरवत्) न तो वास्तु (चैतन्यशून्य) होता है न अयज्ञिय

---

१. 'परित्यक्तस्य तत्त्वभावाद्' इति पा.। २. 'नक्षत्ररूपत्वं संपन्नम्' इति पा.। ३. 'पुनराधेयमाधाना-प्रतिज्ञातस्य' का.श्रौ.सू. ४.२५९ 'पुनर्वस्वोः' का.श्रौ.सू. ४.२६३। ४. 'पुनर्वस्वाभिज्ञवशात्' इति ख.पा.।

फ॒ल्गुनी॑ष्व॒ग्नी ऽआद॑धीत। (तै) ए॒ता वा॒ ऽइन्द्र॑नक्षत्रं॒ यत्फ॒ल्गुन्यो॒ऽप्य॑स्य प्र॒ति॑नाम्न्यो॒ऽर्जुनो ह वै नामे॒न्द्रो यद॑स्य गु॒ह्यं नाम॒र्जुन्यो वै ना॒मैता॒स्ता ए॒त॒त्प॒रो॒ऽक्षमा॒चक्षते फ॒ल्गुन्य इति को ह्ये॒तस्या॒र्हति गु॒ह्यं ना॒म ग्र॒ही॒तु॒मि॒न्द्रो वै य॒जमा॒नस्तत्स्व॒ ऽए॒वैत॒न्न॒क्षत्रे॒ऽग्नी आ॒धत्त ऽइ॒न्द्रो य॒ज्ञस्य दे॒व॒तै॒ते॒नो हा॒स्यै॒तत्सेन्द्र-

---

**फल्गुनीष्वग्नी आदधीत। एता वा इन्द्रनक्षत्रं यत् फल्गुन्यः। अप्यस्य प्रतिनाम्न्यः। अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम अर्जुन्यो वै नामैताः। ता एतत् परोक्षमाचक्षते–फल्गुन्य इति। को ह्येतस्यार्हति गुह्यं नाम ग्रहीतुम्। इन्द्रो वै यजमानः। तत् स्व एवैतन्नक्षत्रेऽग्नी आधत्ते। इन्द्रो यज्ञस्य देवता।**

---

नक्षत्रान्तरं विधाय प्रशंसति—**फल्गुनीष्वग्नी इति**। पूर्वोत्तरयोः फल्गुन्याख्ययोर्नक्षत्रयोः प्रत्येकमधिष्ठानद्वित्वयोगाद्बहुत्वम्[1]। फल्गुनीनामोपजीवनेन प्रशंसति—**एता वा इति**। कथमस्य नक्षत्रस्येन्द्रसम्बन्ध इत्यत आह—**अप्यस्येति**। 'अस्य' इन्द्रस्य प्रतिनिधिभूताः फल्गुन्यः सम्भाव्यन्ते। 'अपिः' सम्भावनार्थः। प्रतिनिधित्वं च समानशब्दाभिधेयत्वादित्याह—**अर्जुनो हेति**। 'अर्जुनः' 'इति' हि इन्द्रस्य रहस्यं नाम; अत एव खलु तत्पुत्रे पाण्डवमध्यमे तन्नामप्रवृत्तिः। अर्जुनफल्गुनशब्दौ च पर्यायौ; 'अर्जुनः फल्गुनः पार्थः'—इति समानार्थतया परिगणनात्। 'अर्जुन्यः' एव 'एताः', पारोक्ष्येण 'फल्गुन्य इति' उच्यन्ते। ननु किं पारोक्ष्येणेत्यत आह—**कोह्येतस्यार्हतीति**। अतःफल्गुनीशब्दस्य परम्परयेन्द्रोपलक्षकत्वात् तन्नामकं नक्षत्रम्। **इन्द्रो वा इत्यादि**। स्पष्टम्। फल्गुनीषु

---

और न निर्वीर्य (इसलिए मृगशीर्ष में अग्न्याधान करे। 'पुनर्वसु' नक्षत्र में पुनराधेय कर्म करे ऐसा उपदेश है।।१०।।

(अथवा–) फल्गुनी नक्षत्र में भी अग्न्याधान कर सकता है। यह 'फल्गुनी' इन्द्र देवता के नक्षत्र हैं; और उसी के नाम पर हैं। इन्द्र का एक नाम अर्जुन भी है। यह उसका गुह्य (गुप्त) नाम है। और इन (फल्गुनी नक्षत्रों) का भी नाम 'अर्जुनी' है। इसलिए इनको परोक्ष रीति से फल्गुनी कहा जाता है; क्योंकि (इन्द्र का) गुह्य नाम कौन ले सकता है? इसके अतिरिक्त यजमान भी 'इन्द्र' है। अतः वह अपने ही नक्षत्र में अग्नि का आधान करता है। 'इन्द्र' यज्ञ का (मुख्य) देवता है। इस प्रकार उसका अग्न्याधान सेन्द्र (इन्द्रवाला) हो जाता है। पूर्व-फल्गुनी में

---

१. 'द्वित्वम्' इति क्व.।

मग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मै भवत्युत्तरयोरादधीत श्वःश्रेयसꣳहैवास्मा ऽउत्तरावद्भवति॥११॥

हस्तेऽग्नीऽआदधीत य इच्छेत्प्र मे दीयेतेति तद्धा ऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते॥१२॥

---

एतेनो हास्यैतत् सेन्द्रमग्न्याधेयं भवति। पूर्वयोरादधीत–पुरस्तात्क्रतुर्हैवास्मै भवति। उत्तरयोरादधीत–श्वःश्रेयसं हैवास्मा उत्तरावद् भवति॥११॥

हस्तेग्नी आदधीत–य इच्छेत् 'प्र मे दीयेतेति'। तद्धा अनुष्ठ्या, यद्धस्तेन प्रदीयते। प्र हैवास्मै दीयते॥१२॥

---

पूर्वोत्तरत्वमुपजीव्य तद्विहितमाधानं प्रशंसति—**पूर्वयोरित्यादिना**[1]। **पुरस्तात् क्रतुरिति**। पूर्वस्मिन्नागामिनि कालेऽग्निष्टोमादिलक्षणः 'क्रतुः' शीघ्रं सिद्ध्यतीत्यर्थः। **श्वःश्रेयसमित्यादि**। उक्तार्थम्॥११॥

एवं परोक्षार्थमाधानस्य प्रपञ्च्य नक्षत्रार्थं नक्षत्रान्तरं प्रशंसति—**हस्तेऽग्नी**[2] **आदधीतेत्याति**। अयं मह्यं प्रदीयतामिति य इच्छेत् स हस्ते आदधीताग्नी। हस्तेन प्रदत्तं साक्षात् प्रदीयत एव। 'ह' इति पुरावृत्ते। 'अनुष्ठ्या'—शब्दः साक्षाद्वाची। स्वहस्तेन 'यत्' खलु दानम्, 'तद्' एव 'अनुष्ठ्या' अनुष्ठानेन समीचीनम्। अतो हस्तनक्षत्रे अग्न्याधानात् परकर्तृकं हस्तेन दानं प्राप्नोतीति तात्पर्यार्थः॥१२॥

---

अग्न्याधान करे। इससे उस यजमान के क्रतु या यज्ञ पहले अर्थात् शीघ्रता से सम्पन्न हो जाते रहेंगे। अथवा (उत्तर) फल्गुनी में अग्न्याधान करे। इससे उसके अन्य अग्निष्टोमादि यज्ञ उत्तरोत्तर सम्पन्न होकर यजमान उन्नतशील हो जायगा। (तात्पर्य यह है कि–पूर्व-फल्गुनी में आधान करने से यजमान के अग्निष्टोमादि क्रतु शीघ्र सम्पन्न हो जायेंगे तथा उत्तर-फल्गुनी में आधान करने से यजमान उत्तरोत्तर यज्ञ-सोपानों पर आरुढ़ होता हुआ श्रेयोमार्ग प्राप्त कर लेगा। अतः दोनों फल्गुनी नक्षत्र ग्राह्य हैं)॥११॥

(अथवा–) हस्त नक्षत्र में अग्न्याधान करे। जिसकी कामना हो कि–मुझे प्रभूत लाभ मिले (वह हस्त-नक्षत्र में अग्न्याधान करे)। जो हाथ से प्रदान किया जाता है, वह अवश्य ही साक्षात् दिया माना जाता है। अतः (हस्त-नक्षत्र में अग्न्याधान

---

१. 'पूर्वयोः फल्गुन्योरग्निमादधीत' इत्यादि, 'उत्तरयोः फल्गुन्योरग्निमादधीत' इत्यादि च तै.ब्रा. १.१.२.४। २. 'हस्तो लाभकामस्य' का.श्रौ.सू. ४.१७७।

**चित्रायामग्नी ऽआदधीत। देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे त ऽउभय ऽएवामुं लोकुᳫँसमारुरुक्षाञ्चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽनेनामुं लोकुᳫँसमारोक्ष्याम इति॥१३॥**

**(ती) इन्द्रो ह वा ऽईक्षाञ्चक्रे। (क्रऽ) इमं चेद्वा ऽइमे**

---

**चित्रायामग्नी आदधीत। देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। त उभय एवामुं लोकं समारुरुक्षाञ्चक्रुर्दिवमेव। ततोऽसुरा रौहिणमित्यग्निं चिक्यिरे–'अनेनामुं लोकं समारोक्ष्याम' इति॥१३॥**

**इन्द्रो ह वा ईक्षाञ्चक्रे 'इमं चेद्वा इमे चिन्वते, तत एव नोऽभिभवन्ति'**

---

नक्षत्रान्तरं विधाय प्रशंसति—**चित्रायामित्यादि**[1]। **आरुरुक्षाञ्चक्रुरिति**। आरोढुमिच्छां कृतवन्त इत्यर्थः। अमुमिति 'अदस्'-शब्देन पारोक्ष्येण यो लोको निर्दिष्टः, तं विशिनष्टि—**दिवमेवेति**। 'ततः' अनन्तरम् 'असुराः' 'रौहिणमिति' एतन्नामकं रोहणसाधनम् 'अग्निं' 'चिक्ये'[2] व्यत्ययेनैकवचनम्, (पा.सू. १.४.९) 'चिक्यिरे' चितवन्तः। **अनेनेत्यादि**। स्पष्टम्॥१३॥

इत्थं द्युलोकं समारुरुक्षतोऽसुरानाकलय्य तेषां विभ्रेषणमिन्द्रश्चेतयति—**इन्द्रो हेति**। **इमं चेदित्यादि**। यम् 'इमम्' अग्निं वयं चेष्यामः, इममेव चेदसुरा अपि

---

करने वाले को) दूसरों के द्वारा दिया गया धनादि लाभ अवश्य प्राप्त होता है। (यहाँ 'हस्त' नक्षत्र का शाब्दिक सम्बन्ध हाथ द्वारा किये गये दान से जोड़ा गया है)॥१२॥

(अथवा–) चित्रा नक्षत्र में अग्न्याधान करे। प्रजापति के पुत्र देव और असुर श्रेष्ठभाव के लिए स्पर्द्धा करने लगे। दोनों ने चाहा कि उस लोक (द्युलोक) पर आरुढ़ हो जावें। तब असुरों ने रौहिण अग्नि को स्थापित कर प्रज्वलित इस आशय से किया कि इसके द्वारा हम उस लोक पर आरूढ़ हो जायेंगे। (यहाँ अग्नि को रौहिण कहा गया है; क्योंकि अग्नि स्वर्गारोहणसाधनभूत है। चढ़ने के लिए भी 'रुह' धातु आता है (आरोहति)। यह शब्दार्थ सादृश्य है)॥१३॥

तब इन्द्र ने सोचा कि यदि ये इस अग्नि का आधान कर (अग्नि चयन-

---

१. 'चित्रा च क्षत्रियस्य' इति का.श्रौ.सू. ४.१७८। २. भाष्यकारमते 'चिक्ये' इत्येव मूले न तु 'चिक्यिरे' इत्यनेन व्याख्यानेन प्रतीयते।

चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय॥१४॥

स होवाच। हन्ताहमिमामप्युपदधा ऽइति तथेति तामुपाधत्त तेषामल्पकादेवाग्निरसञ्चित ऽआस॥१५॥

(सा) अथ होवाच। (चा) अन्वाऽअहं तां दास्ये या ममेहेति तामभिपद्याबबर्हतस्यामाबृढायामग्निर्व्युवशशादाग्ने-

---

इति। स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय॥१४॥

स होवाच–'हन्ताहमिमामप्युपदधै' इति। तथेति तामुपाधत्त। तेषामल्पकादेवाग्निरसञ्चित आस॥१५॥

अथ होवाच–'अन्वा अहं तां दास्ये या ममेह' इति। तामभिपद्याब्बर्ह।

---

चिन्वीरन्, 'ततः' तस्मात् 'एव' साधनात् 'नः' अस्मान् 'अभिभवन्ति' असुराः अभिभवितुं समर्था भवन्ति। 'इति' एवं विचार्य, 'सः' इन्द्रः 'ब्राह्मणः' भूत्वा असुरहितं ब्रुवाण एव 'एकामिष्टकां' 'प्रबध्य' गृहीत्वा 'इयाय' जगाम॥१४॥

**स होवाचेति।** गत्वा च तान् असुरान् 'उवाच'। 'अहम्' अपि 'इमाम्' इष्टकां भवदीयेऽग्नौ 'उपदधै' उपधानं करवाणि 'इति'। 'तथा' 'इति' तैरनुज्ञातः, 'ताम्' इष्टकां तत्र 'उपाधत्त'। अन्यदीये चयने अन्यदीयेष्टकोपधानम-शास्त्रीयमित्येतस्मात् 'अल्पकादेव' भ्रेषात्[१] 'तेषाम्' असुराणाम् 'अग्निः' असम्यक्चितो विकलो बभूव॥१५॥

**अथ होवाचेति।** 'अथ' कालान्तरे स एव ब्राह्मणरूप इन्द्रस्तानसुरान् 'उवाच'। 'हि' अस्मिंश्चितिप्रदेशे 'या' 'मम' इष्टका, 'ताम्' अहम् 'आदास्ये'

---

याग सम्पन्न कर) लेंगे तो हमको पराभूत कर देंगे। तब वह ब्राह्मण का भेष धारण कर एक ईंट लेकर उनके पास गया॥१४॥

उसने असुरों से कहा, 'मैं भी इस (ईंट) को रख दूँ। उन्होंने कहा 'तथास्तु'। उसने (वह ईंट) उनकी यज्ञवेदी पर रख दी। (अन्यदीय इष्टकोपधान रूप) असुरों की इस छोटी सी त्रुटि से उनके अग्निचयन-याग में विकलता आ गई॥१५॥

कालान्तर में ब्राह्मण वेषधारी इन्द्र ने असुरों से कहा—चयनयाग की वेदी से मैं इस (ईंट) को निकाले लेता हूँ क्योंकि यह मेरी है। उसने अपनी ईंट को

---

१. 'भ्रेषो भ्रंशो यथोचितात्' इत्यमरः २.८.१२।

र्व्यवशादमन्वसुरा व्यवशेदुः स ताऽएवेष्टका वज्रान्कृत्वा ग्रीवाः प्रचिच्छेद॥१६॥

ते ह देवाः समेत्योचुः। (श्चि) चित्रं वाऽअभूम य ऽइयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रँह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वांश्चित्रायामाधत्ते

---

**तस्यामाबृढायामग्निर्व्यवशशाद। अग्नेर्व्यवशादमनु असुरा व्यवशेदुः। स ता एवेष्टका वज्रान् कृत्वा ग्रीवाः प्रचिच्छेद॥१६॥**

**ते ह देवाः समेत्योचुः–'चित्रं वा अभूम, य इयतः सपत्नानवधिष्म' इति। तद्वै चित्रायै चित्रात्वम्। चित्रं ह भवति, हन्ति सपत्नान्, हन्ति द्विषन्तं भ्रातृव्यम्, य एवं विद्वांश्चित्रायामाधत्ते। तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेत्सेंत्।**

---

इत्युक्त्वा तत्समीपमभिप्राप्य, 'ताम्' इष्टकाम् 'आबबर्ह' उद्ययाम, तस्मात् स्थानादचालयदित्यर्थः। 'बृहू उद्यमने' (तु.प. ६७) इति धातुः। 'तस्यां' चेष्टकायां चित्याग्नेः सकाशाच्चालितायां सत्याम्, सः 'अग्निः' 'व्यवशशाद[१]' विशीर्णो बभूव। तदनन्तरं तच्चेतारः 'असुरः' च 'व्यवशेदुः[२]' व्यवसन्नाः, शिथिला बभूवुः। **स ता इत्यादि।** 'सः' इन्द्रः 'ताः' चित्याग्निसम्बद्धाः 'इष्टकाः' 'एव' 'वज्रान्' विधाय असुरसम्बन्धिनीः 'ग्रीवाः' प्रचिच्छेद॥१६॥

चित्रानाम निर्वक्ति—**ते ह देवा इति।** चित्राख्येष्टका। 'इयतः' एतावतः 'सपत्नान्' 'अवधिष्म' अमस्तकांश्चकृम। तत् अस्या एवं चित्रहेतुत्वात् 'चित्रा' नाम सम्पन्नमित्यर्थः। **चित्रं हेत्यादि निगदसिद्धम्।**

---

पकड़ा और खींच लिया, जिसके फलस्वरूप असुरों की अग्नि चयन की वेदी गिर पड़ी। अग्नि चयन की वेदिका के गिर जाने से असुर भी विशीर्ण हो गिर पड़े। इन्द्र ने अग्निचयन की उन ईंटों को वज्र बना दिया और उससे (असुरों के) गले काट डाले॥१६॥

तब देवगण इकट्ठे होकर बोले—हमने इतने सारे शत्रु मार डाले। यह तो अत्यन्त चित्र अर्थात् विचित्र आश्चर्य की बात हुई। यही चित्रा नक्षत्र का चित्रत्व (विचित्रता) है। जो चित्रा नक्षत्र में अग्न्याधान करता है वह विचित्र अर्थात् आश्चर्यजनक ढंग से अहितकारी शत्रुओं का नाश करने में समर्थ हो जाता है।

---

१. 'व्यवससाद' इति पाठः। २. 'व्यवसेदुः' इ.क्व.पु.पा.।

तुस्मादेतुत्क्षत्रि॒य एव नुक्षत्रमुपेत्र्सेज्जिुघाᳬंसतीवु ह्येषु सपत्नुान्वीव जि॒गीषते॥१७॥

नुाना ह वुाऽएतान्यग्रे क्षत्रुाण्यासुः। (र्यु) यथैवासौ सूर्यऽएवं तेुषामेष उद्युन्नेवु व्वीुर्य्यं क्षत्रमुादत्त तुस्मादादित्यो नुाम यदेषां व्वीुर्य्यं क्षत्रमुादत्त॥१८॥

---

जिघांसतीव ह्येष सपत्नान्, वीव जिगीषते॥१७॥

नाना ह वा एतान्यग्रे क्षत्राण्यासुः–यथैवासौ सूर्यः; एवम्। तेषामेष उद्यन्नेव वीर्यं क्षत्रमादत्त। तस्मादादित्यो नाम–यदेषां वीर्यं क्षत्रमादत्त॥१८॥

---

**तस्मादेतदित्यादि**। यस्मादुक्तरीत्या चित्रा[1]नक्षत्रस्य शत्रुहननसाधनत्वम्, 'तस्मात्' आधाने क्षत्रिय एव[2], 'एतत्' नक्षत्र 'उपेत्सेंत्' स्वीकुर्यात्। तत्र कारणमाह—**जिघांसतीवेति**। 'एषः' खलु क्षत्रियः यः अन्यान्—शत्रून् 'जिघांसति' हन्तुमिच्छति 'इव', तथा 'विजिगीषते' 'इव' विजेतुमिच्छतीव। तस्माच्छत्रुहनन-कामस्य क्षत्रियस्यैवैतन्नक्षत्रम्, नेतरस्येत्यर्थः॥१७॥

सूर्येणापहृतवीर्याणि कृत्तिकादिनक्षत्राण्यनादृत्य तेजस्विनि सूर्यात्मके नक्षत्र उद्यति सत्याधानं कार्यमित्याह—**नाना ह वा इति**। पुरा खलु कृत्तिकादि-नक्षत्रमण्डलानि सूर्यमण्डलवत् तेजस्विन्येव बभूवुः। 'एषः' खलु 'सूर्यः' 'उद्यन्' उदयं प्राप्नुवन् 'क्षत्रं' तेजः सामर्थ्यं चोदयमाप्नुवन् 'एव' 'तेषां' 'वीर्यम्' 'आदत्त' स्वीकृतवान्। 'तस्मात्' आदानात्[3] 'आदित्यः' इति उच्यते॥१८॥

---

इसलिए क्षत्रिय को अवश्य ही इस नक्षत्र में अग्न्याधान करना चाहिए। क्षत्रिय को राष्ट्र के शत्रुओं को मारने एवं उन पर विजय प्राप्त करने की बलवती इच्छा रहती है अतः शत्रुहनन कामना वाले क्षत्रिय के लिये यह प्रशस्त नक्षत्र है॥१७॥

पुराकाल में ये नक्षत्र-मण्डल उसी प्रकार बहुत तेजस्वी (= क्षत्र) थे जैसे अब यह सूर्यमण्डल है। किन्तु जब यह सूर्यमण्डल खगोल में प्रादुर्भूत हुआ तो उसने उन नाना नक्षत्रों के तेज (क्षत्र) और वीर्य (शक्ति) को ले लिया। अतएव उसको ('आदानात्') आदित्य कहते हैं कि वह इन (नक्षत्रों) के वीर्य और तेज (= क्षत्र) को ले लेता है। ('आदत्ते' का अर्थ है ग्रहण कर लेता है। इसी 'आदत्ते भासं ज्योतिषां' से 'आदित्य' शब्द बनता है)॥१८॥

---

१. 'चित्रा च क्षत्रियस्य' का.श्रौ.सू. ४.१७८। २. 'स चित्रायामग्निमादधीत' इत्यादि तै.ब्रा. १.१.२.६।
३. 'आददानः' इति पाठान्तरम्।

ते ह देवा ऊचुः। (यां) यानि वै तानि क्षत्राण्यभूवन् न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्य्यनक्षत्रऽएव स्यादेष ह्येषां व्वीर्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वाऽअनपराद्धं नक्षत्रं यत्सूर्य्यः स एतेनैव पुण्याहेन

---

ते ह देवा ऊचुः–'यानि वै तानि क्षत्राण्यभूवन्, न वै तानि क्षत्राण्यभूवन्' इति; तद्वै नक्षत्राणां नक्षत्रत्वम्। तस्मादु सूर्यनक्षत्र एव स्यात्, एष ह्येषां वीर्यं क्षत्रमादत्त। यद्यु नक्षत्रकामः स्यात्। एतद्वा अनपराद्धं नक्षत्रं यत् सूर्यः। स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत्, तदुपेत्सेंत्।

---

नक्षत्रमिति नामधेयं निर्वक्ति—**ते हेति**। 'यानि' खलु पुरा 'क्षत्राणि' 'अभूवन्', 'तानि' इदानीं सूर्येण क्षत्रगुणस्यापहृतत्वात्, न विद्यते क्षत्रमेषामिति व्युत्पत्त्या 'नक्षत्राणि' सम्पन्नानीत्यर्थः। 'तथा नेमानि क्षत्राणीति' यास्कः। अपाहृततेजस्कत्वादिमानि क्षत्राणि न भवन्तीति नक्षत्रशब्दव्युत्पत्तिः। यस्मादेवं कृत्तिकादीन्यपहृतवीर्याणि, तस्मात् एव कारणात् सूर्यात्मके 'एव' तेजस्विनि नक्षत्रे आधानं स्यात्[१]। तत्र हेतुमाह—**एष हीति**। 'हि' यस्मात् 'एषः' सूर्यः 'एषां' नक्षत्राणां वीर्यादिकम् 'आदत्ते', तस्मात् सवीर्ये तस्मिन्नाधानं युज्यत इत्यर्थः। यदि च यजमानः तत्तत्पूजार्थं[२] नक्षत्रकामः स्यात्, तदानीमपि सूर्यात्मकमेव नक्षत्रमुपाददीतेत्याह—**एतद्वा इति**। 'अनपराद्धम्'—इति हेतुगर्भविशेषणम्। यतस्तेजोवियोगलक्षणापराधरहितम्, अतस्तदेव सूर्यात्मकं नक्षत्रं कामयेतेत्यर्थः। तेन कृत्स्ननक्षत्र[३]फलप्राप्तिमाह—**स एतेनैवेति**। 'एतेनैव' सूर्येणोद्यता पुण्यकालात्मना 'तत्' कृत्स्ननक्षत्रा[४]धानफलं 'उपेत्सेंत्' उपगच्छेत्। उपेत्सेंत्–इत्युपपूर्वक ऋध्नोति (स्वा.प. २५) गत्यर्थः सन्नन्तः। 'आप्ज्ञप्यृधामीत्'

---

उन देवों ने कहा—'जो ये क्षत्र अर्थात् तेजः सम्पन्न थे वे अब तेजः संपन्न नहीं है (न विद्यते क्षत्रमेषामिति नक्षत्राणि); यही नक्षत्रों का नक्षत्रत्व है। अर्थात् न + क्षत्र (तेज) = नक्षत्र हो गये। इसलिए (अग्न्याधान में) सूर्य को ही कालोपलक्षक (= नक्षत्र) मानना चाहिए क्योंकि उनका सम्पूर्ण वीर्य और तेज सूर्य ने ले लिया। यदि (यजमान को) (अग्न्याधान के लिए) कालोपलक्षण (= नक्षत्र) की आवश्यकता

---

१. 'सूर्यो नक्षत्रं कालोपलक्षणं यस्य सोऽयं सूर्यनक्षत्रः। सूर्यापेक्षित एव काले आदधीत। न नक्षत्रोपलक्षित इत्यर्थः। कथं तत्सूर्यकालं लक्षयति। 'उदगयनम्' इत्यादि—आह हरिस्वामी। २. 'तत्तस्मात् प्राप्त्यर्थम्' इति पाठः। ३. 'नक्षत्राणां प्राप्ति' इति क्व.पा.। ४. 'नक्षत्रेऽग्न्याधानफलं' इति क्व.पा.।

यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेत्तस्मादु सूर्यनक्षत्र ऽएव स्यात्॥१९॥

इति द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयं ब्राह्मणम्॥

इति द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम्॥२॥१॥२॥

---

तस्मादु सूर्यनक्षत्र एव स्यात्॥१९॥२॥

।। इत्यग्न्याधानप्रकरणे नक्षत्रब्राह्मणम् ।।

---

(पा.सू. ७.४.५५) इतीत्वम्। आधानार्थमुपगन्तुमिच्छेदित्यर्थः। 'तस्मात्' सूर्यात्मके एव नक्षत्र उद्यति सत्याधानं स्यात्, न रात्रावित्यर्थः॥१९॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम्।।१।।२।।

---

है तो यह सूर्य सर्वदा तेजोभास्वर उत्तम नक्षत्र है। इसलिये शुभराशि स्थित सूर्य वाले दिन अग्न्याधान कर वह इन सभी नक्षत्रों के आधान—फलों को प्राप्त कर लेगा। इसलिए अग्न्याधान के इच्छुक यजमान को कालोपलक्षण में सूर्य को ही मुख्यता देनी चाहिए॥१९॥२॥

वसन्तो ग्रीष्मो वर्षाः। (स्ते) ते देवा ऽऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवाऽ अपराह्णः पितरः॥१॥

(स्ते) ते वा ऽएत ऽऋतवः। (वो) देवाः पितरः स यो हैवं विद्वान्देवाः पितर ऽइति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या

---

अथ ऋतुब्राह्मणम्

वसन्तो ग्रीष्मो वर्षाः–ते देवा ऋतवः। शरद् हेमन्तः शिशिरः–ते पितरः। य एवापूर्यतेऽर्द्धमासः स देवाः। योऽपक्षीयते, स पितरः। अहरेव देवाः। रात्रिः पितरः। पुनरह्नः पूर्वाह्णो देवाः। अपराह्णः पितरः॥१॥

ते वा एत ऋतवः–देवाः, पितरः। स यो हैवं विद्वान् 'देवाः पितरः' इति ह्वयति–आ हास्य देवा देवहूयं गच्छन्ति, आ पितरः पितृहूयम्।

---

अथाधानस्य वसन्ताद्यृतषु फलसिद्ध्यर्थं वसन्तादीनां देवपित्रात्मना द्वेधा विभागमाह—**वसन्त इत्यादिना**। वसन्ताद्यृतुत्रये देवानां सूर्यदर्शनादहर्भवतीति तेषां तादात्म्यम्; शारदादीनां तद्वैलक्षण्यात् पितृरूपत्वम्। **य एवापूर्यत**— इत्यादि। निगदसिद्धम्॥१॥

**ते वा एत ऋतव इति। स यो हैवं विद्वानित्यादि।** एवमृतूनां देवत्वं पितृत्वं च 'सः' 'विद्वान्' तान् ऋतून् 'देवाः पितरः' 'इति' 'ह्वयति' व्यवहरेदित्यर्थः। तस्य फलमाह—**आ हास्येति।** 'अस्य' आह्वातुः 'देवहूयं'

---

(षट् ऋतुओं में) वसन्त, ग्रीष्म और वर्षा—ये देव सम्बन्धिनी ऋतुएँ हैं। शरत्, हेमन्त और शिशिर—ये पितृ सम्बन्धिनी ऋतुएँ हैं। जो आधा-मास बढ़ता है (अर्थात् शुक्लपक्ष) वह देवों का है और जो घटता है (अर्थात् कृष्णपक्ष) वह पितरों का है। दिन देवों का है, रात्रि पितरों की है। फिर दिन का दोपहर से पूर्व का भाग देवों का है, उत्तरार्द्ध भाग अर्थात् अपराह्न पितरों का॥१॥

इसप्रकार ये ऋतुयें देवों और पितरों से सम्बन्धित हैं। जो मनुष्य इस रहस्य को समझकर यथोचित काल में देवों और पितरों को बुलाता है उसका देव-निमन्त्रण

---

१. 'तान्' इति क.पा.।

पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य ऽएवं विद्वान्देवाः पितर ऽइति ह्वयति॥२॥

स यत्रोदङ्ङावर्त्तते। देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्तते पितृषु तर्हि भवति पितृंस्तर्ह्यभिगोपायति॥३॥

---

अवन्ति हैनं देवा देवहूये, अवन्ति पितरः पितृहूये–य एवं विद्वान् 'देवाः, पितरः' इति ह्वयति॥२॥

स यत्रोदङ्ङावर्त्तते–देवेषु तर्हि भवति, देवाँस्तर्ह्यभिगोपायति। अथ यत्र दक्षिणावर्त्तते–पितृषु तर्हि भवति, पितृंस्तर्ह्यभिगोपायति॥३॥

---

देवाह्वानं प्रति देवाः 'आगच्छन्ति' तथा 'पितृहूयं पैतृकमाह्वानं प्रति पितरोऽप्यागच्छन्ति आगताश्च ते स्वसम्बद्धे कर्मणि 'एनम्' आह्वातारम् 'अवन्ति' इत्यर्थः॥२॥

आधानस्योदगयनं कालं विधित्सुर्द्वयोरप्यनयोर्देवपितृसम्बन्धं क्रमेणाह—**स यत्रेति**। 'सः' सूर्यो यस्मिन् काले दक्षिणगोलादुत्तरगोलं प्रति 'उदङ्' पर्यावर्त्तते, 'तर्हि' तदा, तस्मिन् समये मेरोरुपरिभागेऽवस्थितानां देवानां स दृष्टिगोचरो भवतीति तेषु उदङ् 'देवेषु' प्रकाशको भवतीति। 'अथ' 'यत्र' यस्मिन् काले पुनरुत्तरगोलाद् दक्षिणगोलं पर्यावर्त्तते[1], तदा दक्षिणदिगवस्थितस्य पितृलोकस्य प्रकाशकः सन् तेषु 'पितृषु' भवति॥३॥

---

सुनकर देव आ जाते हैं और पितृ-निमन्त्रण सुनकर पितृगण आते हैं। जो मनुष्य देव और पितरों को उनके निर्धारित काल में बुलाता है उसके आमन्त्रण पर देवगण एवं पितृगण यज्ञ में आकर उसकी सर्वतोविध रक्षा करते हैं॥२॥

वह (सूर्य) जब उत्तरायण होता है तो द्युलोक को प्रकाशित करता है एवं देवों को दृष्टिगोचर होता है और देवों का रक्षक होता है और जब दक्षिणायन होता है तो दक्षिणदिगवस्थित पितृलोक को प्रकाशित करता है तथा पितरों को दृष्टिगोचर होता है और पितरों का रक्षक होता है॥३॥

---

१. 'प्रत्यावर्त्तते' इ.ख.पा.।

स यत्रोदङ्ङावर्तते। तर्ह्यग्नी ऽआदधीतापहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्व्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणावर्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्ते॥४॥

ब्रह्मैव व्वसन्तः क्षत्रं ग्रीष्मो व्विडेव व्वर्षास्तस्माद्ब्राह्मणो व्वसन्त ऽआदधीत ब्रह्म हि व्वसन्तस्तस्मात्क्षत्रियो ग्रीष्म

---

स यत्रोदङ्ङावर्त्तते, तर्ह्यग्नी आदधीत। अपहतपाप्मानो देवाः, अप पाप्मानं हते, अमृता देवाः-नामृतत्वस्याशास्ति, सर्वमायुरेति यस्तर्ह्याधत्ते। अथ यत्र दक्षिणावर्त्तते, यस्तर्ह्याधत्ते-अनपहतपाप्मानः पितरः, न पाप्मानमपहते। मर्त्याः पितरः पुरा ह्यायुषो म्रियते-यस्तर्ह्याधत्ते॥४॥

ब्रह्मैव वसन्तः, क्षत्रं ग्रीष्मो, विडेव वर्षाः। तस्माद् ब्राह्मणो वसन्त आदधीत, ब्रह्म हि वसन्तः। तस्मात् क्षत्रियो ग्रीष्म आदधीत, क्षत्रं हि

---

एवमुत्तरायणे दक्षिणायने च देवपितृसम्बन्धमभिधाय, तत्सम्बद्धमाधानमपि तत्रैव कार्यमिति विधत्ते—**स यत्रेति**। तदेतत् प्रशंसति—**अपहतपाप्मान इति**। देवानां पापराहित्यान्मरणधर्मराहित्याच्च तत्सम्बन्धिन्ययनेऽग्न्याधानकारिणोऽपि तदुभयं सिद्ध्यतीत्यर्थः। दक्षिणायन आधातुरुक्तवैपरीत्यमाह—**अथ यत्रेति**॥४॥

एवमुदगयनं विधाय तत्रापि ब्रह्मक्षत्रादिवर्णानुसारेण ऋतुव्यवस्थां करोति—**ब्रह्मैव वसन्त इत्यादिना**। वसन्ताद्या ऋतवः जात्या ब्रह्मक्षत्राद्यात्मकाः, अतस्तेषां

---

जब (सूर्य) उत्तरायण हो तब अग्न्याधान करना चाहिये। क्योंकि देवगण निष्पाप होते हैं अतः उसका भी पाप नष्ट हो जाएगा। देव अमर हैं। इसलिए जो मनुष्य उत्तरायण में अग्न्याधान करता है वह अमरत्व तो नहीं किन्तु पूर्ण आयु को प्राप्त कर लेता है। परन्तु जो दक्षिणायन सूर्य में अग्न्याधान करता है वह सर्वथा निष्पाप नहीं हो पाता क्योंकि पितृगण सर्वथा निष्पाप नहीं है। पितृगण मर्त्य हैं अतः दक्षिणायन में आधान करने वाला पूर्णायु प्राप्त नहीं करता है॥४॥

(वर्ण की दृष्टि से) वसन्त ब्राह्मण है, ग्रीष्म क्षत्रिय, और वर्षा वैश्य। इसलिए ब्राह्मण वसन्त में अग्न्याधान करे; क्योंकि वसन्त ब्राह्मण है। क्षत्रिय ग्रीष्म में

ऽआदधीत क्षत्रᳫँ हि ग्रीष्मस्तस्माद्वैश्यो व्वर्षास्वादधीत विड्ढि व्वर्षाः॥५॥

स यः कामयेत। ब्रह्मव्वर्च्चसी स्यामिति व्वसन्ते स आदधीत ब्रह्म वै व्वसन्तो ब्रह्मवर्च्चसी हैव भवति॥६॥

(त्य) अथ यः कामयेत। क्षत्रᳫँ श्रिया यशसा स्यामिति ग्रीष्मे स ऽआदधीत क्षत्रं वै ग्रीष्मः क्षत्रᳫँ हैव श्रिया यशसा भवति॥७॥

---

ग्रीष्मः। तस्माद् वैश्यो वर्षास्वादधीत विड्ढि वर्षाः॥५॥

स यः कामयेत–'ब्रह्मवर्चसी स्याम्' इति, वसन्ते स आदधीत। ब्रह्म वै वसन्तो, ब्रह्मवर्चसी हैव भवति॥६॥

अथ यः कामयेत–'क्षत्रं श्रिया, यशसा स्याम्' इति, ग्रीष्मे स आदधीत। क्षत्रं वै ग्रीष्मः। क्षत्रं हैव श्रिया यशसा भवति॥७॥

---

क्रमेण तत्तज्जात्याधानकालत्वम्॥५॥

एवं नित्यपक्षमभिधाय काम्यपक्षमाह—**स य इति। ब्रह्मवर्चसी हैवेति।**[1] ब्राह्मणजात्यात्मके वसन्त आधानात् क्षत्रियादिरपि ब्राह्मणतेजस्सम्पन्नो भवतीत्यर्थः। एवमुत्तरत्रापि योज्यम्॥६॥

**अथ यः कामयेतेति। क्षत्रं**[2] **श्रियेति।** क्षत्रियजातेरपि 'श्रिया' सम्पदा कीर्त्या च क्षत्रात्मकः स्यामिति कामयमानस्य ब्राह्मणादेः ग्रीष्म आधानकाल इत्यर्थः॥७॥

---

अग्न्याधान करे; क्योंकि ग्रीष्म क्षत्रिय है। वैश्य वर्षा-ऋतु में अग्न्याधान करे; क्योंकि वर्षा वैश्य है॥५॥

जो कामना करता है कि मैं ब्रह्मवर्चस् सम्पन्न हो जाऊँ वह वसन्त में अग्न्याधान करे; क्योंकि वसन्त ब्रह्म से सम्बन्धित है। वह निश्चय ही ब्रह्मवर्चस् सम्पन्न हो जाता है॥६॥

जो चाहे कि मुझे शक्ति, श्री और यश प्राप्त हों, वह ग्रीष्म-ऋतु में अग्न्याधान करे; क्योंकि ग्रीष्म तेज और बल से सम्बन्धित है। वह निश्चय ही शक्ति, श्री और यश से सम्पन्न होगा॥७॥

---

१. 'वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः' का.श्रौ.सू. ४.१७९। २. 'ग्रीष्मः क्षत्रियश्रीकामयोः' का.श्रौ.सू. ४.१८०।

(त्यु) अथ युः कामुयेत। बहुः प्रजुया पशुभिः स्यामिति व्वर्षासु स ऽआदधीत व्विड्वै व्वर्षा अन्नं व्विशो बहुर्हैव प्रजुया पशुभिर्भवति यु एवं व्विद्वान्वर्षास्वाधत्ते॥८॥

ते वाऽ एतु ऽऋतुवः। (ऽ) उभुय ऽएवापहतपाप्मानः सूर्य्य ऽएवैषां पाप्मनोऽपहुन्तोद्यन्नेवैषामुभुयेषां पाप्मानमुपहन्ति तुस्माद्यदुवैनं कदा च यज्ञ ऽउपनुमेदुथाग्नी ऽआदधीत नु

---

अथ यः कामयेत–'बहुः प्रजया पशुभिः स्याम्' इति, वर्षासु स आदधीत। विड् वै वर्षाः, अन्नं विशः। बहुर्हैव प्रजया पशुभिर्भवति–य एवं विद्वान् वर्षास्वाधत्ते॥८॥

ते वा एत ऋतवः–उभय एवापहतपाप्मानः। सूर्य एवैषां पाप्मनोऽपहन्ता। उद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति। तस्माद्–यदेवैनं कदा च यज्ञ उपनमेत्, अथाग्नी आदधीत। न श्वःश्वमुपासीत। को हि मनुष्यस्य

---

अथ यः कामयेतेति। बहुप्रजापश्वादिसमृद्धिकामस्य[1] वैश्यस्यापि तत्फलप्राप्तये वर्षास्वाधानं सम्पद्यत इत्यर्थः॥८॥

एवमयनविशेषमृतुविशेषं चाभिधाय पक्षान्तरं च वक्तुं सर्वेषामप्यृतूनां[2] पापसम्बन्धराहित्यमाह—**ते वा एत इति। उभय एवेति।** देवपितृसम्बन्धितया द्विधा प्रतिपादिता एवेत्यर्थः। पापराहित्ये कारणमाह—**सूर्य एवेति।** यस्मादेवं सर्वेऽप्यृतवः पापराहित्येन शुद्धाः, 'तस्मात्' यस्मिन् कस्मिंश्चिदृतौ सोमयागमभि-

---

और जो कामना करता है कि—बहुत सन्तान तथा पशु हो जाँय, वह वर्षा-ऋतु में अग्न्याधान करे; क्योंकि वर्षा वैश्य है। अन्न विट् है। जो इस रहस्य को समझकर वर्षा-ऋतु में अग्न्याधान करता है, वह बहु-सन्तान और पशु से युक्त हो जाता हैं॥८॥

ये दोनों प्रकार की ऋतुयें (देव-ऋतु और पितृ-ऋतु) दोषों से रहित सी हैं; क्योंकि सूर्य इनके दोषों को दूर करने वाला है। जब वह चमकता है तो इनके दोष नष्ट हो जाते हैं। इसलिए जब भी सोमयागादि करने की इच्छा हो जाय तभी

---

१. 'वर्षाः प्रजापशुकामवैश्यरथकृताम्' का.श्रौ.सू. ४.१८१। २. 'शिशिरः सार्ववर्णिकः' इति च शाखान्तरम्।

**श्वःश्वमुपासीत को हि मनुष्यस्य श्वो व्वेद॥९॥**

**इति द्वितीयकाण्डे प्रथमप्रपाठके तृतीयं ब्राह्मणम्॥**

**इति द्वितीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम्॥२॥१॥३॥**

---

**श्वो वेद॥९॥३॥**

**।। इत्यग्न्याधानप्रकरणे तृतीयमृतुब्राह्मणम् ।।**

---

गच्छेत्, 'अथ' अनन्तरमेवाग्न्याधानं कुर्यात्। **न श्वःश्वमुपासीतेति।** 'श्वः श्वः करवाणि' इत्येवं कालान्तरप्रतीक्षां[1] न कुर्यात्। तत्र हेतुमाह—**को हीति।** 'मनुष्यस्य' 'श्वः' श्वःकालसम्बन्धि जीवनं 'कः' नाम 'वेद' जानीयात्? आयुषोऽस्थिरत्वादित्यर्थः॥९॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम्।।१।।३।।**

---

अग्न्याधान कर ले (तथा सोमयागादि अनुष्ठित करे)। कल के ऊपर न डाले क्योंकि कौन जानता है कि (मनुष्य का) कल होगा? या नहीं (क्योंकि आयु सदैव अस्थिर है)।।९।।३।।

⁕

---

१. 'प्रतीक्षा न कार्या' इति पा.।

यदुहरस्यु श्वोऽग्न्याधेुयᳬस्यात्। (हि) दिवैुवाश्नीयान्मुनो ह वैु देवुा मनुुष्यस्युाजानन्ति ुतेऽस्यैतच्छ्वोऽग्न्याधेुयं विदुुस्तेऽस्य विुश्वे देवुा गृहानागच्छन्तिु तेऽस्य गृहेषूपवसन्ति ·सु उपवसथः॥१॥

(स्तु) तुन्न्वेवुानवक्लृप्तं युो मनुुष्येष्वुनश्नत्सु पूर्व्वोऽश्नी-यादुथ किुमु युो देवेष्वुनश्नत्सु पूर्वोऽश्नीयात्तुस्मादु दिवैुवाश्नी-यात्तद्ध्रुपि कुाममेव नुक्तमश्नीयुान्नो ह्यनाहिताग्नेर्व्व्रतचर्यास्ति

---

अथ उपवसथब्राह्मणम्

यदहरस्य श्वोऽग्न्याधेयं स्यात्, दिवैवाश्नीयात्। मनो ह वै देवा मनुष्यस्याजानन्ति। तेऽस्यैतच्छ्वोऽग्न्याधेयं विदुः। तेऽस्य विश्वे देवा गृहानागच्छन्ति। तेऽस्य गृहेषूपवसन्ति–स उपवसथः॥१॥

तन्न्वेवानवक्लृप्तम्–यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्; तस्मादु दिवैवाश्नीयात्। तद्वपि काममेव नक्तमश्नीयात्। नो ह्यनाहिताग्नेर्व्रतचर्यास्ति, मानुषो ह्येवैष तावद् भवति–

---

अग्न्याधेयदिवसात् पूर्वस्मिन् उपवसथदिवसे कर्त्तव्यं व्रतमुपदिशति— यदहरस्येति। 'दिवैव' इत्येवकारेण रात्रावशनं व्यावर्त्यते। 'मनो ह वै देवाः'– इत्यादि दर्शपूर्णमासिकप्रस्तावे प्रागेव (श.प. १.१.१.७.८) व्याख्यातम्॥१॥

दिवैव भोजनं न रात्राविति प्रतिपाद्य पक्षान्तरमाह—तन्न्वेवेति। तद्वपीति। 'तत्' तत्र विषये 'कामं' यथेच्छं रात्रावपि 'अश्नीयात्'। तत्र कारणमाह— नो ह्यनाहिताग्नेरिति। 'न' खलु 'अनाहिताग्नेः' व्रतचरणम् 'अस्ति';

---

जिस दिवस के अगले दिन अग्न्याधान करना है उस दिन (यजमान और उसकी पत्नी) दिन में ही भोजन करे। क्योंकि देवगण मनुष्यों के मन को जानते हैं। वे जान लेते हैं कि अगले दिन अग्न्याधान होगा। इसलिए समस्त देवगण (यज्ञकर्ता के) घर आ जाते हैं। वे उसके अग्निशरण-गृह में ठहर जाते हैं (उपवसन्ति)। अतएव इस दिन को 'उपवसथ' (उप + वसथ) कहते हैं॥१॥

यह अनुचित होता है कि (घर में) ठहरे हुए मनुष्यों (= अतिथि) के भोजन करने से पूर्व ही गृहपति भोजन कर ले। इससे भी अधिक अनुचित यह होगा

**मानुष्यो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्ध्यपि काममेव नक्तमश्नीयात्॥२॥**

**(त्त) तद्धैकेऽजमुपबध्नन्ति। (न्त्या) आग्नेयोऽजोऽग्नेरेव सर्व्वत्वायेति व्वदन्तस्तदु तथा न कुर्याद्यद्यस्याजः**

---

**यावदनाहिताग्निः; तस्माद्ध्यपि काममेव नक्तमश्नीयात्॥२॥**

**तद्धैकेऽजमुपबध्नन्ति–'आग्नेयोऽजोऽग्नेरेव सर्वत्वाय' इति वदन्तः। तदु तथा न कुर्यात्। यद्यस्याजः स्यात्, अग्नीध एवैनं प्रातर्दद्यात्, तेनैव**

---

तस्येतरपुरुषवन्मानुषत्वात्, आहिताग्निर्हि संस्कारेण देवभावं प्राप्नोति। व्रतचरणमर्हतीति भावः॥२॥

**तद्धैक इति। अजमुपबध्नन्तीति।** उपवसथदिवसस्य रात्रौ गार्हपत्यागारे कस्यचिदजस्य बन्धनं कार्यमित्येकेषां मतम्। तेषामभिप्रायमाह—**आग्नेयोऽज इति।** अग्निना सह प्रजापतिमुखजातत्वात्[1] 'अजः आग्नेयः',अतोऽजस्य सम्बन्धमाधीयमानस्य 'अग्नेः' 'सर्वत्वाय' कात्स्न्यार्य सम्पद्यते, 'इति' इममभिप्रायं वदन्त इत्यर्थः। तदेतन्निरस्यति—**तदु तथा नेति।** कथं तर्हि कार्यमिति, तदाह—**यदीति।** 'अस्य' यजमानस्य 'अजः' विद्यते चेत्, 'एनम्' अजम् 'प्रातः आधानदक्षिणाकाले 'अग्नीधे' आग्नीध्राय 'दद्यात्' तथा च

---

कि ठहरे हुए देवों के भोजन (= हविष्य) ग्रहण करने से पूर्व यजमान द्वारा भोजन कर लिया जाय। इसलिए उस दिन, दिन में ही भोजन कर लेना चाहिए। परन्तु यदि इच्छा हो तो रात में भी भोजन कर सकता है। क्योंकि यजमान ने अभी अग्न्याधान ग्रहण नहीं किया है, इसलिए वह व्रत-चारी अभी नहीं है। जबतक अग्न्याधान नहीं ले लेता उस समय तक वह मनुष्य ही रहता है। इसलिए इच्छा हो तो रात में भी भोजन कर ले॥२॥

कुछ लोगों का मत है कि—पूर्व-दिवस की रात्रि में गार्हपत्यागार में बकरे को बाँधना चाहिये; क्योंकि अज का सम्बन्ध अग्नि से है। अतः अग्नि के सर्वत्व अर्थात् पूर्ति के लिए यह उचित होगा। परन्तु (याज्ञवल्क्य का मत है कि–) ऐसा नहीं करना चाहिए। यदि यजमान के पास 'अज' हो तो वह उसे प्रातःकाल अग्नीध

---

१. 'प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत तमग्निं देवतान्वसृज्यत, गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां, तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त'–इति तैत्ति.सं. ७.१.१.४।

स्यादग्नीधऽएवैनं प्रातुर्दद्यात्तेनैव तं कामुमाप्नोति तुस्मादु तन्नाद्रियेत॥३॥

(ता) अुथ चातुष्प्राश्युमोदनुं पचन्ति च्छुन्दाᳬंस्यनेुन प्रीणीम इुति युथा येुन व्वाहनेन स्यन्तस्यन्तस्यात्तत्सुहितं कुर्त्तवैु ब्रूयादेवुमेतदिुति व्वुदन्तस्तुदु तुथा नु कुर्याद्यद्वाऽअस्य ब्राह्मणाः

---

तं काममाप्नोति; तस्मादु तन्नाद्रियेत॥३॥

अथ चातुष्प्राश्यमोदनं पचन्ति–'छन्दांस्यनेन प्रीणीम' इति। यथा येन वाहनेन स्यन्तस्यन् स्यात्, तत् सुहितं कर्त्तवै ब्रूयात्; एवमेतदिति वदन्तः। तदु तथा न कुर्यात्। यद्वा अस्य ब्राह्मणाः कुले वसन्ति–

---

कात्यायनः—'गार्हपत्यागारेऽजं बध्नाति न वा विद्यमानं प्रातरग्नीधे दद्यात्' (का.श्रौ.सू. ४.१९७) इति। **तेनैवेत्यादि**। निगदसिद्धम्॥३॥

ब्रह्मौदनपाकविधिं मतभेदकथनेनोक्तं प्रतिपादयति—**अथ चातुष्प्राश्यमोदनमिति**। चतुर्भिरध्वर्युब्रह्मादिभिर्ऋत्विग्भिः प्राशितव्यमित्यर्थः। **छन्दांस्यनेनेति**। 'अनेन' ब्रह्मौदनपाकेन गायत्रीत्रिष्टुप्[१]जगत्याख्यानि छन्दांसि 'प्रीणीमः' तर्पयाम इत्यभिप्रायः। अस्यौदनस्य चतुर्भिर्ऋत्विग्भिः प्राशनं युक्तमिति दृष्टान्तेनोपपादयति—**यथेति**। 'येन वाहनेन' अश्वादिना 'स्यन्तस्यन्' यास्यन् 'स्यात्' 'तद्' वाहनं 'सुहितं' 'सुतृप्तं' कर्तुं यथा ब्रूयात्, 'एवमेतत्' आदौ[२] ऋत्विजां कर्मोपयुक्तानां प्राशनं युक्तमित्यर्थः। स्यन्तस्यन्निति 'स्यन्द् प्रस्रवणे' (भ्वा.आ. ७६२) इत्यस्माल्लृटः शत्रादेशः।

इमं प्राशनपक्षं निषिध्योपपादयति—**तदु तथेति**। 'ऋत्विजश्चानृत्विजश्च

---

(आग्नीध्र) को दक्षिणा के रूप में दे दे, उसी से औचित्य-पूर्ति हो जायगी। इसलिए इस प्रथा का आदर न करें॥३॥

अब वह चार मनुष्यों (= ऋत्विजों) के तृप्ति योग्य ओदन (चातुष्प्राश्य भात) पकाते हैं (इस आशय से कि) 'हम इसके द्वारा छन्दों को प्रसन्न करते हैं'। जैसे जिस वाहन (बैलों की जोड़ी) को जोतना चाहें उनको पहले अच्छी प्रकार से खिलाने-पिलाने की आज्ञा देते हैं; तद्वत् यह विधि है। परन्तु उसे ऐसा नहीं करना चाहिए। चूँकि ब्राह्मण उसी के कुल में रहते हैं, चाहे वे ऋत्विज हों, चाहे ऋत्विज

---

१. जगत्यादिच्छन्दांसि इति पा०। २. 'रात्रौ' इति पाठ।

कुले व्वसन्त्यृत्विजश्चानृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत॥४॥

तस्य सर्पिरासेचनं कृत्वा। सर्पिरासिच्याश्वत्थीस्तिस्त्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति

---

ऋत्विजश्चानृत्विजश्च, तेनैव तं काममाप्नोति; तस्मादु तन्नाद्रियेत॥४॥

तस्य सर्पिरासेचनं कृत्वा सर्पिरासिच्य, आश्वत्थीस्तिस्त्रः समिधो घृतेनान्वज्य, समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति शमीगर्भमेतदाप्नुमः'

---

ब्राह्मणाः' 'अस्य' यजमानस्य 'कुले वसन्ति' इति 'यत्' 'तेनैव' वासेन 'तं काममाप्नोति', यः कामः प्राशननिमित्तकः प्रागुक्त इत्यर्थः॥४॥

अथ पक्वस्यौदनस्य कस्तर्ह्युपयोग इत्याह—**तस्य सर्पिरासेचनमिति**। सर्पिरासिच्यतेऽस्मिन्निति सर्पिरासेचनम्, घृतधारणार्थमोदनं निम्नं 'कृत्वा' इत्यर्थः। **सर्पिरासिच्येत्यादि**। स्पष्टम्। **समिद्वतीभिर्घृतवतीभिरिति**। समिच्छब्दयुक्ताभिर्घृत-शब्दयुक्ताभिश्चेत्यर्थः। तास्तु कात्यायन उदाजहार—'आश्वत्थीस्तिस्त्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम्' (का.श्रौ.सू. ४.१९९) इति। समिदाधानं कुर्वतामभिप्रायमाह—**शमीगर्भमिति**। शमीगर्भो योऽश्वत्थः, तत्रस्थो योऽग्निः, 'तम्, 'एतत्' एतेनाश्वत्थसमिदाधानेन 'आप्नुमः' 'इति' ब्रुवाणा

---

न हों, इसलिए उनके इसी (भरण-पोषण) से उसका काम निकल जाता है। इसलिए इस (प्रथा) का आदर नहीं करना चाहिए॥४॥

उस पक्व ओदन (भात) में घी के लिए गड्ढा करके उसमें घृत छोड़कर अश्वत्थ की तीन समिधायें (उस) घी में भिगोकर 'समित्' और 'घृत' पदघटित तीन ऋचाओं से उनको अग्नि में डालते हैं। (इस क्रिया के पीछे कुछ लोग तर्क देते हैं कि–) शमीगर्भ (शमी वृक्ष के भीतर उत्पन्न हुए अश्वत्थ की लकड़ियों (अरणियों) से मन्थन कर अग्नि निकाली जाती है) का फल इसी (समिदाधान) से मिल जाता है। परन्तु, (याज्ञवल्क्य का कथन है कि–) उसको यह फल तभी मिलता है जब वह निरन्तर साल भर तक अग्न्याधान से पहले यह तीन आहुतियाँ देता रहे। इसलिए इस प्रथा का आदर नहीं करना चाहिए। (अर्थात् जो फल शमीगर्भ में उत्पन्न हुई अश्वत्थ की लकड़ियों से निर्मित अरणियों के मन्थन से प्रादुर्भूत अग्नि के

---

१. 'उद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्त्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम्' (का.श्रौ.सू. ४.१९९)

शमीगर्भमेतदाप्नुम इति व्वदन्तः स युः पुरस्तात्संव्वत्सरुम-भ्यादध्यात्स हतं कुाममाप्नुयात्तुस्मादु तन्नाद्रियेत॥५॥

तुदु होवाच भाल्लवेयः। (यो) यथा वा ऽअन्यत्करिष्यन्त्सोऽन्युत्कुर्याद्युथाऽन्युद्वदिष्यन्त्सोऽन्यद्वुदेद्युथाऽन्येन पुथैष्युन्त्सोऽन्येन प्रतिपुद्येतैवं तद्यु एतुं चातुष्प्राश्युमोदनं

इति वदन्तः। स यः पुरस्तात्संवत्सरमभ्यादध्यात्-स ह तं काममाप्नुयात्; तस्मादु तन्नाद्रियेत॥५॥

तदु होवाच भाल्लवेयः-'यथा वा अन्यत्करिष्यन् सोऽन्यत् कुर्यात्, यथाऽन्यद्वदिष्यन् सोऽन्यद्वदेत्, यथाऽन्येन पथैष्यन् सोऽन्येन प्रतिपद्येत; एवं

इत्यर्थः। तस्य च समिदाधानस्य कालविशेषमाह—**स य इति**। अग्न्याधानस्य 'पुरस्तात्' 'यः' यजमानः 'ताः' समिधः 'अभ्यादध्यात्' 'सः' खलु 'तं कामम्' प्राप्नुयात् 'तस्मात्' समिदाधानार्थ एवैतदतो न प्राशनार्थ इति 'तत्' प्राशनं नादरणीयमिति। निगमयति—**तस्मादिति**॥५॥

अस्मिन्नर्थे संवादं दर्शयति—**तदु होवाच भाल्लवेय इति**। 'तत्' तत्र विषये इन्द्रद्युम्नः[१] 'भाल्लवेयः' उक्तवान्। कथमिति; तदाह—**यथा वा इत्यादि**। 'यथा' 'अन्यत्' चिकीर्षतः तदनुपयुक्तस्यान्यस्य करणं यथा व्यधिकरण-त्वादसङ्गतम्, तथा अग्नीनाधित्सताऽग्नावेव किञ्चित् कर्त्तव्यम्। तत्परित्यज्य-चातुष्प्राश्यकरणमसङ्गतम्; अतोऽसमृद्धिक एव तथाविधौदनपाक इति भाल्लवेयाभिप्रायः।

स्थापन से होता है वह अश्वत्थ की तीन समिधाओं को चातुष्प्राश्य ओदन (भात) में भरे हुये घी में भिगोकर चढ़ाने से होता है। अतः यह सिद्ध होता है कि चातुष्प्राश्य ओदनपाक अग्नि में वैशिष्ट्याधान के लिये है न कि प्राशन के लिये—यह याज्ञवल्क्य का प्रतितर्क है)॥५॥

इस पर भाल्लवेय का कहना है कि 'चातुष्प्राश्य' ओदन पकाना उसी प्रकार अप्रासंगिक है जैसे कोई एक कार्य की इच्छा करे और करे तद्विपरीत दूसरा कार्य, या एक बात कहना चाहे और कहे असम्बद्ध दूसरी बात। या एक मार्ग से जाना चाहे और जाये तद्विपरीत दूसरे मार्ग से। यह उचित नहीं है कि जिस अग्नि में ऋक्, यजु या साम मन्त्रों से समित् एवं आहुति दी जाय उसी अग्नि के एक

१. इन्द्रद्युम्न एव भाल्लवेयः' इत्यग्रे स्फुटीभविष्यति (श.प. १०.६.१.१) अन्यत्र च (छां.उप. ५.११.१)।

पचेदुपराद्धिरेव सेति न हि तदवकल्पते यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुयाद्यत्तं दक्षिणा वा हरेयुरनु वा गमयेयुर्दक्षिणा वा ह्येनं हरन्त्यन्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति॥६॥

(न्त्य) अथ जाग्रति जाग्रति देवाः (स्त) तद्देवानेवैतदुपावर्त्तते स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी ऽआधत्ते

---

तत्—य एतं चातुष्प्राश्यमोदनं पचेत्। अपराद्धिरेव सेति। न हि तदवकल्पते—यस्मिन्नग्नावृचा वा, साम्ना वा यजुषा वा, समिधं वाऽभ्यादध्यात्, आहुतिं वा जुहुयात्; यत्तं दक्षिणा वा हरेयुः, अनु वा गमयेयुः। दक्षिणा वा ह्येनं हरन्ति, अन्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति॥६॥

अथ जाग्रति जाग्रति देवाः, तद्देवानेवैतदुपावर्त्तते। स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी आधत्ते, तद्धपि काममेव स्वप्यात्। नो

---

तमिमं दोषं परिहृत्य प्राशनपक्षमेव निगमयति—न हि तदित्यादिना। ऋक्सामादिमन्त्रैर्यस्मिन्नग्नौ समिधमाहुतिं च प्रक्षिपेत्, तस्याग्नेर्दक्षिणाहरणमनुगमनं च यदि स्यात्, सोऽग्निरन्वाहार्यपचनः[१]। अन्वाहार्य ओदनः, तस्य पाकहेतुर्भविष्यति[२]। अतो दक्षिणाहरणमनुगमनं वाहुतिसंस्कृतस्याग्नेर्नावकल्पते। अतः पक्वतण्डुलो न होमार्थः, किन्तु प्राशनार्थ इत्यभिप्रायः। गतमन्यत्॥६॥

तस्यां रात्रौ यजमानस्य जागरणं विधत्ते[३]—अथ जाग्रतीति। व्यत्ययेन (पा.सू. ३.१.८५) बहुवचनम्, जागर्तीत्यर्थः। जाग्रति देवा इत्यादि। श्वः करिष्यमाणेष्वाधानादिकर्मस्वङ्गभूता ये देवा उपवसथेऽहनि यजमानगृहमागताः, ते

---

भाग को दक्षिण में ले जाये और विसर्जित कर दे। परन्तु अन्वाहार्यपचन (भात पकाने) के लिए अग्नि के एक भाग को दक्षिण को ले जाते हैं और विसर्जित करते हैं। (इसलिए यह मत अनुचित है, किन्तु यतः आहुति संस्कृत अग्नि में चातुष्प्राश्य ओदन नहीं पकाया जाता है अतः अन्वाहार्य ओदन प्राशन के लिये होता है, आहुति के लिये नहीं—यह सिद्ध होता है)॥६॥

अब यजमान उस दिन रात्रि-जागरण करते हैं। उपवसथ के दिन आये हुए देवगण जागते रहते हैं। इसलिए वह रात्रिजागरण कर देवों के निकट हो जाता है और अधिक देवत्व प्राप्तकर, श्रान्त बनकर और तपस्वी होकर अग्न्याधान की

---

१. अन्वाहरति यज्ञसम्बन्धिदोषजातं परिहरति अनेनेति अन्वाहार्यः, ऋत्विग्भ्यो देय ओदन विशेषः, श.ब्रा.सा.भा. (१.२.३.५)। २. 'तत्पाकहेतुः' इति पा.। ३. 'रात्रिं जागरणधारणे' श्रौ.सू. ४.२०७।

तद्वपि क॒ाममेव॒ स्वप्यान्नो ह्यनाहिताग्नेर्व्व्रतचर्यास्ति मानुषो ह्येवैष ता॒वद्धवति या॒वदुनाहिताग्निस्त॒स्मा॒द्धपि क॒ाममेव॒ स्वप्यात्॥७॥

(त्त) तद्धैके॒ऽनुदिते मथित्वा। तम॒ुदिते प्रा॒ञ्चमुद्धरन्ति त॒दु त॒दुभे॒ ऽअहोरात्रे प॒रिगृह्णीमः प्राणोदान॒योर्म॒नसश्च व्वाचश्च

---

ह्यनाहिताग्नेर्व्रतचर्यास्ति, मानुषो ह्येवैष तावद् भवति—यावदनाहिताग्निः, तस्माद्धपि काममेव स्वप्यात्॥७॥

**अग्निमन्थनब्राह्मणम्**

**तद्धैकेऽनुदिते मथित्वा, तमुदिते प्राञ्चमुद्धरन्ति। तदु तदुभे अहोरात्रे परिगृह्णीमः—'प्राणोदानयोर्मनसश्च वाचश्च पर्याप्त्यै' इति वदन्तः। तदु तथा**

---

खल्वस्यां रात्रौ 'जाग्रति' जागरणं कुर्वन्ति। तेषु च जाग्रत्सु यजमानस्य स्वापो न युक्त इति तेन जागरणेन यजमानो 'देवानेव' जाग्रतः 'उपावर्त्तते' उपगतो भवति। 'सः' च यजमानः 'सदेवतरः' अतिशयेन देवसहितो निद्राभावादिना। अतिशयितं श्रममाप्तोऽग्न्याधानयोग्यतां जागरणवशात् प्राप्नोतीत्यर्थः। अथाशनवत्स्वापमप्यनुजानाति—**तद्धपीति**॥७॥

एवं रात्रौ नीतायामाधास्यमानस्याग्नेर्मन्थनविषयमेकीयं मतमुपन्यस्यति—**तद्धैक इति**। 'अनुदिते' सूर्योदयात् 'प्रागेवोषःकाले मन्थनं कार्यम्, सूर्ये चोदिते आहवनीयार्थं तस्य प्रागुद्धरणम् एवं वदतामभिप्रायमाह—**तदिति**। तेन मन्थनोद्धरणयोरहोरात्रसम्बन्धित्वेन, अत एव 'अहोरात्रे' 'परिगृह्णीमः' कर्माङ्गतया स्वीकुर्मः। तस्यापि प्रयोजनमाह—**प्राणोदानयोरिति**। अहोरात्रे परिग्रहस्य तद्रूपयोः 'प्राणोदानयोः' वाङ्मनसयोश्च 'पर्याप्तिः' प्रयोजनमित्येवं प्रतिपादयन्त इत्यर्थः।

---

योग्यता प्राप्त करता है। अथवा यदि यजमान की इच्छा हो तो शयन भी कर सकता है क्योंकि अग्न्याधान करने से पहले तो व्रतचारी होता नहीं। जबतक अग्न्याधान नहीं लिया तबतक वह साधारण मनुष्य ही रहता है अतः वह इच्छा के अनुसार शयन भी कर सकता है॥७॥

कुछ लोग सूर्योदय से पूर्व अरणि-मन्थन द्वारा अग्नि को प्रकटकर सूर्योदय के पश्चात् पूर्व की ओर (गार्हपत्य से आहवनीय में) ले जाते हैं। इस विधि से रात और दिन दोनों को कर्म में परिगृहीत कर लेते हैं। अहोरात्र के माध्यम से

---

१. 'प्रागेवोषःकाले' इति क्व.मा.। २. 'उदिते उद्धरणम्' का.श्रौ.सू. ४.३१६।

पर्याप्त्या ऽइति व्वदन्तस्तदु तथा न कुर्यादुभौ हैवास्य तथाऽनुदित ऽआहितौ भवतोऽनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति स य ऽउदित ऽआहवनीयं मन्थेत्स ह तत्पर्याप्नुयात्॥८॥

(द) अहर्व्वै देवाः। (ऽ) अनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा अप पाप्मानँ हतेऽमृता देवा

---

न कुर्यात्-उभौ हैवास्य तथाऽनुदित आहितौ भवतः। अनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति। स य उदित आहवनीयं मन्थेत्-स ह तत्पर्याप्नुयात्॥८॥

अहर्वै देवाः। अनपहतपाप्मानः पितरो न पाप्मानमपहते। मर्त्याः पितरः। पुरा ह्यायुषो म्रियते;-योऽनुदिते मन्थति। अपहतपाप्मानो देवा

---

तमिमं पक्षं निषेधति—न **कुर्यादिति**। तत्र दोषमाह—**उभौ हैवेति**। गार्हपत्या-हवनीयौ 'उभौ' अपि अस्य यजमानस्य 'अनुदिते' रात्रावेव 'आहितौ' भवतः। ननु उदिते ह्याहवनीयमादधीतेति, कथमुभयोरनुदिते आधानमिति, तत्राह—**अनुदिते हीति**। 'अनुदिते' मथितो योऽग्निः, स एवाहवनीयत्वेन स्थाप्यत इति तस्यापि रात्रिसम्बन्धो दुर्निवारः। तस्मात् 'उदिते' एव 'आहवनीयम्' अग्निं 'मन्थेत्'॥८॥

रात्रौ मन्थनस्य दोषाभिधानपुरःसरमुदिते मन्थनं प्रशंसति—**अहर्वा इति**।

---

प्राण-उदान और मन-वाणी का भी यज्ञ में परिग्रह हो जाता है, ऐसा कुछ लोगों का कहना है। परन्तु (याज्ञवल्क्य का मत है कि-) ऐसा नहीं करना चाहिये। क्योंकि इसप्रकार तो दोनों अग्नियाँ सूर्योदय के पूर्व की आहित हो जाती हैं, कारण यह है कि सूर्योदय के पूर्व मन्थन कर स्थापित अग्नि को ही तो सूर्योदय के बाद उद्धृत कर पूर्व में आहवनीय-खर में स्थापित करते हैं। अतः उचित यह है कि सूर्योदय के पश्चात् आहवनीय को मन्थन कर स्थापित किया जाय॥८॥

देवताओं का सम्बन्ध दिन से हैं। पितर सर्वथा पाप-शून्य नहीं हैं। इसलिए जो सूर्योदय से पूर्व अग्नि के लिए अरणिमन्थन करता है वह पूर्णतया पापों से मुक्त नहीं होता। इसके अतिरिक्त पितर अमर नहीं है, इसलिए जो सूर्योदय से पूर्व अग्नि के निमित्त मन्थन करता है, वह पूर्णायु से पूर्व ही मर जाता है। देवगण

नामृतत्वस्याशास्ति सर्व्वमायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं व्विद्वानुदिते मन्थति॥९॥

तदाहुः। (र्य) यन्नऽर्च्चा न साम्ना न यजुषाऽग्निराधीयतेऽथ केनाधीयत ऽइति ब्रह्मणो हैवैष ब्रह्मणाधीयते व्वाग्वै ब्रह्म तस्यै व्वाचः सत्यमेव ब्रह्म ता वाऽएताः सत्यमेव व्याहृतयो भवन्ति तदस्य सत्येनैवाधीयते॥१०॥

---

अपपाप्मानं हते। अमृता देवाः। नामृतत्वस्याशास्ति–सर्वमायुरेति। श्रीर्देवाः। श्रियं गच्छति। यशो देवाः। यशो ह भवति; य एवं विद्वानुदिते मन्थति॥९॥

तदाहुः–यन्नर्चा, न साम्ना, न यजुषाऽग्निराधीयतेऽथ केनाधीयत इति। ब्रह्मणो हैवैषः, ब्रह्मणाधीयते। वाग् वै ब्रह्म, तस्यै वाचः सत्यमेव ब्रह्म। ता वा एताः सत्यमेव व्याहृतयो भवन्ति, तदस्य सत्येनैवाधीयते॥१०॥

---

गतार्थमेतत्॥९॥

अथ[1] व्याहृतीनामाधानसाधनत्वं विधातुं प्रस्तौति—तदाहुरिति। ऋक्साम-यजुरात्मकास्त्रिविधा मन्त्राः, तैः 'यद्' यस्मात् 'अग्निः न आधीयते' केन तर्हि स आधेय इति ब्रह्मवादिनां प्रश्नः। तस्योत्तरम्—**ब्रह्मणो हेति**। ब्रह्मणः सम्बन्धि यद् ब्रह्म तेनाधानं कार्यम्। किं तदिति, तदुभयं दर्शयति—**वाग्वा इति**। षष्ठ्यन्तेन निर्दिष्टं यद् ब्रह्म, तद् वागात्मकम्; तस्या वाचः सम्बन्धि यद् वाक्यम्, 'सत्यम्' विद्यमानार्थप्रतिपादकम्, तद् 'एव' 'ब्रह्म'। तत्र वाचः सत्यं किमिति तद् दर्शयति—**ता वा एता इति**। 'ताः' एता भूरादिव्याहृतयो यदुदीरितसत्यरूपाः, 'तत्' तस्मात् 'अस्य' यजमानस्य व्याहृतिभिरग्न्याधाने 'सत्येनैव' सोऽग्निराहितो भवति॥१०॥

---

पापों से मुक्त हैं। जो पुरुष इस रहस्य को समझकर सूर्योदय के पश्चात् अग्नि के निमित्त मन्थन करता है, वह पापों से छूट जाता है। साथ ही देवगण मरणधर्म रहित हैं, अर्थात् अमृत हैं। यद्यपि मनुष्य अमर नहीं हो सकता तो भी पूर्ण आयु को अवश्य प्राप्त करता है, श्री को प्राप्त करता है क्योंकि देवगण श्री-सम्पन्न है। यश को प्राप्त करता है क्योंकि देवगण यशः सम्पन्न हैं॥९॥

ब्रह्मवादी विचार करते हैं कि—यदि ऋक्, साम और यजुष् मन्त्रों से अग्न्याधान न किया जाय तो किससे किया जाये। (इसका उत्तर देते हैं कि)—

---

१. यत्तु क्वचित् पुस्तके अत्र 'रात्रौ मन्थनस्य दोषाभिधानसाधनत्वम्' इति पाठ उपलभ्यते, तदनवधान-विजृम्भितम्। तस्य पूर्वकण्डिकावतरणान्तर्गतत्वात्।

भूरि॒ति वै॒ प्रजा॒पतिः। (रि) इमा॒मजनयत भु॒वऽ-इत्यन्त॒रिक्ष॒ꣳस्वरि॒ति दि॒वमेता॒वद्वा॒ ऽइदꣳ स॒र्व्वं या॒वदिमे लोकाः स॒र्व्वेणैवा॒धीयते॥११॥

भूरि॒ति वै॒ प्रजा॒पतिः। (ब्र॒) ब्र॒ह्माजनयत भुव इ॒ति क्षत्र॒ꣳ स्वरि॒ति व्विशमेता॒वद्वा॒ऽइदꣳ स॒र्व्वं या॒वद्ब्रह्म क्षत्रं विट् स॒र्व्वेणैवा॒धीयते॥१२॥

---

भूरिति वै प्रजापतिरिमामजनयत, भुव इत्यन्तरिक्षम्, स्वरिति दिवम्। एतावद्वा इदं सर्वम्—यावदिमे लोकाः सर्वेणैवाधीयते॥११॥

भूरिति वै प्रजापतिर्ब्रह्माजनयत, भुव इति क्षत्रम्, स्वरिति विशम्। एतावद्वा इदं सर्वम्—यावद् ब्रह्म-क्षत्रं-विट्। सर्वेणैवाधीयते॥१२॥

---

व्याहृतीनां सत्यरूपत्वमुपपादयंस्तत्करणकमाधानं प्रशंसति—**भूरिति वा इति**। सृष्टिसमये प्रजापतिः 'भूरिति' अनया व्याहृत्या 'इमां' भूमिम् 'अजनयत' 'भुव इत्यन्तरिक्षम्' इत्यादावप्येवं योजना। **इमे त्रयो लोका इति**। यावदस्ति एतावदेव हीदं सर्वं जगदतो भूरादिलोकहेतुभिर्व्याहृतिभिराधीयमानोऽग्निरनेन 'सर्वेणैव' जगता आहितो भवति॥११॥

ब्रह्मक्षत्रादिवर्णत्रयोत्पत्तिहेतुत्वेन तत्करणकमाधानं प्रशंसति—**भूरिति वा इति**। 'ब्रह्म' ब्राह्मणजातिः, 'क्षत्रं' क्षत्रियजातिः। **स्वरित्यादि**। निगद-सिद्धम्॥१२॥

---

यह अग्नि ब्रह्मतत्त्व से सम्बन्धित है इसलिए ब्रह्मतत्त्व से ही इसका आधान होना चाहिए। वाणी ब्रह्म है। उसी वाणी का जो सारतत्त्व सत्यात्मक वाक्य है, उसी से अग्न्याधान उचित है। ब्रह्म सत्य है और ये 'भूः' आदि महाव्याहृतियाँ भी सत्य है। इसलिए सत्य के द्वारा इसका आधान होता है॥१०॥

प्रजापति ने 'भूः' इस व्याहृति से इस (पृथ्वी) को उत्पन्न किया। 'भुवः' व्याहृति से अन्तरिक्ष को और 'स्वः' से द्युलोक को उत्पन्न किया। ये जो तीन लोक हैं उतना ही जगत् है। इसलिए 'सब' से ही आधान किया जाता है॥११॥

प्रजापति ने 'भूः' व्याहृति से ब्राह्मण उत्पन्न किये, 'भुवः' से क्षत्रिय और 'स्वः' से वैश्य। ये जो ब्राह्मण, क्षत्रिय और वैश्य हैं इतना ही सब जगत् है, इसलिए 'सर्व' से ही अग्न्याधान किया जाता है॥१२॥

भूरि॒ति वै॒ प्र॒जाप॑तिः। (रा) आत्मा॒नमजनयत भु॒वऽइ॒ति प्र॒जाꣳ॒ स्वरि॒ति पशू॒नेता॒वद्वा॒ इदꣳ॒सर्वं॑ या॒वदात्मा॒ प्र॒जा पश॒वः सर्वे॒णैवा॒धीयते॥१३॥

स वै भूर्भु॒व इ॒ति। (त्ये) ए॒ता॒वतैव गा॒र्हपत्यमा॒दधात्यथ यत्स॒र्वैरादध्यात्के॒नाहवनी॒यमा॒दध्याद् द्वे॒ ऽअक्ष॒रे प॒रिशिनष्टि

---

भूरिति वै प्रजापतिरात्मानमजनयत, भुव इति प्रजाम्, स्वरिति पशून्। एतावद्वा इदं सर्वम्–यावदात्मा-प्रजा-पशवः। सर्वेणैवाधीयते॥१३॥

स वै भूर्भुव इत्येतावतैव गार्हपत्यमादधाति। अथ यत्सर्वैरादध्यात् केनाहवनीयमादध्यात्। द्वे अक्षरे परिशिनष्टि, तेनो एतान्ययातयामानि

---

स्वात्मप्रजापशुसर्जनहेतुत्वेन तत् प्रशंसति—**भूरिति वा इति**। **एतावद्वा इति**। 'इदं सर्वं' जगत् 'एतावद् वै' एतावदेव। 'यावत्' आत्मास्वरूपेणावस्थितः स्वात्मनो भोगसम्पादनहेतवः 'प्रजा' 'पशवः' चेति एतत्त्रितयान्तर्गतमेव सर्वं जगत्, अनेन 'सर्वेण' सोऽग्निराहितो भवतीत्यर्थः॥१३॥

एवं साधारण्येन व्याहृतीनामाधानसाधनत्वं प्रतिपाद्य गार्हपत्याधाने विशेषमाह—**स वा इति**। द्वाभ्यामेव व्याहृतिभ्यां 'गार्हपत्यम्' 'आदधाति'। तिसृभिरपि व्याहृतिभिर्गार्हपत्याधाने आहवनीयाधानस्य मन्त्रो न स्यात्, अतः सुवरिति 'द्वे अक्षरे' परिशेषयेत्। 'तेन' कारणेन परिशिष्टाक्षरद्वयसहितान्येतानि भूराद्यक्षराणि 'अयातयामानि' अगतसाराणि 'भवन्ति'। आहवनीयाधाने तिसृणां

---

प्रजापति ने 'भूः' इस व्याहृति से आत्म-तत्त्व को, 'भुवः' से प्रजा को और 'स्वः' से पशुओं को उत्पन्न किया। आत्म-तत्त्व, प्रजा और पशु—इतना ही यह सब जगत् है इसलिए 'सर्व' को लेते हुए ही आधान किया जाता है॥१३॥

वह 'भूर्भुवः' इन दो व्याहृतियों से गार्हपत्य अग्नि का आधान करता है। यदि सभी (अर्थात् तीनों व्याहृतियों) से आधान करता तो आहवनीय अग्नि का आधान किससे करता। इसलिए दो अक्षरों (स्वः) को बचा लेता है। इससे (तीनों अक्षर पुनः) अधिक प्रभावशाली हो जाते हैं। (अब) इन पाँचों अक्षरों से अर्थात् 'भूर्भुवः स्वः (सुवः)' से आहवनीय-अग्नि का आधान करता है। इसप्रकार (तीन + पाँच) आठ अक्षर हो जाते हैं। गायत्री-छन्द में भी आठ अक्षर होते हैं। गायत्री

---

१ 'भोक्तृरूपेणावस्थितः' इति पा.।

तेनोऽएतान्ययातयामानि भवन्ति तैः सर्व्वैः पञ्चभिराहवनीय-मादधाति भूर्भुवःस्वरिति तान्यष्टावक्षराणि सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते॥१४॥

देवान्ह वा ऽअग्नी ऽआधास्यमानान्। (नाँस्ता) तानसुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधास्यध्व ऽइति तद्यदरक्षंस्तस्माद्रक्षाꣳसि॥१५॥

ततो देवा एतं व्वज्रं ददृशुः। (र्य) यदश्वं तं

---

भवन्ति। तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवः स्वरिति। तान्यष्टावक्षराणि सम्पद्यन्ते। अष्टाक्षरा वै गायत्री। गायत्रमग्नेश्छन्दः। स्वेनैवैनमेतच्छन्दसाधत्ते॥१४॥

देवान् ह वा अग्नी आधास्यमानांस्तानसुररक्षसानि ररक्षुः-नाग्निर्जनिष्यते, नाग्नी आधास्यध्व इति। तद्–यदरक्षंस्तस्माद्रक्षांसि॥१५॥

ततो देवा एतं वज्रं ददृशुर्यदश्वम्। तं पुरस्तादुदश्रयन्। तस्याभयेऽनाष्ट्रे

---

व्याहृतीनां विनियोगमाह—तैः सर्वैरिति। 'तान्यष्टावक्षराणि' इत्यादि निगदसिद्धम्। गायत्रमग्नेश्छन्द इति। उभयोः प्रजापतिमुखजातत्वात्[१]॥१४॥

अग्निमन्थनसमये तस्य पुरस्तादश्वस्य धारणं विधित्सुरितिहासं दर्शयति—देवानिति। 'अग्नी' गार्हपत्याहवनीयौ। 'ररक्षुः' निरुद्धवन्त इत्यर्थः। निरोधप्रकारमाह—नाग्निरिति॥१५॥

देवैः कृतं परिहारं दर्शयति—ततो देवा इति। अश्वाख्यं 'यत्' वज्रं 'तं'

---

अग्नि का छन्द है। इसप्रकार वह (अग्नि का) आधान (अग्नि के ही) छन्दं से करता है॥१४॥

देवगण जब अग्नियों का आधान करने लगे तो असुर और राक्षसों ने उनको रोका (और कहा कि)—'अग्नि उत्पन्न मत करो, 'अग्नि का आधान मत करो'। चूँकि उन्होंने देवों को रोका (ररक्षुः) इसलिए निरुद्धार्थक 'रक्ष्' धातु से उनका नाम 'राक्षस' पड़ा॥१५॥

तब देवों ने इस वज्र अर्थात् 'अश्व' को देखा। उन्होंने उसको सामने खड़ाकर

---

१. प्रजापतिरकामयत प्रजायेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवतान्वसृज्यत, गायत्री छन्दो रथन्तरꣳ साम–' इत्यादि तै.सं. ७.१.१.४।

पुरस्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्वेणोपतिष्ठते वज्रमेवै-तदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवाते ऽग्निर्जायते॥१६॥

स वै पूर्व्ववाट् स्यात्। (त्स) स ह्यपरिमितं व्वीर्य्यमभिवर्द्धते यदि पूर्व्ववाहं न विन्देदपि य[१]एव कश्चाश्वः स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादेष ह्येवानडुहो बन्धुः॥१७॥

---

निवातेऽग्निरजायत। तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्-तदश्वमानेतवै ब्रूयात्। स पूर्वेणोपतिष्ठते, वज्रमेवैतदुच्छ्रयति, तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते॥१६॥

स वै पूर्ववाट् स्यात्, स ह्यपरिमितं वीर्यमभिवर्द्धते। यदि पूर्ववाहं न विन्देत्, अपि य एव कश्चाश्वः स्यात्। यद्यश्वं न विन्देत्, अप्यनड्वानेव स्यात्। एष ह्येवानडुहो बन्धुः॥१७॥

---

मन्थनदेशस्य 'पुरस्तात्' 'उदश्रयन्' उच्छ्रितमस्थापयन्। 'तस्य' वज्रस्य सम्बन्धिनि, 'अभये' भयरहिते, 'अनाष्ट्रे' रक्षःप्रभृतिनाशकरहिते, 'निवाते' वातरहिते; एवम्भूते स्थाने मन्थनाद् 'अग्निः' उदपद्यतेत्यर्थः। एवमिति-हासमुपन्यस्य प्रकृते योजयति—**तस्मादिति**। 'आनेतवै' आनेतुमित्यर्थः।[२] तुमर्थे तवैप्रत्ययः (पा.सू. ३.४.९)। **स पूर्वेणेत्यादि**। उक्तप्रायम्॥१६॥

स चाश्वः पूर्ववयस्क एवानेतव्य इत्याह—**स वै पूर्ववाडिति**। पूर्वे वयसि वहतीति 'पूर्ववाट्'। 'वहश्च' (पा.सू. ३.२.६४) इति ण्विः। तस्यालाभे पक्षान्तरमाह—**अपि य एवेति**। निगदसिद्धमन्यत्। **एष ह्येवेति**। अश्वविधेर्यः स्तावकोऽर्थवादः, अनडुद्विधेरपि एष एव स्तावक इत्यर्थः॥१७॥

---

लिया; और उसके भय रहित शत्रुरहित संरक्षण एवं निवात स्थान में अग्नि को उत्पन्न किया। इसलिए जहाँ अग्नि के लिये अरणि-मंथन करना हो वहाँ—'अश्व को ले आओ', ऐसा (अध्वर्यु अग्नीध्र को) प्रैष दे। अश्व को सामने (पूर्व दिशा में) खड़ा करता है। इससे मानो वह वज्र को ही खड़ा कर देता है और उसके भयरहित और शत्रु-शून्य संरक्षण में अरणि-मंथन द्वारा अग्नि उत्पन्न होती है॥१६॥

वह अश्व पूर्ववाट् (अर्थात् नवीन वय का या युवा घोड़ा) होना चाहिए। क्योंकि इसमें अपरिमित वीर्य (शक्ति) होता है। यदि पूर्ववाट् (नवीन अवस्था का) अश्व न मिले तो कैसा भी अश्व लिया जा सकता है। यदि अश्व उपलब्ध न

---

१. अत्रोपसर्गात्परत्वात् जकारवदुच्चारणम्। २. 'अश्वमानयेति ब्रूयात्' का.श्रौ.सू. ४.२१८।

(स्तं) तं यत्र प्राञ्चᳪं हरन्ति। तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवैतन्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति॥१८॥

तं वै तथैव हरेयुः। (र्य) यथैनमेष प्रत्यङ्ङुपाचरेदेष वै यज्ञो यदग्निः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ

---

तं यत्र प्राञ्चं हरन्ति, तत्पुरस्तादश्वं नयन्ति। तत्पुरस्तादेवैतन्नाष्ट्रा रक्षांस्यपघ्नन्नेति। अथाभयेनानाष्ट्रेण हरन्ति॥१८॥

तं वै तथैव हरेयुः-यथैनमेष प्रत्यङ्ङुपाचरेत्। एष वै यज्ञो-यदग्निः। प्रत्यङ् हैवैनं यज्ञः प्रविशति, तं क्षिप्रे यज्ञ उपनमति। अथ यस्मात्पराङ्

---

आहवनीयदेशं प्रत्यग्नेर्हरणसमयेऽश्वस्यापि पुरस्तान्नयनं विधत्ते—**तमिति**। तस्य प्रयोजनमाह—**तत्पुरस्तादिति**। स चाश्वोऽग्नेः पुरस्ताद् गमनमार्गे विद्यमानं रक्षःप्रभृतिकम् 'अपघ्नन्' हिंसन् 'एति' गच्छति। तथा च भयादिरहितेन मार्गेण तस्याग्नेर्हरणं सिध्यतीत्यर्थः॥१८॥

तस्मिन् हरणविशेषमाह—**तं वा इति**। 'यथा' 'एनं' यजमानम् 'एषः' अग्निः 'प्रत्यङ् उपाचरेत्' अभिमुखमुपावर्त्तेत, 'तम्' अग्निम् 'तथैव आहरेयुः'[2] आहवनीयायतनस्य पूर्वभागं प्रापयेयुरित्यर्थः। तस्य प्रयोजनमाह—**एष वा इति**। 'एषः एव 'वै' खल्वग्निः 'यज्ञः' तन्निष्पादकत्वात्। तस्य प्रत्यगावर्त्तनेन 'एनं' यजमानं 'यज्ञः' एव 'प्रत्यङ् प्रविशति' अभिमुख आवर्त्तते। तथा च 'तं' यजमानं

---

हो तो अनड्वान (बैल) ही ले आये। क्योंकि बैल के भी वे ही गुण हैं अर्थात् अपरिमित शक्ति वाला वह भी है॥१७॥

और जब वह इस (अग्नि) को पूर्व की ओर आहवनीय देश में ले जाय तो आगे-आगे अश्व को ले जाते हैं। इसप्रकार आगे-आगे चलता हुआ वह अश्व दुरात्मा राक्षसों को हटाता चलता है। और वे इस (अग्नि) को (आहवनीय तक) बिना भय और बिना शत्रु-बाधा के ले जाते हैं॥१८॥

इस (अग्नि) को इस प्रकार ले जाये कि उसका मुँह (यजमान की ओर) रहे। यह अग्नि ही यज्ञ है। प्रत्यङ्मुख अग्नि को लें जाने से यजमान की ओर

---

१. 'वामदेव्यमिति प्रेष्यत्यश्वः पुरस्ताद्युवा तदभावेऽयुवाऽश्वा-भावेऽनड्वान्' का.श्रौ.सू. ४.२३४।
२. 'अवहरेयुः' इ क्व.पा.।

उपनमत्यथ यस्मात्पराङ् भवति पराङ्ु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात्॥१९॥

(दे) एष उ वै प्राणः। (स्तं) तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्- भवति पराङ्ु हैवास्मात्प्राणो भवति स यो हैनं तत्रानु- व्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात्॥२०॥
[ शतम् ९०० ]

---

भवति, पराङ्ु हैवास्माद्यज्ञो भवति। स यो हैनं तत्रानुव्याहरेत्- 'पराङस्माद्यज्ञोऽभूत्' इति, ईश्वरो ह यत्तथैव स्यात्॥१९॥

एष उ वै प्राणः। तं वै तथैव हरेयुः–यथैनमेष प्रत्यङ्ङुपाचरेत्। प्रत्यङ् हैवैनं प्राणः प्रविशति। अथ यस्मात्पराङ् भवति, पराङ्ु हैवास्मात् प्राणो भवति। स यो हैनं तत्रानुव्याहरेत्–'पराङस्मात्प्राणोऽभूत्' इति, ईश्वरो ह यत्तथैव स्यात्॥२०॥

---

'क्षिप्रे' अल्पकाल एव, शीघ्रं यज्ञः उपगच्छति। एतद् व्यतिरेक- मुखेनोपपादयति—**अथ यस्मादिति**। सोऽग्निः 'यस्मात्' यजमानात् 'पराङ्' पराङ्मुखो भवति, तर्हि 'अस्मात्' 'यज्ञः' अपि पराङ्मुख एव 'भवति' 'तत्र' तथा सति 'यः' कश्चिद् द्वेष्यः 'एनं' यजमानम् 'अनुव्याहरेत्'। किमिति— 'यज्ञोऽस्मात् पराङ् अभूत्' इति स यजमानः 'तथैव' भवितुम् 'ईश्वरः' 'स्यात्'॥१९॥

एवमग्नेर्यज्ञरूपत्वेन प्रत्यगावर्त्तनं प्रतिपाद्य प्राणात्मकत्वादपि तत् प्रतिपादयति—**एष उ वा इति**। 'एषः' खल्वग्निः 'प्राणः' **तं वा इत्यादि**। पूर्ववत्॥२०॥

---

ही यज्ञ प्रविष्ट रहता है उसी की ओर यज्ञ शीघ्र आ जाता है। और जिसकी ओर से यह (अग्नि) पराङ् हो जाता है अर्थात् मुँह फेर लेता है उसकी ओर से यज्ञ भी मुँह फेर लेता है। यदि कोई किसी से दुर्वाक्य कहे कि यज्ञ तुझसे मुँह फेर ले तो उसका ऐसा ही हो जाता है॥१९॥

यह (अग्नि) प्राण-रूप है। इस (अग्नि) को गार्हपत्य देश से आहवनीय की

---

१ 'चहयजमानात्' इति क्व.पा.।

(द) अयं वै यज्ञो योऽयं पवते। तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञऽउपनमत्यथ यस्मात्पराङ्भवति पराङ् हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात्॥२१॥

(दे) एष उ वै प्राणः। (स्तं) तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्-

---

अयं वै यज्ञो, योऽयं पवते। तं वै तथैव हरेयुः—यथैनमेष प्रत्यङ्ङुपाचरेत्। प्रत्यङ् हैवैनं यज्ञः प्रविशति, तं क्षिप्रे यज्ञ उपनमति। अथ यस्मात्पराङ् भवति, पराङ् हैवास्माद् यज्ञो भवति। स यो हैनं तत्रानुव्याहरेत्–'पराङस्माद् यज्ञोऽभूत्' इति, ईश्वरो ह यत्तथैव स्यात्॥२१॥

एष उ वै प्राणः। तं वै तथैव हरेयुः—यथैनमेष प्रत्यङ्ङुपाचरेत्। प्रत्यङ् हैवैनं प्राणः प्रविशति। अथ यस्मात्पराङ् भवति, पराङ् हैवास्मात् प्राणो

---

अथैनं यज्ञात्मकमग्निं वायुतादात्म्येन स्तौति—अयं वा इति। तं वा इत्यादि पूर्ववत्॥२१॥

वाय्वात्मकमग्निं प्राणरूपतया स्तौति—एष उ वा इति। अन्यत्

---

ओर इस प्रकार ले जाये कि इसका मुँह (यजमान की ओर) रहे। क्योंक शरीर में प्रत्यङ्मुख ही प्राण प्रविष्ट होता है। यदि (अग्नि) पराङ्मुख ले जाया जाता है तो प्राण भी उससे पराङ्मुख अर्थात् मुँह फेर लेता है। यदि कोई उस समय में दुर्वाक्य कहे कि प्राण इससे पराङ्मुख हो गया तो ऐसा ही हो जायगा॥२०॥

यह जो पवनशील वायु है वही यज्ञ है। इस (अग्नि) को इसप्रकार ले जाये कि उसका मुँह (यजमान की) ओर रहे। इससे यजमान की ओर यज्ञ प्रविष्ट होता है, इसी की ओर झुक जाता है। जिसकी ओर से यह (अग्नि) मुँह फेर लेता है, उसकी ओर से यज्ञ भी मुँह फेर लेते हैं। यदि कोई किसी से दुर्वाक्य कहे कि यज्ञ इससे मुँह फेर ले तो ऐसा ही हो जाय॥२१॥

यह (अग्नि) प्राण-रूप है। इस (अग्नि) को इस प्रकार ले जाये कि इसका मुँह (यजमान की ओर) रहे क्योंकि उधर से ही प्राण प्रविष्ट होता है। यदि (अग्नि)

भ॒वति प॒राङ्ु हैवास्मात्प्राण॒ो भवति स य॒ो हैनं त॒त्रानुव्याह॒रेत्पराङ्स्मात्प्र॒ाणोऽभूदि॒तीश्वर॒ो ह यत्त॒थैव स्यात्त॒स्मादु त॒थैव॒ हरेयुः॥२२॥

(र) अथा॒श्वमा॒क्रमयति। त॒माक्रम॒य्य प्रा॒ञ्चमु॒न्नयति तं पुनरा॒वर्तयति तमु॒दञ्चं प्र॒मुञ्चति व्वीर्य्यं वाऽअ॒श्वो ने॒दस्मादिदं पु॒राग्वी॒र्यमसु॒दिति त॒स्मात्पुनरा॒वर्तयति॥२३॥

---

भवति। स यो हैनं तत्रानुव्याहरेत्–'पराङस्मात्प्राणोऽभूत्' इति ईश्वरो ह यत्तथैव स्यात्। तस्मादु तथैव हरेयुः॥२२॥

अथाश्वमाक्रमयति। तमाक्रमय्य प्राञ्चमुन्नयति। तं पुनरावर्त्तयति। तमुदञ्चं प्रमुञ्चति। वीर्यं वा अश्वः, नेदस्मादिदं पराग् वीर्यमसदिति। तस्मात्पुनरावर्त्तयति॥२३॥

---

पूर्ववत्॥२२॥

एवमग्नेर्हरणप्रकारमित्थं प्रतिपाद्य तदनन्तरकर्त्तव्यमाह—**अथाश्वमिति**। आहवनीयायतने सम्भारान् निधाय दक्षिणपूर्वपादेन 'अश्वमाक्रमयति'। एवम् 'आक्रमय्य' 'प्राञ्चं' नीत्वा 'तम्' अश्वम् 'पुनरावर्त्तयति' आवृत्य स्थापयति। अनन्तरं 'तम्' अश्वम् 'उदञ्चम्' उदङ्मुखं प्रमुञ्चति। सूत्र्यते हि कात्यायनेन— 'सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वाऽऽवर्त्य स्थापयति' (का.श्रौ.सू. ४.२३५) इति। पुनरावर्त्तनस्य प्रयोजनमाह—**नेदस्मादिति**। अश्वलक्षणं यद् 'इदं' वीर्यम्, तत् 'नेत्' नैव 'अस्मात्' 'पराग्'–भूतम् भवेदित्यनेनाभिप्रायेण तस्याश्वस्य पुनरावर्त्तनं कार्यमित्यर्थः॥२३॥

---

किसी से पराङ्मुख होता है तो प्राण भी उससे मुँह फेर लेता है। यदि कोई किसी से दुर्वाक्य कहे कि प्राण उससे मुँह फेर ले तो ऐसा ही हो जाता है। इसलिए अग्नि को हमें इस प्रकार (= यजमानाभिमुख) ले जाना चाहिये॥२२॥

अब (अध्वर्यु) अश्व को (आहवनीय की ओर) ले जाता है। जब अश्व वहाँ पहुँच जाय तो फिर वह उसे पूर्व की ओर ले जाता है। पुनः अश्व को (बायीं ओर से दाहिनी ओर) प्रत्यावर्तित करता (घुमाता) है तदनन्तर उत्तर-मुख खड़ाकर देता है। अश्व वीर्य अर्थात् शक्ति का प्रतीक है। वह अश्व को प्रत्यावर्तित इस लिये करता है कि शक्ति या सामर्थ्य (वीर्य) यजमान से मुँह न मोड़े॥२३॥

तमुश्वस्य पदऽआधत्ते व्वीर्य्यं वाऽअुश्वो व्वीर्य्यऽएुवैनमे-तदाधत्ते तुस्मादुश्वस्य पद आुधत्ते॥२४॥

स वैु तूष्णीमेवुाग्रऽउुपस्पृशति। (त्य) अथोद्यच्छुत्यथोुप-स्पृशति भूर्भुवुःस्वरिुत्येवु तृतीयेनुादधातिु त्र्यो वुा ऽइमेु लोकास्तुदिमुानेुवैतुल्लोकुानाप्नोत्येतन्न्वेुकम्॥२५॥

---

तमश्वस्य पद आधत्ते। वीर्य्यं वा अश्वः, वीर्य्य एवैनमेतदाधत्ते। तस्मादश्वस्य पद आधत्ते॥२४॥

स वै तूष्णीमेवाग्र, उपस्पृशति, अथोद्यच्छति, अथोपस्पृशति, भूर्भुवः स्वरित्येव तृतीयेनादधाति। त्रयो वा इमे लोकाः, तदिमानेवै-तल्लोकानाप्नोति। एतन्न्वेकम्॥२५॥

---

आहृतस्याग्नेराधानं विधत्ते—**तमश्वस्येति**। आहवनीयायतने यदश्वस्य पदम्, तस्मिन् 'तम्' अग्निं मन्त्रेण स्थापयेत्। तदेतत् प्रशंसति—**वीर्यं वा इति**॥२४॥

तत्र विशेषमाह—**स वा इति**। 'अग्रे' प्रथमम् अश्वस्य पदमग्निना[1] 'तूष्णीम्' 'उपस्पृशति' तमग्निमुद्यम्य पुनरपि 'उपस्पृशति'। एवं द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेन व्याहृतिभिस्तमग्निं तस्मिन् पदे स्थापयति। व्याहृतिगतं त्रित्वं प्रशंसति—**त्रयो वा इति**। इमं पक्षं निगमयति—**एतदिति**। 'एतत्' खल्वाहवनीयाधानस्य 'एकं' विधानमित्यर्थः॥२५॥

---

वह आहवनीयायतन में अश्व के पद-चिह्न पर अग्नि को रखता है। अश्व वीर्य का प्रतीक है। इसप्रकार वीर्य में वह इस अग्नि को रखता है। इसीलिए अश्व के पद-चिह्न में वह अग्नि को रखता है॥२४॥

पहले वह मन्त्र-पाठ के बिना ही (अश्व के पद-चिह्न को अग्नि से) स्पर्श कराता है। फिर वह उसको उठाता है और फिर स्पर्श कराता है। फिर तीसरी बार अश्व के पद-चिह्न पर अग्नि को स्थापित कर देता है यह मन्त्रांश पढ़कर— 'भूर्भुवः स्वः' (यजु. ३.५); क्योंकि तीन ही लोक हैं और इसप्रकार वह इन लोकों को प्राप्त होता है। यह विधि का एक प्रकार है॥२५॥

---

१. 'बृहदिति प्रेष्यत्यग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत्' का.श्रौ.सू. ४.२३६।

(मु) अथेदं द्वितीयम्। (न्तू) तूष्णीमेवाग्रऽ उपस्पृशत्यथो- द्यच्छति भूर्भुवः स्वरित्येव द्वितीयेनादधाति यो वाऽ अस्यामप्रतिष्ठितो भारमुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ शृणाति॥२६॥

स यत्तूष्णीमुपस्पृशति। तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति

---

अथेदं द्वितीयम्। तूष्णीमेवाग्र उपस्पृशति, अथोद्यच्छति, भूर्भुवः स्वरित्येव द्वितीयेनादधाति। यो वा अस्यामप्रतिष्ठितो भारमुद्यच्छति, नैनं शक्नोत्युद्यन्तुम्; सं हैनं शृणाति॥२६॥

स यत्तूष्णीमुपस्पृशति, तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति; सोऽस्यां

---

पक्षान्तरमपि वक्तुं प्रतिजानीते—**अथेदं द्वितीयमिति। तूष्णीमेवेत्यादि।** अश्वपदं 'तूष्णीं' सकृदेवाग्निनोपस्पृश्य, तमुद्यम्य द्वितीयेनोपस्पृशति। न व्याहृतिभिस्तत्र स्थापयेदित्यर्थः। एतस्योपस्पर्शनस्य प्रयोजनमाह—**यो वा अस्यामिति।** 'अस्यां' भूम्यां दृढमनवस्थितः सन् 'यः' वोढा 'भारमुद्यच्छति' सः 'एनं' भारम् 'उद्यन्तुं' वोढुं 'न शक्नोति'; प्रत्युत निपततोऽस्योपरि निपतन् भार एव 'एनं' पुरुषं हिनस्ति॥२६॥

**स यत् तूष्णीमुपस्पृशतीति।** यस्तु भूम्यां प्रतिष्ठाय भारमुद्यच्छति; स भारं वोढुं शक्नोतीति। तत्समानमेवैतद् भूमेः सकृदुपस्पर्शनम् तथा च तेन स्पर्शनेन भूम्यां प्रतिष्ठित एवाग्निराहितो भवति, 'न व्यथते' न चलति। '(व्यथ भयसंचलनयोः' धा.पा.भ्वा.आ. ७६५)–इति धातुः। पक्षान्तरं वक्तुमन्यस्मिन् पक्षे

---

दूसरा प्रकार यह है कि—मन्त्रपाठ के बिना पहले अश्व-पद से अग्नि को छुलाये, फिर उठावें फिर दूसरी बार में ही 'भूर्भुवःस्वः' इन व्याहृतियों का उच्चारण करते हुए अग्नि को अश्व-पद पर रख दे। (यह उसी प्रकार है जैसे—) भूमि पर पैर जमाये बिना जो बोझ को उठाने की चेष्टा करता है वह उठा नहीं सकता। बोझ उसको दबा देता है। इसलिए वह पहले पैर जमा लेता है फिर बोझ उठाता है। तद्वत् यहाँ पहले अग्नि से अश्व पद-चिह्न को स्पर्श कराना पैर जमाने के तुल्य है॥२६॥

जो अमंत्रक स्पर्श कराता है वह मानों इस पृथ्वी में पैर जमाने जैसा है और प्रतिष्ठित होकर तब अग्नि का आधान करता है। इसप्रकार आहित होने पर अग्नि स्थिर हो जाता है। (पक्षान्तर–) आसुरि, पाञ्चि और माधुकि—ये मुनित्रय, इस

सोऽस्यां प्रतिष्ठित आधत्ते तथा न व्यथते तदु हैतत् पश्चेव दध्रिर ऽआसुरिः पाञ्चिर्माधुकिः सर्व्वं वाऽ अन्यदियसितमिव प्रथमेनैवोद्यत्यादध्याद् भूर्भुवःस्वरिति तदेवानियसितमित्यतो यतमथा कामयेत तथा कुर्यात्॥२७॥

(दु) अथ पुरस्तात्परीत्य। पूर्व्वार्द्धमुल्मुकानामभिपद्य जपति

---

प्रतिष्ठित आधत्ते, तथा न व्यथते। तदु हैतत् पश्चेव दध्रिरे-आसुरिः, पाञ्चिः, माधुकिः। सर्वं वा अन्यदियसितमिव, प्रथमेनैवोद्यत्यादध्याद्-भूर्भुवः स्वरिति; तदेवानियसितमिति। अतो यतमथा कामयेत; तथा कुर्यात्॥२७॥

अथ पुरस्तात्परीत्य पूर्वार्द्धमुल्मुकानामभिपद्य जपति-'द्यौरिव भूम्ना

---

दोषमाह—तदु हैतदिति। आसुरिप्रभृतयस्त्रयो मुनयः तदेतदुपस्पृश्योद्यम्य द्वितीयस्पर्शनेनाधानं 'पश्चेव' पश्चाद्भूतमिव 'दध्रिरे' अधारयन्। एतावता को दोष इति तत्राह—**सर्वे वा इति**। अग्निनोपस्पृश्य पुनस्तस्योद्यमनेन तद्व्यतिरिक्तं सर्वमायतनस्थं सम्भारादिकम् 'इयसितम्'[1] इयत्तया परिच्छिन्नं व्यक्तमिव भवति। अतोऽग्निमुद्यम्य प्रथमेनैवोद्यमनेन व्याहृतिभिः 'आदध्यात्'। तथा एवं सति 'अनियसितम्' अव्यक्तमेव सर्वं भवति। उक्तानां पक्षाणामिच्छया विकल्पमाह—**यतमथेति**। एतत् पक्षत्रयमपि सूत्रितं कात्यायनेन—'अग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति, द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति'-का.श्रौ.सू. ४.२३६) इति॥२७॥

आहितस्याग्नेः पूर्वभागस्थमुल्मुकमन्वारभ्य मन्त्रस्य जपं विधत्ते—**अथ**

---

अग्नि को अश्व-पद से स्पर्श कराकर कुछ पश्चिम की ओर हटाकर रखते थे। उनका कथन था कि (अग्नि के छुलाने से) सब चीजे व्यक्त हो जाती है इसलिए प्रथम बार में ही अग्नि उठाकर 'भूर्भुवः स्वः' से आधान कर देना चाहिए। इन तीनों पक्षों में से इच्छानुसार जैसा चाहे कर सकता है॥२७॥

अब (यजमान) (स्थापित अग्नि के) पूर्व की ओर जाता है तथा पूर्वदिगस्थ

---

१. 'इयस्शब्दोऽवसानवचनः कण्ड्वादिषु पठ्यते' इति सायणाचार्यः। श.प.ब्रा. १.९.२.१४। इत्यत्र।

**द्यौरिव भूम्ना पृथिवीव व्वरिम्णेति यथाऽसौ द्यौर्बह्वी नक्षत्रैरेवं बहुर्भूयासमित्येवैतदाह यदाह द्यौरिव भूम्नेति पृथिवीव व्वरिम्णेति यथेयं पृथिव्युर्व्येवमुरुर्भूयासमित्येवैतदाह तस्यास्ते पृथिवि देवयजनि पृष्ठऽ इत्यस्यै ह्येनं पृष्ठऽ आधत्तेऽग्निमन्नादमन्नाद्यायादधऽ इत्यन्नादोऽग्निरन्नादो भूयासमित्येवैतदाह**

---

पृथिवीव वरिम्णा' (वा.सं. ३ अ., ५ मं.) इति। यथाऽसौ द्यौर्बह्वी नक्षत्रैः, एवं बहुर्भूयासमित्येवैतदाह–यदाह–'द्यौरिव भूम्ना इति। पृथिवीव वरिम्णेति। यथेयं पृथिव्युर्वी, एवमुरुर्भूयासमित्येवैतदाह–'तस्यास्ते पृथिवि देवयजनि पृष्ठे' (३ अ. ५ मं.) इति। अस्यै ह्येनं पृष्ठ आधत्ते। 'अग्निमन्नादमन्नाद्यायादधे' (३ अ. ५ मं.) इति। अन्नादोऽग्निः, अन्नादो

---

**पुरस्तादिति।** मन्त्रतात्पर्यमाह—**यथाऽसाविति।** बहुभिः 'नक्षत्रैः' 'यथाऽसौ द्यौः' 'बह्वी' बहुत्वोपेता, 'एवम्' अहमपि पुत्रपौत्रादिबहुत्वेन 'बहुर्भूयासम्' इति 'द्यौरिव भूम्ना' इत्यस्य भागस्यार्थः। पृथिवीत्यादिकमनूद्य तात्पर्यमाह—**यथेऽयं पृथिवीति** 'उर्वी' विस्तीर्णा, 'एवम्' अहमपि 'वरिम्णा' उरुत्वेन सुविस्तीर्णो भूयासमिति। भागान्तरमनूद्य व्याचष्टे—**तस्यास्त इति।** उरुत्वं प्रत्युपमानभूतायाः 'तस्याः' 'ते' तव 'पृष्ठे' उपरिभागे 'अग्निम् आदधे'–इत्युत्तरत्र सम्बन्धः। **अस्यै हीति।** अस्या एव खलु पृथिव्याः 'पृष्ठे' उपरि आधत्ते, अतो युक्तं 'तस्यास्ते' इति वाक्यमिति भावः। अन्तिमं भागमनूद्य व्याचष्टे—**अग्निमन्नादमिति।** आहवनीयादिरूपेण जाठररूपेण च हविर्लक्षणम्, तद्विलक्षणं च सर्वमन्नमत्तीति 'अन्नादोऽग्निः' एवमन्नादशब्देनाग्नेर्विशेषणादहमप्यन्नादो भूयासमिति तात्पर्यगम्योऽर्थः।

---

जलते हुवे अंगारे को समिधा से छूकर मंत्र पढ़ता है—'द्यौरिव भूम्ना पृथिवीव वरिम्णा' (यजु. ३.५)। 'द्यौ के समान बहुत और पृथ्वी के समान विस्तृत' (होऊँ)। 'द्यौरिव भूम्ना' कहने से तात्पर्य यह है कि जैसे द्युलोक में बहुत से नक्षत्र हैं इसी प्रकार मैं भी (पुत्र-पौत्रादि से) बहुत हो जाऊँ। और 'पृथिवीव वरिम्णा' कहने से तात्पर्य यह है कि जैसे पृथ्वी बड़ी विस्तृत है वैसे ही मैं भी (कीर्ति एवं सम्पदा से विस्तृत) हो जाऊँ। अब कहता है—'तस्यास्ते पृथिवि देवयजनि पृष्ठे' (यजु. ३.५), 'हे देव-यज्ञ के योग्य पृथ्वी! उस तेरी-पीठ पर' (अग्नि स्थापित करता हूँ); क्योंकि इसी (पृथ्वी) की पीठ पर आधान करता है। अब कहता है—

---

१ 'पुरस्तात् परिक्रम्येध्मपर्वार्द्धे गृहीत्वा द्यौरिव भूम्नेत्याह' का.श्रौ.सू. ४.२३७।

सैषाशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत॥२८॥

(ता) अथ सर्पराज्ञ्या ऋग्भिरुपतिष्ठते। (तऽ) 'आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः'। 'अन्तश्चरति रोचनाऽस्य प्राणादपानती। व्यख्यन्महिषो दिवम्'। त्रिँशद्धाम व्विराजति व्वाक् पतङ्गाय धीयते। प्रतिवस्तोरह द्युभिरिति

---

भूयासमित्येवैतदाह। सैषाऽऽशीरेव, स यदि कामयेत–जपेत्। यद्यु कामयेत अपि नाद्रियेत॥२८॥

अथ सर्पराज्ञ्या ऋग्भिरुपतिष्ठते–'आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः'–वा.सं. (३ अ., ६ मं.)। 'अन्तश्चरति रोचनाऽस्य प्राणादपानती। व्यख्यन्महिषो दिवम्' (३ अ., ७ मं.)। 'त्रिँशद्धाम विराजति वाक् पतङ्गाय धीयते। प्रति वस्तोरह द्युभिः'

---

सैषाशीरित्यादि। 'एषा' मन्त्रात्मिका ऋक् 'आशीः' फलप्रार्थनमेव; अतः सत्यां कामनायां तस्य मन्त्रस्य जपः; तदभावे तु जपोऽपि न कर्तव्य इत्यर्थः॥२८॥

अथ तस्याग्नेः सार्पराज्ञीभिरुपस्थानं विधत्ते—अथ सर्पराज्ञ्या[१] इति। सर्पणशीलानां प्राणिनां राज्ञी 'सर्पराज्ञी' तत्सम्बन्धिनीभिर्ऋग्भिरग्निम् 'उपतिष्ठते'। काः पुनस्ता इति तिस्र ऋचः पठति—आयं गौरिति। प्रथमा, अन्तश्चरति रोचनेति द्वितीया, त्रिंशद्धामेति (वा.सं. ३.६.७.८) तृतीया। आयं

---

'अग्निमन्नादमन्ना द्यायादधे' (यजु. ३।५)। (मन्त्रार्थ–) हविष्य रूप अन्न के भक्षण करने वाले अग्नि को अन्न के भोग-सामर्थ्य प्राप्ति के लिये रखता हूँ। अग्नि अन्न का खाने वाला है। अतः मैं भी अन्न भक्षण-सामर्थ्य वाला होऊँ। यह फलप्रार्थनात्मक मंत्र है। अतः कामना हो तो जपे अन्यथा न जपे॥२२॥

अब सर्प-राज्ञी संज्ञक वक्ष्यमाण (तीन) ऋचाओं से अग्नि का उपस्थान करता है—'आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः'॥१॥ अन्तश्चरति रोचनास्य-प्राणादपा नती। व्यख्यन् महिषो दिवम्॥२॥ त्रिंछशद्धाम विराजति वाक् पतङ्गाय धीयते। प्रति वस्तोरह द्युभिः॥३॥ (यजु. ३.६-८ या ऋग्वेद १०.१८९.१-३)।

---

१. 'आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः' का.श्रौ.सू. ४.२३४।

**तद्यदेवास्यात्र सम्भारैर्व्वा नक्षत्रैर्व्वऽर्तुभिर्व्वाऽऽधानेन वानाप्तं भवति तदेवास्यैतेन सर्व्वमाप्तं भवति तस्मात्सर्पराज्या ऋग्भिरुपतिष्ठते॥२९॥**

---

**(३ अ., ८ मं.) इति। तद्यदेवास्यात्र सम्भारैर्वा, नक्षत्रैर्वा, ऋतुभिर्वा, आधानेन वाऽनाप्तं भवति; तदेवास्यैतेन सर्वमाप्तं भवति। तस्मात्सर्पराज्या ऋग्भिरुपतिष्ठते॥२९॥**

---

गौरित्यादिमन्त्रार्थो मन्त्रभाष्ये प्रोक्तः। अस्योपस्थानस्य प्रयोजनमाह—**तद् यदेवेति**। 'अस्य' यजमानस्य 'अत्र' अस्मिन्नाधाने सम्भारादिभिर्विकल्पनिमित्तेन यत् 'अनाप्तम्' अप्राप्तं भवति, 'एतेन' उपस्थानेन 'अस्य' तत् 'सर्वम्' आप्यते, सर्पराज्याः सर्वाधिष्ठानभूतत्वात्। अत एव तन्नामनिर्वचनमन्यत्राम्नातम्—'इयं वै सर्पराज्ञी, देवा वै सर्पाः, तेषामियं राज्ञी' (ऐ.ब्रा. ५.४.४) इति च॥२९॥

---

[ मन्त्रार्थ—यज्ञनिष्पत्ति के लिये मनुष्य यजमानों के घर जाने वाले, चित्रवर्ण इस दृश्यमान अग्निदेव ने (हमारी यज्ञशाला के आहवनीय-गार्हपत्य-दक्षिणाग्नि कुण्डों में) अपना पादक्षेप कर लिया है। पूर्व दिगस्थ आहवनीय कुण्ड में माता पृथ्वी पर स्थापित हैं। ये ही अग्निदेव आदित्य रूप से पितृवत् पालक द्युलोक में भी विचरण करते हैं॥१॥ इस अग्निदेव की एक वायुरूपा शक्ति द्युलोक और पृथ्वीलोक के मध्य विचरण करती है। यह अग्नि अपनी वाय्वात्मिका शक्ति द्वारा प्रत्येक प्राणिजात के प्राण-अपान वायु को प्रेरित करती है। यह महान् अग्निदेव, यागानुष्ठान कर्ताओं के निमित्त द्युलोकस्थ स्वर्गादि भोगस्थानों को प्रकाशित करता है॥२॥ यजमानों द्वारा महीने के प्रत्येक दिन अग्नि के निमित्त यागानुष्ठान करने के कारण अग्निदेव विशिष्टतया पूजित होते हैं। तदतिरिक्त प्रतिदिन ब्रह्मयज्ञादि वेद स्वाध्याय द्वारा भी महान् अग्निदेव की भूयोभूयः स्तुति की जाती है॥३॥ (इन मन्त्रों की ऋषिका सार्पराज्ञी है)। ]

वह इन 'सर्पराज्ञी' संज्ञक ऋचाओं से खड़े होकर अग्नि का जो उपस्थान करता है इससे यज्ञ के सम्भारों में जो न्यूनता रह गई, या नक्षत्रों की दृष्टि से, या ऋतुओं की दृष्टि से, या अग्न्याधान में अन्य जो भी न्यूनता रह गई वह सब कमी इससे पूर्ण हो जाती है॥२९॥

---

१. 'इयं वै सर्पतोराज्ञी' इति तै.ब्रा. १.४.६.६। 'देवा वै सर्पास्तेषामियं राज्ञी' इति तै.ब्रा. २.२.६.१। तां.ब्रा. ९.८.७ (ब्रह्मवादिनी) आर्षे ब्रा. ३। २९ (सर्पाणाम्) ऋ.सं. १०.१८६। सा.भा. (ऋषिः)।

तुदाहुः। (नँ) नु सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेतीयं व्वै पृथिवी सर्पराज्ञी स युदेवास्यामाधत्ते तत्सुर्व्वान्कामानाप्नोति तुस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति॥३०॥

इति द्वितीयकाण्डे प्रथमाध्याये प्रथमप्रपाठके चतुर्थं ब्राह्मणम्॥
इति द्वितीयकाण्डे प्रथमाध्याये चतुर्थ ब्राह्मणम्॥२॥१॥४॥
इति प्रथमोऽध्यायः॥१॥

---

तदाहुः–न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति। इयं वै पृथिवी सर्पराज्ञी, स यदेवास्यामाधत्ते, तत् सर्वान् कामानाप्नोति। तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति॥३०॥

।। इत्यग्न्याधानप्रकरणे चतुर्थमुपवसथब्राह्मणम् ।।

---

तेषां पृथिव्यामाधानादेव सम्भारादीनां सर्वेषामवाप्तत्वात्, तदवाप्तये सर्पराज्ञीभिरुपस्थानं न कार्यमिति पक्षान्तरमाह—**तदाहुरिति**। निगद-व्याख्यातम्॥३०॥ [१.४]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम्।।२।।१।।४।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥१॥
ब्रह्माण्डं गोसहस्त्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्त्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च।

---

परन्तु कुछ लोगों का कथन है कि—सर्पराज्ञी संज्ञक इन ऋचाओं से उपस्थान करने की आवश्यकता नहीं है; क्योंकि यह पृथ्वी ही 'सर्पराज्ञी' है। जब पृथ्वी में अग्न्याधान किया जाता है तो स्वतः सब कामनाओं की पूर्ति हो जाती है। इसलिए

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः॥

**इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमोऽध्यायः समाप्तः॥२॥१॥**

---

सर्पराज्ञी संज्ञक ऋचाओं से उपस्थान करने की आवश्यकता नहीं॥३०॥४॥

## द्वितीयाध्याये प्रथमं ब्राह्मणम्

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति। तद्यत्पूर्णाहुतिं जुहोत्यन्नादं व्वाऽएतमात्मनो जनयते यदग्निं तस्माऽएतदन्नाद्यमपिदधाति यथा कुमाराय वा जाताय व्वत्साय वा स्तनमपि दध्यादेवमस्माऽएतदन्नाद्यमपिदधाति॥१॥

---

### पूर्णाहुतिहोमब्राह्मणम्

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति। तद्यत्पूर्णाहुतिं जुहोति, अन्नादं वा एतमात्मनो जनयते–यदग्निम् तस्मा एतदन्नाद्यमपिदधाति; यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यात्, एवमस्मा एतदन्नाद्यमपिदधाति॥१॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम्॥१॥

आदित आरभ्यैतावत्पर्यन्तं तात्पर्यार्थाभिधानविनियोगादिप्रदर्शनपुरस्सरं वाक्ययोजनं कृतम्; इत आरभ्योपरितनाध्यायगतानि यानि वाक्यानि, तानि समानन्यायतया पूर्ववदेव योजयितुं शक्यानीति ग्रन्थविस्तरभयात् केवलं प्रकटार्थकथनं[1] विषमपदविवरणं च क्रियते। एवं गार्हपत्याद्यग्निषु स्थानेषु स्वरूपेण सिद्धेषु क्षुधितस्याग्नेः शमनाय पूर्णाहुतिं विधत्ते[2]—**उद्धृत्याहवनीयमित्यादिना**॥१॥

---

(गार्हपत्याग्नि के एक भाग को) आहवनीय अग्नि के रूप में निकाल कर पूर्णाहुति होम करता है। पूर्णाहुति होम इसलिए करता है; क्योंकि वह अन्नाद अग्नि को अपने लिये उत्पन्न करता है। अतएव वह उसको हविष्य अन्न देता है। जैसे उत्पन्न हुए कुमार या बछड़े के लिए (मातायें) स्तन पिलातीं हैं उसी प्रकार यजमान नवजात अग्नि की क्षुधाशान्ति के लिये पूर्णाहुति द्वारा हविष्यान्न देता है॥१॥

---

१. 'प्रघट्टघट्टकार्थकथनम्' इत क्व.पा.। २. 'उद्धरेति यजमानो ब्रूयात् सायम्प्रातरग्निहोत्रे' 'गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः' का.श्रौ.१.सू. ४.१२.१-२।

स॒ एते॒नान्ने॒न शान्तः। (ऽ) उ॒त्तरा॒णि ह॒वीᳬंषि श्रप्य॒माणान्यु॒परमति शश्वद्ध वा॒अध्वर्यु॒ वा यजमानं॑ वा प्र॒दहे॒त्तौ ह्यस्य ने॒दिष्ठं च॒रतो य॒दस्मिन्ने॒तामा॒हुतिं न॒ जुहुयात्त॒स्माद्वाऽ-एतामा॒हुतिं जुहोति॥२॥

तां व्वै॒ पूर्णां॒ जुहोति। स॒र्व्वं वै॒ पूर्णᳬं स॒र्व्वेणै॒वैन-मेत॒च्छमयति स्वाहाका॒रेण जुहोत्यु॒निरुक्तो वै॒ स्वाहाकारः स॒र्व्वं वाऽअ॒निरुक्तᳬं स॒र्व्वेणै॒वैनमेत॒च्छमयति॥३॥

---

स एतेनान्नेन शान्त उत्तराणि हवींषि श्रप्यमाणान्युपरमति। शश्वद्ध वा अध्वर्युं वा यजमानं वा प्रदहेत्, तौ ह्यस्य नेदिष्ठं चरतः; यदस्मिन्नेतामाहुतिं न जुहुयात्। तस्माद्वा एतामाहुतिं जुहोति॥२॥

तां वै पूर्णां जुहोति। सर्वं वै पूर्णम्, सर्वेणैवैनमेतच्छमयति। स्वाहाकारेण जुहोति। अनिरुक्तो वै स्वाहाकारः, सर्वं वा अनिरुक्तम्; सर्वेणैवैनमेतच्छमयति॥३॥

---

स एतेनान्नेन शान्त इति। शश्वद्ध वा अध्वर्युमिति। अशान्तः[1] खल्वग्निः 'शश्वत्' ध्रुवम्—अध्वर्युयजमानयोरन्यतरं प्रदहेत्; 'तौ' खलु 'अस्य' अग्नेः 'नेदिष्ठम्' अन्तिकतमम्, समीपे सञ्चरत[2]—इत्यर्थः। 'अन्तिकबाढयोर्नेदसाधौ'-(पा.सू. ५.३.६३) इतीष्ठनि अन्तिकस्य नेदादेशः॥२-३॥

---

पूर्णाहुति द्वारा प्रदत्त अन्न से सन्तुष्ट होकर (अग्नि) आगे वाली हवियों को पकाने में सहयोगी हो जाता है अथवा उनकी प्रतीक्षा करता है। यदि उस (अग्नि) में यह आहुति न दी जाय तो वह अध्वर्यु को या यजमान को निश्चय ही जला देगा क्योंकि ये उसके पास रहते हैं। इसीलिए प्रथमतया वह उसको यह आहुति देता है॥२॥

इस आहुति को (जुहू में) घी पूरा भर कर देता है। पूर्ण का अर्थ है 'सब'। इस प्रकार वह 'सब कुछ' से उसको सन्तुष्ट करता है। 'स्वाहा' शब्दोच्चारण करके अध्वर्यु यह आहुति देता है। (क्योंकि) 'स्वाहा' अनिरुक्त अर्थात् अपरिमित है। 'सर्व' भी अपरिमित है। इस प्रकार 'सब से' इसको शान्त (= सन्तुष्ट) करता है॥३॥

---

१. 'अशान्तो ह्यग्निः' इति क्व.पा.। २. 'संचरेते' इति क्व.पा.।

यां व्वै प्रजापतिः प्रथमामाहुतिमजुहोत्स्वाहेति वै तामजुहोत्सो स्विदेषा निदानेन तस्मात्स्वाहेति जुहोति तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्व्वेणैवैनमेतच्छमयति॥४॥

तदाहुः। (रे) एतामेवाहुतिꣳ हुत्वाथोत्तराणि हवीꣳषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवीꣳषि निर्व्वपतीति॥५॥

---

यां वै प्रजापतिः प्रथमामाहुतिमजुहोत्, स्वाहेति वै तामजुहोत्। सो स्विदेषा निदानेन। तस्मात्स्वाहेति जुहोति। तस्यां वरं ददाति। सर्वं वै वरः, सर्वेणैवैनमेतच्छमयति॥४॥

### उत्तराहुतिः

तदाहुः–एतामेवाहुतिं हुत्वा–अथोत्तराणि हवींषि नाद्रियेत। एतयैव तं काममाप्नोति–यमभिकाममुत्तराणि हवींषि निर्वपतीति॥५॥

---

मन्त्ररहितेन स्वाहाकारमात्रेण[1] होममुपपादयति—**यां वा इति**। पुरा खलु प्रजापतिः पुरुषाश्वादिसर्वजगत्सर्जनहेतुभूतां[2] 'प्रथमामाहुतिम्' स्वाहाकारेणैव 'अजुहोत्'। 'एषा' अपि पूर्णाहुतिस्तथा क्रियमाणा 'निदानेन' निदानभूतेन फलकारणेन 'सो स्वित्' सैव, प्रजापतिना हुता प्रथमाहुतिः खल्वित्यर्थः॥४॥

पूर्णाहुतेः सकलकामावाप्तिहेतुत्वमाह—**तदाहुरिति**। यम् 'कामम्' 'अभि'—लक्ष्य 'उत्तराणि' पवमानादीनि 'हवींषि' निरूप्यन्ते। 'तम् कामम्' 'एतयैव' पूर्णाहुत्या प्राप्नोतीत्यर्थः॥५॥

---

प्रजापति ने जो (जगत् सर्जन हेतु भूता) प्रथम आहुति दी थी वह 'स्वाहा' शब्दोच्चारण कर दी। तद्वत् निदान से यह पूर्णाहुति भी वैसी ही है इसलिए 'स्वाहा' शब्दोच्चारण के साथ आहुति देता है। इससे वह वर देता है। 'वर' का अर्थ है 'सब'; इसलिए 'सब' के द्वारा उसको सन्तुष्ट करता है॥४॥

कुछ लोग ऐसा कहते हैं कि इस पूर्णाहुति को देने के बाद अन्य कोई आहुतियाँ न दी जावें; क्योंकि जिन कामनाओं के लिये अन्य आहुतियाँ दी जातीं हैं वे इस पूर्णाहुति के देने से ही पूरी हो जाती हैं॥५॥

---

१. 'निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च संमृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एव ꣳ सर्वत्र स्वाहेति' का.श्रौ.सू. ४.२४७। २. पुरुषपश्वादि इत्यपि पाठ उपलभ्यते।

स वाऽअग्नये पवमानाय निर्व्वपति। प्राणो वै पवमानः प्राणमेवास्मिन्नेतद्दधाति तद्धेतयैवास्मिंस्तद्दधात्यन्नᳪं हि प्राणोऽन्न-मेषाहुतिः॥६॥

(र) अथाग्नये पावकाय निर्व्वपति। (त्य) अन्नं वै पावकमन्नमेवास्मिन्नेतद्दधाति तद्धेतयैवास्मिंस्तद्दधात्येषा ह्येव प्रत्यक्षमन्नमाहुतिः॥७॥

(र) अथाग्नये शुचये निर्व्वपति। व्वीर्य्यं वै शुचि यद्वाऽअस्यैतदुज्ज्वलत्येतदस्य व्वीर्य्यᳪंशुचि व्वीर्य्यमेवास्मिन्ने-

---

स वा अग्नये पवमानाय निर्वपति। प्राणो वै पवमानः, प्राणमेवास्मिन्नेतद्दधाति; तद्धेतयैवास्मिंस्तद्दधाति। अन्नं हि प्राणः, अन्नमेषाहुतिः॥६॥

अथाग्नये पावकाय निर्वपति। अन्नं वै पावकम्, अन्नमेवास्मिन्नेतद्दधाति; तद्धेतयैवास्मिंस्तद्दधाति। एषा ह्येव प्रत्यक्षमन्नमाहुतिः॥७॥

अथाग्नये शुचये निर्वपति। वीर्यं वै शुचि। यद्वा अस्यैतदुज्ज्वलति, एतदस्य वीर्यम्, शुचि वीर्यमेवास्मिन्नेतद्दधाति, तद्धेतयैवास्मिंस्तद्दधाति। यदा

---

तत्प्राप्तिकारणमाह[1]—स वा इत्यादिना। पवमानहविर्भिर्हि जातेऽग्नौ

---

अब वह 'अग्नि-पवमान' देवता के लिए आहुति-द्रव्य निकालता है। प्राण ही पवमान है। इसलिए वह एतद्द्वारा उस (यजमान) में प्राण धारण कराता है। और वह इस (पूर्णाहुति) के द्वारा उसमें धारण कराता है। अन्न ही प्राण है और अन्न की ही यह आहुति है॥६॥

अब वह 'अग्निपावक' देवता के लिए आहुति-द्रव्य निकालता है। अन्न ही पावक है। उस (यजमान) में वह इस प्रकार अन्न को स्थापित कराता है। वह इसी (पूर्णाहुति) के द्वारा उसमें धारण कराता है; क्योंकि प्रत्यक्ष रूप से यह आहुति अन्न है॥७॥

अब 'शुचि अग्नि' के लिए वह आहुति-द्रव्य निकालता है। शुचि वीर्य है। यह जो अग्नि की ज्वाला है वही उसका वीर्य है। इस प्रकार वह यजमान में वीर्य (पराक्रम) धारण कराता है। वह इस पूर्णाहुति के द्वारा उसमें वीर्य धारण

---

१. 'अग्नये पवमानाय-प्रथमा' (का.श्रौ.सू. ४.२५०) 'अग्नये पावकायाग्नये शुचये' (का.श्रौ.सू. ४.२५१)।

तुद्दधाति तुद्धेतुयैवास्मिंस्तुद्दधाति यदुा ह्येवास्मिन्नेतामुाहुतिं जुहोत्युथास्यैतुद्धीर्य्यꣳ शुच्युुज्ज्वलति॥८॥

तुस्मादाहुः। (रे) एतुामेवुाहुतिꣳ हुत्वाथोुत्तराणि हवीꣳषि नाुद्रियेतैतुयैव तं काुममाप्नोति युमभिकुाममुुत्तराणि हवीꣳषि निर्व्वुपतुीति तुदु निुर्व्वुपेदेवोुत्तराणि हवीꣳषि पुरोऽक्षमिव वुाऽएतद्युददस्तुदिदमुितीव॥९॥

---

ह्येवास्मिन्नेतामाहुतिं जुहोति, अथास्यैतद्वीर्यं शुच्युज्ज्वलति॥८॥

तस्मादाहुः–एतामेवाहुतिं हुत्वाथोत्तराणि हवींषि नाद्रियेत। एतयैव तं काममाप्नोति, यमभिकाममुत्तराणि हवींषि निर्वपतीति। तदु निर्वपेदेवोत्तराणि हवींषि। परोक्षमिव वा एतत्–यददः, तदिदमितीव॥९॥

---

प्राणान्नवीर्याणि यथाक्रमं स्थाप्यन्ते। 'तत्' सर्वम् 'एतयैव' पूर्णाहुत्या भवतीत्यर्थः॥६-८॥

अतः पवमानेष्टिकार्यस्य पूर्णाहुत्यैव कृतत्वादन्येषामनिर्वापपक्षं निगमयति—**तस्मादाहुरिति**। निर्वापपक्षमेव सिद्धान्तयति—**उत्तराणीति**। आधानानन्तरभावीनि[1] 'अग्नये पवमानाय–' इत्यादिना विधेयानीत्यर्थः। **परोक्षमिव वेति**। 'यददः'[2] प्राणान्नवीर्यधारणं पूर्णाहुत्याऽग्नौ क्रियते, 'एतत्' परोक्षमिव, पवमानेष्टिभिः 'तत्–इदम्–इति–इव' प्रत्यक्षत एव क्रियते; पवमानपावकशुचिशब्दैः प्राणान्नवीर्याणां प्रतिपादनात्। अतस्ता इष्टयो नियमेन कर्त्तव्या इत्यर्थः॥९॥

---

कराता है; क्योंकि जब वह अग्नि में आहुति देता है तो वीर्य = ज्वाला (अर्थात् शुचि) प्रज्वलित होता है॥८॥

अतएव कहते हैं कि इस पूर्णाहुति को देने के बाद आगे की अन्य आहुतियाँ देने की आवश्यकता नहीं है; क्योंकि जिन कामनाओं हेतु आगे की आहुतियाँ दी जातीं हैं वे इसी पूर्णाहुति के देने से सिद्ध हो जाती है। (इस पर याज्ञवल्क्य का कथन है कि–) उसको पूर्णाहुति के बाद भी आगे की अन्य आहुतियाँ देनी चाहिए; क्योंकि (पूर्णाहुति द्वारा) जो प्राण-अन्न-वीर्य धारण परोक्ष सा रहता है वह आगे की आहुतियों से प्रकट हो जाता है॥९॥

---

१. 'आधानादनन्तरभवानि' इति पा.। २. 'यदहः' इति क्व.।

स यदग्नये पवमानाय निर्व्वपति। प्राणो वै पवमानो यदा वै जायतेऽथ प्राणोऽथ यावन्न जायते मातुर्व्वैव तावत्प्राणमनुप्राणिति यथा वा तज्जातऽएवास्मिन्नेतत्प्राणं दधाति॥१०॥

(त्यु) अथ यदग्नये पावकाय निर्व्वपति। (त्यु) अन्नं वै पावकं तज्जातऽएवास्मिन्नेतदन्नं दधाति॥११॥

(त्यु) अथ यदग्नये शुचये निर्व्वपति। व्वीर्य्यं व्वै शुचि

---

स यदग्नये पवमानाय निर्वपति। प्राणो वै पवमानः, यदा वै जायतेऽथ प्राणः। अथ यावन्न जायते, मातुर्वैव तावत् प्राणमनुप्राणिति। यथा वा–तज्जात एवास्मिन्नेतत्प्राणं दधाति॥१०॥

अथ यदग्नये पावकाय निर्वपति। अन्नं वै पावकम्, तज्जात एवास्मिन्नेतदन्नं दधाति॥११॥

अथ यदग्नये शुचये निर्वपति। वीर्यं वै शुचि। यदा वा अन्नेन वर्द्धते,

---

ता इष्टी[1]र्विधाय प्रशंसति—स यदित्यादिना। प्रा[2]णो वै पवमान इति। पव[3]नक्रिया हि वायुधर्मः, प्राणश्च वाय्वात्मक इति पवमानशब्देन तत्प्रतिपादनम्। एतेन चाग्निं विशिषन् प्राणमेवास्मिन् जाते[4]ऽग्नौ स्थापितवान् भवति। जननात् पूर्वं मातुर्गर्भावस्थस्य तु प्राणो मातुः प्राणादभिन्न इति न तत्र तद्धारणापेक्षेत्यर्थः॥१०-११॥

अथ यदग्नये शुचय इति। यदा वा अन्नेनेति लौकिकदृष्टान्तकथनम्।

---

'अग्नि-पवमान' के लिए आहुति-द्रव्य का निर्वाप (ग्रहण) इसलिए करता है; क्योंकि प्राण ही पवमान है। जब शिशु उत्पन्न होता है तब प्राणवान् (उत्पन्न) होता है। और जब तक उत्पन्न नहीं होता तब तक माँ के प्राण से साँस लेता है और जब वह उत्पन्न होता है तो उसमें पृथक् प्राण आ जाता है॥१०॥

'अग्नि-पावक' के लिए आहुति-निर्वाप इसलिए करता है कि अन्न ही पावक है। इस प्रकार उत्पन्न होते ही उसमें अन्न धारण क्षमता स्थापित करता है॥११॥

'अग्नि-शुचि' के लिए आहुति का निर्वाप इसलिए करता है कि 'शुचि' वीर्य

---

१. 'एवमादिनेष्टी–' इति पा.क्व.। २. 'प्राणा' इति क्व.पा.। ३. 'पवमानक्रिया हि वायुधर्मः प्राणः, स वाय्वात्मकः' इति क्व. पाठः। ४. 'जनिते' इति क्व.पा.।

यदा वाऽअन्नेन व्वर्द्धतेऽथ व्वीर्य्यंतदन्नेनैवैनमेतद्वर्द्धयित्वाथास्मिन्नेतद्वीर्य्यᳪ शुचि दधाति तस्मादग्नये शुचये॥१२॥

तद्धेतदेव सद्विपर्यस्तमिव। (वा) अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपावर्तते तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवात्मना मनुष्यानभ्युपावृतमिति॥१३॥

स एतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त। यदस्य

---

अथ वीर्यम्। तदन्नेनैवैनमेतद् वर्द्धयित्वा, अथास्मिन्नेतद् वीर्यं शुचि दधाति। तस्मादग्नये शुचये॥१२॥

तद्धेतदेव सद्विपर्यस्तमिव। अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपावर्तते। तद्धेक्षाञ्चक्रे–मैव सर्वेणेवात्मना मनुष्यानभ्युपावृतमिति॥१३॥

स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त। यदस्य पवमानं रूपमासीत्,

---

अन्नेनैवैनमिति। पावकेष्टिरूपेणान्नेनाग्निं 'वर्द्धयित्वा' अनन्तरमेव 'अस्मिन्' अग्नावनया तृतीयेष्ट्या 'शुचि' दीप्यमानं 'वीर्यं' च धारयतीत्यर्थः॥१२॥

तद्धेतदिति। 'तदेतत्' सर्वं पूर्णाहुतिपक्षे 'सत्' विद्यमानमपि 'विपर्यस्तमिव' भवति। अतो नासौ पक्षो युक्त इत्यर्थः। न केवलमेतावदेवेष्टीनां प्रयोजनम्, अपि तु मनुष्यैराधीयमानस्याग्नेः कार्त्स्न्यमप्याभिः सम्पद्यत[1] इत्याख्यायिकापुरस्सरमाह—अग्निर्ह यत्रेति। अभ्युपावृतमिति। अभ्युपागममित्यर्थः। वृतेर्लुङि उत्तमैकवचने द्युतादित्वात् (पा.सू. ३.१.५५) च्लेरङ्॥१३॥

स एतास्तिस्र[2] इति। 'सः' अग्निर्हि मनुष्यान् प्रत्यागमनसमये 'एताः'

---

है। जब प्राणी अन्न से बढ़ता है तो वीर्यवान् (शक्ति सम्पन्न) होता है। (आहित अग्नि की) अन्न से ही वृद्धि कराके तत्पश्चात् उसमें शुचि अर्थात् वीर्य को धारण कराता है। इसलिए अग्नि-शुचि के लिए आहुति दी जाती है॥१२॥

दूसरी प्रथा (केवल पूर्णाहुति मात्र करने की) ठीक नहीं है। जब अग्नि देवों से चलकर मनुष्यों तक आया तो उसने चाहा कि मैं अपनी सम्पूर्ण आत्मा से मनुष्यों के पास न आऊँ॥१३॥

(तब) उसने इन तीनों लोकों में अपने तीन शरीर स्थापित कर दिये। उसका

---

१. 'सम्पाद्यते' इ. क्व.पा.। २. 'आग्नेय एव वा पुरस्तादादित्यस्य' इति का.श्रौ.सू. १०.११।

पुवमानँ रूपमासीत्तुदस्युां पृथिव्युां न्यधत्तााथ युत्पावकं तुदन्तुरिक्षेऽथ यच्छुचि तुद्दिवि तद्वाऽऋृषयः प्रतिबुबुधिरे युऽउ तर्ह्यृषयऽआसुरसर्व्वेण वै नऽआत्मुनाग्निुरभ्युपावृतदिुति तुस्माऽएतुानि हवीᳬषि निुरवपन्॥१४॥

(न्त्स) स युदग्नुये पुवमानाय निर्व्वुपति। युदेुवास्यास्युां पृथिव्युाᳬ रूपं तुदेुवास्यैतुेनाप्नोत्युथ युदग्नुये पावकुाय निर्व्वुपति युदेुवास्यान्तुरिक्षे रूपं तुदेुवास्यैतुेनाप्नोत्युथ युदग्नुये

---

तदस्यां पृथिव्यां न्यधत्त। अथ यत्पावकम्, तदन्तरिक्षे। अथ यच्छुचि, तद्दिवि। तद्वा ऋषयः प्रतिबुबुधिरे; य उ तर्ह्यृषय आसुः। असर्वेणैव न आत्मनाग्निरभ्युपावृतदिति। तस्मा एतानि हवींषि निरवपन्॥१४॥

स यदग्नये पवमानाय निर्वपति–यदेवास्यास्यां पृथिव्यां रूपम्, तदेवास्यैतेनाप्नोति। अथ यदग्नये पावकाय निर्वपति–यदेवास्यान्तरिक्षे रूपम्, तदेवास्यैतेनाप्नोति। अथ यदग्नये शुचये निर्वपति यदेवास्य दिवि

---

पवमानपावकशुच्याख्याः 'तिस्रः' आत्मीयाः 'तनूः' पृथिव्यन्तरिक्षद्युलोकेषु यथाक्रमं निधाय 'असर्वेण' अकृत्स्नेनैव 'आत्मना' स्वरूपेण अस्मान् 'अभि'– लक्ष्य 'उपावृतत्' उपागमत्। 'इति' इममर्थम् 'ऋषयः' अबुध्यन्त। 'तस्मै' अग्नये कात्स्न्र्यसम्पादनाय पवमानहवींषि निरवपन्नित्यर्थः॥१४॥

**स यदग्नये पवमानायेत्यादि**। स्पष्टम्। **अनपनिहितमाधत्त इति**। यत् पृथिव्यादिष्वग्निना निक्षिप्तमात्मीयं रूपम्, तदाभिः पवमानेष्टिभिः स्वीकृत्य

---

जो 'पवमान' रूप था वह पृथिवी में स्थापित कर दिया। जो 'पावक' रूप था वह अन्तरिक्ष में और जो 'शुचि' रूप था वह द्युलोक में (स्थापित कर दिया)। जो ऋषिगण उस समय थे उनको यह ज्ञात हो गया कि अग्निदेव सम्पूर्ण आत्मा से हमारे पास नहीं आये हैं। इसलिए उन्होंने अग्नि के प्रसादनार्थ ये आहुतियाँ तैयार कीं॥१४॥

अब वह जो 'अग्नि-पवमान' के लिए आहुति देता है तो वह उस रूप को प्राप्त करता है जो इस पृथिवी में स्थापित है। जब 'अग्नि पावक' के लिए आहुति देता है तो उस रूप को प्राप्त करता है जो अन्तरिक्ष में स्थापित हुआ है और 'अग्नि-शुचि' के लिए जो आहुति देता है तो वह उस रूप को प्राप्त करता है जो द्युलोक में स्थापित है। इस प्रकार वह समग्र अग्नि को अविकल रूप में आहित

---

१. 'न सर्वेण' इ.क्व.पा.।

शुचये निर्व्वपति यदेवास्य दिवि रूपं तदेवास्यैतेनाप्नोत्येवमु-कृत्स्नमेवाग्निमनपनिहितमाधत्ते तस्मादु निर्व्वपेदेवोत्तराणि हवीꣳषि॥१५॥

केवलबर्हिः प्रथमꣳहविर्भवति समानबर्हिषी ऽउत्तरेऽअयं वै लोकः प्रथमꣳ हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बहुलेव वा इयं पृथिवी लेलयेवान्तरिक्षं लेलयेवासौ द्यौरुभे चिदेनां

---

रूपम्, तदेवास्यैतेनाप्नोति। एवमु कृत्स्नमेवाग्निमनपनिहितमाधत्ते। तस्मादु निर्वपेदेवोत्तराणि हवींषि॥१५॥

केवलबर्हिः प्रथमं हविर्भवति। समानबर्हिषी उत्तरे। अयं वै लोकः प्रथमं हविः, अथेदमन्तरिक्षं द्वितीयम्, द्यौरेव तृतीयम्। बहुलेव वा इयं पृथिवी, लेलयेवान्तरिक्षम्, लेलयेवासौ द्यौः; उभे चिदेनां प्रत्युद्यामिनी

---

'कृत्स्नमेव' तम् 'अग्निम्' आहितवान् भवतीत्यर्थः। **तस्मादिति**, निर्वाप-पक्षनिगमनम्। कात्यायनोऽपि 'द्वादशाहान्ते तनूहवींषि निर्वपति' (का.श्रौ.सू. ४.२४९)–इति तनूरूपपवमानेष्टिनिर्वापं प्रक्रम्य 'सद्यो वा न वा'(का.श्रौ.सू. ४.२४९) इत्यकरणपक्षमपि सूत्रयामास॥१५॥

**केवलबर्हिरिति**। अग्नये पवमानायैतत्[1] यत् 'प्रथमं हविः', तत् 'केवलबर्हिः' यजनम्[2], न साधारणं तन्त्रयुक्तं कर्त्तव्यम्; हविरन्तरेण न समुच्चित्यानुष्ठेयमित्यर्थः। **समानबर्हिषी इति**। 'उत्तरे' तु हविषी समानतन्त्रे कार्ये इत्यर्थः। तदेतद्द्वयमुपपादयति **'अयं वा'** इत्यादिना। 'बहुला, इव' स्थूलेव। **लेलयेवान्तरिक्षमिति**। लीनमिव ह्यन्तरिक्षं नीरूपत्वात्। तथा 'द्यौः' अपि विप्रकृष्टत्वाल्लीयमानेव[3] भवति। अत एते 'उभे' अपि 'एनाम्' पृथिवीं 'प्रति

---

कर लेता है। इस दृष्टि से भी यह आवश्यक है कि (पूर्णाहुति) के बाद भी आगे की आहुतियाँ दी जाँय॥१५॥

पहली आहुति केवलबर्हि (कुश) अर्थात् अन्य हवियों के साथ समुच्चित होकर अनुष्ठित नहीं होगी अपितु स्वतन्त्रतया अनुष्ठित होती है। बाद की दो आहुतियाँ समानबर्हि अर्थात् समानतन्त्र से अनुष्ठित होती हैं। पहली हवि इस लोक की प्रतिनिधिभूत है, दूसरी अन्तरिक्ष की, तीसरी द्युलोक की प्रतिनिधिभूत है। यह पृथिवी बहुला (स्पष्ट या ठोस) सी है। अन्तरिक्ष अरूप होने से अस्पष्ट सा है तथा द्युलोक भी अत्यन्त दूर होने से परोक्ष सा है। यदि तीनों हवियाँ समानतन्त्र

---

१. 'पवमानायेति यत्' इति क्व.पा.। २. 'जननसाधारणम्; तत्र युक्तम्'–इति क्व.पा.। ३. 'लीयमाने-वाल्पतरमिव भवति' इत क्व.पु.पा.।

**प्रत्युद्यामिनी स्तामिति तस्मात्समानबर्हिषी॥१६॥**

**(ऽ)अष्टाकपालाः सर्वे पुरोडाशा भवन्ति। (न्त्य) अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते तानि सर्व्वाणि चतुर्व्विंशतिः कपालानि सम्पद्यन्ते चतुर्व्विंशत्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दःस्वेनैवैनमेतच्छन्दसाधत्ते गायत्र्यो याज्यानुवाक्या भवन्ति गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते॥१७॥**

---

**स्तामिति। तस्मात्समानबर्हिषी॥१६॥**

**अष्टाकपालाः सर्वे पुरोडाशा भवन्ति। अष्टाक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः; स्वेनैवैनमेतच्छन्दसाधत्ते। तानि सर्वाणि चतुर्विंशतिः कपालानि सम्पद्यन्ते। चतुर्विंशत्यक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः; स्वेनैवैनमेतच्छन्दसाधत्ते। गायत्र्यो याज्यानुवाक्या भवन्ति। गायत्रमग्नेश्छन्दः, स्वेनैवैनमेतच्छन्दसाधत्ते॥१७॥**

---

उद्यामिनी' 'स्ताम्' बाधितुंमुद्युक्ते[1] भवेताम्। अतः प्रथमं हविः पृथक्तन्त्रं कार्यम्, उत्तरे तु समानतन्त्रे कार्ये-इति निगमयति—**तस्मादिति**॥१६॥

**अष्टाकपालाः सर्व इत्यादि**। स्पष्टम्। **गायत्र्यो याज्यानुवाक्या भवन्तीति**। यागान्तरेषु हि पुरोनुवाक्या गायत्री, याज्या त्रिष्टुप्; अत्र तु पुरोनुवाक्या याज्याश्च सर्वा गायत्र्यः कर्तव्याः। अत एवाश्वलायनेन[2] तथैव सूत्रितम्–'अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः, स नः पावक दीदिवोऽग्ने पावक रोचिषाऽग्निः शुचिव्रततम उदग्ने शुचयस्तवेति (आश्व.श्रौ.सू. २.१.२०-२५)॥१७॥

---

(समानबर्हि) कर दी जाँय तो ये दोनों अर्थात् अन्तरिक्ष और द्युलोक पृथ्वी को बाधित करने उद्युक्त हो जायेंगे। अतः प्रथम हवि पृथक्तन्त्र शेष दो समानतन्त्र की जाती हैं॥१६॥

सभी पुरोडाश आठ कपालों पर तैयार होते हैं। गायत्री-छन्द (के प्रत्येक चरण) में आठ ही अक्षर होते हैं। गायत्री अग्नि से सम्बन्धित छन्द है। इस प्रकार वह

---

१. 'हन्तुमुद्युक्ते' इति पा.। २. कात्यायनोऽप्येवमाह—'अग्नऽआयूꣳष्यग्नेपवस्वेति प्रथमस्य हविषो याज्यानुवाक्ये। द्वितीयायाम् अग्ने पावक रोचिषासनः पावक दीदिव इति हविषः। अग्निः शुचिव्रततमः शुचिर्व्विप्रः शुचिः कविः। शुचीरोचतऽआहुतः। उदग्ने शुचयस्तवभ्राजन्तऽईरते। तवज्योतीꣳष्यर्च्चय इति द्वितीयस्य। इति हौत्रिकपरिशिष्टम्। अ.२ खण्डः १-२। तथा स्विष्टकृत्सूत्रमपि। गायत्र्यावीडितवत्यौ संयाज्ये। अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारꣳरत्नधातमम्। तन्त्वामज्मेषु वाजिनं तन्वाना

(त्तेऽथा) अथादित्यै चरुं निर्व्वपति। प्रच्यवत ऽइव वा ऽएषोऽस्माल्लोकाद्यऽएतानि हवीᳩषि निर्व्वपतीमान्हि लोकान्त्समारोहन्नेति॥१८॥

स यददित्यै चरुं निर्व्वपति। (ती) इयं व्वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तस्माददित्यै चरुं निर्व्वपति॥१९॥

---

अथादित्यै चरुं निर्वपति। प्रच्यवत इव वा एषोऽस्माल्लोकाद्-य एतानि हवींषि निर्वपति, इमान् हि लोकान् समारोहन्नेति॥१८॥

स यददित्यै चरुं निर्वपति, इयं वै पृथिव्यदितिः, सेयं प्रतिष्ठा-तदस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठति। तस्माददित्यै चरुं निर्वपति॥१९॥

---

**अथादित्यै चरुमिति।** 'अदित्यै चरुस्तृतीया' (का.श्रौ.सू. ४.२.२५२) **इमान् हि लोकान्त्समारोहन्नेतीति।** पृथिव्यन्तरिक्षद्युलोकात्मकानि पवमानहवींषि क्रमेण निर्वपंस्तद्वारा इमानेव पृथिव्यादिलोकान् सोपानक्रमेण सम्यगारोहन्न-स्माल्लोकात् 'प्रच्यवते'। अतस्तत्परिहारायादित्येष्टिः कर्तव्येत्यर्थः॥१८-१९॥

---

अग्नि को उसी के छन्द द्वारा स्थापित करता है। (तीन हवियों के) कुल २४ कपाल होते हैं। गायत्री-छन्द में भी कुल चौबीस अक्षर होते हैं। गायत्री अग्नि का छन्द है। वह अग्नि को उसी के छन्द के द्वारा स्थापित करता है। अग्न्याधान की याज्या एवं पुरोनुवाक्या ऋचायें भी गायत्री छन्द की होती है; (क्योंकि) गायत्री-छन्द अग्नि से सम्बन्धित है, अतः अग्नि को उसी के छन्द से स्थापित करता है॥१७॥

(उक्त हवियों के बाद अब) अदिति देवता के लिए चरु (= चावल) पकाता है। जो यजमान पवमानादि इन हवियों को प्रदान करता है वह इस लोक से सोपान-क्रम से उठता हुआ अन्तरिक्षादि लोकों पर आरूढ़ होता है अतः पृथ्वी से पृथक् होने जैसी स्थिति में होता है (इसके परिहार के लिये-)॥१८॥

वह अदिति के लिए चरु (भात) की आहुति देता है (क्योंकि) यह पृथ्वी ही अदिति है; यह अपने स्थान पर प्रतिष्ठित रहती है। इस प्रकार वह इस प्रतिष्ठित (ठहरी हुई) पृथिवी में स्थित हो जाता है। अतएव अदिति देवता के लिए चरु (ओदन) की हवि देता है॥१९॥

---

अग्नेऽध्वरम्। धुनिश्होतार-मीडित इत। खण्ड १। द्वितीयायामग्निवत्यौ संयाज्ये। अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यावाड्जुह्वायास्यः। त्वश्ह्यग्नेऽअग्निना व्विप्रोव्विप्रेण सन्त्सता। सखा सख्यासमिध्यसे। इति हौत्रिकपरिशिष्टम् अ. २ खण्ड १-२।

तुस्यै व्विराजौ संयाज्ये स्यातामित्याहुः। (व्विं) व्विराड्डीयमित्युथो त्रिष्टुभौ त्रिष्टुब्भीयमित्युथो जुगत्यौ जुगती हीयमिति व्विराजावित्त्वेव स्याताम्॥२०॥

(न) तुस्यै धेनुर्दुक्षिणा। धेनुरिव वाऽइयं मनुष्येभ्यः सुर्व्वान्कामान्दुहे माता धेनुर्मातेव वाऽइयं मनुष्यान्बिभर्त्ति तुस्माद्धेनुर्दुक्षिणैतन्न्वेकमुयनम्॥२१॥

---

तस्यै विराजौ संयाज्ये स्यातामित्याहुः विराड्डीयमिति। अथो त्रिष्टुभौ। त्रिष्टुब्भीयमिति। अथो जगत्यौ। जगती हीयमिति। विराजावित्त्वेव स्याताम्॥२०॥

तस्यै धेनुर्दक्षिणा धेनुरिव वा इयं मनुष्येभ्यः सर्वान् कामान् दुहे। माता धेनुः। मातेव वा इयं मनुष्यान् बिभर्ति। तस्माद्धेनुर्दक्षिणा। एतन्वेक-मयनम्॥२१॥

---

तस्यै विराजौ संयाज्ये इति। 'प्रेद्धो अग्ने', 'इमो अग्ने' (ऋ.सं. ७.१.१.३,१८) इत्येते स्विष्टकृतो याज्यानुवाक्ये 'स्याताम्' इत्यर्थः। विराजावित्त्वेवेति। तु—शब्देन त्रिष्टुब्जगतीपक्षौ व्यावर्त्येते॥२०॥

तस्यै धेनुरिति। (का.श्रौ.सू. ४.२५६) एतन्वेकमयनमिति। पवमानेष्टि-यजताम् 'एतत् नु एकम्' अनुष्ठानस्य विधानम्॥२१॥

---

कुछ लोग कहते हैं कि—अग्न्याधेय की पवमानेष्टि में स्विष्टकृत् याग में विराज् छन्द की दो संयाज्या होनी चाहिए; क्योंकि विराज् ही पृथिवी है। अथवा त्रिष्टुप् छन्द की; क्योंकि त्रिष्टुप् छन्द इस पृथिवी से सम्बन्धित है या जगती छन्द की हो; क्योंकि जगती यह पृथिवी है परन्तु विराज् छन्द की ही संयाज्या होनी चाहिए॥२०॥

पवमानेष्टि की दक्षिणा धेनु है। धेनु जैसी ही यह पृथिवी भी है। वह मनुष्यों की सब कामनाओं को दूध के समान देती है। धेनु माता है। यह पृथिवी भी माँ के सदृश है; क्योंकि मातृवत् मनुष्यों का पालन करती है। इसलिए पवमानेष्टि की दक्षिणा धेनु है। यह (पवमानेष्टि की) एक विधि हुई॥२१॥

---

१. 'तृतीयायां विराजौ संयाज्ये। प्रेद्धोऽअग्ने.। वा.सं.अ. १७ मं. ७६। 'इमोऽअग्नेवीततमानिह-व्याजस्रोवक्षिदेवतातिमच्छ। प्रतिनई ः सुरभीणिव्यन्त्विति'। का.हौ.सू.अ. २ खण्डः ३। सां.सू. २.२.१५।

(म्) अथेदं द्वितीयम्। (मा) आग्नेयमेवाष्टाकपालं पुरोडाशं निर्व्वपति परोऽक्षमिव वाऽएतद्यदग्नये पवमानायाग्नये पावकायाग्नये शुचयऽइतीवाथाञ्जसैवैनमेतत्प्रत्यक्षमाधत्ते तस्मादग्नयेऽथादित्यै चरुं निर्व्वपति स य एव चरोर्बन्धुः स बन्धुः॥२२॥

इति द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमं ब्राह्मणम्॥
इति द्वितीयकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम्॥२॥२॥१॥

---

**अथेदं द्वितीयम्, आग्नेयमेवाष्टाकपालं पुरोडाशं निर्वपति। परोक्षमिव वा एतत्–यदग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये इतीव। अथाञ्जसैवैनमेतत् प्रत्यक्षमाधत्ते–तस्मादग्नये। अथादित्यै चरुं निर्वपति। स य एव चरोर्बन्धुः स बन्धुः॥२२॥**

---

अन्यदप्यस्तीत्याह—**अथेदमिति**। **आग्नेयमेवेति**। न तु पवमानादिविशेषणमादरणीयमित्येवकारार्थः। **परोक्षमिव वा इति**। पवमानादिविशेषणैर्विशेष्यमाणोऽग्निस्तत्तद्वैशिष्ट्यद्वारा पारोक्ष्यमापद्यते; अतस्तत्परिहारेण 'अञ्जसा' ऋजुनैव मार्गेण केवलाग्नये, पवमानायाग्नये, पावकायाग्नये, शुचयेऽग्नये निर्वपन् तं प्रत्यक्षत एव स्वीकरोतीत्यर्थः। अस्मिन्नपि पक्षे आदित्ययागः कर्त्तव्य इत्याह—**अथादित्या इति**। **स य एवैति**। प्रागुक्तब्राह्मणातिदेशः॥२२॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम्॥२॥२॥१॥**

---

विचार का द्वितीय पक्ष यह है कि—आठ कपालों के पुरोडाश को केवल अग्नि के लिए अर्पण करता है; (क्योंकि) 'अग्नि-पवमान' के लिए, 'अग्नि-पावक' के लिए और 'अग्नि-शुचि' के लिए हवि का निर्वाप करने पर एक तरह से मानो अग्नि परोक्ष सा हो जाता है। अतः केवल अग्नि के लिये अष्टाकपाल पुरोडाश देकर अग्नि पवमानादि आहुतित्रय के पश्चात् ही वह अग्नि का प्रत्यक्ष रूप से आधान कर देता है। अतः वह पहले अग्नि के लिए अष्टाकपाल पुरोडाश तथा अन्त्य में अदिति के लिए चरु देता है। चरु की विधि वैसी ही है (जैसा पूर्व में कहा गया है)॥२२॥२॥

※

---

१. 'आग्नेय एव वा पुरस्तादादित्यस्येति' कात्यायनः अ. ४ खं. १० सू. ११ अस्मिन्पक्षे = आग्नेयीष्टिः
१ अदितीष्टिश्चेतीष्टिद्वयमेव न पवमानेष्टिः पावकेष्टिश्चेति।

घ्नन्ति वाऽएतद्यज्ञम्। (ज्ञँय्) यदेनं तन्वते यन्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुँ सञ्ज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याँ हविर्यज्ञं घ्नन्ति॥१॥

सऽएष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति॥२॥

---

दक्षिणाब्राह्मणम्

घ्नन्ति वा एतद्यज्ञं यदेनं तन्वते। यन्वेव राजानमभिषुण्वन्ति, तत्तं घ्नन्ति। यत् पशुं संज्ञपयन्ति, विशासति, तत्तं घ्नन्ति। उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति॥१॥

स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयन्। तद् यदेनं दक्षिणाभिरदक्षयन् तस्माद्दक्षिणा नाम। तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयति, अथ समृद्ध एव यज्ञो भवति। तस्माद्दक्षिणा ददाति॥२॥

---

षड्द्वादशादिदक्षिणा आधानस्य विधास्यन् तन्नाम निर्वक्तुं प्रस्तौति—घ्नन्तीति। यदेनं तन्वत इति। सामान्येनोक्तं विभजति—**यन्वेवेति**। यज्ञे सोमाभिषवपशुसंज्ञपनावहननादिकरणात्। तद्द्वारा तत्सम्बन्धी यज्ञ एव हतो भवतीत्यर्थः॥१॥

स एष यज्ञ इति। न ददक्ष इति। फलं जनयितुं न शशाकेत्यर्थः। 'अदक्षयन्' दक्षं समर्थमकुर्वन्। तद्यदेनमित्यादि दक्षिणानामनिर्वचनम्। एवं पुरावृत्तमुपन्यस्य प्रकृते योजयति—**तद्यदेवेति**। 'व्यृद्धं समर्द्धयतीति दक्षिणा'

---

जब यज्ञ को करते हैं तो उसमें (एक प्रकार से) आघात (= हिंसा) होती है। (क्योंकि) सोमयाग में जब (सोम) राजा को कूचते व निचोड़ते हैं तो एक प्रकार से उसका आघात करते हैं। जब पशुयाग में पशु को मारते या काटते हैं तो उसका आघात (= हिंसा) करते हैं। हविर्याग में ऊखल और मूसली से तथा सिल, लोढ़ी इन दोनों पत्थरों से कण्डन एवं पेषण क्रिया में हवि का आघात (= हिंसन) यज्ञ में करते हैं॥१॥

(इस प्रकार) हिंसित या आघात युक्त यज्ञ शक्ति-रहित होकर फल-जनन में

ता वै षुड् दद्यात्। (त्ष) षड् वा ऽऋतुवः संव्वत्सरुस्य संव्वत्सरो यज्ञ प्रजापतिः स यावानेवु यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति॥३॥

द्वादश दद्यात्। (द्द्वा) द्वादश वै मासाः संवत्सरुस्य संव्वत्सरो यज्ञः प्रजापतिः स यावानेवु यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति॥४॥

---

ता वै षड् दद्यात्। षड् वा ऋतवः संवत्सरस्य। संवत्सरो यज्ञः, प्रजापतिः। स यावानेव यज्ञः, यावत्यस्य मात्रा; तावतीभिर्दक्षयति॥३॥

द्वादश दद्यात्। द्वादश वै मासाः संवत्सरस्य। संवत्सरो यज्ञः, प्रजापतिः। स यावानेव यज्ञः, यावत्यस्य मात्रा; तावतीभिर्दक्षयति॥४॥

---

इति यास्कोऽपि॥२॥

ता वा 'इति, दक्षिणादानविधिः। द्वादशचतुर्विंशतिपक्षावत्र वैकल्पिकौ द्रष्टव्यौ। अत एवोक्तं सूत्रकृता—'षड् दक्षिणाः प्रविभज्य ददाति, द्वादश, चतुर्विंशति वा' (का.श्रौ.सू. ४.२७४) इति। आपस्तम्बोऽप्याह स्म—'षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति ता विकल्प्यन्ते' (आ.श्रौ.सू. ५.२.१३.१४) इति॥३-४॥

---

दक्ष या समर्थ न रह सका। (तब) देवों ने दक्षिणा-दान से यज्ञ को दक्ष (= फलोत्पादन में समर्थ) बनाया। यतः दक्षिणाओं द्वारा उसको दक्ष बनाया इसलिए इनका नाम 'दक्षिणा' पड़ा (व्यृद्धं समर्धयतीति दक्षिणा)। यज्ञ के हिंसित होने पर जो कुछ सामर्थ्य नष्ट हो जाता है उसे ही 'दक्षिणा' के द्वारा पूर्ण कर दिया जाता है फलतः यज्ञ समृद्ध (शक्तिशाली) हो जाता है; इसीलिए (प्रत्येक) यज्ञ में दक्षिणा दी जाती है॥२॥

(अग्न्याधान की दक्षिणा के रूप में) छः (गाँयें) देनी चाहिये। (क्योंकि) संवत्सर में छः ऋतुयें होती हैं। संवत्सर-यज्ञ प्रजापति है। जितना यज्ञ है, जितनी उसकी मात्रा (कलायें) हैं, उतने ही परिमाण की दक्षिणाओं से इसको दक्ष (= सामर्थ्यवान्) बनाता है॥३॥

(द्वितीय पक्ष–) अथवा बारह (गाँयें) दे। (क्योंकि) संवत्सर में बारह मास होते हैं। संवत्सर यज्ञ प्रजापति है। जितना विस्तृत यज्ञ है, जितनी इसकी मात्रा (कलायें) हैं, उतनी ही परिमाण की दक्षिणाओं से उसको दक्ष (= सामर्थ्यवान्) बनाता है॥४॥

---

१. निरु. अ. १ पा. ३ सं. ७।

**चतुर्विंॅ शतिं दद्यात्। (च्चु)चतुर्व्विंॅ शतिर्व्वै संव्वत्सर्स्यार्द्धमासाः संव्वत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयत्येषा मात्रा दक्षिणानां दद्यात्त्वेव यथाश्रद्धं भूयसीस्तद्यद्दक्षिणा ददाति॥५॥**

**द्वया व्वै देवा। देवाः (ऽ) अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाॅ सोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा व्विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाॅ**

---

**चतुर्विंशतिं दद्यात्। चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः। संवत्सरो यज्ञः, प्रजापतिः। स यावानेव यज्ञः यावत्यस्य मात्रा; तावतीभिर्दक्षयति। एषा मात्रा दक्षिणानाम्। दद्यात् त्वेव यथाश्रद्धम्। भूयसीस्तत्–यद् दक्षिणा ददाति॥५॥**

**द्वया वै देवाः। देवा अहैव देवाः। अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः, ते मनुष्यदेवाः। तेषां द्वेधा विभक्त एव यज्ञः। आहुतय एव देवानाम्, दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानाम्।**

---

एषा **मात्रेति**। एतद् दक्षिणानां परिमाणमित्यर्थः। इतोऽधिकमपि यथाविभवमिच्छानुसारेण देयमिति[1] विधत्ते—**दद्यात् त्वेवेति**॥५॥

आहुतिदृष्टान्तेनैतद्दक्षिणादानं प्रशंसति—**द्वया वा इति**। द्वैविध्यमेव दर्शयति—**देवा अहैवेति**। अग्न्यादिदेवरूपा एव देवाः केचित्, अपरे तु ब्राह्मणरूपदेवास्ते विशेष्यन्ते—**शुश्रुवांस इत्यादिना**। 'शुश्रुवांसः' बहुश्रुताः,

---

(तृतीय पक्ष–) अथवा चौबीस (गाँयें) दे। (क्योंकि) संवत्सर में चौबीस अर्द्धमास (पक्ष) होते हैं। संवत्सर-यज्ञ प्रजापति है। जितना विस्तृत यज्ञ है, जितनी उसकी मात्रा होती है उतनी ही परिमाण की दक्षिणाओं से वह उसको दक्ष बनाता है। दक्षिणा का यह परिमाण है, अथवा श्रद्धा के अनुसार अधिक भी दे सकता है। दक्षिणा इसलिये भी दी जाती है कि–॥५॥

दो प्रकार के देव होते हैं। (एक तो) देव हैं ही देव और (दूसरे) जो वेदादि शास्त्रों के जानने वाले और तदनुरूप आचरण करने वाले जो ब्राह्मण हैं वे मनुष्य-देव हैं। इस प्रकार यज्ञ-क्रिया दो भागों में विभक्त है। (प्रथम) देवों की आहुतियाँ

---

१. 'भूयसीश्च यथाश्रद्धम्' का. श्रौ.सू. ४.३.५।

शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्य-देवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्त ऽएनमुभये देवाः प्रीताः सुधायां दधति॥६॥

तद्यथा योनौ रेतो दध्यात्। (दे) एवमेवैतदृत्विजो यजमानं लोके दधति तद्यदेभ्य ऽएतद्ददाति ये मेदुँ सम्प्रापिपन्निति नु दक्षिणानाम्॥७॥

---

आहुतिभिरेव देवान् प्रीणाति, दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छु-श्रुवुषोऽनूचानान्। त एनमुभये देवाः प्रीताः सुधायां दधति॥६॥

तद्यथा–योनौ रेतो दध्यात्, एवमेवैतदृत्विजो यजमानं लोके दधति। तद् यदेभ्य एतद्ददाति। ये मेदं सम्प्रापिपन्, इति नु दक्षिणानाम्॥७॥

---

'अनूचानाः' साङ्गवेदाध्ययनेन ज्ञातार्थानुष्ठानपराः। एते मनुष्यरूपा देवाः। अत एव तैत्तिरीयकम्—'एते देवाः प्रत्यक्षं यद् ब्राह्मणाः' (तै.सं. १.७.३.१) इति। यथा आहुतिभिरग्न्यादिदेवानां प्रीतिर्यज्ञे, एवं मनुष्यदेवान् प्रीणयितुं दक्षिणादानमित्यर्थः॥६॥

**तद्यथा योनाविति।** यथा गर्भाशये सिक्तं रेतो गर्भरूपेण परिणमति, न व्यर्थो भवति; एवमेवर्त्विजो यजमानं कर्मफले स्वर्गलोके स्थापयन्तीत्यर्थः। **ये मेदमिति।** 'ये' खलु ऋत्विजो 'मा' माम् 'इदम्' कर्मफलं 'सम्प्रापिपन्' सम्यक् प्रापितवन्तः 'इति' अनेनाभिप्रायेणैभ्यो दक्षिणा देयेत्यर्थः॥७॥

---

है, और (द्वितीय) वेदादिशास्त्रज्ञ एवं आचारनिष्ठ ब्राह्मण रूपी मनुष्य-देवों के लिये दक्षिणा-दान है। यज्ञ में आहुतियों के द्वारा देवों को (प्रसन्न करता है) तथा दक्षिणा-दान से वेदादिशास्त्रज्ञ, आचारनिष्ठ ब्राह्मणरूपी मनुष्य देवों को (प्रसन्न करता है)। दोनों प्रकार के देव प्रसन्न होकर उस यजमान को सुधा (अमृतत्व स्थापित कर) देते हैं॥६॥

जैसे योनि (= गर्भाशय) में सिक्त वीर्य व्यर्थ नहीं जाता है उसी प्रकार ऋत्विज लोग यजमान को कर्मफल रूप (स्वर्ग) लोक में स्थापित करते हैं। 'इन महनीय ऋत्विजों ने मुझ यजमान को अति उत्कृष्ट इस कर्मफल को प्राप्त कराया है'— इस श्रेष्ठ भावना से यज्ञ में दक्षिणा-दान करना चाहिये। दक्षिणा-दान के विषय में (यह ध्यातव्य बात है)॥७॥

(८) देवाश्च वाऽअसुराश्च। (श्चो) उभये प्राजापत्याः पस्पृधिरे तऽउभय ऽएवानात्मान आसुर्मर्त्त्या ह्यासुरनात्मा हि मर्त्यस्तेषूभयेषु मर्त्येष्वग्निरेवामृत आस तँ ह स्मोभयेऽ-मृतमुपजीवन्ति स यँ ह स्मैषां घ्नन्ति तद्धस्म वै स भवति॥८॥

ततो देवाः। (स्त) तनीयाँस इव परिशिशिषिरे तेऽर्च्चन्तः

---

**फलवादब्राह्मणम्**

**देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। त उभय एवानात्मान आसुः मर्त्त्या आसुः, अनात्मा हि मर्त्त्यः। तेषूभयेषु मर्त्त्येष्वग्निरेवामृत आस। तं ह स्मोभयेऽमृतमुपजीवन्ति। स यं ह स्मैषां घ्नन्ति, तद्ध स्म वै स भवति॥८॥**

**ततो देवास्तनीयांस इव परिशिशिषिरे। तेऽर्च्चन्तः श्राम्यन्तश्चेरुः-**

---

अथाधानस्य भ्रातृव्यजयहेतुत्वं वक्तुमाख्यायिकामाह—**देवाश्चेति। अनात्मान आसुरिति।** आत्मज्ञानरहिताः अविवेकिनो जाताः। अनात्मत्वादेव हेतोः 'मर्त्याः' मरणधर्म्माश्च सञ्जाताः। 'तेषूभयेषु'[1] देवासुरेषु 'मर्त्येषु' सत्सु 'अग्निरेव'[2] अमरणशीलः 'आस'। **यं ह स्मैषामिति।** 'एषाम्' देवानां मध्ये 'यम्' एव असुराः 'घ्नन्ति', 'तत्' तत्र[3] 'स वै हत' एव 'भवति'॥८॥

**ततो देवा इति।** एवं क्रमेणासुरैर्हतेषु देवाः अल्पीयांस एव परिशिष्टा बभूवुः। (मरणधर्मोपेतानसुरान् वयमभिभवेमेत्यभिप्रायेण[4]) 'ते' देवाः 'अर्च्चन्तः,

---

देवगण और असुरगण दोनों प्रजापति की सन्तानें (अज्ञानाभिभूत होकर) युद्ध करने लगे। वे दोनों ही आत्मज्ञान-रहित थे। अतएव मर्त्य थे। जो आत्म-ज्ञान रहित होता है वह मर्त्य होता है। इन दोनों मर्त्यों (= अनात्मज्ञों उत वा अविवेकियों) में केवल अग्नि ही अमर (आत्मज्ञान-सम्पन्न) था और इसी अमर के सहारे वे दोनों जीते थे। युद्ध में (असुरों ने) जिस (देव) को मारा वही मर गया॥८॥

तब (असुरों द्वारा मारे जाने पर) थोड़े से ही देवगण बच गये। वे बचे हुए देवगण तपस्या और श्रम इस भावना से करते रहे कि हम अपने शत्रु मर्त्य असुरों

---

१. 'तेषु भूतेषु' इति क्व.पा.। २. 'अग्निरेक एव' इति क्व.पा.। ३. 'तत्र स देवो हत एव भवति' इति क्व.पा.। 'तत्र सर्वहत एव भवति' इत्यपि क्व.पा.। 'तत्र स्म स हत एव भवति' इत्ययमपि क्व.पाठ.। ४. कोष्ठान्तर्गतः पाठः क्व. पुस्तके नोपलभ्यते।

श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति तऽएतदमृत-मग्न्याधेयं ददृशुः॥९॥

(स्ते) ते होचुः। (ई) हन्तेदममृतमन्तरात्मन्नादधामहै तऽ इदममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्य्या भूत्वा स्तर्य्यान्त्स-पत्नान्मर्त्यानभिभविष्याम इति॥१०॥

ते होचुः। (रु) उभयेषु वै नोऽयमग्निः प्र त्वेवासुरेभ्यो ब्रवामेति॥११॥

---

उतासुरान् सपत्नान् मर्त्यानभिभवेम इति। त एतदमृतमग्न्याधेयं ददृशुः॥९॥

ते होचुः–हन्तेदममृतमन्तरात्मन्नादधामहै, त इदममृतमन्तरात्मन्नाधाय, अमृता भूत्वा, अस्तर्य्या भूत्वा; स्तर्यान् सपत्नान्मर्त्यानभिभविष्याम इति॥१०॥

ते होचुः–उभयेषु वै नोऽयमग्निः, प्र तु एवासुरेभ्यो ब्रवामेति॥११॥

---

तपस्यन्तः, 'श्राम्यन्तः' श्रमं प्राप्नुवन्तः 'चेरुः' त एतदित्यादि। स्पष्टम्॥९॥

**ते होचुरिति। अमृतमन्तरात्मन्निति।** मरणधर्मरहितमग्निम्[1] 'आत्मनि' हृदये आधाय वयमपि 'अमृता भूताः' अत एव 'अस्तर्य्याः' अहिंस्याश्च भूता इत्यर्थः॥१०॥

**ते होचुरिति। उभयेषु वा इति।** देवासुरेषु 'उभयेषु' अस्मासु स्थितः, 'अयमग्निः' अतः 'असुरेभ्यः। निवेद्यैवास्माभिः स आधातव्य[2] इति विचारितवन्त इत्यर्थः॥११॥

---

को परास्त कर विजय पा सकें। (तप और श्रम के प्रभाव से) उन्होंने इस अमृतदायी अग्न्याधेय कर्म को देखा॥९॥

उन्होंने आपस में कहा—'अरे! हम इस अमृतदायी-कर्म को अपने आत्मा के भीतर धारण करें। हम इस अमृत को अपनी आत्मा के भीतर रख लेंगे तथा अमर बनकर अजेय हो अपने मर्त्य तथा जीतने के योग्य शत्रुओं पर विजय पा लेंगे॥१०॥

उन्होंने आपस में विचार किया कि—यह 'अग्नि' हम दोनों के पास है। इसलिए असुरों से निवेदन कर ही इसका हम आधान कर लें॥११॥

---

१. 'मरणरहितम्' इति क्व.पा.। २. 'अध्यापतव्या' इति क्व.पा.।

ते होचुः। (रा) आ वै व्वयमग्नी धास्यामहेऽथ यूयं किं करिष्यथेति॥१२॥

ते होचुः। (र) अथैनं व्वयं न्येव धास्यामहेऽत्र तृणानि दहात्र दारूणि दहात्रौदनं पचात्र माꣳसं पचेति स यं तमसुरा न्यदधत तेनानेन मनुष्या भुञ्जते॥१३॥

(तेऽथै) अथैनं देवाः। (ऽ) अन्तरात्मन्नादधत त इममममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्य्या भूत्वा स्तर्य्यान्त्स-

---

ते होचुः-आ वै वयमग्नी धास्यामहे, अथ यूयं किं करिष्यथेति॥१२॥

ते होचुः-अथैनं वयं न्येव धास्यामहे 'अत्र तृणानि दह' 'अत्र दारूणि दह' 'अत्रौदनं पच' 'अत्र मांसं पच' इति। स यं तमसुरा न्यदधत, तेनानेन मनुष्या भुञ्जते॥१३॥

अथैनं देवा अन्तरात्मन्नादधत। त इमममृतंमन्तरात्मन्नाधाय, अमृता भूत्वा, अस्तर्य्या भूत्वा; स्तर्यान् सपत्नान्मर्त्यानभ्यभवन्। तथो एवैष

---

ते होचुरित्यादि। निगदसिद्धम्॥१२॥

ते होचुरिति। न्येव धास्यामह इति। यदि यूयं देवा अग्निमाधास्यद्ध्वे, तर्हि वयमपि तमेवाग्निं निधास्यामहे। 'तृणानि दह' इत्याद्यसुरवाक्यम्। हे अग्ने! अत्र पृथिव्याम् 'तृणानि दह, दारूणि दह' इत्येवमग्निं प्रेषयन्तो भूमौ तमस्थापयन्, यन्निहितवन्तोऽसुरास्तेनाग्निनाऽमुना मर्त्या भुञ्जते॥१३॥

अथैनमित्यादि। 'देवाः' तु 'एनम्' अग्निम् 'आत्मन्' आत्मनि, 'अन्तः' हृदयमध्ये 'आधाय' यथासङ्कल्पमकृषतेत्यर्थः।

---

उन्होंने (असुरों से) कहा—'हम दोनों अग्नियों का आधान कर लें। (फिर असुरों से पूछा-) आधान के बाद हे असुरगण! आप इस 'अग्नि' का क्या उपयोग करोगे?॥१२॥

असुरों ने कहा—'हम इसका भूमि पर आधान करेंगे और (अग्नि से) कहेंगे, यहाँ तिनकों को जला, यहाँ लकड़ियों को जला, यहाँ भात पका, यहाँ मांस पका'। असुरों ने जिस अग्नि का भूमि पर आधान किया था यह वही है जिससे मनुष्य भोजनादि पकाते हैं॥१३॥

तब देवों ने इस अग्नि को अपने अन्तरात्मा में धारण किया और इस अमृत अग्नि-तत्त्व को अपनी अन्तरात्मा में धारण कर अमर और अपराजेय हो गये तथा अपने जीतने योग्य मर्त्य असुर शत्रुओं पर विजय प्राप्त कर ली। इसी प्रकार यह

पत्नान्मर्त्यानभ्यभवंस्तथो ऽएवैष एतदमृतमन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्व्वमायुरेत्यस्तर्य्यो हैव भवति न हैनꣳ सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते तस्माद्यदाहिताग्निश्चा-नाहिताग्निश्च स्पर्द्धेतेऽआहिताग्निरेवाभिभवत्यस्तर्य्यो हि खलु स तर्हि भवत्यमृतः॥१४॥

( स्त ) तद्यत्रैनमदो मन्थन्ति। तज्जातमभि प्राणिति प्राणो वा ऽअग्निर्जातमेवैनमेतत्सन्तं जनयति स पुनरपानिति तदेन-

---

एतदमृतमन्तरात्मन्नाधत्ते। नामृतत्वस्याशास्ति, सर्वमायुरेति; अस्तर्यो हैव भवति। न हैनं सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते। तस्माद्—यदाहिताग्निश्चा-नाहिताग्निश्च स्पर्द्धेते, आहिताग्निरेवाभिभवति। अस्तर्यो हि खलु स तर्हि भवत्यमृतः॥१४॥

तद्यत्रैनमदो मन्थति, तज्जातमभिप्राणिति। प्राणो वा अग्निः, जातमेवैनमेतत्सन्तं जनयति। स पुनरपानिति। तदेनमन्तरात्मन्नाधत्ते।

---

आख्यायिकासिद्धमर्थं प्रकृते योजयति—**तथो एवैष इति। अस्तर्यो हीति।** अमृतरूपाग्निधारणेन यस्मादाहिताग्निरहिंस्यः, तस्माद् विवदमानोऽसावना-हिताग्निमभिभवितुं शक्नोतीत्यर्थः॥१४॥

नन्वग्निगार्हपत्याद्यायतने बहिराधीयते, कथं तस्यान्तर्द्धारणमिति, तत्राह—**तद्यत्रेति। अभिप्राणितीति।** मन्थनात् 'जातम्' 'तम्' अग्निम् 'अभि' उपरि प्राणनं करोति। **स पुनरपानितीति।** अग्नेर्होपरि श्वासमुत्सृज्य तमेव श्वासं

---

(यजमान) भी अपनी अन्तरात्मा में इस अमर अग्नि-तत्त्व को धारण करता है। यद्यपि मनुष्य होने से अमर होने की आशा नहीं रहती अथापि अग्नि-धारण के प्रभाव से वह पूर्ण आयु को प्राप्त करता है और वह अजेय हो जाता है। यदि उसका कोई शत्रु उस पर विजय पाना चाहे तो भी उस पर विजय पा नहीं सकता। यह भी कि—आहिताग्नि और अनाहिताग्नि परस्पर झगड़ पड़ें तो आहिताग्नि ही अनाहिताग्नि को जीत लेता है; क्योंकि अग्नि-तत्त्व धारण करने से वह निश्चय ही दुर्जेय और अमृत हो जाता है॥१४॥

अग्नि-तत्त्व का अन्तर्द्धारण कैसे होता है? इस प्रश्न का समाधान करते हैं कि जब अरणि से (अग्नि को) मथते हैं तो उस उत्पन्न हुए (अग्नि) पर (यजमान) अपनी श्वांस छोड़ता है (फिर भीतर खींचता है)। प्राण ही अग्नि है। मानों उस

मन्तुरात्मन्नाधत्ते सोऽस्यैषोऽन्तुरात्मुन्नग्निराहितो भवति॥ १५॥

तुमुद्दीप्य सुमिन्धे। (न्धऽ) इहु यक्ष्यऽइहु सुकृतं करिष्यामीत्येवैनमेतत्सुमिन्धे योऽस्यैषोऽन्तुरात्मुन्नग्निराहितो भवति॥ १६॥

(त्य) अन्तरेणागाद्व्यवृतदिति। न ह वाऽअस्यैतं

---

सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥ १५॥

तमुद्दीप्य समिन्धे। इह यक्ष्ये, इह सुकृतं करिष्यामि, इत्येवैनमेतत्समिन्धे। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥ १६॥

अन्तरेणागाद् व्यवृतदिति। न ह वा अस्यैतं कश्चनान्तरेणैति,

---

पुनन्तर्नयेत्। तेन सार्द्धमग्निरप्यन्तः प्रविशन् यजमानस्य हृदय आहितो भवतीत्यर्थः॥ १५॥

नियतस्याबाह्यस्याग्नेरुद्दीपनसमिन्धने विधत्ते—**तमिति**। उद्दीपनं काष्ठ-प्रक्षेपः, समिन्धनं सम्यक् प्रज्वलनम्, तदुभयमन्तरग्नौ[1] दर्शयति—**इहेति**। 'इह' अस्मिन् बाह्येऽग्नौ 'यक्ष्ये' यागं करिष्ये, तत्फलञ्च सम्पादयिष्यामीति यौ मनोव्यापारौ सङ्कल्पौ, ते एवान्तराहितस्यग्नेरुद्दीपनसमिन्धने इत्यर्थः। योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवतीत्युपसंहारः॥ १६॥

एवमन्तरग्निमादधानस्य व्यवायादिदोषोऽपि नास्तीति प्रतिपादयति—**अन्तरेणेत्यादिना**। अग्नियजमानयोर्मध्ये देवदत्तादेरागतेन च व्यवायादिभिः 'व्यवृतत्' व्यावृतो विमुखो भवेदिति यो दोषः, सोऽप्यत्र नास्ति। तत्र हेतुमाह—**न ह वा इति**। न खलु हृदयमध्ये स्थापितस्याग्नेर्यजमानस्य च मध्ये कोऽपि

---

अरणि-मन्थन से उत्पन्न हुए अग्नि को वह अपनी श्वांस से पुनः पैदा करता है। फिर वह (यजमान) साँस को भीतर खींचता है। श्वांस भीतर खींचने से वह (अग्नि को) अपनी अन्तरात्मा में धारण कर लेता है और इस प्रकार वह अग्नि उसके अन्तरात्मा में स्थापित हो जाती हैं॥ १५॥

(बाह्य अग्नि को जीवित रखने के लिये दो व्यापार किये जाते हैं—(१) उद्दीपन (काष्ठादि प्रक्षेप) तथा (२) समिन्धन। अन्तःस्थित अग्नि-तत्त्व के दीपन का प्रकार बताते हैं–) उसको जलाकर उद्दीप्त रखता है—'मैं इससे यज्ञ करुँगा, मैं इससे शुभ कर्म करूँगा'–इन दो मानसिक व्यापारों (सङ्कल्पों) से वह अन्तःस्थित उस अग्नि को उद्दीप्त रखता है जो उसके अन्तरात्मा में स्थापित होती है॥ १६॥

(कुछ लोगों को भय है) कि—अन्तःस्थित अग्नि के बीच में कोई विघ्न आ

---



१. तदुभयमान्तरेऽग्नौ इति क्व.पा.।

कृश्नान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वाऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥१७॥

ते वाऽएते प्राणा ऽएव यदग्नयः। प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्य्यपचनः॥१८॥

---

यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति। तस्मादु तं नाद्रियेत, यदनुगच्छेत्। न ह वा अस्यैषोऽनुगच्छति, यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति॥१७॥

ते वा एते प्राणा एव, यदग्नयः। प्राणोदानावेव, आहवनीयश्च गार्हपत्यश्च। व्यानोऽन्वाहार्यपचनः॥१८॥

---

गच्छति यावज्जीवम्; अतो व्यवायशङ्का न कार्येति। एवं विदुषोऽग्न्यनुगमनशङ्कापि न कार्येत्याह—तस्मादिति। न ह वा अस्येति। बाह्यस्याग्नेरनुगमेऽपि अन्तराहितस्याग्नेर्यावज्जीवमवस्थानात्, न खल्वस्य यजमानस्यैषोऽग्निरनुगच्छत्युपशाम्यति॥१७॥

नन्वन्तर्गार्हपत्याद्यग्नयो न सन्ति, कथं तेषामनुगम इत्यत आह—ते वा इति। गार्हपत्यादीनां प्राणोदानव्यानात्मनाऽवस्थितत्वात् नोक्तदोष इत्यर्थः॥१८॥

---

जाय या अग्नि बुझ जाय तो क्या होगा? (समाधान देते हैं कि–) जीवन-पर्यन्त कोई उसके (= यजमान के) और अग्नि के बीच में नहीं आ सकता जिसके अन्तरात्मा में अग्नि स्थापित रहती है। इसलिए उसे शंका नहीं करना चाहिए। और बुझने के विषय में—जब तक वह जीता है वह अग्नि नहीं बुझ सकती जो उसके अन्तरात्मा में स्थापित रहती है (अनुबन्ध यह है कि मनुष्य पूर्वोक्त दो शुभ मानसिक सङ्कल्पों का आचरण करता रहे)॥१७॥

(बाह्य यज्ञशाला में गार्हपत्य, आहवनीय और दक्षिणाग्नि होती हैं। शरीर में इसका अनुगम कैसे है? इसका समाधान देते हैं–) ये जो प्राण हैं वे ही अग्नियाँ हैं। 'प्राण' आहवनीय है। 'उदान' गार्हपत्य है। 'व्यान' अन्वाहार्यपचन अग्नि अर्थात् दक्षिणाग्नि है॥१८॥

(नस्तु) तस्य वाऽएतस्याग्न्याधेयस्य। सत्यमेवोपचारः स यः सत्यं व्वदति यथाऽग्निँ समिद्धं तं घृतेनाभिषिञ्चेदेवँ हैनँ स उद्दीपयति तस्य भूयोभूय एव तेजो भवति श्वःश्वः श्रेयान्भवत्यथ योऽनृतं व्वदति यथाऽग्निँ समिद्धं तमुदकेनाभिषिञ्चेदेवँ हैनँ स जासयति तस्य कनीयः कनीय

---

**आहिताग्नेर्व्रतब्राह्मणम्**

**तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः। स यः सत्यं वदति, यथा–अग्निं समिद्धं तं घृतेनाभिषिञ्चेत्, एवं हैनं स उद्दीपयति। तस्य भूयो भूय एव तेजो भवति, श्वः श्वः श्रेयान् भवति। अथ योऽनृतं वदति, यथा–अग्निं समिद्धं तमुदकेनाभिषिञ्चेत्, एवं हैनं स जासयति। तस्य कनीयः**

---

आहिताग्निना सत्यमेव वदितव्यम्[1], न कदाचिदप्यनृतमित्युभयं प्रतिपादयति—**तस्य वेत्यादिना**॥१९॥

[ अस्याः कण्डिकाया हरिस्वामिकृतापि व्याख्या समुपलभ्यते, सा यथा— **तस्य वा एतस्येति**। बाह्याभ्यन्तरस्याग्न्याधेयस्य; तेषामाहितानामग्नीनां बाह्याभ्यन्तराणामित्यर्थः। 'सत्यमेव' नानृतम्, उपधायाचरणमुपचारः, सत्येनैव पूतवचनेन ते अग्नी यज्ञे आधीयन्तेत्यर्थः। कथम्? यः सत्यं वदति आहिताग्निः स एनमग्निमाहितमन्तर्बहिश्च घृतेनाभिषिञ्चति; अनृतवादी तूदकेन अभिषिञ्चन् 'जासयति' 'जसु हिंसायाम्' हिनस्ति क्षपयति। तस्य चाधातुरनेन कारणेनैव

---

इस अग्न्याधेय-कर्म का वास्तविक उपचार (= सेवा-व्रत) 'सत्य' है। जो कोई सच बोलता है वह उसी प्रकार अतिशयाधायक है मानों समिद्ध अग्नि में घी छोड़ता है; क्योंकि सत्यवदन से वह आन्तर् एवं बाह्य अग्नि को सदैव तेजस्वी रखता है। उसके स्वयं का भी दिन-प्रतिदिन तेज बढ़ता है; दिन-प्रतिदिन उसका कल्याण होता है और जो कोई झूठ बोलता है वह उसी प्रकार तेजोहीन हो जाता है, मानो वह जलती आग पर पानी डालता है; क्योंकि वह अनृतवदन से बाह्य एवं आन्तर् अग्नि (= शक्ति तत्त्व) को कमजोर कर लेता है। दिन-प्रति-दिन उसका तेज क्षीण

---

१. 'अनृतातिथ्यपनोदपूतिदार्वाधार्वीसपक्वनाव्युदकानि वर्जयेत्' का.श्रौ.सू. ४.२५७।

एव तेजो भवति श्वःश्वः पापीयान्भवति तस्मादु सत्यमेव व्वदेत्॥१९॥

(त्त) तदु हाप्यरुणमौपवेशिं ज्ञातयऽऊचुः। (चुस्थ) स्थविरो वाऽअस्यग्नी ऽआधत्स्वेति स होवाच ते मैतद्ब्रूथ व्वाचंयम ऽएवैधि न वाऽआहिताग्निनाऽनृतं व्वदितव्यं न

---

**कनीय एव तेजो भवति, श्वः श्वः पापीयान् भवति। तस्मादु सत्यमेव वदेत्॥१९॥**

**तदु हाप्यरुणमौपवेशिं ज्ञातय ऊचुः-स्थविरो वा असि, अग्नी आधत्स्वेति। स होवाच-ते मैतद् ब्रूथ, वाचंयम एवैधि। न वा आहिताग्निनानृतं वदितव्यम्। न वदन् जातु नानृतं वदेत्। तावत्**

---

तेजसो वृद्धिहानी भवतः। तस्मादाहिताग्नेः रक्षणार्थं सत्यविधिः॥१९॥]

एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्वमृषिवाक्यसम्बन्धेन द्रढयति—**तदु हेति**। 'तत्' तत्रोक्तविषयेऽपि खल्वेवं पूर्ववृत्तान्तः संजातः। उपवेशो नाम कश्चित्, तस्य पुत्रम् 'अरुणम्' तदीयाः 'ज्ञातयः' उक्तवन्तः। किमिति? हे अरुण! 'स्थविरः' वृद्धः 'असि' अत आमुष्मिकसिद्धये अग्न्याधानं कुर्विति। स चैवं प्रत्युक्तवान्। कथमिति[1]। मैतद् ब्रूथेति तद्वचनम्। 'वाचंयम एवैधि' वाग्यत एव भवेति। कुत एवं प्रार्थ्यते तत्राह—**न वा इति**। आहिताग्निना हि अनृतं न वदितव्यम्। वाग्व्यवहारं कुर्वतस्त्वनृतवदननिषेधो न सम्भवति। यस्मादेवमृषिणोक्तम्—'न

---

होता जाता है और दिन-प्रति-दिन वह पापी होता जाता है। इसलिए मनुष्य को सदैव सत्य ही बोलना चाहिए॥१९॥

उपवेशि के पुत्र अरुण से उसके विरादरी वालों ने कहा—'आप स्थविर (बूढ़े) हो चले हैं। (शीघ्र ही) दोनों अग्नियों का आधान कीजिए'। उन्होंने उत्तर दिया—'ऐसा मत कहो। वाणी का संयम करो। जो आहिताग्नि है उसे झूठ नहीं बोलना चाहिए। अच्छा हो कि वह कुछ न बोले। परन्तु झूठ बोले ही नहीं'। (अर्थात् वाग् व्यवहार करते रहने पर अनृतवदन निषेध का पालन दुःशक हो जाता है)। इस ऋषि वाक्य से सिद्ध है कि—'सत्य-बोलना' वस्तुतः अग्नयाधेय रूपी

---

१. कथमिति-अहमग्नी आधास्ये? 'ते' यूयम् 'मैतद्' वचनं 'ब्रूथ' इति वा पाठः।

वुदञ्जातु नानृतं व्वदेत्तावत्सत्यमेवोपचारऽइति॥२०॥

इति द्वितीयकाण्डे प्रथमप्रपाठके षष्ठं ब्राह्मणम्॥

इति द्वितीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम्॥२॥२॥२॥

प्रथमः प्रपाठकः समाप्तः॥१॥

---

सत्यमेवोपचार इति॥२०॥

।। इत्यग्न्याधानविधिः सम्पूर्णः ।।

---

वदन् जातु[1] इत्यादि तस्मात् सत्यवचनमेवाग्न्याधेयस्याङ्गमित्यर्थः॥२०॥२॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम्।।२।।२।।२।।

---

तपोजीवन का वास्तविक उपचार (= अंग) है॥२०॥२॥

※

---

१. 'अनृतातिथ्यपनोदपूतिदार्वाधानवींसपक्वनाव्युदकानि वर्जयेत्' इति का.श्रौ.सू. ४.२५७। यजमान आधमानस्त्रयेतानि यावज्जीवं वर्जयेत् इति तत्र दे.या.भा.।

# द्वितीयप्रपाठके प्रथमं ब्राह्मणम्

## द्वितीयाध्याये तृतीयं ब्राह्मणम्

व्वरुणो हैनद्राज्यकाम ऽआदधे। स राज्यमगच्छत्तस्माद्यश्च व्वेद यश्च न व्वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यशऽएवैतद् द्रष्टुमागच्छन्ति यशो ह भवति राज्यं गच्छति य ऽएवं व्विद्वानाधत्ते॥१॥

---

### अथ पुनराधानम्

वरुणो हैनद् राज्यकाम आदधे। स राज्यमागच्छत्। तस्मामाद्यश्च वेद, यश्च न; वरुणो राजेत्येवाहुः। सोमो यशस्कामः। स यशोऽभवत्। तस्माद्यश्च सोमे लभते, यश्च न; उभावेवागच्छतः यश एवैतद् द्रष्टुमागच्छन्ति। यशो ह भवति, राज्यं गच्छति–य एवं विद्वानाधत्ते॥१॥

---

अथ पुनराधेयं[1] विधित्सुः स्वपक्षातिभूतमुक्तमग्न्याधेयं[2] परकृतिरूपार्थवादेन[3] राज्ययशोहेतुत्वेन[4] प्रशंसति—**वरुण इति।** **सोमो यशस्काम इति।** आदधे[5] इत्यनुषङ्गः उक्तमर्थं प्रकृते योजयति—**यशो हेति।** 'यशः' यशस्वी भवतीत्यर्थः॥१॥

---

वरुण ने इस (अग्नि) का राज्य की कामना से आधान किया। उसने राज्य को प्राप्त कर लिया। इसलिए चाहे कोई (अग्न्याधान करने वाला) जाने या न जाने, लोग उस (अग्न्याधान करने वाले) वरुण को 'राजा' इस उपाधि से ही कहते हैं। सोम-देवता ने यश की कामना से (अग्न्याधान किया)। वह यशस्वी हो गया। इसलिये चाहे कोई सोम का लाभ करे या न करे दोनों ही यश पाते हैं, क्योंकि लोग यश को ही देखने आते हैं। जो पुरुष इस रहस्य को समझकर अग्न्याधान करता है वह यशस्वी होता है और राज्य को प्राप्त करता है॥१॥

---

१. यः प्रागाधानाल्लब्धप्रतिष्ठोपि आधानसमनन्तरं संवत्सरादर्वागेव यस्य महत्वस्य कीर्तेर्हानिर्भवति धनधान्यादिहानिर्वा, तस्यपुनराधेयसंज्ञकं कर्म भवतीतिशेषः। तथा च सूत्रम्—'पुनराधेयमाधानाप्रतिज्ञातस्य' का.श्रौ.सू. ४.२५९। २. 'प्रकृतिभूतम्' इति क्व.पा.। ३. 'प्रकृति-रूपा'—इति क्व.पा.। ४. 'राज्ययशस्कामस्य वा' का.श्रौ.सू. ४.२६०। ५. 'एनदादधे' इति क्व.पा.।

(त्तेऽग्नौ) अग्नौ ह वै देवाः। सर्व्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा॥२॥

तान्यु हाग्निर्निचकमे। तैः सङ्गृह्यऽर्तून्प्रविवेश पुनरेम इति

---

अग्नौ ह वै देवाः सर्वाणि रूपाणि निदधिरे। यानि च ग्राम्याणि, यानि चारण्यानि, विजयं वोपप्रैष्यन्तः, कामचारस्य वा कामाय, अयं नो गोपिष्ठो गोपायदिति वा॥२॥

तान्यु हाग्निर्निचकमे। तैः सङ्गृह्यर्तून् प्रविवेश। पुनरेम इति देवा

---

पुनराधेयं[1] विधातुमाख्यायिकया प्रस्तौति—**अग्नौ हेति**। निधाने कारणानि वैकल्पिकानि त्रीण्युपन्यस्यति—**विजयं वेति**। असुरान् विजेतुमुपगमनसमये पूर्वसिद्धाग्न्याधानस्यार्थमर्थनिधानमित्येकः[2] पक्षः। 'कामचारस्य' कामाय यथेच्छं क्रीडितुम्, सञ्चरणस्य यः कामः तदर्थं वा तन्निधानमिति द्वितीयः। गृह एव स्थितानां 'नः' अस्माकं देवानां मध्येऽयमग्निः 'गोपिष्ठः' गोपायितृतमो रक्षणकुशलोऽस्मदीयं धनं 'गोपायत्'[3] रक्षितुं शक्नोतीत्यनेनाभिप्रायेण वा तन्निधानमिति तृतीयः पक्षः॥२॥

**तान्यु हेत्यादि**। 'तानि' देवैर्निहितानि 'ग्राम्यारण्यानि' रूपाणि सः 'अग्निः' नितरां कामितवान्, अहमेवैतत् सर्वमुपभोक्ष्ये इति। 'तैः' विक्षेपैः सह विद्यमानं सर्वं सङ्गृह्य वसन्ताद्यान् 'ऋतून्' चोरादिः पर्वतमिव-प्रविष्टवान्[4]। देवा अप्यस्मदीयं स्थानं 'पुनः' 'एमः' आगच्छामः। 'इति' अनेनाभिप्रायेण तं 'तिरोभूतम्' 'अग्निम्' अगच्छन्[5]। पूर्वं यस्मिन्स्थाने सोऽग्निः स्थितः, तत्र

---

असुरों पर विजय प्राप्त करने के युद्ध-प्रयाण के समय देवों ने (समृद्धि के) सभी रूपों (= बीजों) को अग्नि के सुपुर्द कर दिया; चाहे वह ग्राम सम्बन्धी समृद्धि थी या अरण्य सम्बन्धी, अथवा स्वतन्त्र विचरने की इच्छा से सुपुर्द कर दी, अथवा यह सोचकर कि (अग्नि) बड़ा अच्छा रक्षक है, इनकी रक्षा करेगा (इस विश्वास से उसके पास अपनी समृद्धि निक्षिप्त कर दी)॥२॥

(देवों द्वारा निक्षिप्त धन-समृद्धि को प्राप्त कर) अग्नि को महान् लोभ हो गया। वह उस धनादि को इकट्ठा करके ऋतुओं में छिप गया। कालान्तर में देवों

---

१. 'पुनराधेयविधायकमाख्ययिकया' इति क्व.पा.। २. 'पूर्वसिद्धस्याधानस्य क्षेमार्थं निधान'—इति क्व.पा.। ३. 'गोपायितुम्' इति क्व.पा.। ४. 'अतोऽग्रे अन्तर्दधे' इति कयोश्चित्पुस्तकयोः, 'अनन्तरम्' इति च क्व. पुस्तकेऽधिकमुपलभ्यते। ५. 'आगच्छन्' इति क्व.।

देवा एदग्निं तिरोभूतं तेषाँ हेयसेवास किमिहु कर्तव्यं क्वेहु प्रज्ञेति वा॥३॥

तुत ऽएतत्त्वष्टा पुनराधेयं ददर्श। तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्माऽउभयानि रूपाणि प्रति निःससर्ज यानि ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाचष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्व्वँ रूपमुप ह त्वेवान्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते॥४॥

---

एदग्निं तिरोभूतम्। तेषां ह हेयसेवास–किमिह कर्तव्यम्? केह प्रज्ञेति? वा॥३॥

तत एतत् त्वष्टा पुनराधेयं ददर्श। तदादधे तेनाग्नेः प्रियं धामोपजगाम। सोऽस्मा उभयानि रूपाणि प्रतिनिःससर्ज–यानि च ग्राम्याणि, यानि चारण्यानि। तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति। त्वष्टुर्ह्येव सर्वं रूपम्। उप ह त्वेवान्याः प्रजा यावच्छो यावच्छः इव तिष्ठन्ते॥४॥

---

तमपश्यतां 'तेषाम्' देवानाम्[१] 'इयसा[२] इव आस' विहीनावस्था प्राप। अग्निरस्मदीयं सर्वं धनमपहृत्य गतः, 'इह' अस्मिन् विषये 'किम्' अस्माभिः 'कर्त्तव्यम्'? 'का वा' बुद्धिः? 'इति'॥३॥

तत एतदिति। एवं विचारयतां मध्ये 'ततः' अनन्तरमेव 'त्वष्टा' 'एतद्' 'वक्ष्यमाणं' 'पुनराधेयम्' 'ददर्श'। तदादध इत्यादि। निगदसिद्धम्। उप ह त्वेवेति। 'उप ह तु एव'। 'यावच्छः'[३] यावत्प्रकारविशिष्टं त्वाष्ट्रं रूपम् 'अन्याः प्रजाः' 'उपतिष्ठन्ते', तावत्यो जायन्त इत्यर्थः। वीप्सा तु सर्वसङ्ग्रहार्था॥४॥

---

ने सोचा कि अब हम वापस अपने स्थान पर चलें। जब वे वहाँ पहुँचे तो इस अग्नि को लुप्त पाया और उसे न देखकर देवगण विषादग्रस्त तथा निराश हो गये। देवगण सोचने लगे कि अब 'क्या करना चाहिए'? 'क्या उपाय करें'?॥३॥

तब (विचार कर) त्वष्टा ने पुनराधेय (= अग्नि के पुनः सविधि स्थापन) कर्म को देखा। उसने अग्नि का पुनः आधान किया और इस प्रकार अग्नि के

---

१. 'देवानामतिहीनामवस्थां प्राप' 'देवानां विहीनावस्थां प्राप' इति च क्व.। २. 'इयसा' चिन्तेति हरिस्ववामिनः। प्रथमकाण्डेऽप्युक्तं तेन, इयस्शब्दोऽवसानवचनः कंड्वादिषु पठ्यते इति ९.२.१४ इत्यत्र भाष्ये। वस्तुतस्तु 'इयस्यते' 'इयसा' 'इयसितं' इति त्रीण्यपि रूपाणि एकधातुजानि समानर्थानि च। इहैवोत्तरत्र (१० कं.) 'इयस्यते' इति च विवेच्यम्। ५. यावच्छो यावच्छ इव। यावच्छब्दोऽल्पवचनः। अल्पमल्पमित्यर्थः। इति हरिस्वामी।

**तुस्मै कं पुनराधेयमादधीत। (तै) एवुँ हैवाग्नेः प्रियं धामोपगच्छति सोऽस्माऽउभुयानि रूपाणि प्रतिनिःसृजति यानि च ग्राम्याणि यानि चारण्यानि तुस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमुता वै सा स्पृहुयन्त्यु हास्मै तुथा पुष्यति लोक्यम्वेवापि॥५॥**

---

**तस्मै कं पुनराधेयमादधीत। एवं हैवाग्नेः प्रियं धामोपगच्छति। सोऽस्मा उभयानि रूपाणि प्रतिनिःसृजति–यानि च ग्राम्याणि, यानि चारण्यानि। तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते। परमता वै सा। स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यम्वेवापि॥५॥**

---

**तस्मा इति। पुनराधेयविधिः।** यदाख्यायिकया प्रतिपन्नं प्रयोजनम्, अग्निप्रियधामोपगमनादिलक्षणम्, तदर्थं पुनराधानं कुर्यादित्यर्थः। प्रथममाहितस्याग्नेः विधानान्तरेण पुनस्तेष्वायतनेषु स्थापनं पुनराधेयम्। **एवं हेत्यादि।** निगदसिद्धम्। **परमता वै सेति।** येयं ग्राम्यारण्योभयप्राप्तिः 'सा' 'परमता' परमत्वं सर्वोत्कृष्टत्वम्। किञ्च 'अस्मै' पुनराधेयं कृतवते सर्वे जनाः 'स्पृहयन्ति' आद्रियन्ते। 'स्पृहेरीप्सितः' (पा.सू. १.४.३६) इति सम्प्रदानसञ्ज्ञा। तथा अयमपि 'लोक्यम्' लोकनीयमुत्कर्षं प्राप्य 'पुष्यति' प्रवृद्धो भवति॥५॥

---

प्रिय धाम (= छिपने के स्थान) को प्राप्त कर लिया। तब उस (अग्नि) ने उस (त्वष्टा) को देवों से प्राप्त समृद्धि के दोनों रूप अर्थात् ग्राम सम्बन्धी और अरण्य सम्बन्धी वापस दे दिये। इसीलिये इन रूपों को त्वाष्ट्र (त्वष्टा-सम्बन्धी) कहते हैं क्योंकि त्वष्टा से ही यह सब रूप आते हैं। परन्तु दूसरी प्रजा इस प्रकार रहती है।।४।।

इसलिये (मनुष्य को चाहिए) कि पुनराधेय में त्वष्टा के लिए हविर्भाग दे। पुनराधेय कर्म के द्वारा इस प्रकार वह अग्नि के प्रिय धाम को प्राप्त करता है और वह (अग्नि) उस यजमान के लिए दोनों प्रकार की समृद्धियाँ अर्थात् ग्राम की समृद्धि एवं अरण्य की समृद्धि देता है। पुनराधेय करने वाले व्यक्ति के पास ग्राम्य-श्री एवं आरण्य-श्री दोनों दिखाई पड़ती हैं और यही समृद्धि की परमता (उत्कृष्टता) है। सभी लोग उसका आदर करते हैं और वह भी सांसारिक वैभव एवं उत्कर्ष प्राप्त कर महान् व यशस्वी होता है।।५।।

**(प्या) आग्नेयोऽयं यज्ञः। ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स इह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वैतन्नु तद्यस्मादादधीत॥६॥**

**स वै व्वर्षास्वादधीत। व्वर्षा वै सर्व्वऽऋतवो व्वर्षा हि वै सर्व्वऽऋतवोऽथादो व्वर्षमकुर्मादो व्वर्षमकुर्मेति संव्वत्स-**

---

**आग्नेयोऽयं यज्ञः। ज्योतिरग्निः पाप्मनो दग्धा। सोऽस्य पाप्मानं दहति। स इह ज्योतिरेव श्रिया यशसा भवति। ज्योतिरमुत्र पुण्यलोकत्वा। एतन्नु तद्‌–यस्मादादधीत॥६॥**

**स वै वर्षास्वादधीत। वर्षा वै सर्व ऋतवः। वर्षा हि वै सर्व ऋतवः–**

---

विहितं पुनराधेयमग्निसम्बन्धोपजीवनेन प्रशंसति—**आग्नेयोऽयं यज्ञ इति।** ज्योतिरात्मको ह्यग्निः 'पाप्मनः' 'दग्धा' दाहकः। अतः 'सः' अग्निः स्वसम्बन्धियज्ञं कुर्वतः 'अस्य'। पापं निर्दहति। **एतन्नु तदिति।** यस्मै फलाय आदधीत 'एतत्'[1] उक्तविधिफलं खलु 'तत्' इत्यर्थः॥६॥

तस्य पुनराधेयस्य त्रैवर्णिकसाधारण्येन ऋतुविशेषं विधत्ते[2]—**स वा इति।** ऋत्वन्तरं परित्यज्य वर्षर्तुविधाने[3] कारणमाह—**वर्षा वा इति।** एतदुपपदायति—**वर्षा हि वा इत्यादिना।** यस्मादेवं वर्षर्तुः सर्वात्मकः, तस्मात् समुदायात्मकं संवत्सरं वर्षशब्देन लोको व्यवहरतीति दर्शयति—**अथेति।** सर्वर्तुरूपा वर्षा इति

---

यह (पुनराधेय) यज्ञ अग्नि से सम्बन्धित है। अग्नि ज्योति-स्वरूप है। वह पापों को जलाती है। अतएव यह उस (यजमान) के पापों को भी जलाती है। यही (आधान की) ज्योति श्री और यश को देने वाली होती है। (आधान की अग्नि ही) दूसरे लोक में पुण्य का मार्ग प्रशस्त करती है। इसलिये अग्न्याधान करना ही चाहिए॥६॥

वर्षा ऋतु में पुनराधान-कर्म करे। वर्षा-ऋतु ही सब ऋतुओं की आधार है। अतएव वर्षा ही सब ऋतुयें हैं। इसीलिए लोक में कहा जाता है कि—अमुक वर्ष में यह काम किया, अमुक वर्ष में यह काम किया। वर्षा सब ऋतुओं का एक समन्वित रूप है। वर्षर्तु में यह अनुभव होता है, जब कहते हैं कि—'आज बड़ा

---

१. 'एतदुक्तविधं खलु श्रीयशा ज्योतिश्च युङ्क्ते एतन्नु तदित्यर्थः। 'अमुत्र' अमुष्मिल्लोके पुण्यलोकत्वेन ज्योतिरेतदाधाने भवेत्। इतीदृक् पाठः क्वचित्पुस्तक उपलभ्यते। २. 'वर्षासु मध्यन्दिने वा' का.श्रौ.सू. ४.२६४। ३. 'वर्षर्त्तावेव विधाने' इति क्व.।

रान्त्सम्पश्यन्ति व्वर्षा ह त्वेव सर्व्वेषामृतूनाँ रूपमुत हि तद्वर्षासु भवति यदाहुर्ग्रीष्मऽइव वाऽअद्येत्युतो तद्वर्षासु भवति यदाहुः शिशिरऽइव वाऽअद्येति व्वर्षादिद्वर्षाः॥७॥

(८) अथैतदेव परोऽक्षँ रूपम्। यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य व्वर्षाः सर्व्वऽऋतव ऋतून्प्राविशदृतुभ्य एवैनमेतन्निर्म्मिमीते॥८॥

---

अथादो वर्षमकुर्म, अदो वर्षमकुर्मेति संवत्सरान् सम्पश्यन्ति। वर्षा ह त्वेव सर्वेषामृतूनां रूपम्, उत हि तद्वर्षासु भवति। यदाहुः—ग्रीष्म इव वा अद्येति। उतो तद् वर्षासु भवति। यदाहुः—शिशिर इव वा अद्येति। वर्षादिद्वर्षाः॥७॥

अथैतदेव परोक्षं रूपम्। यदेव पुरस्ताद्वाति, तद्वसन्तस्य रूपम्। यत्स्तनयति, तद् ग्रीष्मस्य। यद्वर्षति, तद्वर्षाणाम्। यद् विद्योतते, तच्छरदः। यद् वृष्ट्वोद्गृह्णाति, तद्धेमन्तस्य। वर्षाः सर्व ऋतवः। ऋतून् प्राविशत्, ऋतुभ्य एवैनमेतन्निर्मिमीते॥८॥

---

प्रतिपादयितुं प्रतिजानीते—**वर्षा ह त्वेवेति**। एतदुपपादयति—**तदिति**। ग्रीष्मशिशिरधर्मयोः प्रकाशशैत्ययोः, वर्षासु महावायुवृष्टियोगाच्च वर्षर्त्तोस्तावदृतुत्रयात्मकत्वम्[1]। तत्र ग्रीष्मे वसन्तस्य, वर्षासु शरदः, शिशिरे हेमन्तस्य, समानधर्मतयाऽन्तर्भावात् सर्वर्त्तुरूपत्व सिद्धमित्यर्थः॥७॥

एवं प्रत्यक्षविषयं प्रकाशादिधर्मयोगेन सर्वत्वमभिधाय परोक्षधर्मवशादपि तत्[2] प्रतिपादयति—**अथैतदिति**। पुरोवातादयो[3] हि वसन्तादीनां परोक्षभूताः धर्माः। तेषां च सर्वेषां वर्षासु सद्भावात् सर्वर्त्तुरूपतेत्यर्थः। **ऋतून् प्राविशदित्यादि**।

---

ग्रीष्म सा है' और यह यह भी अनुभव होता है जब कहता हैं कि—'आज शिशिर (ठंड) सा है'। जल-वर्षण से तो 'वर्षा' है ही॥७॥

एक दृष्टि से परोक्ष रूप से भी वर्षा सभी ऋतुओं का समन्वित रूप है। उदाहरणार्थ—जब पूर्वा वायु बहती है तो वसन्त का रूप (आ जाता) है। जब ऊमस पड़ती है (अर्थात् मात्र बादल गरजते हैं बरसते नहीं) तब वह ग्रीष्म का। जब मेघ बरसता है तब वर्षा का। जब बिजली चमकती है और वर्षा पूर्व की

---

१. 'सद्भावात्, वर्षयोगाच्च वर्षर्त्तोस्तावदुभयात्मकत्वम्' इति क्व.पा.। २. 'तत्' इति क्व.पा.। ३. 'इत्यादयो हि' इति क्व.पु.पा.।

**(त॒ऽ) आदि॒त्यस्त्वेव स॒र्व्वऽऋ॒तु॒वः। (वो) य॒दै॒वोदेत्य॒थ व्वसन्तो॒ यदा॒ सङ्ग॒वो॒ऽथ ग्रीष्मो॒ यदा॒ मध्य॒न्दिनो॒ऽथ व्वर्षा॒ य॒दाऽपराह्णो॒ऽथ श॒रद्य॒दै॒वास्तमेत्य॒थ हेमन्तस्तस्मादु मध्य॒न्दिनऽ-ए॒वा॒दधीत त॒र्हि॒ ह्येषोऽस्य॒ लोक॒स्य ने॒दिष्ठं भ॒वति तन्ने॒दिष्ठा-दे॒वैनमेतन्म॒ध्या॒न्निर्मिमीते॥९॥**

---

**आदित्यस्त्वेव सर्व ऋतवः। यदैवोदेति–अथ वसन्तः। यदा सङ्गवः अथ ग्रीष्मः। यदा मध्यन्दिनः–अथ वर्षाः। यदापराह्णः–अथ शरत्। यदैवास्तमेति–अथ हेमन्तः। तस्मादु मध्यन्दिन एवादधीत तर्ह्येषोऽस्य लोकस्य नेदिष्ठं भवति, तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते॥९॥**

---

यस्मादग्निः प्रागुक्तरीत्या ऋतून् प्राविशत्, तस्मादेनं वर्षास्वादधानस्तेभ्य एवर्तुभ्यः पुनरुत्पादयतीत्यर्थः॥८॥

तच्च पुनराधानमहनि मध्यन्दिने[1] कार्यमिति विधित्सुस्तदर्थमादित्यस्य सर्वर्तुरूपतामाह—**आदित्यस्त्वेवेति**। प्रातःसङ्गवमध्याह्नापराह्णसायङ्कालात्मका अह्नोऽवयवाः सूर्यसम्बन्धिनः पञ्चर्तवः। तत्र वर्षास्वाधानस्य विहितत्वात् तदात्मके मध्यन्दिन एव तत् कुर्यादित्यर्थः। तदेतन्मध्यन्दिनाधानं प्रशंसति—**तर्हीति**। 'तर्हि' तस्मिन् मध्यन्दिने समये 'एषः' आदित्यः 'अस्य लोकस्य' 'नेदिष्ठम्' अन्तिकतमो 'भवति'। सिद्धमन्यत्॥९॥

---

ठंडी हवा बहती है तब वह शरद् का रूप हो जाता है। जब बरस कर बन्द हो जाता है वह प्रीतिकर सम-शीतोष्ण मौसम हेमन्त का (रूप हो जाता है)। अतएव वर्षा सब ऋतुओं का समन्वय है। यतः वह (अग्नि) ऋतुओं में प्रविष्ट हुआ था; इसलिये वर्षर्तु में अग्न्याधान कर ऋतुओं में से ही इसे पुनः निकाल लेते हैं॥८॥

(पुनराधान मध्याह्न में करना चाहिये; क्योंकि आदित्य भी सर्व ऋतु-स्वरूप हैं। जब सूर्य उदय होता है तो वसन्त का रूप रहता है, जब संगव होता है (अर्थात् जब गायें दूहने के लिये इकट्ठी की जाती हैं तब ग्रीष्म, जब दोपहर होता है तो (ताप की) वर्षा, तीसरा पहर शरद्, जब अस्त होता है तो हेमन्त। अतः मध्याह्न के समय ही (पुनराधान) करना चाहिये; क्योंकि उस समय सूर्य इस लोक के निकटतम होता है। इसलिये वह दिन के मध्यकाल में ही सूर्य के निकटतम रहने पर (अग्नि का) निर्माण (= आधान) करता है॥९॥

---

१. 'वर्षासु मध्यन्दिने वा' का.श्रौ.सू. ४.२६४। प्रातः-सङ्गव-मध्याह्ना-पराह्ण-सायङ्कालात्मका अह्नोवयवाः सूर्यसम्बन्धिनः पञ्चर्तवः, तत्र वर्षास्वाधानस्य विहितत्वात्तदात्मेक मध्यन्दिने एव पुनराधानं कुर्यादिति।

(तेच्छा) छायुयेव वाऽअयं पुरुषः। पाप्मनानुषक्तः सोऽस्यात्र कुनिष्ठो भवत्यधस्पदुमिवेयस्यते तत्कुनिष्ठमेवैतत्पाप्मानमुवबाधते तुस्मादु मध्युन्दिन ऽएवादधीत॥१०॥

तं वै दर्भैरुद्धरति। दारुभिर्व्वै पूर्व्वमुद्धरति दारुभिः पूर्व्वं दारुभिरपरं जामि कुर्य्यात्समदं कुर्य्यादापो दर्भा ऽआपो व्वर्षा ऽऋतून्प्राविशदद्भिरेवैनमेतुदद्भ्यो निर्मिमीते तुस्माद्दर्भैरुद्धरति॥११॥

---

छाययेव वा अयं पुरुषः पाप्मनानुषक्तः। सोऽस्यात्र कनिष्ठो भवति–अधस्पदमिवेयस्यते। तत् कनिष्ठमेवैतत्पाप्मानमवबाधते। तस्मादु मध्यन्दिन एवादधीत॥१०॥

तं वै दर्भैरुद्धरति। दारुभिर्वै पूर्वमुद्धरति। दारुभिः पूर्वम्, दारुभिरपरम्; जामि कुर्यात्, समदं कुर्यात्, आपो दर्भाः, आपो वर्षाः, ऋतून् प्राविशत्। अद्भिरेवैनमेतदद्भ्यो निर्मिमीते। तस्माद्दर्भैरुद्धरति॥११॥

---

प्रकारान्तरेण तन्मध्यन्दिनाधानं प्रशंसति—छाययेवेति। सोऽस्येति। 'अस्य' पुरुषस्य छायारूपः 'सः' पाप्मा 'अत्र' अस्मिन् मध्यन्दिने 'कनिष्ठः' अल्पतमः 'भवति'। स च पाप्मा पुरुषस्य[1] पादयोरधस्तादिव 'इयस्यते'[2] प्राप्नोति। इण्[3] गतौ' (धा.पा.अ.प. ३५) इति धातुः। तत् कनिष्ठमित्यादि सुगमम्॥१०॥

तस्य पुनराधित्सितस्याग्नेर्दर्भैरेवोद्धरणं कार्यमिति विधत्ते[4]—तं वा इति। आधानवत् पुनराधानेऽपि दारुभिरुद्धरणे दोषमाह—दारुभिः पूर्वमिति। उभयोरैकरूप्ये जामितादोषः स्यात्। तथा 'समदम्' दारुविषयं परस्परं तयोः कलहमपि जनयेदित्यर्थः। विहितं दर्भैरुद्धरणं प्रशंसति—आप इति।

---

(मध्याह्न में पुनराधान करने का एक हेतु यह भी है कि–) मनुष्य के साथ पाप छाया के समान लगा रहता है। (दोपहर के समय) यह छाया सबसे छोटी होती है और पैर के नीचे ही सिकुड़ी सी रहती है। इस प्रकार दोपहर के समय पुनराधान कर वह पाप को सबसे छोटा कर धर्षित कर देता है। इसलिये दोपहर के समय ही 'पुनराधान' करे॥१०॥

(पुनराधान-कर्म में) अग्नि (गार्हपत्य में से) दर्भों के द्वारा उद्धृत अर्थात् निकाली जानी चाहिये। पहले अर्थात् अग्न्याधान में वह दारु (लकड़ी) से उद्धृत की गई थी। (यतः) अग्न्याधान में इध्म से अग्न्युद्धरण किया था और पुनराधान

---

१. 'पुरुषरूपस्य' इति क्व.। २. 'तृतीयकण्डिकास्था टिप्पणी द्रष्टव्या। ३. 'इ गतौ' इति कयोश्चित्-पुस्तकयोः। ४. कुशैराधानम् का.श्रौ.सू. ४.९.१४

(त्य) अर्क्कपलाश॒ाभ्याम्। व्रीहिम॒यमपूपं कृत्वा य॒त्र गा॒र्हपत्यमाधास्यन्भ॒वति तन्नि॒दधाति तद्गा॒र्हपत्यमा॒दधाति॥१२॥

(त्य) अर्क्कपलाश॒ाभ्याम्। यवम॒यमपूपं कृत्वा य॒त्रा-हवनी॒यमाधास्यन्भ॒वति तन्नि॒दधाति त॒दाहवनी॒यमा॒दधाति पू॒र्व्वा-भ्यामे॒वैनावेत॒दग्नि॒भ्यामन्त॒र्दध्म इ॒ति व्व॒दन्तस्त॒दु त॒था न॒ कुर्य्याद्रा॒त्रिभि॒र्ह्येवान्त॒र्हितौ भ॒वतः॥१३॥

---

अर्कपलाशाभ्यां व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन् भवति, तन्निदधाति; तद् गार्हपत्यमादधाति॥१२॥

अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन् भवति, तन्निदधाति; तदाहवनीयम.दधाति। पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म इति वदन्तः। तदु तथा न कुर्यात्–रात्रिभिर्ह्येवान्तर्हितौ भवतः॥१३॥

---

दर्भाणामब्विकारत्वं प्रथमकाण्डे प्रतिपादितम्—'ता उपर्य्युपर्यतिपुप्लुविरेऽत इमे दर्भाः'–इति (श.प. १.१.३.५)॥११॥

व्रीहियवमययोरपूपयोरर्कपर्णद्वयसङ्गृहीतयोर्गार्हपत्यावहनीयायतनयोर्निधानं विधत्ते—**अर्क्कपलाशाभ्यामित्यादिना**। अत एवोक्तं कात्यायनेन—'वर्षासु मध्यन्दिने वा' 'कुशैराधानम्' 'व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्य स्थाने निदधात्येवमाहवनीयस्य यावम्' (का.श्रौ.सू. ४.२६४-२६६) इति॥१२॥

अपूपनिधानस्य प्रयोजनमाह—**पूर्वाभ्यामिति**। पूर्वमाहितौ यौ गार्हपत्या-हवनीयौ ताभ्यामित्यर्थः। तदेतन्निषेधति—**तदु तथेति**। **रात्रिभिर्ह्येवेति**। अनुगत-

---

में भी इध्म से अग्न्युद्धरण करने पर दुहराने का दोष होगा और नवीनता का अभाव होगा। जल ही दर्भ है और जल ही वर्षा है। यतः (अग्नि) ऋतुओं में प्रविष्ट था, इसलिये वह उसे जलों में से जलों के द्वारा ही निकालता है। अतः पुनराधेय में दर्भों के द्वारा अग्न्युद्धरण करता है॥११॥

चावल आटा के बने पूये को दो आक के पत्तों के बीच रख कर, उसको उस जगह स्थापित करता है जहाँ गार्हपत्य अग्नि की स्थापना करनी है। फिर उस पर अग्नि (गार्हपत्य) की स्थापना करता है॥१२॥

(तत्पश्चात्) जौ-आटे के अपूप (पूये) पकाकर दो आक के पत्तों के बीच रखकर उन्हें उस जगह रखता है जहाँ आहवनीय-अग्नि स्थापित करनी होती है

---

१. 'व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यवमयेन' का.श्रौ.सू. ४.२६६।

(तऽ) आग्नेयुमेव् पुञ्चकपालं पुरोड्डाशं निुर्व्वपति। तुस्य पुञ्चपदाः पङ्क्तुयो याज्यानुवुाक्या भवन्ति पुञ्च वुा ऋतुव ऽऋतून्प्राविशदृतुुभ्य ऽएवैनमेतन्निुर्मिमीते॥१४॥

सुर्व्वऽ आग्नेयुो भवति (त्ये) एवᳫँ हि त्वुष्टाग्नेुः प्रियं धुामोपुागच्छत्तुस्मात्सर्व्वऽआग्नेयुो भवति॥१५॥

---

आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति। तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति। पञ्च वा ऋतवः ऋतून् प्राविशत्। ऋतुभ्य एवैनमेतन्निर्मिमीते॥१४॥

सर्व आग्नेयो भवति। एवं हि त्वष्टाग्नेः प्रियं धामोपागच्छत्। तस्मात् सर्व आग्नेयो भवति॥१५॥

---

योस्तयोः रात्रिभिरेव व्यवधानात्। नापूपव्यवधानेन प्रयोजनमित्यर्थः॥१३॥

**आग्नेयमेवेति।** यदा¹ऽन्याधेये पवमानेष्टिकार्यम्, तदा²ग्नेय एव पञ्चकपालं करोतीति न पृथक्तया कर्त्तव्या इत्येवकारार्थः॥१४॥

**सर्व आग्नेयो भवतीति।** अस्यां पञ्चकपालेष्टावाज्यभागादिः सर्वोऽपि यागोऽग्निदेवत्यः कार्य इत्यर्थः॥१५॥

---

और उस पर अग्नि (आहवनीय) को स्थापित कर देता है। कुछ लोग कहते हैं कि—हम पूर्व में आहित दो अग्नियों को इनसे ढक देते हैं। परन्तु ऐसा न करे; क्योंकि ये अग्नियाँ रात्रि के द्वारा ढकी जाती है॥१३॥

अब 'पवमानेष्टि' में अग्नि के लिये पाँच कपालों पर पुरोडाश को तैयार करता है। इस याग के लिये पाँच चरण वाले पंक्ति छन्द की 'याज्या' एवं 'पुरोनुवाक्या' प्रयुक्त होती हैं। (यतः) पाँच ही ऋतुयें हैं (और) अग्नि भी ऋतुओं में प्रविष्ट हुआ था। इसलिये ऋतुओं से ही इसको आहित करता है॥१४॥

पवमानेष्टि में आज्यभागादि सभी याग अग्नि के निमित्त ही होते हैं; क्योंकि इसी से 'त्वष्टा' अग्नि के प्रियधाम को पा सका था; अतः यहाँ (= पुनराधेय में) सभी याग अग्नि के निमित्त ही होते हैं॥१५॥

---

१. 'यदाऽग्न्याधेयपवमानेष्टिकार्यम्, तदाग्नेय एव (पञ्च) कपालः करोति' इति क्व.पा.। २. 'आग्नेयः पञ्चकपाल [illegible]' 'तदर्शना' का.श्रौ.सू. ४.२६७,२६८।

तेनोपाꣳशु चरन्ति। यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिरऽइवैतेन बोभवद्वैश्वदेवोन्यो यज्ञोऽथैष निष्केवल्य ऽआग्नेयो यद्वै तिरऽइव तदुपाꣳशु तस्मादुपाꣳशु चरन्ति॥१६॥

(न्त्यु) उच्चैरुत्तममनुयाजं यजति। कृतकर्मेव हि स तर्हि भवति सर्वो हि कृतमनुबुध्यते॥१७॥

---

**तेनोपांशु चरन्ति। यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति, तिर इवैतेन बोभवत्। वैश्वदेवोऽन्यो यज्ञः अथैष निष्केवल्य आग्नेयः। यद्वै तिर इव, तदुपांशु। तस्मादुपांशु चरन्ति॥१६॥**

**उच्चैरुत्तममनुयाजं यजति। कृतकर्मेव हि स तर्हि भवति। सर्वो हि कृतमनुबुध्यते॥१७॥**

---

**तेनोपांशु चरन्तीति।** विहितमुपांशुत्वमुपपादयति—**ज्ञातये वेति।** 'यद्' हुतं 'निष्केवल्यम्' इतरेभ्यो निष्कृष्य केवलम्, तदेकभागं चिकीर्षति, कर्तुमिच्छति। 'एतेन' 'तिर इव' 'बोभवद्' भवति, तिरोहितं परोक्षमेव तत् प्रदीयत इत्यर्थः। **यद्वै तिर इवेति।** 'यत्' खलु तिरोहितमिव[1] भवति, तत् 'उपांशु' भवति। उपांशूच्चार्यमाणस्यापि परश्रोत्रग्राह्यत्वाभावेन तिरोहितत्वादित्यर्थः॥१६॥

**उच्चैरुत्तममनुयाजं करोतीति।** यावत् 'उत्तमः तृतीयोऽनुयाजः, तावत्पर्यन्तमुपांशुस्वरः, तत ऊर्ध्वमुच्चैरेव मन्त्रप्रयोग इत्यर्थः। तत्र कारणमाह—**कृतकर्मेवेति**॥१७॥

---

इसे उपांशु (अत्यन्त धीरे बोलकर) करते हैं। किसी आत्मीयजन या सखा के लिये जब कोई कुछ देना चाहता है तो छिपाकर ही देता है। अन्य यज्ञ विश्वे देवों का होता है किन्तु यह याग केवल अग्नि के लिये ही है। जो परोक्षतया किया जाता है वह चुपके से किया जाता है। इसलिये वह इसको उपांशु करते हैं॥१६॥

अन्तिम अनुयाज को उच्च स्वर से बोलकर करते हैं; क्योंकि तब कार्य समाप्ति पर हो जाता है। जब कार्य हो चुकता है तो उसे सभी जान जाते हैं॥१७॥

---

१. तिरोहितवत् 'उपांशु' इति क्व.।

**स आश्राव्याह। समिधो यजेति तदाग्नेयꣳ रूपं परोऽक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्षमाग्नेयꣳ रूपम्॥१८॥**

**(ꣳ) स यजति। (त्य) अग्नऽआज्यस्य व्यन्तु व्वौझगग्निमाज्यस्य व्वेतु व्वौझगग्निनाज्यस्य व्यन्तु व्वौझगग्निराज्यस्य व्वेतु व्वौझगिति॥१९॥**

---

**स आश्राव्याह–'समिधो यज' इति। तदाग्नेयं रूपम्, परोक्षं तु 'अग्नीन्यज' इति त्वेव ब्रूयात्। तदेव प्रत्यक्षमाग्नेयं रूपम्॥१८॥**

**स यजति–'अग्न आज्यस्य व्यन्तु वौझक्। अग्निमाज्यस्य वेतु वौझक्। अग्निनाऽऽज्यस्य व्यन्तु वौझक्–अग्निराज्यस्य वेतु वौझक्' इति॥१९॥**

---

प्रयाजादिषु सर्वा[1]ग्नेयैकरणं प्रतिपादयति—**स आश्राव्येत्यादिना**। प्रथमप्रयाजे यत् 'समिधो यज'—इति प्राकृतं वचनम्, 'तदाग्नेयं रूपम्', समिन्धन-प्रत्यभिज्ञानात्; किन्तु तत् 'परोक्षम्'। अतः समिध इत्येतस्य स्थाने '[2]अग्नीन् यज'–'इत्येव' 'ब्रूयात्'॥१८॥

प्रयाजयाज्यास्वपि क्रमेणाग्निविभ[3]क्तिं यो[4]जयति—**स यजतीति**। प्रकृतिषु याज्यास्वाज्यशब्दात् पूर्वं यथाक्रमम् 'अग्ने', 'अग्निम्', 'अग्निना', 'अग्निः'—एताश्चतस्रो विभक्तीः [5]प्रक्षिप्य ताभिर्यजेदित्[6]यर्थः॥१९॥

---

अध्वर्यु 'ओश्रावय' कहकर (और आग्नीध्र द्वारा ('अस्तु श्रौषट्'–यह) उत्तर दिये जाने के पश्चात्) होता से कहता है—'समित् के लिये यजन करो'। 'समित्' यह अग्नि का परोक्ष-रूप है। परन्तु यहाँ उसको यह कहना चाहिये कि—'अग्नियों के लिये यजन करो'; क्योंकि तब वह अग्नि का प्रत्यक्ष रूप से कथन होगा॥१८॥

अब वह निम्नवत् निगद पढ़ कर यजन करता है—(अ) 'अग्नऽआज्यस्य व्यन्तु वौझक्'। हे अग्नि! (इस हविरूप) घृत को ग्रहण करें। वौझक्। (आ) 'अग्निमाज्यस्य वेतु वौझक्'। (तनूनपात्) आज्य हवि अग्नि को स्वीकार होवे। वौझक्। (इ) 'अग्निनाज्यस्य व्यन्तु वौझक्'। वे (इडा) अग्नि के द्वारा आज्य को

---

१. 'तत्सहचारितत्करणम्' इति क्व.पा.। २. 'अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च' (का.श्रौ.सू. ४.२६९)। ३. 'विभक्तियोजनं प्रतिपादयति' इति क्व.। ४. 'करोति' इति क्व.। ५. 'विहिता एताभिः' इति क्व.। 'सहिताः, एताभिः' इत्यपि क्व. पाठः। ६. अत्र मूले यत्, 'वौझक्' इत्यसकृदाम्नातम्। तस्य व्याख्यानमिह नाकारि भाष्यकारेण कथमिति चिन्तनीयम्। पूर्वं तु 'वौक्' इत्यस्य व्याख्यानं कृतमेवेति तद्द्रष्टव्यम् (श.प.ब्रा.अ. १.२.२१) इत्यत्र भाष्ये।

(त्यु) अथ स्वाहाग्निमित्याह। (हा) आग्नेयमाज्यभागꣳ स्वाहाग्निं पवमानमिति यदि पवमानाय ध्रियेरन्त्स्वाहाग्निमिन्दुमन्तमिति यद्यग्नय ऽइन्दुमते ध्रियेरन्त्स्वाहाग्निꣳ स्वाहाग्नीनाज्यपाञ्जुषाणोऽअग्निराज्यस्य व्वेत्विति यजति॥२०॥

(त्यु) अथाहाग्नयेऽनुब्रूहीति। (त्या) आग्नेयमाज्यभागꣳ सोऽन्वाहाग्निꣳ स्तोमेन बोधय समिधानोऽअमर्त्यम्।

---

**अथ स्वाहाग्निमित्याह आग्नेयमाज्यभागम्–'स्वाहाग्निं पवमानम्' इति। यदि पवमानाय ध्रियेरन्। 'स्वाहाग्निमिन्दुमन्तम्' इति। यद्यग्नय इन्दुमते ध्रियेरन् 'स्वाहाग्निं स्वाहाऽग्नीनाज्यपान् जुषाणो अग्निराज्यस्य वेतु' इति यजति॥२०॥**

**अथाह अग्नयेऽनुब्रूहि इति आग्नेयमाज्यभागम्, सोऽन्वाह–'अग्निं स्तोमेन बोधय समिधानो अमर्त्यम्। हव्या देवेषु नो दधत्' इति**

---

पञ्चमप्रयाजानुयाजयोर्विशेषमाह—**अथ स्वाहेति।** प्रकृतिवत् प्रथमाज्यभागदेवतां सङ्कीर्त्य द्वितीयाज्यभागदेवतायाः सोमस्य स्थानेऽग्निः पवमानोऽग्निरिन्दुमान् वा अध्वर्युप्रयोगानुसारेण विकल्पेन निर्देष्टव्य इत्यर्थः। **स्वाहा देवानाज्यपानिति** प्रयाजदेवतानिर्देशेऽपि 'स्वाहाग्नीनाज्यपान्' इति प्रयोक्तव्यम्॥२०॥

**अथाहाग्नय इति।** प्रथमाज्यभागस्य 'अग्निं[1] स्तोमेन बोधय'—इति

---

स्वीकार करें, वौझक्। (ई) 'अग्निराज्यस्य वेतु वौझक्'। 'अग्नि आज्य को स्वीकार करे, वौझक्॥१९॥

अब (द्वितीय आज्यभाग के लिये) कहता है—'स्वाहाग्निम्' (पवमानम्)। आग्नेय आज्यभाग में यदि पवमान विशेषण विशिष्ट के लिये आहुति करे तो कहे—'स्वाहाग्निं पवमानम्'। यदि इन्दुमान् विशेषणयुक्त अग्नि के लिये आहुति करे तो कहे—'स्वाहाग्निमिन्दुमन्तम्'। (प्रयाज देवता का पूर्वोक्तानुसार निर्देश करने पर भी यजन के समय यह वाक्य ही बोले-) 'स्वाहाग्निम्', 'स्वाहाग्नीनाज्यपाञ् जुषाणोऽग्निराज्यस्य वेतु'। यह (होता) पढ़ता है॥२०॥

आग्नेय आज्यभाग की अनुवाक्या के सम्बन्ध में (अध्वर्यु) कहता है—'अग्नयेऽनुब्रूहि'। ('अग्नि के लिये अनुवाक्या पढ़िये')। तब (होता) पढ़ता है—

---

१. 'आज्यभागो द्वितीयोऽग्नये पवमानायेन्दुमते वा' का.श्रौ.सू. ४.२१७। २. ऋक्संहिता मं. ५ सू. १४ ऋ. १ द्रष्टव्या। वा.सं.अ. २२-मं. १५।

हव्या देवेषु नो दधदिति स्वपितीव खलु वाऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीर्ययति जुषाणो अग्निराज्यस्य व्वेत्विति यजति॥२१॥

(त्य) अथ यद्यग्नये पवमानाय ध्रियेरन्। (त्र) अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहाग्नऽआयूꣳषि पवसऽ-आसुवोर्ज्जमिषं च नः। आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निः पवमान ऽआज्यस्य व्वेत्विति यजति॥२२॥

---

(ऋ.सं.मं.५, सू.१४, ऋ१, वा.स.अ.२२, मं.१५) स्वपितीव खलु वा एतद् यदुद्वासितो भवति। सम्प्रबोधयत्येवैनमेतत्समुदीर्ययति-'जुषाणो अग्निराज्यस्य वेतु' इति यजति॥२१॥

अथ यद्यग्नये पवमानाय ध्रियेरन्-'अग्नये पवमानायानुब्रूहि' इति ब्रूयात्। सोऽन्वाह-'अग्न आयूंषि पवस आसुवोर्ज्जमिषं च नः। आरे बाधस्व दुच्छुनाम्' (वा.सं.अ.१९, मं.३८) इति। तथाहाग्नेयो भवति। सोमो वै पवमानः। तदु सौम्यादाज्यभागान्नयन्ति-'जुषाणोऽअग्निः पवमान आज्यस्य वेतु' इति यजति॥२२॥

---

बुधिधातुयुक्तामनुवाक्यां दर्शयित्वा तस्याः पुनराधेयानुकल्पमाह—**स्वपितीवेति।** 'समुदीर्ययति' समुद्गमयतीत्यर्थः॥२१॥

द्वितीयाज्यभागस्य प्रागुक्तपक्षद्वयेऽपि याज्यानुवाक्ये दर्शयति—**अथ यदीत्यादिना।** निगदसिद्धोऽर्थः॥२२॥

---

'अग्निं स्तोमेन बोधय समिधानोऽमर्त्यम्। हव्या देवेषु नो दधत्'। (अर्थ-) 'स्तुति द्वारा हम अग्नि को जगाते हैं; जो अमरत्व को उद्बोधित करता है। यह अग्नि हमारी हवियों को देवताओं तक पहुँचावे'। जब अग्नि अपने स्थान से निकाला जाता है तो सोता सा रहता है। आहुति के समय (ऋत्विज) उसको जगाता है। अब यह पढ़ता है—'जुषाणोऽग्निराज्यस्य वेतु'। अर्थात् 'अग्नि कृपा करके हमारी आज्य—आहुति को ग्रहण करे॥२१॥

यदि अग्नि-पवमान के लिये आहुति का आधान करना हो तो यह कहे—'अग्नये पवमानाय अनुब्रूहि'। अर्थात् पवमान अग्नि के लिये स्तुति वाक्य बोलो। तब होता पढ़ता है—'अग्नऽआयूꣳषि पवसऽआसुवोर्जमिषं च नः। आरे बाधस्व

(त्यु) अथ यद्यग्नयऽइन्दुमते ध्रियेरन्। (न्न) अग्नयऽ-इन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेह्यूषु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः। एभिर्व्वर्द्धास ऽइन्दुभिरिति तथाहाग्नेयो भवति सोमो वाऽइन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निरिन्दु-मानाज्यस्य व्वेत्विति यजत्येवमु सर्व्वमाग्नेयं करोति॥२३॥

---

अथ यद्यग्नय इन्दुमते ध्रियेरन्–'अग्नय इन्दुमतेऽनुब्रूहीति ब्रूयात्। सोऽन्वाह–'एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्द्धास इन्दुभिः' इति (वा.सं.अ. २६ मं. १३) तथाहाग्नेयो भवति। सोमो वा इन्दुः। तदु सौम्यादाज्यभागान्नयन्ति–'जुषाणो अग्निरिन्दुमानाज्यस्य वेतु' इति यजति। एवमु सर्वमाग्नेयं करोति॥२३॥

---

अथ यद्यग्नय इति। एवमु सर्वमिति। उक्तरीत्या प्रयाजानामाज्यभाग-योश्चाग्निसम्बन्धकरणात् तत् सर्वमाग्नेयं भवतीत्यर्थः॥२३॥

---

दुच्छुनाम्' (ऋग्वेद ९.६६.१९)। (मान्त्रार्थ–) 'हे अग्नि! आप आयु को (जीवन को) देते है। हमारे लिये अन्न और रस उत्पन्न कीजिये तथा विपत्तियों को हमसे दूर कीजिये'। इस प्रकार मन्त्र द्वारा यह आहुति अग्नि-युक्त हो जाती है। सोम ही पवमान है। परन्तु यहाँ इसको वह सोम से सम्बोधित न कर 'पवमान' से सम्बोधित कर आज्यभाग देते हैं। अब वह पढ़ता है—'जुषाणोऽग्निः पवमान आज्यस्य वेतु'। (अर्थ–) 'अग्नि-पवमान प्रसन्न होकर हमारे आज्य को स्वीकार करें'॥२२॥

यदि वह 'इन्दुमान् अग्नि' के लिये आहुति का आधान करे तो कहेगा—'अग्नयेऽइन्दुमतेऽनुब्रूहि'। 'इन्दुमान् अग्नि के लिये प्रार्थना कीजिये'। तब होता पढ़ेगा—'एह्यूषु ब्रवाणि तेऽग्ने इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः' (ऋग्वेद ६.१६.१६)। (अर्थ–) 'हे अग्नि, आइये। मैं अधिकाधिक प्रार्थनायें आपके लिये करता हूँ। इन इन्दुओं (आज्य-बूँदों) से आप हर्षित हो प्रवृद्ध होइये'। इस प्रकार यह आहुति—अग्नि सम्बन्धी हो जाती है। सोम ही इन्दु है। सोम आज्यभाग से सम्बोधित न कर 'इन्दुमान्' विशेषण से सम्बोधित कर आहुति देते हैं। इसलिये पढ़ता है—'जुषाणोऽग्निऽरिन्दुमानाज्यस्य वेतु'। (अर्थ–) 'अग्नि इन्दुमान् प्रसन्न होकर आज्य को स्वीकार करे'। इस प्रकार वह इन सबको अग्नि-युक्त कर देता है॥२३॥

(त्य) अथाहाग्नयेऽनुब्रूहीति हविषः। (षोऽग्निं) अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निꣳ स्विष्टकृतं यजेत्यथ यद्देवान्यजेत्यग्नीन्यजेत्येवैतदाह॥२४॥

स यजति। (त्य) अग्नेर्व्वसुवने व्वसुधेयस्य व्वेतु व्वौझगग्नाऽउ व्वसुवने व्वसुधेयस्य व्वेतु व्वौझग्देवोऽअग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीय ऽएवंवाग्नेयाननुयाजान्करोति॥२५॥

---

अथाह–'अग्नयेऽनुब्रूहि' इति 'हविषोऽग्निं यज', 'अग्नये स्विष्टकृतेऽनुब्रूहि', 'अग्निं स्विष्टकृतं यज' इति। अथ यद् 'देवान् यज' इति। अग्नीन् यजेत्येवैतदाह॥२४॥

स यजति–'अग्नेर्वसुवने वसुधेयस्य वेतु वौझक् अग्ना उ वसुवने वसुधेयस्य वेतु वौझक्, देवो अग्निः स्विष्टकृत्' इति स्वयमाग्नेयस्तृतीयः। एवं वा आग्नेयाननुयाजान् करोति॥२५॥

---

[१]आधानस्विष्टकृतोस्त्वग्निसम्बन्ध इति दर्शयति—**अथाहाग्नय इति**। प्रथमप्रयाजवत् प्रथमानुयाजेऽपि 'देवान् यज'—इत्यस्य स्थाने 'अग्नीन् यज'—इत्यग्निवि[२]भक्तिः कार्या॥२४॥

तथा द्वितीयेऽप्यनुयाजे 'अग्ना उ'—इति विभक्तिः प्रयोक्तव्येति प्रतिपादयति—**स यजतीत्यादिना**। **स्वयमाग्नेय** इति 'तृतीयः' त्वनुयाजः 'स्वयमाग्नेयः स्वयमेवाग्निशब्दवानिति न पृथक् तत्राग्निविभक्तिः प्रक्षेप्तव्येत्यर्थः॥२५॥

---

अब वह हवियों के यजन विषय में प्रैष देता है—'अग्नयेऽनुब्रूहि'। अर्थात् अग्नि के लिये स्तवन कीजिये। 'अग्निं यज' अर्थात् अग्नि के लिये यजनवाक्य बोलें। 'अग्नये स्विष्टकृतेऽनुब्रूहि'। अर्थात् स्विष्टकृत अग्नि के लिये स्तवन कीजिये। 'अग्निं स्विष्टकृतं यज'। अर्थात् अग्नि स्विष्टकृत के लिये यजनवाक्य बोलें। फिर हविष्य के लिये यजनवाक्य में—'देवान् यज' के स्थान पर बोले—'अग्नीन् यज'। अग्नियों के लिये स्तवन कीजिये॥२४॥

अब वह हविष्य का याग करता है यह मन्त्र पढ़कर—'अग्नेर्वसुवने वसुधेयस्य वेतु, वौझक्'। (२) द्वितीय अनुयाज—'अग्नाऽउ वसुवने वसुधेयस्य वेतु वौझक्'।

---

१. 'प्रधानस्विष्टकृतोऽग्निस्त्वेव सम्बन्धः स्वतः सम्बन्ध इति दर्शयति' इति क्व.पु. 'अधुना स्विष्टकृतोऽप्यग्निसम्बन्ध इति' इति–च क्व.पु.पा.। २. का.श्रौ.सू. ४.११.११ द्रष्टव्यम्।

ता वाऽएताः। षड्विभक्तीर्यजति चतस्रः प्रयाजेषु द्वेऽअनुयाजेषु षड्वाऽऋतवऽऋतून्प्राविशदृतुभ्य एवैनमेतन्निर्म्मिमीते॥२६॥

द्वादश वा त्रयोदश वाऽक्षराणि भवन्ति। द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सरमृतून्प्राविशदृतुभ्य एवैनमेतत्संव्वत्सरान्निर्म्मिमीते न द्वे चन सहाजामितायै जामि ह

---

ता वा एताः षड् विभक्तीर्यजति। चतस्रः प्रयाजेषु, द्वे अनुयाजेषु। षड् वा ऋतवः। ऋतून् प्राविशत्। ऋतुभ्य एवैनमेतन्निर्म्मिमीते॥२६॥

द्वादश वा त्रयोदश वा अक्षराणि भवन्ति। द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः। संवत्सरमृतून् प्राविशत्। ऋतुभ्य एवैनमेतत् संवत्सरान्निर्म्मिमीते। न द्वे चन सहाजामितायै। जामि ह कुर्याद्–यद् द्वे चित्

---

एवं प्रयाजानुयाजेषु प्रक्षिप्ताः सम्भूयानूद्य प्रशंसति—**ता वा इति**॥२६॥

तासां विभक्तीनामक्षरसङ्ख्यामुपजीव्य प्रशंसति—**द्वादश वेति**। 'अग्ना उ'—इत्यत्रान्तिमाक्षरत्यागे सति द्वादशाक्षराणि भवन्ति, तेन सह त्रयोदश भवन्तीत्यर्थः। **न द्वे चनेति**। चनशब्दोऽप्यर्थः।[1] 'द्वे' अपि वक्ष्यमाणे 'न' 'सह' प्रयुञ्जीत, किमर्थम्? 'अजामितायै' जामितादोषराहित्याय। व्यतिरेके तत्सद्भावमाह—**जामि**

---

'(नाराशंस) अग्नि में वृद्धि के लिये वसुधा को स्वीकार करे। वौझक्'। (३) तृतीय अनुयाज—'देवोऽ अग्निः स्विष्टकृत्'। अर्थात् देव स्विष्टकृत् अग्नि। यह तीसरी प्रार्थना स्वयं अग्नि की ही है (अतः इसमें कोई परिवर्तन नहीं होगा)। इस प्रकार सभी अनुयाज़ों को अग्नि का कर देता है॥२५॥

पुनराधेय के प्रयाज एवं अनुयाजों में छः विभक्तियों का प्रयोग कर यजन करता है। चार (विभक्तियाँ) प्रयाज में और दो (विभक्तियाँ) अनुयाजों में। ऋतुएँ छः हैं। (अग्नि) ऋतुओं में प्रविष्ट हुआ था। इस प्रकार ऋतुओं से ही प्रयाजानुयाजों का निर्माण करता है॥२६॥

इन छः विभक्तियों में बारह या तेरह अक्षर होते हैं। वर्ष में बारह या तेरह ही महीनें होते हैं। अग्नि ऋतुओं अर्थात् संवत्सर में प्रविष्ट हुआ था। इस प्रकार

---

१. 'असाकल्ये तु चिच्चन' इति अमरकोषः ३.४.३।

कुर्य्याद्यद्द्वे चित्सह स्यातां व्यन्तु व्वेत्वित्येव प्रयाजानाँ रूपं व्वसुवने व्वसुधेयस्येत्यनुयाजानाम्॥२७॥

तस्य हिरण्यं दक्षिणा। (णाग्ने) आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि व्वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य व्वहं भवति देवानाँ हव्य-

---

सह स्याताम्। 'व्यन्तु वेतु'-इत्येव प्रयाजानां रूपम्। 'वसुवने वसुधेयस्य'-इत्यनुयाजानाम्॥२७॥

तस्य हिरण्यं दक्षिणा। आग्नेयो वा एष यज्ञो भवति, अग्ने रेतो हिरण्यम्, तस्माद्धिरण्यं दक्षिणा। अनड्वान्वा। स हि वहेनाग्नेयः। अग्निदग्धमिव ह्यस्य वहं भवति। देवानां हव्यवाहनोऽग्निरिति। वहति वा

---

हेति। के पुनस्ते द्वे? इति ते विभज्य दर्शयति—**व्यन्तु-वेत्वित्यादिना**॥२७॥

पुनराधेयस्य दक्षिणां विधत्ते—**तस्येति**। **स हि वहेनेति**। सः खल्वनड्वान् 'वहेन' स्कन्धेनाग्निसम्बद्धो भवति। तस्योपपातम्—**अग्निदग्धमिवेति**। अनडुहश्च साम्यमाह—**देवानामिति**। अतो वहनसाम्यात् पुनराधीयमानस्याग्नेः 'अनड्वान्

---

ऋतुओं से अर्थात् संवत्सर से उसका निर्माण करता है। पुनरुक्ति के दोष से बचने के लिये दो (वाक्य) एक से नहीं किये जाते। यदि दो एक से ही कर दिये जाँय तो पुनरुक्ति का दोष लगेगा। इसलिये प्रयाजों में (एक बार) कहते हैं—'व्यन्तु' तथा दूसरी बार—'वेतु' और अनुयाजों में कहते हैं—वसुवने वसुधेयस्य॥२७॥

पुनराधेय की दक्षिणा है स्वर्ण। पुनराधेय का यह यज्ञ अग्नि से सम्बन्धित है तथा अग्नि का रेत अर्थात् वीर्य हिरण्य (= स्वर्ण) है। इसलिये स्वर्ण दक्षिणा है अथवा वृषभ (बैल) भी दक्षिणा है; क्योंकि बैल का कन्धा अग्नि से सम्बन्धित

---

१. 'हिरण्यं दक्षिणाऽनड्वान् वाग्न्याधेयिकीश्चेच्छञ्च्छुतेः' का.श्रौ.सू. ४.२७१। २. प्रथमकाण्डस्य अ. १ ब्रा. २ कं. ४ द्रष्टव्याः। ३. 'वहतं स्यात्।' इति क्व.पा.।

वा॒हनोऽग्निरि॒ति व्वहति वा॒ ऽएष॒ मनुष्येभ्यस्त॒स्मादनड्वान्-दक्षिणा॥२८॥

इति द्वितीयकाण्डे द्वितीयध्याये तृतीयं ब्राह्मणम्॥२॥२॥३॥

---

एष मनुष्येभ्यः। तस्मादनड्वान् दक्षिणा॥२८॥

।। इति पुनराधेयविधिः सम्पूर्णः ।।
।। इत्याधानब्राह्मणं समाप्तम् ।।

---

दक्षिणा' उत्कृष्टतरा इत्यर्थः॥२८॥३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम्।।२।।२।।३।।

---

होता है। इसका कन्धा अग्नि से दग्ध सा होता है। दूसरे यह भी कि—अग्नि देवों की हवियों को ढोने वाला है और बैल मनुष्यों का बोझ ढोने वाला है। इसलिये (वृत्ति सामान्येन) पुनराधेय की दक्षिणा में बैल दिया जाता है॥२८॥३॥

※

प्रजापतिर्ह वा ऽइदमग्र ऽएक एवास स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं व्वेदान्नादो हैव भवति॥१॥

तद्वा ऽएनमेतदग्रे देवानामजनयत। तस्मादग्निरग्रिर्ह वै

---

## अथाग्निहोत्रब्राह्मणम्

प्रजापतिर्ह वा इदमग्र एक एवास। स ऐक्षत–'कथं नु प्रजायेय' इति। सोऽश्राम्यत्, स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे। तद् यदेनं मुखादजनयत–तस्मादन्नादोऽग्निः। स यो हैवमेतमग्निमन्नादं वेद, अन्नादो हैव भवति॥१॥

तद्वा एनमेतदग्रे देवानामजनयत–तस्मादग्निः। अग्निर्ह वै नामैतदग्र-

---

एवमाधानपुनराधाने विधाय तन्निष्पन्नानामग्नीनां फलवत्कर्मार्थत्वात् [१]तत्साध्यं सायम्प्रातरनुष्ठेयमग्निहोत्राख्यं कर्म विधित्सुस्तदर्थमाख्यायिकामाह—**प्रजापतिर्ह वा इत्यादिना**॥१॥

**तद्वा इति**। अग्रे [२]जातत्वादग्निः; स एवाग्निरिति परोक्ष्येणोच्यत इति

---

सृष्टि में पहले अकेला प्रजापति ही था। उन्होंने सोचा—मैं कैसे अन्य प्राणियों को उत्पन्न (प्रकट) करूँ? उसने श्रम और तप किया। तपः प्रभाव से प्रजापति ने मुख से अग्नि को उत्पन्न किया। यतः अग्नि को मुख से उत्पन्न किया था, अतः अग्नि अन्न का खाने वाला है। जो इस प्रकार अग्नि के अन्नाद होने का रहस्य जानता है वह स्वयं भी अन्न खाने के सामर्थ्य वाला हो जाता है॥१॥

प्रजापति ने इस अग्नि को देवों से पहले उत्पन्न किया। इसलिये 'अग्नि' का अग्रि नाम है। अग्नि और अग्रि एक बात है। यह उत्पन्न होकर पूर्व की ओर

---

१. 'तत्साधनचतुष्टयसाध्यम्' इति क्व.सा.। २. अग्निजननप्रकारः शतपथ चतुर्दशे काण्डे १४ प्रथमेऽध्याये १ प्रथमप्रपाठके १ द्वितीये २ सृष्टिब्राह्मणे 'अथेत्यभ्यमन्थत्' इति मन्त्रः ११।

**नामैतद्यदग्निरिति स जातः पूर्वः प्रेयाय यो वै पूर्व्व एत्यग्रऽएतीति वै तमाहुः सोऽएवास्याग्निता॥२॥**

**स ऐक्षत प्रजापतिः। (र) अन्नादं वाऽइममात्मनोऽजीजने यदग्निं न वा ऽइह मदन्यदन्नमस्ति यं वाऽअयं नाद्यादिति काल्वालीकृता हैव तर्हि पृथिव्यास नौषधय आसुर्न व्वनस्पतयस्तदेवास्य मनस्यास॥३॥**

---

**दग्निरिति। स जातः पूर्वः प्रेयाय। यो वै पूर्व एति–अग्र एतीति वै तमाहुः। सा उ एवास्य अग्निता॥२॥**

**स ऐक्षत–प्रजापतिः। अन्नादं वा इममात्मनोऽजीजने यदग्निम्। न वा इह मदन्यदन्नमस्ति, यं वा अयं नाद्यादिति। काल्वालीकृता हैव तर्हि पृथिव्यास, नौषधय आसुः, न वनस्पतयः, तदेवास्य मनस्यास॥३॥**

---

नामनिर्वचनं कृत्वा प्रकारान्तरेणापि निर्ब्रूयात्। **स जात इति**। 'अग्रे' एति गच्छतीति अग्निः। 'अस्य' अग्नेः साधिका 'अग्निता' इत्यर्थः॥२॥

एवं सायमग्निहोत्रदेवताया अग्नेरुत्पत्तिमभिधाय होम इत्यस्य उत्पत्तिं प्रतिपादयति—**स ऐक्षतेत्यादिना। अजीजन इति**। अजनयमित्यर्थः। मया सृष्टोऽग्निरित्यन्नादः तस्य चाग्नेर्न भवितव्यम्। न च मत्तोऽन्यदन्नमिह विद्यते, यदन्नमसावद्यादित्यर्थः। ननु भूम्यामोषधयो विद्यन्ते, तदेव तस्यान्नं भविष्यतीत्यत आह—**काल्वालीकृतेति**[1]। 'तर्हि' तस्मिन् समये, यदहन्येव पृथिवी बभूव, तत ओषधिवनस्पतयः। एवं सति 'तत्' वक्ष्यमाणमन्नम् 'एव' 'अस्य' प्रजापतेः मनसि बभूव॥३॥

---

अर्थात् आगे गया। जो पहले (पूर्व)जाता है उसको कहते हैं आगे (अग्रे) जाने वाला। यही अग्नि की अग्निता है॥२॥

प्रजापति ने तब सोचा कि मैंने स्वयं के आत्म-तत्त्व से इस अग्नि को अन्नाद (अन्न खाने वाला) बनाया है और सम्प्रति मुझे छोड़कर और कोई अन्न (भक्ष्य पदार्थ) है ही नहीं जिसे वह खाये। उस समय पृथ्वी उजाड, सख्त ढूहों, चट्टानों की ढेर जैसी थी। न औषधियाँ थीं, न वनस्पतियाँ। प्रजापति को तब इसी बात (= अग्नि के लिये भोज्यान्न) की मन में भारी चिन्ता थी॥३॥

---

१. 'अपनीतवालाः काल्वालाः'-इति हरिस्वामी। तदेवं खल्वालाः, खल्वाटः, काल्वाला इति समानार्थाः।

(सा) अथैनमग्निर्व्यात्तेनोपपर्य्यावर्वर्त्त। तस्य भीतस्य स्वो महिमापचक्राम व्वाग्वाऽअस्य स्वो महिमा व्वागस्यापचक्राम सऽआत्मन्येवाहुतिमीषे स ऽउदमृष्ट तद्यदुदमृष्ट तस्मादिदं चालोमकमिदं च तत्र व्विवेद घृताहुतिं वैव पय आहुतिं वोभयॐ ह त्वेव तत्पयऽएव॥४॥

सा हैनं नाभिराधयाञ्चकार। केशमिश्रेव हास तां व्यौक्षदोषं[1]

---

**अथैनमग्निर्व्यात्तेनोपपर्यावर्त। तस्य भीतस्य स्वो महिमाऽपचक्राम। वाग्वा अस्य स्वोऽमहिमा। वांगस्यापचक्राम। स आत्मन्येवाहुतिमीषे। स उदमृष्ट। तद् यदुदमृष्ट–तस्मादिदं चालोमकमिदं च। तत्र विवेद–घृताहुतिं वैव पय आहुतिं वा–उभयं ह त्वेव तत् पय एव॥४॥**

**सा हैनं नाऽभिराधयाञ्चकार। केशमिश्रेव हास। तां व्यौक्षत्–ओषं**

---

**अथैनमिति।** अथ अस्मिन्नवसरे 'अग्निः' 'एनम्' 'व्यात्तेन' प्रजापतिविवृतेन मुखेन भक्षयितुं पर्यावृत्तो बभूव। तस्माद् 'भीतस्य' प्रजापतेः। **स्वो महिमेत्यादि, स्पष्टम्। स आत्मन्येवेति।** 'सः' प्रजापतिः 'आत्मनि' स्वशरीरे 'एव' आहुतिद्रव्यं सम्पादयितुमिच्छां कृतवान्। कृत्वा च 'सः' 'उदमृष्ट' हस्ताभ्यां स्वाङ्गस्योन्मार्जनं कृतवान्। यस्मादेवं तस्मादेव कारणात् इदञ्च इदं च उभयमपि पाणितलम् 'अलोमकं रोमरहितं दृश्यते। उन्मार्ज्जनेन 'तत्राहुतिं' 'विवेद' लेभे। तां विशिनष्टि—**घृताहुतिमिति। उभयं हेति।** यदेतत् पयोघृतसाध्यमाहुतिद्वयम् 'तत् उभयम्' अपि 'पय एव' घृतस्य पयोविकारत्वादित्यर्थः॥४॥

**सा हैनमित्यादि।** 'नाभिराधयाञ्चकार' अभिराद्धं तृप्तं न चकारेत्यर्थः। तत्र दृष्टान्तः—**केशमिश्रेवेति।** कीटादिदूषिता आहुतिर्न तृप्तिम्, प्रत्युत बीभत्सामेव

---

अब (बुभुक्षापीडित) अग्नि, प्रजापति की ओर मुँह फाड़कर दौड़ पड़ा। वह प्रजापति डर गये और उसकी महिमा चली गयी। वाणी ही प्रजापति की महिमा है। यह वाणी ही चली गयी। उसने अपने शरीर में से ही आहुति-द्रव्य उत्पन्न करने की इच्छा की और जोर से (हाथ) मले। यतः जोर से हाथ मले, इसीलिये ये (हथेलियाँ) लोमरहित हैं। पाणितल-मर्दन से जो आहुति-द्रव्य प्राप्त हुआ वह-घृत व दूध था। तत्त्वतः ये दोनों द्रव्य दूध ही हैं॥४॥

अग्नि को यह आहुति-द्रव्य पसन्द नही आया; क्योंकि वह केशमिश्रित (बालों से मिला हुआ) था। अग्नि ने उसे (पृथ्वी पर) यह कह कर डाल दिया कि—

---

१. ओषधयः ओषद्धयन्तीति वा, ओषत्येना धयन्तीति वा, दोषं धयन्तीति वा। (नि. ९.३.२६)

धये॒ति त॒तऽओ॒षधयः स॒मभवंस्त॒स्मादो॒षधयो न॒ाम स॒ द्वित॒ीयमु॒दमृष्ट तत्रा॒परामा॒हुतिं व्विवेद घृताहु॒तिं वैव॒ पयआहु॒तिं॒ वोभ॒यय॑ँ॒ ह॒ त्वेव तत्प॒य एव॒॥५॥

सा॒ हैनमभिराधया॒ञ्चकार। स॒ व्यचिकित्सज्जुहु॒वानी ३ मा॒ हौषा ३ मि॒ति त॑ँ॒ स्वो॒ महि॒मा॒भ्युवाद जुहु॒धी॒ति स॒ प्रजा॒पतिर्व्विदा॒ञ्चकार स्वो वै॒ मा महि॒माहे॒ति स स्वाहु॒त्ये॒वा-

---

धयेति। तत ओषधयः समभवन्–तस्मादोषधयो नाम। स द्वितीयमुदमृष्ट। तत्रापरामाहुतिं विवेद, घृताहुतिं वैव पय आहुतिं वा–उभयं ह त्वेव तत्पय एव॥५॥

सा हैनमभिराधयाञ्चकार। स व्यचिकित्सत्–जुहवानी ३ मा हौषा ३ मिति। तं स्वो महिमाऽभ्युवाद–जुहुधीति। स प्रजापतिः विदाञ्चकार–स्वो वै मा महिमाऽहेति। स स्वाहेत्येवाजुहोत्–तस्मादु स्वाहेत्येव हूयते। तत एष

---

जनयति। एवं प्रजापतिशरीरजं द्रव्यमाहुतियोग्यं नासीदित्यर्थः। 'तां' चाहुतिं तस्मिन्नग्नौ 'व्यौक्षत्' अत्यजत् इदमाहुतिद्रव्यम् 'ओषं' पक्वं कृत्वा 'धय' पिब 'इति'। एवमग्नौ प्रक्षिप्तात् तस्मात् 'ओषधयः' पृथिव्यां समभवन्। एवमोषधिरूपस्य द्रव्यस्योत्पत्तिमुक्त्वा प्रातराहुतिदेवतायाः सूर्यस्योत्पत्तिमाह—स द्वितीयमिति। पूर्ववद् योज्यम्॥५॥

**सा हैनमित्यादि। स व्यचिकित्सदिति।** अस्यां द्वितीयस्यामाहुतौ स प्रजापतिः विचिकित्सां कृतवान्, किमिदं मदङ्गाज्जातं द्रव्यं जुहवानि, किं वा नेति। एवं संशयापन्ने अग्निभयात् प्राङ्निर्गतो वाग्रूपः स्वकीयो 'महिमा' 'अभ्युवाद' अभिलक्ष्योक्तवान्–'संशयं मा कार्षीः, होमं कुरु' इति। **स्वो वा इति।** यस्मात् 'स्वो महिमा आह, तस्मात् 'सः' प्रजापतिः 'स्वाहेत्येव तत्'

---

'ओषं (= पकाकर) धय (= पीयो या खाओ)'। उसी से पृथ्वी पर 'ओषधियाँ' उत्पन्न हुईं। इसी कारण से उनका नाम 'ओषधि' [= ओषं (पकाकर) धय (खाने योग्य)] पड़ा। अब प्रजापति ने फिर हथेलियाँ मलीं। तब दूसरी आहुति मिली जो घृत या दूध रूप थी। तत्त्वतः ये दोनों दूध ही है॥५॥

(लोम रहित होने से) इस बार की घृताहुति/पय आहुति अग्नि को पसन्द आ गयी। 'यद्यपि प्रजापति तब भी संशय-ग्रस्त थे कि—इसे (अग्नि में) डालूँ या न डालूँ। तब प्रजापति की महिमा (= वाणी) ने कहा—'अवश्य आहुति दें'। प्रजापति ने जाना कि यह तो मेरी (स्व) ही महिमा (अन्तरात्मा की आवाज) है

जुहोत्तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोऽयं प्रबभूव योऽयं पवते तत एवाग्निः पराङ् पर्य्यावर्त्त॥६॥

स हुत्वा प्रजापतिः। प्र चाजायतात्स्यतश्चाग्नेर्म्मृत्योरात्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं[1] जुहोत्येताँ हैव प्रजातिं प्रजायते यां प्रजापतिः प्राजायतैवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते॥७॥

---

उदियाय–य एष तपति। ततोऽयं प्रबभूव–योऽयं पवते। तत एवाग्निः पराङ् पर्य्यावर्त्त॥६॥

स हुत्वा प्रजापतिः प्र चाजायत, अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत। स यो हैवं विद्वानग्निहोत्रं जुहोति–एतां हैव प्रजातिं प्रजायते–यां प्रजापतिः प्राजायत। एवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते॥७॥

---

द्रव्यम् अजुहोत्। तत एष इति। तस्माद्धोमात् 'एषः' सूर्य उदित उत्पन्नो बभूव। पवमानो वायुरपि तत एवोत्पन्नः। एवमनयोरुत्पन्नयोः सतोः सः अग्निः अपि प्रजापतिसकाशात् भक्षणात् उपरतः पराङ्मुखः पर्यावृत्तो बभूवेत्यर्थः॥६॥

स हुत्वेत्यादि। यस्मादेवं प्रजापतिराहुत्या सूर्यादिलक्षणां प्रजामुदपादयत् 'अत्स्यतः' भक्षणं करिष्यतः 'अग्नेः' 'आत्मानम्' 'अत्रायत'। तस्माद् विदुषोऽप्येवं भवतीत्याह—स य इति॥७॥

---

जो कुछ कह रही है (आह)। इसलिये उसने (स्व + आह =) 'स्वाहा' कह कर आहुति दे दी। अतएव तब से यज्ञ में 'स्वाहा' कह कर आहुति दी जाती है। उस आहुति-होम से यह सूर्य उत्पन्न हुआ जो तपता है, और वह उत्पन्न हुआ जो बहता है अर्थात् वायु। इन दोनों अर्थात् सूर्य और वायु के उत्पन्न होने पर अग्नि भी प्रजापति से पराङ्मुख हुआ वापस लौट गया॥६॥

इस प्रकार प्रजापति ने आहुतियाँ देकर अपने को पुनर्जीवित कर लिया और अग्नि-रूपी मृत्यु से अपने को बचा लिया जो उनको खाने वाली थी। इसलिये जो बुद्धिमान् विज्ञ इस रहस्य को समझकर अग्निहोत्र-कर्म करता है वह उसी प्रकार

---

१. अग्निहोत्रं नाम अग्न्युद्देशेन सायं प्रातः क्रियमाणो होमविशेषः। अत्र द्रव्याणि पय आदीनि बहूनि आम्नातानि। तत्र पयो मुख्यं द्रव्यं क्रत्वङ्गतयाम्नातम्। इतराणि च काम्यानि द्रव्याणि यवागू-तण्डुल-दधि-घृतरूपाणि श्रुतावाम्नातानि। देवता चात्र अग्निर्मुख्या, अङ्गदेवता स्विष्टकृत् स्थानीया प्रजापतिः सायङ्काले, प्रातश्च मुख्या देवता सूर्यः, अङ्गदेवता तु पूर्वोक्ता एव। अतएव अग्निदेवताकत्वं प्रवृत्तिनिमित्तमादाय अग्निहोत्रशब्दो कर्मनामधेयमिति निर्णीतं पूर्वमीमांसायाम्।

स य॒त्र म्रि॒यते। य॒त्रैनमग्ना॒वभ्यादु॒धति तु॒दे॒षोऽग्नेरु॒धि-जायते॒ऽथास्य शु॒रीरमे॒वाग्नि॒र्दहति तद्यु॒था पितु॒र्व्वा मातु॒र्व्वा जा॒येतैवमे॒षोऽग्नेरु॒धिजायते शु॒श्वद्ध वा॒ ऽएष न सु॒म्भवति॒ योऽग्निहोत्रं न॒ जुहो॒ति तु॒स्माद्वा ऽअग्निहोत्रॐ हो॒तु॒व्यम्॥८॥

(न्त) तद्वा ए॒तत्। (दे) एव॒ व्विचिकित्सा॒यै जु॒न्म यत्प्रजा॒-पतिर्व्यु॒चिकित्सत्सव्विचि॒कत्सञ्छ्रे॒यस्यध्रियत यः प्र चा॒जायतात्स्य-तु॒श्चाग्नेर्मृत्यो॒रात्मा॒नमत्रा॒यत स यो॒ हैवमेतद्विचिकित्सा॒यै जु॒न्म व्वे॒द यु॒द्ध कि॒ञ्च व्विचि॒कित्सति श्रे॒यसि हैव॒ ध्रियते॥९॥

---

स यत्र म्रियते यत्रैनमग्नावभ्यादधति–तदेषोऽग्नेरधिजायते। अथास्य शरीरमेवाग्निर्दहति। तद् यथा पितुर्वा मातुर्वा जायेत, एवमेषोऽग्ने-रधिजायते। शश्वद्ध वा एष न सम्भवति–योऽग्निहोत्रं न जुहोति–तस्माद् वा अग्निहोत्रं होतव्यम्॥८॥

तद्वा एतदेव विचिकित्सायै जन्म–यत् प्रजापतिर्व्यचिकित्सत्। स विचिकित्सञ्छ्रेयस्यध्रियत–यः प्र चाजायत, अत्स्यतश्चाग्नेर्मृत्योरात्मान-मत्रायत। स यो हैवमेतद्विचिकित्सायै जन्म वेद–यद्ध किञ्च विचिकित्सति, श्रेयसि हैव ध्रियते॥९॥

---

**स यत्र म्रियत इति।** अग्निहोत्रहोमं कुर्वन् देहावसाने 'अग्नौ' प्रक्षिप्तः मातापितृशरीरादिवत् तस्मादग्नेः सकाशात् दिव्यशरीरोऽभिनव उत्पद्यते। यस्त्वग्निहोत्रं न जुहोति, स त्वेव नोत्पद्यत इत्यर्थः॥८॥

**तद्वा एतदित्यादि।** विचिकित्सापुरस्सरमाहुत्यनुष्ठानेन प्रजापतेः

---

की तेजस्वी, लोकहितकारी प्रजायें उत्पन्न करने में समर्थ होता है जैसे प्रजापति ने (सूर्य और वायु को उत्पन्न) किया और साथ ही खाने वाली अग्नि रूपी मृत्यु से भी अपने को बचा लेता है॥७॥

अग्निहोत्र-होम करने वाला व्यक्ति जब मरता है और जब उसको चिता की अग्नि में रखते हैं तो वह अग्नि से पुनः दिव्य सूक्ष्म शरीर धारण कर उठता है। चिता की अग्नि उसके केवल पार्थिव शरीर को ही जलाती है। जैसे मानव का पार्थिव शरीर माता-पिता से उत्पन्न होता है उसी प्रकार अग्निहोत्री का सूक्ष्म-दिव्य शरीर अग्नि से उत्पन्न होता है और जो अग्निहोत्र नहीं करता उसका दिव्य शरीर धारण सम्भव होता ही नहीं। इसलिये अग्निहोत्र-कर्म अवश्य करना चाहिये॥८॥

संशय पर आरूढ़ होकर नवीन जन्म या नई सोच के लिये ही मानव जन्म है

स हुत्वा न्यमृष्ट। ततो व्विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो व्वृक्षस्तत एते देवानां वीरा अजायन्ताग्निर्योऽयं पवते सूर्य्यः स यो हैवमेतान्देवानां व्वीरान्वेदाहास्य व्वीरो जायते॥१०॥

तऽउ हैतऽऊचुः। (व्वं) व्वयं वै प्रजापतिं पितरमनु स्मो हन्त व्वयं तत्सृजामहै यदस्मानन्वसदिति ते परिश्रित्य

---

स हुत्वा न्यमृष्ट। ततो विकङ्कतः समभवत्। तस्मादेषः, यज्ञियो यज्ञपात्रीयो वृक्षः तत एते देवानां वीरा अजायन्त–अग्निः, योऽयं पवते, सूर्यः। स यो हैवमेतान् देवानां वीरान् वेद–आहास्य वीरो जायते॥१०॥

त उ हैत ऊचुः–वयं वै प्रजापतिं पितरमनु स्मः, हन्त वयं तत्

---

श्रेय:प्राप्तिर्जाता, 'एवञ्चिद्' इदानीन्तनोऽपि यजमानो विमर्शपूर्वकानुष्ठानेन श्रेयः प्राप्नोतीत्यर्थः॥९॥

अग्निहोत्रहवणी स्रुक् विकङ्कतवृक्षेण निर्मातव्येत्यभिप्रेत्य तस्योत्पत्तिमाह— **स हुत्वेति**[1]। प्रागुक्तमग्निवायुसूर्याणां जन्म अनूद्य, तद्वेदनफलमाह—**तत एत इति**। देवानां मध्ये 'वीराः' प्रबला इत्यर्थः॥१०॥

अथ होमद्रव्यस्य पयस उत्पत्तिं वक्तुं[2] प्रथमतोगोरुत्पत्तिमाह—**त उ हेति**। यथाऽस्मदीयः पिता प्रजापतिः अस्मान् सृष्टवान् 'वयं' 'तम् अनु' 'स्मः' भवामः

---

किन्तु ध्यातव्य बात यह है कि प्रजापति संशयग्रस्त होते हुये भी श्रेय मार्ग पर आरुढ़ रहे, फलतः प्रजापति पुनरुज्जीवित तो हुए ही, अपने को मृत्युरूपी अग्नि से भी बचा लिया जो कि उन्हें भक्षण करना चाहता था। इसी प्रकार यह यजमान भी विमर्शपूर्वक अनुष्ठान द्वारा संशय पर विजय प्राप्त कर श्रेय पर ही आरुढ़ रहता है॥९॥

आहुति देकर प्रजापति ने (हथेलियाँ) मली। उससे विकङ्कत वृक्ष उत्पन्न हुआ। अतएव यह यज्ञ सम्बन्धी वृक्ष है और यज्ञ सम्बन्धी पात्र इससे बनाये जाते हैं। (यज्ञपात्रों के माध्यम से प्रदत्त आहुतियों के प्रभाव से) देवों में जो वीर (= श्रेष्ठ) है वे उत्पन्न हुये अर्थात् अग्नि, वायु और सूर्य। जो इन वीर (= श्रेष्ठ) देवों के माहात्म्य को जानता है उसके वीर (= श्रेष्ठ) सन्तति उत्पन्न होती है॥१०॥

अग्नि, वायु और सूर्य ने कहा—'हम पिता प्रजापति के पीछे हुये हैं अर्थात् उनकी सन्तति हैं। अब हम भी प्रजा उत्पन्न करें जो हमारे पीछें की पीढ़ी हों'। उन्होंने एक घेरा घेर कर हिङ्काररहित गायत्रसाम से परतत्त्व का स्तवन किया। जिससे उन्होंने घेरा था, वह

---

१. 'वैकङ्कतं स्रुवस्रुवं प्रताप्य पाणिना सम्मार्ष्टि' इति का.श्रौ.सू. ४.३२१। २. 'वक्ष्यन्' इति क्व.पा.।

गायत्रेणापहिङ्कारेण तुष्टुविरे तद्यत्पर्य्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्या स्तावः॥११॥

(स्ते) ते स्तुत्वा प्राञ्च ऽउच्चक्रमुः। पुनरेम ऽइति देवा एद्गाँ सम्भूताँ सा हैनानुदीक्ष्य हिञ्चकार ते देवा विदाञ्चकुरेष साम्नो हिङ्कार ऽइत्यपहिङ्कारँ हैव पुरा ततः सामास स ऽएष गवि साम्नो हिङ्कारस्तस्मादेषोपजीवनी-योपजीवनीयो ह वै भवति य एवमेतं गवि साम्नो हिङ्कारं व्वेद॥१२॥

---

सृजामहै-यदस्मानन्वसदिति। ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे। तद् यत्पर्यश्रयन् स समुद्रः। अथेयमेव पृथिव्या स्तावः॥११॥

ते स्तुत्वा प्राञ्च उच्चक्रमुः-पुनरेम इति देवा एद्गां सम्भूताम्। सा हैनानुदीक्ष्य हिंचकार। ते देवाः विदाञ्चक्रुः 'एष साम्नो हिङ्कारः' इति। अपहिङ्कारं हैव पुरा ततः सामास। स एष गवि साम्नो हिङ्कारः-तस्मादेषोपजीवनीया। उपजीवनीयो ह वै भवति-य एवमेतं गवि साम्नो हिङ्कारं वेद॥१२॥

---

'यत्' यत्र 'अस्मान्' 'अनु' अनन्तरम् 'असद्' भवेत् जायेत, 'तद् वयं सृजामहै' एवं प्रतिज्ञाय गां संसृजन्तः हिङ्कारवर्जितेन गायत्रसाम्ना बहिष्पवमानेन 'तुष्टुविरे' स्तुतवन्तः। 'तस्य' स्तोत्रदेशस्य 'यत्' परिश्रयणं 'स समुद्रः' अभवत् यश्च 'स्तावः' स्तोत्रदेशः, सा 'पृथिवी' जातेत्यर्थः॥११॥

ते स्तुत्वेति। पुनरेम इति। पुनरागच्छाम इति स्तोत्रदेशात् प्रागुत्क्रम्य तस्मात् स्तोत्रात् 'सम्भूतां गां ते देवाः' प्राप्नुवन्नित्यर्थः। सा हैनानित्यादि निगदसिद्धम्॥१२॥

---

समुद्र था और पृथिवी 'आस्ताव' (अर्थात् प्रार्थना का) स्थान थी॥११॥

वे स्तुति करके पूर्व की ओर चले गये, यह सोचकर कि—'हम पुनः आते हैं'। तभी देवगण ने प्रादुर्भूत हुई एक गौ को देखा और उसके पास गये। उसने उनकी ओर देखकर 'हिङ्कार' किया। देवों ने जाना कि यह सामवेदीय-हिङ्कार है। इसके पूर्व सामगान हिङ्कार-शून्य था। यह सामवेदीय-हिङ्कार गाय में विराजित था; इसलिये यह (गाय) सर्वतोभावेन रक्षणीय एवं सेवायोग्य है। जो विज्ञ-पुरुष गाय में इस सामवेदीय हिङ्कार के अवस्थिति को जानता है वह सुसंस्कृत जनों द्वारा सेवनीय हो जाता है॥१२॥

ते होचुः। (र्भ) भद्रं वा ऽइदमजीजनामहि ये गामजीजनामहि यज्ञोह्येवेयं नो ह्यृते गोर्यज्ञस्तायतेऽन्नँ ह्येवेयं यद्धि किञ्चान्नं गौरेव तदिति॥१३॥

तद्वाऽएतदेवैतासां नाम। (मै) एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यमिति बह्व्यो ह वा ऽअस्यैता भवन्त्युपनामुक ऽएनं यज्ञो भवति य ऽएवं विद्वानेतत्परिहरति साधु पुण्यमिति॥१४॥

---

ते होचुः–भद्रं वा इदमजीजनामहि–ये गामजीजनामहि यज्ञो ह्येवेयम्, नो ह्यृते गोर्यज्ञस्तायते। अन्नं ह्येवेयम्, यद्धि किञ्चान्नं–गौरेव तदिति॥१३॥

तद्वा एतदेवैतासां नाम, एतद्यज्ञस्य। तस्मादेतत्परिहरेत् साधु पुण्यमिति। बह्व्यो ह वा अस्यैता भवन्ति उपनामुक एनं यज्ञो भवति–य एवं विद्वानेतत्परिहरति–साधु पुण्यमिति॥१४॥

---

ते होचुरित्यादि। 'भद्रम्' उत्कृष्टं खलु 'इदम्' 'अजीजनामहिं' अजनयाम। तदेतत् भद्रत्वमाह—यज्ञो हीति। यस्माद् गोर्व्यतिरेके क्षीरघृतादिहविषोऽभावात् यज्ञो न विस्तीर्यते, तत इयं गौः यज्ञात्मिका। अन्नरूपत्वेनापि स्तौति—अन्नं हीति॥१३॥

तासां गवां यज्ञस्य च साधारणमेकं नामोपदिश्य प्रशंसति—तद्वा इति। गां यज्ञं च एतदुभयमुत्कृष्टं पुण्यरूपमिति अनेनाभिप्रायेण 'परिहरेत्' रक्षेत्। तस्य परिहरणस्य फलमाह—बह्व्यो हेति। 'उपनामुकः' उपनमनशीलः, यज्ञ एनमुपगतो भवतीत्यर्थः॥१४॥

---

देवगणों ने कहा—'यह जो हमने उत्पन्न किया वह भद्र अर्थात् अतिकल्याणप्रद है, जो हमने गाय उत्पन्न की; क्योंकि यह तो यज्ञ ही है। गाय के बिना यज्ञ हो ही नहीं सकता। यह अन्न भी है; क्योंकि जो भी कुछ अन्न है वह गाय की सहायता से ही है॥१३॥

यह ('गो' नाम) उन (गौओं) का भी है और यज्ञ का भी। इसलिये गौ एवं यज्ञ-इन दोनों की रक्षा करनी चाहिये यह समझकर कि—'अत्युत्तम-कार्य है तथा उत्कृष्ट पुण्य कार्य भी'। जो विज्ञ इस रहस्य को समझकर 'साधु, पुण्य' इन दो कार्यों को दुहराता या रक्षित करता है; (गायें) उसके लिये बहुतायत से (समृद्धि) देती है और यज्ञ उसकी ओर झुकता है॥१४॥

तामु हाग्निरभिदध्यौ। मिथुन्यनया स्यामिति ताँ सम्बभूव तस्याँ रेतः प्रासिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्याँ शृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां यदि रोहिण्याँ शुक्लमेव भवत्यग्निसङ्काशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः॥१५॥

(स्ते) ते होचुः (हु) हन्तेदं जुहवामहाऽइति कस्मै नऽइदं

---

तामु हाग्निरभिदध्यौ–मिथुन्यनया स्यामिति। तां सम्बभूव। तस्यां रेतः प्रासिञ्चत्। तत्पयोऽभवत्। तस्मादेतदामायां गवि सत्यां शृतम्, अग्नेर्हि रेतः। तस्माद्यदि कृष्णायाम्, यदि रोहिण्याम्, शुक्लमेव भवति अग्निसङ्काशम्, अग्नेर्हि रेतः–तस्मात् प्रथमदुग्धमुष्णं भवति अग्नेर्हि रेतः॥१५॥

ते होचुः–हन्तेदं जुहवामहा इति। कस्मै न इदं प्रथमाय होष्यन्तीति।

---

पयस उत्पत्तिमाह—तामु हेति। 'अभिदध्यौ' अभिध्यानं कृतवान्। कथमिति, एतया गवा मिथुनीभवानीति। तां सम्बभूवेत्यादि, स्पष्टम्॥१५॥

एवं पयोरूपस्य हविष उत्पत्तिमभिधाय, अग्निसूर्य्यवायूनां मध्ये कस्मै प्रथमं देयं कस्मै चानन्तरमित्येतद् विभजति—ते होचुरिति। ते देवाः 'ऊचुः' अस्मदीयः पिता प्रजापतिः यथा अजुहोत्, एवमिदं वयं 'जुहवामहै'। किञ्चेमे

---

अग्नि ने उससे प्रेम किया और चाहा कि मैं इसमें समाहित हो जाऊँ। अग्नि उसमें समाहित हो गये। अग्नि की शक्ति गौ में स्थापित हो गई। वह दूध हो गया। इसलिये गाय जब तक कच्ची रहती है (वह दूध) पकता है; क्योंकि वह अग्नि का वीर्य है। इसलिये चाहे काली गाय हो चाहे लाल, सभी का दूध सफेद ही होता है। अग्नि के समान चमकता हुआ; क्योंकि वह अग्नि का शक्ति-तत्त्व है। अतएव जब दूध पहले दुहा जाता है तो गर्म होता है; क्योंकि वह अग्नि का वीर्य (= शक्ति-तत्त्व) है॥१५॥

तब देवगणों ने कहा—'हम इसकी आहुति दें'। किन्तु 'यजमानगण पहले किस देवता के लिये दुग्ध-आहुति देंगे'? तब अग्नि ने कहा—'मेरे लिये'। वायु ने कहा—'मेरे लिये'। सूर्य ने कहा—'मेरे लिये'। वे निश्चय न कर सके और

**प्रथमाय होष्यन्तीति मह्यमिति हैवाग्निरुवाच मह्यमिति योऽयं पवते मह्यमिति सूर्य्यस्ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः प्रजापतिमेव पितरं प्रत्ययाम स यस्मै नऽइदं प्रथमाय होतव्यं वक्ष्यति तस्मै नऽइदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यन्तीति॥१६॥**

**स होवाच। (चा) अग्नयेऽग्निरनुष्ठ्या स्वँ रेतः प्रजनयिष्यते तथा प्रजनिष्यध्व ऽइत्यथ तुभ्यमिति सूर्य्यमथ**

---

**मह्यमिति हैवाग्निरुवाच, मह्यमिति–योऽयं पवते, मह्यमिति सूर्यः। ते न सम्पादयाञ्चक्रुः। ते हासम्पाद्योचुः–प्रजापतिमेव पितरं प्रत्ययाम, स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति, तस्मै न इदं प्रथमाय होष्यन्तीति। ते प्रजापतिं पितरं प्रतीत्योचुः–कस्मै न इदं प्रथमाय होष्यन्तीति॥१६॥**

**स होवाच–अग्नये। अग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते, तथा प्रजनयिष्यध्व इति। अथ तुभ्यमिति–सूर्यम्। अथ यदेव हूयमानस्य व्यश्नुते,**

---

यजमानाः 'नः' अस्माकं मध्ये 'कस्मै' 'प्रथमाय' 'होष्यन्ति' 'इति' उक्तवन्तः। **मह्यमित्यादि,** निगदसिद्धम्। **ते न सम्पादयाञ्चक्रुरिति।** 'ते' देवाः परस्परं सम्पन्नाः ऐकमत्यं गता न बभूवुरित्यर्थः॥१६॥

**स होवाचेति। अग्निरनुष्ठ्यै इति।** एवं विवदमानेषु आगतेषु स प्रजापतिरेवमुक्तवान्—'अग्नेः प्रथमं होतव्यम्' 'अग्निर्हि' 'अनुष्ठ्या' अनुष्ठानेन प्रयत्नेन स्वकीयं 'रेतः' गवि पयोरूपेण निरवर्त्तयत् 'तथा' यूयमपि। तस्मादग्नेरनन्तरमेव 'प्रजनिष्यध्वे' प्रजाता भवथ। तस्मादग्नय एव प्रथमं होतव्यमित्युक्त्वा, प्रजापतिः 'अथ' अनन्तरं 'तुभ्यम्' होतव्यम् 'इति' 'सूर्यम्'

---

अनिश्चय की स्थिति में उन्होंने कहा—पिता प्रजापति के पास ही (निर्णयार्थ) चलें। वे जिसको पहली आहुति के योग्य बतायेंगे, लोग उसी को इसकी पहली आहुति देंगे। वे देवगण, पिता प्रजापति के पास जाकर बोले—'हममें से किसको लोग पहले दुग्ध की आहुति देगें॥१६॥

प्रजापति ने कहा—'अग्नि के लिये। (क्योंकि) अग्नि ने स्व-प्रयत्न से गौ में अपने शक्ति-तत्त्व को दुग्ध के रूप में स्थापित किया तथा अग्नि के बाद आप लोगों की उत्पत्ति भी है। फिर सूर्य से कहा—'अग्नि के पश्चात् तुम्हारे लिये (आहुति

यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवतऽइति तदेभ्य इदमप्येतर्हि तथैवजुह्वत्यग्नयऽएव सायँ सूर्य्याय प्रातरथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवते॥१७॥

ते हुत्वा देवाः। (ऽ) इमां प्रजातिं प्राजायन्त यैषामियं प्रजातिरिमां विजितिं व्यजयन्त येयमेषां विजितिरिममेव लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्य्यः स यो हैवं

---

**तदेवैतस्य–योऽयं पवत इति। तदेभ्य इदमप्येतर्हि तथैव जुह्वति–अग्नय एव सायम्, सूर्याय प्रातः, अथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य–योऽयं पवते॥१७॥**

**ते हुत्वा देवा इमां प्रजातिं प्राजायन्त–यैषामियं प्रजातिः, इमां विजितिं व्यजयन्त–येममेषां विजितिः। इममेव लोकमग्निरजयत्, अन्तरिक्षं वायुः,**

---

प्रति उक्तवान्। हूयमानस्य च पयसः 'यद्' 'व्यश्नुते' विशुद्धिमाप्नोति[1] स एव वायोर्भाग इति वायुं प्रत्यब्रवीत्। **तदेभ्य इत्यादि।** यस्मादेवं प्रजापतिनोक्तम्, तस्मादेवकारणात् तत् पय एव 'अग्नये सायं जुह्वति', 'प्रातः सूर्य्याय' इति[2] विभागः सम्पन्नः॥१७॥

**'ते हुत्वा देवा इति।** ते च देवाः' एवं 'हुत्वा' प्रजात्यादिष्टफलं प्राप्नुवन्। एतद् ज्ञात्वा इदानीन्तनोऽपि यजमानो 'यः' 'अग्निहोत्रं जुहोति', सः 'एताम्' अग्निसूर्य्यादिभिः प्राप्तां प्रजातिम्। इतः सुगमम्।

---

दी जायेगी) और जो (दूध) आहुति देने से बचा रहेगा वह उसके लिये जो बहता है (अर्थात् वायु के लिये) होगा। इसलिये अब तक लोग इसी प्रकार आहुति देते हैं। सायंकाल में अग्नि के लिये और प्रातःकाल में सूर्य के लिये और जो आहुति देने से बचा रहता है वह वायु के लिये होता है॥१७॥

इस प्रकार आहुति देकर देवों ने अपने को प्रजा के रूप में उत्पन्न किया। जिस प्रकार उत्पन्न हुये तथा उन्होंने जो विजय पाई वह वस्तुतः प्रख्यात है। अग्नि ने यह पृथ्वी लोक जीता, वायु ने अन्तरिक्ष और सूर्य ने द्युलोक। जो विज्ञ इस

---

१. 'विशुद्धिमेति'–इ.क्व.पा.। २. 'क्षीरहोमी' इति का.श्रौ.सू. ४.१०.१६। 'वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत्—इति च तत्रैव। तथापयसा स्वर्गकामः पशुकामो वा, यवाग्वा ग्रामकामः, तण्डुलैर्बलकामः, दध्नेन्द्रियकामः, अनधिश्रयणे च श्रुतिसामर्थ्याभ्यां, घृत तेजस्कामः, संवत्सरं जुहुयादेतेषामकैकेन कामसंयोगे'–इत्यादीनि सूत्राणि (का.श्रौ.सू. ४.१५.२१-२६) पर्यालोचने।

विद्वानग्निहोत्रं जुहोत्येताꣳ हैव प्रजातिं प्रजायते यामेत-ऽएतत्प्राजायन्तैतां विजितिं विजयते यामेतऽएतद्व्यजयन्तैतैरु हैव

---

दिवमेव सूर्यः। स यो हैवं विद्वानग्निहोत्रं जुहोति–एतां हैव प्रजातिं प्रजायते–यामेत एतत् प्राजायन्त, एतां विजितिं विजयते–यामेत एतद्व्यजयन्त। एतैरु

---

एतावता अग्निहोत्राख्यस्य कर्मणः पयो द्रव्यम्, तच्च सायम्प्रातःकालयोरनुष्ठेयम्[1], तत्र सायङ्कालीनस्य अग्निर्देवता[2], प्रातःकालीनस्य सूर्यः[3], इत्येतत् प्रतिपादितं भवति॥१८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम्॥२॥२॥४॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥१॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च॥२॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः।

---

रहस्य को समझकर अग्निहोत्र करता है उसके उसी प्रकार की प्रजा होती है जैसे देवों की हुई और वह शत्रुओं पर उसी प्रकार विजय पाता है जैसे देवों ने प्राप्त की। जो इस रहस्य को समझकर अग्निहोत्र करता है वह (उन देवों) के साथ

---

१. 'सायं प्रातर्वा' का.श्रौ.सू. ४.१५-२७। २. 'प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा'–'अग्निर्वर्च इति ब्रह्मवर्चसकामस्य' का.श्रौ.सू. ४.१४.१४-१५। ३. 'अग्निशब्दे सूर्यः–रात्र्युषसाह्वेति वा–ज्योतिः सूर्य इति वा प्रातः' इति का.श्रौ.सू. ४.१५.८-१०।

सलोको भवति यऽ एवं विद्वानग्निहोत्रं जुहोति तस्माद्वा ऽअग्निहोत्रँ होतव्यम्॥१८॥

इति द्वितीयकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम्॥

इति द्वितीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम्॥२॥२॥४॥

इति द्वितीयकाण्डे द्वितीयोऽध्यायः॥२॥२॥

---

हैव सलोको भवति, य एवं विद्वानग्निहोत्रं जुहोति। तस्माद्वा अग्निहोत्रं होतव्यम्॥१८॥

---

आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः॥३॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयोऽध्यायः समाप्तः।।२।।२।।

---

उस-उस लोक का हिस्सेदार होता है। इसलिये अग्निहोत्र अवश्य करना चाहिये॥१८॥४॥

❊

## तृतीयाध्याये प्रथमं ब्राह्मणम्

सूर्य्यो ह वा ऽअग्निहोत्रम्। तद्यदेतस्या ऽअग्न आहुतेरुदैत्तस्मात्सूर्य्यो ऽअग्निहोत्रम्॥१॥

(ॐ) स यत्सायमस्तमिते जुहोति। य इदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति यऽइदं तस्मिन्निह सति जुहवानीति तस्माद्धै सूर्य्योऽग्निहोत्रमित्याहुः॥२॥ [ शतम् १००० ]

---

सूर्यो ह वा अग्निहोत्रम्। तद्यदेतस्या अग्ने आहुतेरुदैत्, तस्मात्सूर्योऽग्निहोत्रम्॥१॥

स यत्सायमस्तमिते जुहोति–य इदं तस्मिन्–इह सति जुहवानीति। अथ यत् प्रातरनुदिते जुहोति–य इदं तस्मिन् इह जुहवानीति। तस्माद्धै सूर्योऽग्निहोत्रमित्याहुः॥२॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम्॥१॥

सायंप्रातर्होमयोः कालविशेषं विधित्सुरग्निहोत्रं सूर्यात्मना प्रशंसति—**सूर्यो हेति।** तदुपपादयति—**एतस्या इति।** प्रजापतिना प्रथमं हुताया इत्यर्थः॥१॥

प्रकारान्तरेण सूर्यात्मकतां ब्रुवन् सायंप्रातर्होमयोः कालविशेषं विधत्ते—**स यदिति।** 'यः' यजमानः 'इह' अग्नौ तस्मिन् सूर्ये 'सति' 'इदं' हविः जुहवानि इति मन्यते, सः सायमग्निहोत्रमस्तमिते[2] कुर्यात्, प्रातर्होमञ्चानुदिते[3], अनुदितो हि सूर्योऽग्निनैकीभूतो वर्त्तते; 'अग्निं वाव आदित्यः सायं प्रविशति'–(तै.ब्रा. २.१.३.९) इति श्रुतेः। यस्मादेवमग्निहोत्रं सूर्यसम्बद्धम् तस्मात् तादात्म्येन स्तुतिः॥२॥

---

सूर्य ही अग्निहोत्र है; क्योंकि वह प्रजापति की प्रथम आहुति से उदित हुआ इसलिये सूर्य अग्निहोत्र है॥१॥

जो यजमान यह सोचकर कि मैं सायं सूर्य की उपस्थिति में अग्निहोत्र की आहुति दूँ, उसे सूर्यास्त के समय अग्नि में अग्निहोत्र की आहुति देनी चाहिए और प्रातःकाल सूर्योदय से पहले आहुति देनी चाहिये क्योंकि तब ('अग्नि वाव

---

१. 'उद्धरेति यजमानो ब्रूयात्सायंप्रातयोरग्निहोत्रे', का.श्रौ.सू. ४.१३.१। २. 'अस्तमिते जुहोति', का.श्रौ.सू. ४.१४.६। ३. 'प्रातर्जुहोत्यनुदिते', का.श्रौ.सू. ४.१५.१।

(र) अथ यदस्तमेति। तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्व्वाः प्रजा अनुगर्भा भवन्तीलिता हि शेरे सञ्जानाना ऽअथ यद्रात्रिस्तिर ऽ एवैतत्करोति तिर ऽइव हि गर्भाः॥३॥

स यत्सायमस्तमिते जुहोति। गर्भमेवैतत्सन्तमभिजुहोति

---

**अथ यदस्तमेति, तदग्नावेव योनौ गर्भो भूत्वा प्रविशति। तं गर्भं भवन्तमिमाः सर्वाः प्रजा अनुगर्भा भवन्ति ईलिता हि शेरे सञ्जानानाः। अथ यद् रात्रिः, तिर एवैतत्करोति। तिर इव हि गर्भाः॥३॥**

**स यत् सायमस्तमिते जुहोति–गर्भमेवैतत्सन्तमभिजुहोति, गर्भं सन्तमभि**

---

रात्रौ सूर्यस्याग्न्यवस्थानं प्रतिपादयति—**अथ यदिति**। सूर्यस्य गर्भभावमनु रात्रौ 'सर्वाः प्रजाः' 'गर्भा' एव 'भवन्ति'। तासां गर्भसाम्यमाह—**ईलिता हीति**। रात्रौ हि सर्वाः प्रजाः 'सञ्जानानाः' समानमेकविधं ज्ञानं प्राप्ताः 'ईलिताः' स्तुता हृष्टाः 'शेरे' शेरते। 'लोपस्त आत्मनेपदेषु' इति तलोपः (पा.सू. ७.१.४१) पुनरपि गर्भसाम्यमाह—**अथ यदिति**। गर्भरूपेणाग्नावस्थितं सूर्यं रात्रिः 'तिर एव' तिरोहितमाच्छादितं करोति। यस्तदेवं तस्मात् असौ 'गर्भः' 'तिर इव हि' लौकिकगर्भस्य प्रसिद्धिर्हि शब्देनोक्ता॥३॥

एवं गर्भरूपत्वं प्रतिपाद्य अस्तमिते होममुपपादयति—**स यत्सायमिति**। **गर्भं सन्तमिति**। अस्तमयात्, पूर्वं हि सूर्यस्याकाशेऽवस्थानाद् गर्भभावो नास्ति, तदूर्ध्वन्तु अग्नौ गर्भरूपेण प्रविशन्तम् 'अभि' होमं कुर्वन् परस्मिन् दिवसे

---

आदित्यः सायं प्रविशति')— इस श्रुतिवाक्य के अनुसार सूर्य अग्नि में ही समाहित रहता है। इसलिये 'सूर्य ही अग्निहोत्र है' ऐसा कहा जाता है॥२॥

जब सूर्य अस्तंगत हो जाता है तब अग्निरूपी योनि (= सुरक्षित स्थान) में गर्भ होकर प्रवेश कर जाता है और सूर्य के गर्भस्थ हो जाने पर यह समस्त प्रजायें भी तिमिर के विवर में गर्भस्थ हो जाती हैं तथा रात्रि में प्रजायें समभाव से प्रसन्न होकर सो जाती हैं। रात्रि उस (सूर्य) को इसलिये छिपा लेती है क्योंकि गर्भ भी तो छिपा रहता है॥३॥

वह सायंकाल सूर्य अस्त होने पर इसलिये आहुति देता है कि (सूर्य) गर्भरूप में है। उसको अग्नि की आहुति से पोषण मिले और चूँकि उसके गर्भस्थ रहते

**गर्भᳪं᳭ सन्तमभिकरोति स यद्गर्भᳪं᳭ सन्तमभिजुहोति तस्मादिमे गर्भा अनश्नन्तो जीवन्ति॥४॥**

**( न्त्यु ) अथ यत्प्रातरनुदिते जुहोति। प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान ऽउदेति शश्वद्ध वै नोदियाद्यद‐स्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा ऽएतामाहुतिं जुहोति॥५॥**

---

**करोति। स यद्गर्भं सन्तमभिजुहोति–तस्मादिमे गर्भा अनश्नन्तो जीवन्ति॥४॥**

**अथ यत् प्रातरनुदिते जुहोति–प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति। शश्वद्ध वै नोदियाद्–यदस्मिन्नेतामाहुतिं न जुहुयात्। तस्माद्वा एतामाहुतिं जुहोति॥५॥**

---

पुनर्जनयितुं वर्द्धयति। **यद् गर्भमित्यादि**। यस्माद् गर्भभूतस्य रात्रावग्निहोत्रहविषा वर्द्धनम्, तस्मादेवञ्जातीया इतरे गर्भाः 'अनश्नन्तः' अशनमकुर्वन्तोऽपि 'जीवन्ति' वर्द्धन्ते॥४॥

एवं सायंहोमस्य गर्भवृद्धिहेतुतामभिधाय, प्रातर्होमस्य तज्जननहेतुत्वमुप‐पादयन्, तस्य ततः प्रागेवानुदिते कर्त्तव्यतामाह—**अथ यत् प्रातरिति**। अन्वयव्यतिरेकाभ्यां प्रातराहुतेर्जननहेतुतामुपपादयति—**सोऽयमिति**। **तेजो भूत्वेति**। आहुत्या वर्द्धितस्तेजस्वी भूत्वेत्यर्थः। **शश्वद्ध वा इति**। नित्यमेवेत्यर्थः॥५॥

---

अग्नि में आहुति देता है इसलिये समस्त प्राणियों के गर्भस्थ जीव बिना खाये जीते रहते हैं अर्थात् माता के अन्नपानादि से ही उनका पोषण होता है॥४॥

प्रातःकाल सूर्योदय होने के पूर्व इसलिये आहुति देता है कि इस (सूर्यरूपी बालक) को (अग्नि) जन्म दे। वह (गर्भस्थ सूर्यरूपी शिशु) तेजस्वी होकर चमकता हुआ निकलता है। (प्रकृति में प्रजापति द्वारा लोक‐कल्याण के लिये अहर्निश किये जाने वाले) अग्निहोत्र की आहुति यदि न दी जाती तो निश्चय ही प्रतिदिन सूर्य की उत्पत्ति न होती। इसलिये (अनुकृति‐यज्ञ के रूप में) वह आहुति देता है॥५॥

---

१. सति चात्र बहवः काम्यकालविधयः। तद्यथा—'प्रथमास्तमिते पर्युदयञ्च स्वर्गकामस्य, तमोऽत्यये सायं जुहुयाद्व्रियति प्रातरायुष्कामस्य, अन्तःपशौ पशुकामस्य सायं प्रातः, शयाने श्रीकामस्य प्रातः' का.श्रौ.सू. ४.१५.१२-१५। तथैव होमायाग्न्यवस्था अपि बहुविधास्तत्रैवोक्ताः—'प्रथमसमिद्ध धूप्यमाने प्रजासु निहत्येव सहसान्नमत्स्यतः, भूयिष्ठार्चिषि गृहीत्वेव सहसा, प्रदीप्ततमे श्रीयशस्कामस्य, अर्चिः‐प्रत्यवाये मैत्रेणान्नमत्स्यतः अंगारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य' इति का.श्रौ.सू. ४.१५.१६-२०।

स यथाऽहिस्त्वचो निर्मुच्येत। (तै) एवꣳ रात्रेः पाप्मनो निर्मुच्यते यथा ह वाऽअहिस्त्वचो निर्मुच्येतैवꣳ सर्व्वस्मात्पाप्मनो निर्मुच्यते य ऽएवं विद्वानग्निहोत्रं जुहोति तदेतस्यैवानु प्रजातिमिमाः सर्व्वाः प्रजाऽअनु प्रजायन्ते वि हि सृज्यन्ते यथार्थम्॥६॥

(ꣳ) स यः पुराऽऽदित्यस्यास्तमयात्। (दा) आहवनीय-मुद्धरत्येते वै विश्वे देवा रश्मयो योऽथ यत्परं भाः प्रजापतिर्व्वा

---

स यथाऽहिस्त्वचो निर्मुच्येत–एवं रात्रेः पाप्मनो निर्मुच्यते। यथा ह वा अहिस्त्वचो निर्मुच्येत–एवं सर्वस्मात्पाप्मनो निर्मुच्यते–य एवं विद्वानग्निहोत्रं जुहोति। तदेतस्यैवानु प्रजातिमिमाः सर्वाः प्रजा–अनु प्रजायन्ते। वि हि सृज्यन्ते यथार्थम्॥६॥

स यः पुराऽऽदित्यस्यास्तमयादाहवनीयमुद्धरति। एते वै विश्वे देवा रश्मयः, योऽथ यत्परं भाः, प्रजापतिर्वा स इन्द्रो वा। तदु ह वै विश्वे देवा

---

उद्यतः सूर्यस्य तेजःप्राप्तिं दृष्टान्तेनोपपादयति—**स यथेति**। **रात्रेः पाप्मन इति**। रात्रिरूपात् तेजःप्रतिबन्धकात् पापादित्यर्थः। एवं सूर्याग्निहोत्रहोमात्यय-निर्मोकं प्रतिपाद्य विदुषोऽपि प्रतिपादयति—**यथा ह वा इति**। **वि हि सृज्यन्त इति**। अनुदितहोमान्ते सूर्यस्योदये सति 'यथार्थं' यथाप्रयोजनं 'सर्वाः प्रजाः' विसृज्यन्ते प्रवर्त्तन्त इत्यर्थः॥६॥

सायमग्निहोत्रस्याहवनीयविहरणमस्तमयात् प्रागेव कर्त्तव्यमिति विधिमभिप्रेत्य सिद्धवदनुवदति—**स यः पुरेति**। **आहवनीयमुद्धरतीति**। गार्हपत्यादाहवनीयं[1] प्रणयेदित्यर्थः। एतदुपपादयितुं यजमानगृहं प्रति देवानामागमनमाह—**एते वा इत्यादिना**। एते खलु सूर्यस्य'रश्मयः' 'विश्वे देवाः' 'अथ' 'यत्' 'परं भाः'

---

जिस प्रकार साँप केंचुली छोड़ता है उसी प्रकार सूर्य पाप-युक्त रात्रि को छोड़ देता है। जो विज्ञ इस रहस्य को समझकर (प्रतिदिन) अग्निहोत्र करता है वह उसी प्रकार समस्त पापों से निर्मुक्त हो जाता है जैसे—साँप केंचुली से। उस (सूर्य) के उदित होने पर सब प्रजायें फिर से स्फूर्त होकर उत्पन्न हो जाती अर्थात् जग जातीं है; तथा अपने प्रयोजन के अनुरूप विचरती हैं॥६॥

(सायंकालीन अग्निहोत्र के लिये) वह जो सूर्यास्त से पहले (गार्हपत्य से) आहवनीय को निकालता है (उसका कारण यह है कि—) सूर्य-किरणों में ही

---

१. गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः। इति का० श्रौ० सू० ४.१३.३।

स ऽइन्द्रो वै तदु ह वै व्विश्वे देवा अग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृतमागच्छन्ति तस्माद्देवा ऽअप- प्रयन्ति तद्वाऽअस्मै तद्व्यृध्यते यस्माद्देवा अपप्रयन्ति तस्यानु व्यृद्धिं यश्च व्वेद यश्च नानुद्धृतमभ्युस्तमगादित्याहुः॥७॥

(र)अथ यः पुराऽऽदित्यस्यास्तमयात्। (दा) आहवनीय- मुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं

---

अग्निहोत्रं जुह्वतो गृहानागच्छन्ति। स यस्यानुद्धृतमागच्छन्ति, तस्माद् देवा अपप्रयन्ति। तद्वा अस्मै तद् व्यृध्यते–यस्माद् देवा अपप्रयन्ति। तस्यानु व्यृद्धिं-यश्च वेद, यश्च न,–अनुद्धृतमभ्यस्तमगादित्याहुः॥७॥

अथ यः। पुराऽऽदित्यस्यास्तमयादाहवनीयमुद्धरति। यथा श्रेयस्या-

---

रश्मीनामुपर्यवस्थितं सूर्याख्यं ज्योतिः 'स प्रजापतिर्वा इन्द्रो वा' तत् ज्योतिः प्रजापत्यात्मकमिन्द्रात्मकं च विकल्पेन भवतीत्यर्थः। 'तेऽस्तमयात् प्रागवस्थिता विश्वे देवाः' अग्निहोत्रिणो यजमानस्य 'गृहान् आगच्छन्ति' ते चागता आहवनीयानुद्धरणे सत्याश्रयाभावात् निवर्त्तन्ते, उद्धृते त्वाहवनीये तं प्रविश्य निविशन्त इत्याह—स यस्यानुद्धृतमित्यादिना। **तद्वा अस्मा इति**। आगतानां देवानां यदपगमनम् तेन अस्मै यजमानाय तद् अग्निहोत्रं व्यृद्ध्यते विगतर्द्धिकं भवतीत्यर्थः। **तस्यानु व्यृद्धिमिति**। 'तस्य' अग्निहोत्रस्य 'व्यृद्धिम्' अनुलक्ष्य, 'यश्च' एवं 'वेद', 'यश्च' 'न वेद' ते सर्वे अनुद्धृतमाहवनीयमभिलक्ष्य सूर्योऽस्तमगादिति सर्वे निन्दन्तीत्यर्थः॥७॥

**अथ यः पुरेति। आवसथेनोपक्लृप्तेनेति।** आवसन्त्यस्मिन्निति 'आवसथम्' आसनम्। तेनोपक्लृप्तेन आयास्यन्तं श्रेयांसं यथोपासीत, 'एवं'

---

विश्वेदेव (सभी देव) अवस्थित रहते हैं और जो उत्कृष्ट प्रकाश-स्रोत है अर्थात् सूर्यमण्डल वह प्रजापति या इन्द्र हैं। अतः अग्निहोत्र करने वाले के घर (सूर्य किरणों के माध्यम से) सब देवता पहुँच जाते हैं और जो अग्निहोत्री सूर्यास्त के पूर्व आहवनीय का अग्न्युद्धरण नहीं करते तो देवगण आकर आश्रयाभाव के कारण लौट जाते हैं। जिसके यहाँ से देवतागण निराश लौट जाँय उसका अग्निहोत्र निष्फल हो जाता है तथा उसकी विफलता के विषय में विज्ञ एवं अनभिज्ञ दोनों लोग कहते हैं कि—इसका सूर्य अस्त हो गया; क्योंकि इसने (गार्हपत्य से आहवनीय अग्नि का) उद्धरण यथाकाल नहीं किया॥७॥

सूर्यास्त से पहले आहवनीय अग्नि के उद्धरण (निकालने) का कारण यह भी

तत्स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते॥८॥

स यत्सायमस्तमिते जुहोति। (त्य) अग्नावेवैभ्य ऽएतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य ऽएवैभ्यऽएतज्जुहोति तस्मादुदितहोमिनां व्विच्छिन्नमग्निहोत्रं मन्यामह ऽइति ह स्माहासुरिर्यथा शून्यमावसथमाहरेदेवं तदिति॥९॥

---

गमिष्यत्यावसथेनोपक्लृप्तेनोपासीत एवं तत्। स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते॥८॥

स यत् सायमस्तमिते जुहोति–अग्नावेवैभ्य एतत्प्रविष्टेभ्यो जुहोति। अथ यत्प्रातरनुदिते जुहोति–अप्रेतेभ्य एवैभ्य एतज्जुहोति। तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह–इति ह स्माहासुरिः। यथा शून्यमावसथमाहरेद्–एवं तदिति॥९॥

---

'तत्' अस्तमयात् प्राक् आहवनीयोद्धरणमित्यर्थः। निविशन्त इति 'नेर्विशः'–(पा.सू. १.३.१७) इत्यात्मनेपदम्॥८॥

**स यत् सायमित्यादि।** निगदसिद्धम्। **तस्मादुदितहोमिनामित्यादि।** यस्मात् सूर्यरश्मिरूपा विश्वेदेवा उदयात् प्राक् अग्नौ आसते, उदिते च सूर्ये ततोऽपगच्छन्ति, तस्मात् उदयात् परं प्रातर्होमं कुर्वताम् 'अग्निहोत्रं विच्छिन्नम्' एव भवति। कथं[1] विच्छिन्नमित्यत ऊर्द्धं दर्शयति—**यथा शून्यमिति।** 'यथा' आगतेऽतिथौ गृहापगते सति 'शून्यं' तदावासस्थानं प्रतिपन्नमिति न तर्पणीयान्नपानादिकम् 'आहरेत्' 'एवं' आहवनीयाद्रश्मिरूपेषु देवेषु 'तत्' उदितं सूर्यं प्रति गतेषु तदुद्देशेनाहवनीयहोम इत्यर्थः॥९॥

---

है कि (घर में) जब कोई विशिष्ट अतिथि आने वाला होता है तो घर को साफ करके आसनादि बिछाकर सत्कारपूर्वक प्रतीक्षा करते हैं, उसी प्रकार यह भी है; क्योंकि सूर्यास्त के पूर्व अग्न्युद्धरण होने पर देवतागण आकर उसके आहवनीय-स्थान में प्रविष्ट हो जाते हैं और उसी आहवनीय-स्थान में ठहर जाते हैं॥८॥

वह सायंकाल सूर्यास्त होने पर अग्नि में प्रविष्ट देवगणों के लिये आहुति देता है और प्रातःकाल सूर्योदय होने से पहले। (इन कालों में) आहुति देने का प्रयोजन यह है कि देवगणों के जाने के पूर्व ही आहुति दे दी जाय। इसीलिये

---

१. कथं विच्छित्तिरित्येतद्दर्शयति। इति क्व.पु.पाठः।

**द्वयं वा ऽइदं जीवनम्। (म्मू) मूलि चैवामूलं च तदुभयं देवानाँ सन्मनुष्या ऽउपजीवन्ति पशवो मूला ओषधयो मूलिन्यस्ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति॥१०॥**

**स यत्सायमस्तमिते जुहोति। (त्य) अस्य रसस्य जीवनस्य**

---

**द्वयं वा इदं जीवनम्–मूलि चैवामूलं च। तदुभयं देवानां सन्मनुष्या उपजीवन्ति। पशवो मूलाः, ओषधयो मूलिन्यः। ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वाऽपः पीत्वा तत एष रसः सम्भवति॥१०॥**

**स यत् सायमस्तमिते जुहोति–अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि,**

---

एतावेवास्तमितानुदितहोमौ प्रकारान्तरेण प्रशंसति—**द्वयं वा इदमित्यादिना। देवानां सदिति।** 'देवानां' स्वभूतं सदित्यर्थः। किं तत्? मूलं किं वा मूलयुक्तम्? **एष रस इति।** क्षीरात्मको रस इत्यर्थः॥१०॥

**स यत्सायमस्तमित इति। अस्य रसस्य जीवनस्येति।** मूल्यमूलोभयनिष्पन्नस्य सर्वप्राणिजीवनहेतोः क्षीरात्मकस्य रसस्य भागं प्रथमं 'देवेभ्यः' तत्स्वामिभ्यः 'जुहवानि' पश्चात् तदुपभुक्तशेषैः सर्वे वयम् 'उपजीवामः' 'इति' अनेनाभिप्रायेण पयसा[1] 'अग्निहोत्रं' जुहुयादित्यर्थः। तस्य प्रयोजनमाह—

---

आसुरि ऋषि का कहना था कि सूर्योदय होने के पश्चात् आहुति देने वालों का अग्निहोत्र वैसे ही व्यर्थ हो जाता है जैसे आगत अतिथि के चले जाने पर ख़ाली प्रकोष्ठ में कोई भोजनादि ले जाय॥९॥

जीवन के आधार-तत्त्व दो प्रकार के हैं। जड़ वाले पदार्थ और बिना जड़ वाले पदार्थ। ये दोनों देवताओं को (ग्राह्य) हैं। इन्हीं के सहारे मनुष्य भी जीते हैं। पशु बिना जड़ के हैं और औषधियाँ जड़ वाली, बिना जड़ वाले पशु जब जड़ वाली औषधियों को खाते और जल पीते हैं तब (दुग्ध रूपी) रस उत्पन्न होता है॥१०॥

वह (यजमान) सूर्यास्त के पश्चात् सायंकाल देवगणों को आहुति इस अभिप्राय से देता है कि इस सर्वप्राणि जीवन हेतुभूत दुग्ध-रस की आहुति सर्वप्रथम देवताओं के लिये दी जाय; क्योंकि इसके प्रथमाधिकारी वे हीं है; इसके पश्चात् उनके भुक्तशेष

---

१. 'पयसा स्वर्गकामः पशुकामो वा' का.श्रौ.सू. ४.३६५।

देवे॒भ्यो जुहवानि य॒देषामिदꣳ॒ स॒दुपजी॒वामऽ इ॒ति स यत्त॒तो रा॒त्र्या॒श्नाति हुतोच्छि॒ष्ट॒मेव त॒न्नि॒र॒वत्तबल्यश्नाति हुतोच्छि॒ष्ट॒स्य॒ ह्ये॒वाग्निहोत्रं जु॒ह्वदशिता॥११॥

(ता॒थ) अ॒थ य॒त्प्रातर॒नुदिते जु॒हो॒ति। (त्य) अस्य र॒सस्य जी॒वनस्य देवे॒भ्यो जुहवानि य॒देषामिदꣳ॒ स॒दुपजी॒वाम इ॒ति स यत्त॒तोऽह्नाश॒नाति हुतोच्छि॒ष्ट॒मेव त॒न्नि॒र॒वत्तबल्यश्नाति हुतोच्छि॒ष्ट॒स्य॒ ह्ये॒वाग्निहोत्रं जु॒ह्वदशि॒ता॥१२॥

---

यदेषामिदं सदुपजीवाम इति। स यत्ततो रात्र्याऽश्नाति, हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति। हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता॥११॥

अथ यत् प्रातरनुदिते जुहोति–अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि–यदेषामिदं सदुपजीवाम इति। स यत्ततोऽह्नाऽश्नाति, हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति। हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता॥१२॥

---

स यदिति। 'ततः' अतो होमानन्तरं रात्र्या कालेन 'यत्' अशितं भवति, 'तत्'[1] सर्वं 'हुतोच्छिष्टमेव' भुक्तं भवति। **निरवत्तबलीति**। निष्कृष्यावत्तो बलिर्देवभागो यस्मात्, तन्निरवत्तबलि। एवम् 'अग्निहोत्रं जुह्वत्' पुरुषः हुतोच्छिष्टस्यैव रात्रौ 'अशिता' भोक्ता भवति॥११॥

प्रातर्होमेऽप्येवमाह—**अथ यदिति**॥१२॥

---

का हम भोग करें। भोजन पर ही हम जीते हैं और जो वह रात्रि में भोजनादि करता है वह हुत-शेष है जिसमें से बलि (= देवभाग) निकाला जा चुका है। जो अग्निहोत्र करता है वह रात्रि में यज्ञ हुत-शेष (= देवताओं के प्रसाद) को भक्षण करता है॥११॥

और जो प्रातःकाल सूर्योदय से पूर्व आहुति देते हैं उसका अभिप्राय यह है कि इस दुग्धरूपी जीवन-रस की देवताओं के लिये आहुति दी जाय; क्योंकि यह मूलतः उनका है जिसे खाकर हम जीते हैं। प्रातः अग्निहोत्र के बाद वह जो दिन में भोजन करता है वह भी यज्ञ-शेष होता है; क्योंकि उसमें से बलि अर्थात् देवभाग निकाला जा चुका होता है। जो अग्निहोत्र करता है वह यज्ञ शिष्टाशिता होता है॥१२॥

---

१. तत्सर्वं हुतोच्छिष्टमेव। इति क्व पु पाठः।

तदाहुः। समेवान्ये यज्ञास्तिष्ठन्तेऽग्निहोत्रमेव न सन्तिष्ठतेऽपि द्वादशसंव्वत्सरमन्तवदेवाथैतदेवानन्तᳪं सायᳪं हि हुत्वा व्वेद प्रातर्होष्यामीति प्रातर्हुत्वा व्वेद पुनः सायᳪं होष्यामीति तदेतदनुपस्थितमग्निहोत्रं तस्यानुपस्थितिमन्वनुपस्थिता ऽइमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते यऽएवमेतदनुपस्थितमग्निहोत्रं व्वेद॥१३॥

---

तदाहुः। समेवान्ये यज्ञास्तिष्ठन्ते, अग्निहोत्रमेव न सन्तिष्ठते, अपि द्वादशसंवत्सरम्–अन्तवदेव, अथैतदैवानन्तम्। सायं हि हुत्वा वेद–प्रातर्होष्यामीति। प्रातर्हुत्वा वेद–पुनः सायं होष्यामीति। तदेतदनुपस्थितमग्नि-होत्रम्। तस्यानुपस्थितिमन्वनुपस्थिता इमाः प्रजाः प्रजायन्ते। अनुपस्थितो ह वै श्रिया प्रजया प्रजायते–य एवमेतदनुपस्थितमग्निहोत्रं वेद॥१३॥

---

अग्निहोत्रहोमस्येतरयज्ञवैलक्षण्येनासंस्थितत्वं प्रतिपादयति—**तदाहुरिति**। 'अन्ये' ज्योतिष्टोमादयो 'यज्ञा:' 'संतिष्ठन्ते' समाप्यन्त एव। यत्तु द्वादशसंवत्सरसाध्यं सत्रम्, तदप्यवसानवदेव; अग्निहोत्रं तु 'अनन्तं' अन्तरहितम्। तदेवानन्त्यं दर्शयति—**सायं हीति**। अस्त्वेवमग्निहोत्रस्या-संस्थितयज्ञत्वम्। किं तत इत्याह—**तस्यानुपस्थितिमन्विति**। अनुपस्थिताः परिसमाप्तिरहिताः। 'श्रिया' 'अनुपस्थितः' अपरिसमाप्तः, सर्वदा तद्युक्त इत्यर्थः॥१३॥

---

अग्निहोत्र के महत्त्व के विषय में कहा जाता है कि—अन्य सभी यज्ञ समाप्त हो जाते हैं परन्तु अग्निहोत्र समाप्त नहीं होता। बारह वर्ष चलने वाले सत्र-यज्ञ भी सान्त होते हैं परन्तु अग्निहोत्र अन्त वाला नहीं (= अनन्त) है; क्योंकि सायं की आहुति देकर अग्निहोत्री जानता है कि प्रातःकाल आहुति देनी है और प्रातःकाल आहुति देकर जानता है कि सायंकाल आहुति देनी है। इसलिये अग्निहोत्र अनन्त और अपरिसमापनीय यज्ञ है साथ ही इसके इसी सातत्य-गुण के कारण सृष्टि की प्रजा-सन्तति अविच्छिन्न रहती है। जो मनुष्य अग्निहोत्र की इस अनन्तता को समझता है उसके अविच्छिन्न संतान और वैभव रहता है॥१३॥

तु॒द्दु॒ग्ध्वा॒धिश्रयति। शृ॒तम॑सदि॒ति तु॒दाहु॒र्य॒र्ह्यु॒दन्तं तु॒र्हि शृ॒तं तु॒र्हि जु॒हुयादि॒ति तद्वै नो॒दन्तं कुर्या॒दु॒प ह दहेद्य॒दु॒दन्तं कुर्यादु॒प्रज॒ज्ञि वै रे॒त ऽउ॒पदग्धं तु॒स्मान्नो॒दन्तं कु॒र्यात्॥१४॥

(द) अधिश्रि॒त्यैव॒ जुहुयात्। (द्यु) यु॒न्वे॒वै॒त॒दग्ने रे॒तस्ते॒न॒

---

तद्दुग्ध्वाऽधिश्रयति। शृतमसदिति। तदाहुः यर्ह्युदन्तं तर्हि शृतं तर्हि जुहुयादिति। तद्वै नोदन्तं कुर्यात्, उप ह दहेद् यदुदन्तं कुर्यात्–अप्रजज्ञि वै रेत उपदग्धम्–तस्मान्नोदन्तं कुर्यात्॥१४॥

अधिश्रित्यैव जुहुयात्। यन्वेवैतदग्ने रेतस्तेन न्वेव शृतम्।

---

एवं पयसो होमसाधनत्वं विधाय तस्य दोहनानन्तरमग्नावधिश्रयणं विधत्ते—**तद्दुग्ध्वाधिश्रयतीति**[1]। 'शृतमसत्' पक्वं भवेदित्यनेनाभिप्रायेणेत्यर्थः। 'शृतं पाके' (पा.सू. ६.१.२७) इति निपात्यते। कियदवधिकः पाक इत्याशङ्क्य तत्रैकं मतमुपन्यस्यति—**तदाहुरिति**। 'यर्हि' यस्मिन् काले तत् पयः 'उदन्तं' पाकवशादुद्गतान्तं बुद्बुदवद् भवति, 'तर्हि' तस्मिन् काले तच्छृतं भवति। तदवस्थापन्नेन पयसा 'जुहुयात्' इत्यर्थः। तदेतन्निषिध्य पक्षान्तरमाह—**तद्वा इति**। उप ह दहेत् एव। को दोष इति, तत्राह—**अप्रजज्ञीति**। रेतः संस्तुतं ह्येतत् पयः तच्च 'उपदग्धम्', अप्रजज्ञि अप्रजननशीलम्, प्रजोत्पादकं न भवतीत्यर्थः॥१४॥

कथं तर्हि दग्धव्यमित्याह[2]—**अधिश्रित्यैवेति**। अधिश्रयणानन्तरमेव 'जुहुयात्', न तु पाकेनोदन्तं कुर्यात्। नन्वशृतस्य होमयोग्यत्वं नास्तीति चेत् तत्राह—**यन्वेवेति**। पयसोऽग्निरेतस्त्वं प्रागाम्नातम्—'तस्याꣳ रेतः प्रासिञ्चत् तत् पयोऽभवत्' (श.प. २ का. २ अ. ४ ब्रा. १५ कं.) इति। तथा चाग्निरेत-

---

दूध दुहकर (गार्हपत्य अग्नि पर) गर्म करने के लिये रखता है जिससे दूध पक जावे। इस विषय में कहते हैं कि—जब उबाल आ जावे तब पका माना जाय और तब आहुति दे। (इसका निषेध करते हुए कहते हैं कि—) दूध खौल जाएगा तो जल जायगा और जला हुआ बीज (रेतस्) उपजता नहीं। इसलिये आहुति के दूध को खौलाना नहीं चाहिये॥१४॥

आग पर चढ़ाकर गर्म होते ही आहुति दे; क्योंकि यह (दूध) अग्नि का वीर्य

---

१. 'पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरुह्याङ्गारान्' इति का.श्रौ.सू. ४.३१६। २. 'दातव्यम्' 'होतव्यम्' इ.पा.।

न्वेव शृतं यद्वेनदग्नावधिश्रयन्ति तेनोऽएव शृतं तस्मादधिश्रित्यैव जुहुयात्॥१५॥

(त्त) तदवज्योतयति। शृतं व्वेदानीत्यथापः प्रत्यानयति शान्त्यै न्वेव रसस्यो चैव सर्व्वत्वायेदॐ हि यदा व्वर्षत्यथौषधयो जायन्तऽ ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति तस्मादु रसस्यो चैव सर्व्वत्वाय तस्माद्यद्येनं क्षीरं केवलं पानेऽभ्याभवेदुदस्तोकमाश्चोतयितवै ब्रूयाच्छान्त्यै न्वेव रसस्यो चैव सर्व्वत्वाय॥१६॥

---

यद्वेनदग्नावधिश्रयन्ति तेनो एव शृतम्। तस्मादधिश्रित्यैव जुहुयात्॥१५॥

तदवज्योतयति—शृतं वेदानीति। अथापः प्रत्यानयति—शान्त्यै न्वेव, रसस्यो चैव सर्वत्वाय। इदं हि यदा वर्षति—अथौषधयो जायन्ते, ओषधीर्जग्ध्वाऽपः पीत्वा तत एष रसः सम्भवति—तस्मादु रसस्यो चैव सर्वत्वाय। तस्माद् यद्येनं क्षीरं केवलं पानेऽभ्याभवेत्—उदस्तोकमाश्चोतयितवै ब्रूयात्—शान्त्यै न्वेव रसस्यो चैव सर्वत्वाय॥१६॥

---

स्त्वादेव पयः शृतमेव सर्वदा। अतश्चाग्नावधिश्रयणमात्रादेव तच्छृतं भवतीति तदवस्थेनैव जुहुयादित्यर्थः॥१५॥

**तदवज्योतयतीति।** ज्वालायुक्तेन दर्भाग्रेण अवाङ्मुखं प्रकाशतीत्यर्थः। **अथापः प्रत्यानयतीत्यादि,** स्पष्टम्। **उदस्तोकमाश्चोतयितवा इति।** उदकस्य बिन्दुराश्चोतयितव्य आसेक्तव्य इति ब्रूयादित्यर्थः॥१६॥

---

है; अतः यह स्वाभाविक रूप से धारोष्ण रहते हैं फलतः शीघ्र गर्म हो जाता है। इसलिये आग पर रख शीघ्र उतारकर आहुति दे देनी चाहिये॥१५॥

अब प्रकाशित करता है (अर्थात् दर्भ जलाकर उसके प्रकाश से दूध को देखता है कि यह पक गया क्या?)। तदनन्तर उसमें थोड़ा सा जल छिड़कता है, शान्ति के लिये तथा रस की वृद्धि (पूर्णता) के लिये; क्योंकि पानी जब बरसता है तब औषधियाँ उत्पन्न होती हैं। गायों द्वारा औषधियों को खाने और जल को पीने से यह दुग्ध-रस उत्पन्न होता है। अतएव रस की पूर्णता के लिये वह गर्म दूध में थोड़ा जल छोड़ता है। यदि 'केवल' (खालिश) दूध पीना हो तो भी उसमें एक बूँद जल अवश्य मिलाये; शान्ति के लिये तथा रस की पूर्णता के लिये॥१६॥

(याथ) अथ चतुरुन्नयति। चतुर्द्धा व्विहितᳪं हीदं पयोऽथ समिधमादायोदाद्रवति समिद्धहोमायैव सो ऽनुपसाद्य पूर्व्वामाहुतिं जुहोति स यदुपसादयेद्यथा यस्मा ऽअशनमाहरिष्यन्त्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्मा ऽअशनमाहरेत्तस्मा ऽआहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्येऽएवैनेऽ-

---

अथ चतुरुन्नयति, चतुर्द्धा विहितं हीदं पयः। अथ समिधमादायोदाद्रवति–समिद्धहोमायैव। सोऽनुपसाद्य पूर्वामाहुतिं जुहोति। स यदुपसादयेद् यथा यस्मा अशनमाहरिष्यन्त्स्यात्, तदन्तरा निदध्याद् एवं तत्। अथ यदनुपसाद्य–यथा यस्मा अशनमाहरेत् तस्मा आहृत्यैवोपनिदध्याद् एवं तत्। उपसाद्योत्तरां नानावीर्ये एवैने एतत् करोति। मनश्च ह वै वाक् चैते

---

**अथ चतुरुन्नयतीति**। **चतुर्द्धा विहितं हीति**। चतुर्भ्यः स्तनेभ्यो दुग्धत्वात् चतुर्द्धा विहितत्वम्। **समिद्धहोमायैवेति**। समिद्धेऽग्नौ होमार्थमुन्नीतपयस्कायां वैकङ्कत्यां स्रुचि एकां समिधमुपरि निधाय गार्हपत्यदेशादाहवनीयं प्रतिगच्छेदित्यर्थः। गत्वा च तस्मिन्नाहवनीयापरभागे होमद्रव्यम् 'अनुपसाद्य' अभिधाय, हस्ते धृत्वैव गार्हपत्यदेशादाहवनीयं प्रतिसृत्यैव पूर्वामाहुतिं जुहुयात् 'होष्यन्नुपसादयति'—इति यदुपसादनं तैत्तिरीयके समाम्नातम्। तदनूद्य तस्यायुक्ततां दृष्टान्तेनोपपादयति—**स यदुपसादयेदिति**। **अन्तरा निदध्यादिति**, भोक्तुमुपविष्टस्य पुरःस्थितं पात्रमप्राप्य मध्ये मार्गे अशनं दित्सितमन्नादिकं निदध्यात् 'एवं' 'तत्' उपसादनमित्यर्थः। अनुपसादनस्यानुगुण्यमाह—**यदनुपसाद्येति**। एवं प्रथमामाहुतिं हुत्वा उपसादनपुरस्सरमेव द्वितीयामाहुतिं जुहुयादिति विधत्ते—**उपसाद्योत्तरामिति**। जुहोतीत्यनुषङ्गः। एवमनुपसाद-

---

अब वह दूध को स्रुक् से चार बार स्रुचि में निकालता है; क्योंकि यह दूध गाय से चार प्रकार से (अर्थात् चार थनों से) मिला था। तदनन्तर वह समिद्ध अग्नि में होम के लिये दुग्ध से पूर्ण स्रुचि उठाकर उसपर एक समित् रखकर बिना नीचे रखे हुये पूर्व-आहुति देता है। यदि स्रुचि को नीचे रख देगा तो वह हवि वैसे ही अपवित्र हो जायगी जैसे किसी के लिये भोजन परोसकर ले जाते हुये बीच मार्ग में रख दे तथा बिना नीचे रखे हुये (आहुति देना) उसी प्रकार

---

१. चतुरः स्रुवानुन्नयति, का.श्रौ.सू. ४.३२४। २. उन्नीयोपसादयति, पृथिवीमेव प्रीणाति। होष्यन्नुपसादयति, अन्तरिक्षमेव प्रीणाति। हुत्वोपसादयति, दिवमेव प्रीणाति, तै.ब्रा. २.१.५८।

एतुत्करोति मुनश्च ह वै व्वाक्चैते ऽआहुती तन्मुनश्चैवैतद्वाचं च व्यावर्तयति तुस्मादिदं मुनश्च व्वाक्च समानुमेव सन्नानेव॥१७॥

स वै द्विरग्नौ जुहोति। द्विरुपमार्ष्टि द्विः प्राश्नाति चतुरुन्नयति तद्दुश दुशाक्षुरा वै व्विराड् विराड् वै यज्ञस्तुद्विराजमेवैतुद्यज्ञमभि-सुम्पादयति॥१८॥

---

आहुती। तन्मनश्चैवैतद्वाचं च व्यावर्तयति। तस्मादिदं मनश्च वाक् च समानमेव सन्नानेव॥१७॥

स वै द्विरग्नौ जुहोति, द्विरुपमार्ष्टि, द्विः प्राश्नाति, चतुरुन्नयति, तद्दश। दक्षाक्षरा वै विराट्। विराड् वै यज्ञः। तद्विराजमेवैतद्यज्ञमभि-सम्पादयति॥१८॥

---

नोपसादनलक्षणधर्मभेदादेते आहुती 'नानावीर्ये' नानासामर्थ्ये एव करोतीत्यर्थः। एते अनुपसादनोपसादने प्रकारान्तरेण प्रशंसति—**मनश्च ह वा इति**। 'व्यावर्त्तयति' धर्मभेदेन पृथक् करोतीत्यर्थः॥१७॥

होमोपमार्जनप्राशनोन्नयनानां सङ्ख्यां समुच्चित्य प्रशंसति—**स वै द्विरिति**। **विराड् वै यज्ञ इति**। सर्वप्रकृतिभूतस्याग्निष्टोमस्य शतस्तोत्रियायोगेन विराट्सम्पत्तेर्यज्ञस्य विराट्त्वमित्यर्थः। अनयोः स्तुत्योपमार्जनप्राशनयोरविहितयोः स्तोतुमयोग्यत्वात् तयोर्विधिरुन्नेतव्यः॥१८॥

---

औचित्यपूर्ण है जैसे किसी को भोजन परोसकर ले जाते हुये पहले उसके पास पहुँचाकर (तब बर्तन) नीचे रखे। प्रथमाहुति देकर स्रुचि को नीचे रखने के बाद एक और (आहुति देता है)। इस प्रकार इन दो आहुतियों को नानावीर्य (भिन्न-भिन्न पराक्रम वाली) बनाता है। ये दो आहुतियाँ मन और वाणी रूपी हैं। इस प्रकार मन और वाणी को एक-दूसरे से धर्म-भेद से अलग करता है। फलतः मन और वाणी समान होते हुए भी पृथक् धर्मा हैं॥१७॥

(अग्निहोत्री) दो बार अग्नि में आहुति देता है। दो बार स्रुचि को पोंछता है, दो बार आहुति-शेष प्राशन करता है। चार बार हवनीय द्रव्य (दूध या घृत) स्रुचि में ग्रहण करता है। ये दस (क्रियायें) हुई। विराज् छन्द में दस अक्षर होते हैं। विराज् ही यज्ञ है। इस प्रकार वह यज्ञ को विराट् बना देता है॥१८॥

**स यदग्नौ जुहोति। तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यदुपमार्ष्टि तत्पितृषु चौषधीषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्राश्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति॥१९॥**

**या वै प्रजा यज्ञेऽनन्वाभक्ताः। पराभूता वै ता एवमेवैतद्या ऽइमाः प्रजा अपराभूतास्ता यज्ञमुखऽआभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्याननु पशवः॥२०॥**

---

**स यदग्नौ जुहोति–तद्देवेषु जुहोति–तस्माद्देवाः सन्ति। अथ यदुपमार्ष्टि–तत्पितृषु, चौषधीषु च जुहोति–तस्मात्पितरश्चौषधयश्च सन्ति। अथ यद्धुत्वा प्राश्नाति–तन्मनुष्येषु जुहोति–तस्मान्मनुष्याः सन्ति॥१९॥**

**या वै प्रजा यज्ञेऽनन्वाभक्ताः–पराभूता वै ताः। एवमेवैतत्–या इमाः प्रजा अपराभूतास्ता यज्ञमुख आभजति। तेनो ह पशवोऽन्वाभक्ताः–यन्मनुष्याननु पशवः॥२०॥**

---

तेषां होमोपमार्जनप्राशनानामुपयोगमाह—**स यदिति। देवाः सन्तीति।** अग्नौ प्रक्षिप्तेनाग्निहोत्रहविषोपचितावयवाः सन्तः सर्वदा विद्यन्त इत्यर्थः। **पितृषु चौषधीषु चेति।** तत्र प्रथमोपमार्जनेन ओषधीनां तृप्तिः द्वितीयेन पितृणामिति द्रष्टव्यम्। **ओषधयश्च सन्तीति।** सर्वदा विद्यन्त इत्यर्थः॥१९॥

**या वै प्रजा इति।** 'अनन्वाभक्ताः' भागरहिताः, 'ताः पराभूताः' खलु। अत एव प्राशने सति 'या इमाः' सर्वाः प्रजाः 'यज्ञमुखे' यज्ञानां मुखभूतेऽग्निहोत्रे यजमान आहुतिभागयुक्ताः करोतीत्यर्थः। कस्तर्हि पशूनां भाग इति, तत्राह—**तेनो हेति।** 'मनुष्यान् अनु' मनुष्याधीनतया यतो गवाद्याः 'पशवः' तिष्ठन्ति, तेनैव कारणेन मनुष्यद्वारा तेऽपि भागयुक्ता इत्यर्थः॥२०॥

---

वह अग्नि में जो आहुति देता है वह देवताओं के लिये देता है। इसी (अग्निहोत्र हवि) से देवगण प्रसन्न होकर जीवित रहते हैं और जो स्रुचि को पोंछकर हविष्य लेपयुक्त दर्भों को फेंक देता है उससे पितरों तथा औषधियों के लिये आहुति देता है। इस प्रकार पितृगण एवं औषधियाँ (यज्ञ में) सम्मिलित (हो जातीं) है, तथा उनकी सत्ता है। जो आहुति देकर शेषांश का प्राशन करता है वह मनुष्यों के लिये आहुति देता है। इससे (मनुष्य यज्ञ में) सम्मिलित होते हैं, तथा उनकी सत्ता है॥१९॥

जो यज्ञ में साक्षात् भागी नहीं हो पाते वे पराभूत अर्थात् परोक्ष रूप से भागग्रहीता हो जाते हैं। वह इस प्रकार कि जो प्रजायें हैं वे यज्ञमुख अर्थात्

(वस्तु) तुदु होवाच याज्ञवल्क्यः। (ल्क्यो) न वै यज्ञ इव मुन्तवै पाकयज्ञ ऽइव वाऽइतीदꣳ हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याचामति निर्लेढि तुदस्य पाकयज्ञस्येवेति तुदस्य तत्पशव्यꣳ रूपं पशव्यो हि पाकयज्ञः॥२१॥

---

तदु होवाच याज्ञवल्क्यः—न वै यज्ञ इव मन्तवै पाकयज्ञ इव वा इति, इदं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोति। अथैतदग्नौ हुत्वोत्सृप्याचामति, निर्लेढि। तदस्य पाकयज्ञस्येवेति। तदस्य तत्पशव्यं रूपम्। पशव्यो हि पाकयज्ञः॥२१॥

---

अस्याग्निहोत्रस्य याज्ञवल्क्याभिमतं पाकयज्ञत्वमुपन्यस्यति—तदु होवाचेति। न खल्वग्निहोत्रहोमो दर्शपूर्णमासादियज्ञवत् केवलयज्ञत्वेन मन्तव्यः, अयं खलु पाकयज्ञ इव भवति 'इति'—शब्दो वाक्यसमाप्तौ। एतदुपपादयति—इदं हीति। इदं खल्वग्निहोत्रं वक्ष्यमाणरूपम् 'तत्र पशव्यावदानादिकं (कर्म) केवलो यज्ञधर्मः अग्नौ किञ्चिद्धुत्वा किञ्चिदवशेषमुत्सृप्य बहिर्निर्गम्य आचमन-निर्लेहनादिकः पाकयज्ञधर्मः, तस्याग्निहोत्रस्य पाकयज्ञस्य सतो रूपम्। अस्त्वेवम्, किं तत इत्याह—तदस्येति। 'तत्' पाकयज्ञियम् 'अस्य' अग्निहोत्रस्य 'रूपं पशव्यम्' पशुभ्यो हितम्, पशुप्राप्तिसाधनमित्यर्थः॥२१॥

---

अग्निहोत्र में यजमान के आहुति भाग में सम्मिलित रहती हैं साथ ही यतः गवादि पशु मनुष्य के आश्रित हैं अतः यजमान के माध्यम से वे यज्ञभाग ग्रहीता होते हैं॥२०॥

(अग्निहोत्र के विषय में) याज्ञवल्क्य का कहना है कि इस (अग्निहोत्र-होम) को केवल यज्ञ नहीं मानना चाहिये (अपितु) इसे पाकयज्ञ (Domestic Sacrifice) कहना चाहिये; क्योंकि केवल यज्ञ अर्थात् हविर्यज्ञ में जो कुछ स्रुचि में लिया जाता है वह सब अग्नि में आहुत कर दिया जाता है किन्तु यहाँ अग्नि में आहुति देने के पश्चात् स्रुचि में किञ्चित् आहुतिशेष बचाकर यज्ञशाला से बाहर जाकर आचमन करता और हविःशेष का प्राशन (या निलिम्पन) करता है। यह सब पाक यज्ञ की ही क्रियायें है। यह अग्निहोत्र-यज्ञ का पशव्य रूप है अर्थात् पशुप्राप्ति साधक कर्म है; क्योंकि पाकयज्ञ पशव्य होता है॥२१॥

---

१. उत्सृप्य निर्लेढ्याचम्योत्सिञ्चति देवाञ्जिन्व पितॄञ्जिन्व तृतीयामुदुक्षति सप्त ऋषीञ्जिन्वेति, का.श्रौ.सू. ४.३४१।

सैषेकाहुतिरेवाग्रे। यामेवामूं प्रजापतिरजुहोदथ यदेत ऽएतत्पश्चेवाध्रियन्ताग्निर्योऽयं पवते सूर्य्यस्तस्मादेषा द्वितीयाहुतिर्हूयते॥२२॥

सा या पूर्वाहुतिः। साग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्विष्टकृद्भाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोत्येषा हि दिक् स्विष्टकृतस्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वँ हि मिथुनं प्रजननम्॥२३॥

---

सैषैकाहुतिरेवाग्रे यामेवामूं प्रजापतिरजुहोत्। अथ यदेतत्पश्चेवाध्रियन्त अग्निर्योऽयं पवते सूर्यस्तस्मादेषा द्वितीयाहुतिर्हूयते॥२२॥

सा या पूर्वाहुतिः साग्निहोत्रस्य देवता। तस्मात्तस्यै जुहोति। अथ योत्तरा–स्विष्टकृद्भाजनमेव सा। तस्मात्तामुत्तरार्द्धे जुहोति, एषा हि दिक् स्विष्टकृतः। तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते। द्वन्द्वं हि मिथुनं प्रजननम्॥२३॥

---

**सैषेत्यादि**। 'अमूं' विप्रकृष्टां 'याम्' आहुतिं 'प्रजापतिः' सृष्टिकाले प्रथमम् 'अजुहोत्' 'सैषा' 'एका' अग्निहोत्रस्य पूर्वाहुतिः। अनन्तरञ्च 'यदेते' अग्निवायुसूर्याः 'पश्चा' पश्चात् 'इव' 'आध्रियन्त' अवस्थिताः अतस्तदनुप्रीतय एषा द्वितीयाहुतिरित्यर्थः॥२२॥

तत्र पूर्वाहुतिरग्निहोत्रस्य प्रधानदेवताप्रीतिकरीत्याह—**सा येति**। द्वितीया तु स्विष्टकृत्स्थानीयेत्याह—**अथ येति। एषा हि दिगिति**। 'स्विष्टकृतः' स्विष्टकृदाहुतेः 'उत्तरार्द्धे' यथाक्रमेण 'भूतञ्चैव भविष्यच्च'—इत्यादि वक्ष्यमाणद्वयात्मक इत्यर्थः॥२३॥

---

अग्निहोत्र में पहली एक आहुति (= पूर्वाहुति) वही है जिसको प्रजापति ने दिया था और इसके अनन्तर आने वाले अर्थात् अग्नि, वायु और सूर्य देवों के लिये (आहुति होती) है। इसलिये यह दूसरी आहुति (अग्नि-वायु-सूर्य के लिये) देता है॥२२॥

अग्निहोत्र की जो पूर्वाहुति है वह अग्निहोत्र के प्रधान देवता की है। इसलिये उसी के लिये दी जाती है और जो दूसरी आहुति है वह स्विष्टकृत् के समान है इसलिये वह उत्तर (= बाद में) दी जाती है। (उत्तरा आहुति उत्तर की ओर

(नन्तु) तद् द्वयमेवैते ऽआहुती। भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चागतं चाशा चाद्य च श्वश्च तद्वयमेवानु॥२४॥

(न्वा) आत्मैव भूतम्। (म) अद्धा हि तद्यद्भूतमद्धो तद्यदात्मा प्रजैव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत्प्रजा॥२५॥

---

तद् द्वयमेवैते आहुती भूतं चैव भविष्यच्च, जातं च जनिष्यमाणं च, आगतं च आशा च, अद्य च श्वश्च, तद् द्वयमेवानु॥२४॥

आत्मैव भूतम्। अद्धा हि तद्-यद्भूतम् अद्धो तद्-यदात्मा। प्रजैव भविष्यत्। अनद्धा हि तद्-यद्भविष्यत् अनद्धो तद्-यत् प्रजा॥२५॥

---

**तद् द्वयमेवेति। भूतमित्यादि।** 'भूतम्' अतीतकालावच्छिन्नम् 'भविष्यत्' आगामिकालावच्छिन्नम्। एवं जातादिषु योज्यम्। **आशा चेति।** आशागोचरं प्राप्तव्यमित्यर्थः। **अद्य च श्वश्चेति।** वर्त्तमानानागतकालौ। एवं बहुविधं 'तद् द्वयमेवानु' तद्भागरूपे यथाक्रममेते आहुती भवत इत्यर्थः॥२४॥

अथ तयोराहुत्योः समन्त्रकामन्त्रकत्वे विधास्यन् भूतभविष्यदादि-द्वन्द्वस्यात्मप्रजारूपत्वम्, अद्धानद्धारूपत्वं च दर्शयति—**आत्मैव भूतमित्यादिना।** आत्मा स्वयं पिता 'एव' भूतम्, यच्च भूतम् तद् 'अद्धा'; अनुभूतत्वात् प्रत्यक्षम्। एवमात्मनो भूतस्य च अद्धात्वसाम्यादात्मा भूतमिति तादात्म्यमित्यर्थः। 'प्रजैव भविष्यदिति' प्रतिज्ञा। तदुपपादनम्—**अनद्धा हीत्यादि।** 'अनद्धा' अप्रत्यक्षम्; प्रजाभविष्यतोरप्रत्यक्षत्वसाम्यात् तादात्म्यमित्यर्थः॥२५॥

---

दी जाने से शब्दों का सादृश्य है); क्योंकि स्विष्टकृत् की यही दिशा है। यह दूसरी आहुति युग्म बनाने के लिये दी जाती है; क्योंकि युग्म से ही सन्तान उत्पन्न होती है॥२३॥

ये दो आहुतियाँ दो की प्रतीक हैं—भूत और भविष्य की; उत्पन्न हुये की तथा उत्पन्न होने वाले की तथा जो है (अर्थात् आगत) और जिसकी आशा है (अर्थात् अनागत) उन दोनों की तथा आज की और कल की (इन्हीं युग्मों के लिये ये दो आहुतियाँ हैं)॥२४॥

आत्मा (स्वयं यजमान) ही भूत है और जो भूत है, वह प्रत्यक्ष है अतएव आत्मा भी प्रत्यक्ष है। प्रजा भविष्यत् है। (क्योंकि) भविष्यत् अप्रत्यक्ष होता है और प्रजा भी परोक्ष है॥२५॥

(ज्ाऽऽत्मै) आ्त्मैव् जात्म्। (म) अद्धा हि तद्यज्जात्मुद्धो तद्युदात्म्ा प्र्जैव् जनिष्य्माणम्नद्धा हि तद्यज्जनिष्य्माणमनद्धो तद्युत्प्र्जा॥२६॥

(ज्ाऽऽत्मै) आ्त्मैव्ागतम्। (म) अद्धा हि तद्यदुागतम्द्धो तद्युदात्म्ा प्र्जैव्ाशानद्धा हि तद्युदाश्ानद्धो तद्युत्प्र्जा॥२७॥

(ज्ाऽऽत्मै) आ्त्मैव्ाद्य। (द्या) अद्धा हि तद्यदुद्याद्धो तद्युदात्म्ा प्र्जैव श्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्युत्प्रजा॥२८॥

---

आत्मैव जातम्। अद्धा हि तद्–यज्जातम् अद्धो तद्–यदात्मा। प्रजैव जनिष्यमाणम्। अनद्धा हि तद्–यज्जनिष्यमाणम्। अनद्धो तद्–यत्प्रजा॥२६॥

आत्मैवागतम्। अद्धा हि तद्–यदागतम् अद्धो तद्–यदात्मा। प्रजैवाशा। अनद्धा हि तद्–यदाशा अनद्धो तद्–यत्प्रजा॥२७॥

आत्मैवाद्य। अद्धा हि तद्–यदद्य। अद्धो तद्यदात्मा। प्रजैव श्वः। अनद्धा हि तद्–श्वः अनद्धो तद्–यत्प्रजा॥२८॥

---

एवम् आत्मैव जातमित्यादिषु द्वन्द्वान्तरेषु योजना॥२६॥

आत्मैवागतमिति। आत्मप्रजारूपेण अद्धानद्धारूपेण चाहुती स्तुत्वा हूयते, स चाद्धारूपो मन्त्रोऽपि देवताप्रकाशकत्वात् तथा॥२७॥

आत्मैवाद्येति। अद्येति वर्त्तमानकालः, श्व इत्यागामिकालः॥२८॥

---

जो उत्पन्न हो गया वह आत्मा है; क्योंकि जो उत्पन्न हो गया वह प्रत्यक्ष है और आत्मा भी प्रत्यक्ष है। जो भविष्य में उत्पन्न होने वाली है वह प्रजा है; क्योंकि जो उत्पन्न होने वाला है वह परोक्ष होता है अतः प्रजा भी परोक्ष है॥२६॥

जो प्राप्त हो गया (आग, actual) वही आत्मा है; क्योंकि जो प्राप्त हो गया वह प्रत्यक्ष (रहता) है (अतः) आत्मा भी प्रत्यक्ष है। आशा प्रजा है; क्योंकि प्रजा भी परोक्ष रहती है और आशा भी परोक्ष रहती है॥२७॥

आत्मा, वर्तमान (अद्य) है; क्योंकि वर्तमान (अद्य) भी प्रत्यक्ष है और आत्मा भी प्रत्यक्ष है। कल (= भावी) प्रजा है; क्योंकि कल परोक्ष रहता है और प्रजा भी परोक्ष होती है॥२८॥

सा या पूर्वाहुतिः। सात्मानमभिहूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्माऽथ योत्तरा सा प्रजामभिहूयते तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धो तद्यत्प्रजा॥२९॥

स जुहोति। (त्य) अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्सत्येनैव हूयते यदा ह्येव

---

सा या पूर्वाहुतिः सात्मानमभिहूयते। तां मन्त्रेण जुहोति। अद्धा हि तद्-यन्मन्त्रः। अद्धो तद्-यदात्मा। अथ योत्तरा सा प्रजामभिहूयते। तां तूष्णीं जुहोति। अनद्धा हि तद्-यत्तूष्णीम्। अनद्धो तद्-यत् प्रजा॥२९॥

स जुहोति-'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा'-(वा.सं.अ. ३ मं ९) इति। अथ प्रातः-'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा'-(वा.सं.अ. ३ मं. ९) इति। तत् सत्येनैव हूयते। यदा ह्येव सूर्योऽस्तमेति-अथाग्निर्ज्योतिः। यदा

---

सा या पूर्वाहुतिरिति। 'तां' पूर्वाहुतिं मन्त्रेण जुहुयादित्यर्थः। उत्तराहुतिस्तु भविष्यज्जनिष्यमाणा अनागताद्यात्मकप्रजास्थानीया, सा चानद्धारूपा; अमन्त्रकत्वमपि तथेति, तूष्णीं तु भविष्यज्जनिष्यमाणानागताद्यात्मकप्रजास्थानीया, सा चानद्धारूपा; अमन्त्रकमपि तथेति तूष्णीमेव सा होतव्येत्यर्थः॥२९॥

कालद्वयेऽपि पूर्वस्या आहुतेः क्रमेण मन्त्रं दर्शयति—स जुहोतीति। मन्त्रयोः सत्यरूपत्वमुपपादयितुमर्थसद्भावमाह—यदा हीत्यादिना। अस्तङ्गतः सूर्योऽग्निमेवानुप्रविशतीति रात्रावग्निर्ज्योतीरूपो भवति, पुनरुद्यन्तं सूर्यमग्नि-

---

अग्निहोत्र की जो पूर्वाहुति है वह आत्मा (= प्रत्यक्ष) के लिये दी जाती है। अतः यह मन्त्र से दी जाती है; क्योंकि मन्त्र प्रत्यक्ष है और आत्मा भी प्रत्यक्ष है। दूसरी आहुति प्रजा के लिये दी जाती है। वह मौन होकर अर्थात् अमन्त्रक दी जाती है; क्योंकि मौन परोक्ष है और प्रजा भी परोक्ष है॥२९॥

(सायंकाल की) अग्निहोत्र की आहुति इस मन्त्र से दी जाती है—'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' (यजु. ३.९) और प्रातःकाल इस मन्त्र से—

---

१. तूष्णीं द्वितीयाम्, का.श्रौ.सू. ४.३३७। २. प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा। का.श्रौ.सू. ४.३३८।

सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्यऽउदेत्यथ सूर्यो ज्योतिर्यद्वै सत्येन हूयते तद्देवान्गच्छति॥३०॥

तदु हैतदेवारुणये ब्रह्मवर्च्चसकामाय तक्षानूवाचाग्निर्व्वर्चो ज्योतिर्व्वर्च्चःसूर्यो व्वर्चो ज्योतिर्व्वर्च्च ऽइति ब्रह्मवर्चसी हैव भवति य ऽएवं विद्वानग्निहोत्रं जुहोति॥३१॥

---

सूर्य उदेति–अथ सूर्यो ज्योतिः। यद्वै सत्येन हूयते तद् देवान् गच्छति॥३०॥

तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तक्षा–नूवाच–'अग्निर्वर्चो ज्योतिर्वर्चः सूर्यो वर्चो ज्योतिर्वर्चः'–(वा.सं.अ. ३.९) इति। ब्रह्मवर्चसी हैव भवति, य एवं विद्वानग्निहोत्रं जुहोति॥३१॥

---

रनुप्रविशतीत्यहनि सूर्यो ज्योतीरूपो भवति। अतश्च कालद्वये अग्निर्ज्योतिः सूर्यो ज्योतिरिति (वा.सं.अ. ३.९) यदेतन्मन्त्रवाक्यद्वयं तत् समवेतार्थत्वात् सत्यम्॥३०॥

अनयोः सायम्प्रातर्होमयोर्ब्रह्मवर्च्चसकामस्य कर्त्तव्यतोपन्यासपुरस्सरं मन्त्रविशेषौ दर्शयति—तदु हैतदिति। अग्निर्ज्योतिः सूर्यो ज्योतिरिति चत्वारो वर्चश्शब्दाभिधेयस्य तेजसः प्रतिपादकाः, अत एवाभ्यां मन्त्राभ्यां जुह्वतः पुरुषस्य ब्रह्मतेजः सम्पद्यत इत्यर्थः। तदुक्तं कात्यायनेन—'अग्निर्वर्च्च इति ब्रह्मवर्च्चसकामस्य'—इति (का.श्रौ.सू. ४.३२९)॥३१॥

---

'सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहा' (यजु. ३.९)। सत्यता के साथ आहुति दी जाती है; क्योंकि जब सूर्य डूब जाता है तो अग्नि ही ज्योति (का स्रोत) रहती है और जब सूर्य निकलता है तो सूर्य ज्योति होता है। जो सत्यता के साथ आहुति दी जाती है वह देवों को प्राप्त होती है॥३०॥

ब्रह्मवर्चस की कामना के लिये तक्षा ने आरुणि को यह मंत्रोपदेश किया था—'अग्निर्वर्चो ज्योतिर्वर्चः सूर्योवर्चो ज्योतिर्वर्चः' (यजु. ३.९)। इन मंत्रों से आहुति देनेवाला पुरुष ब्रह्मतेज से युक्त हो जाता है, जो विज्ञ इसे जानकर अग्निहोत्र करता है॥३१॥

तद्वस्त्येव प्रजननस्येव रूपम्। (म) अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत ऽएवैतत्परिगृह्य प्रजनयति॥३२॥

(त्य) अथ प्रातः। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति तत्प्रजननस्य रूपम्॥३३॥

---

तद्वस्त्येव प्रजननस्येव रूपम्–'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा'–(वा.सं.अ. ३ मं. ९) इति। तदुभयतो ज्योती रेतो देवतया परिगृह्णाति। उभयतः परिगृहीतं वै रेतः प्रजायते, तद् उभयत एवैतत्परिगृह्य प्रजनयति॥३२॥

अथ प्रातः 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा'–(वा.सं.अ. ३.९) इति। तदुभयतो ज्योती रेतो देवतया परिगृह्णाति। उभयतः परिगृहीतं वै रेतः प्रजायते, तद् उभयत एवैतत्परिगृह्य प्रजनयति। तत् प्रजननस्य रूपम्॥३३॥

---

तद्वस्त्येवेत्यादि। तस्मिन् होममन्त्रे प्रजननस्य रूपमिव 'रूपम्' विद्यते। ज्योतिश्शब्दाभिधेयं मध्येऽवस्थितं 'रेतः' 'उभयतः' 'देवतया' देवतावाचिपदाभ्यां 'परिगृह्णाति' उभयतः परिगृहीततत्वं रेतसः प्रजननरूपम्। अतः 'अग्निर्ज्योतिः'-'सूर्यो ज्योतिः'–(वा.सं.अ. ३.९) इति मन्त्रयोः प्रजननरूपसद्भावात् ताभ्यां होमे प्रजासम्पत्तिर्भवतीत्यर्थः॥३२॥३३॥

---

'अग्निर्ज्योतिर्ज्योतिरग्निः'—यह मन्त्र सन्तानोत्पत्ति का रूप है। (क्योंकि) 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' कह कर वह ज्योतिरूपी वीर्य को देवता वाचक पदों के द्वारा दोनों ओर से सम्पुटित कर देता है। दोनों ओर से सम्पुटित हुए वीर्य से ही प्रजोत्पत्ति होती है। इस प्रकार दोनों ओर से देवतावाचक पदों को सम्पुटित कर वह इससे प्रजासम्पत्ति प्राप्त कराता है॥३२॥

प्रातःकाल की आहुति का मन्त्र—'सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहा' (यजु. ३.९) कह कर ज्योतिरूपी वीर्य को देवतावाचक पदों के द्वारा दोनों ओर से सम्पुटित कर देता है; क्योंकि दोनों ओर से सम्पुटित हुए वीर्य से ही प्रजोत्पत्ति होती है। इस प्रकार दोनों ओर से देवतावाचक पदों को सम्पुटित कर ही वह इससे प्रजासम्पत्ति प्राप्त कराता है॥३३॥

(पन्त्) तदु होवाच जीवलश्चैलकिः। (र्ग्) गर्भमेवारुणिः करोति न प्रजनयतीति सऽएतेनैव सायं जुहुयात्॥३४॥

(दु) अथ प्रातः। (ज्यो) ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहेति तद्बहिर्द्धा ज्योती रेतो देवतया करोति बहिर्द्धा वै रेतः प्रजातं भवति तदेनत्प्रजनयति॥३५॥

---

तदु होवाच जीवलश्चैलकिः। 'गर्भमेवारुणिः करोति न प्रजनयति' इति। स एतेनैव सायं जुहुयात्॥३४॥

अथ प्रातः 'ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा' (वा.सं.अ. ३ मं. ९) इति। तद् बहिर्द्धा ज्योती रेतो देवतया करोति। बहिर्द्धा वै रेतः प्रजातं भवति तदेनत् प्रजनयति॥३५॥

---

**तदु होवाचेत्यादि।** एलकस्य पुत्रः 'ऐलकिः', 'जीवलः' इति तस्य नाम। **गर्भमेवेति।** कालद्वयेऽपि ज्योतिश्शब्दस्य देवतावाचिपदगृहीतत्वात् रेतः परिगृहीतमन्तरवस्थितं गर्भावस्थमेव भवति; न तु प्रजारूपेणोत्पद्यत इत्यादिः तद्दोषोपन्यासः, स एतेनेत्यादिः तत्परिहारः।

'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' (वा.सं.अ. ३.९) इत्येतेनैव जुहुयात्[1]। तेन गर्भो धृतो भवति। प्रातःकाले तु 'ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा'– (वा.सं.अ. ३.९) इत्यनेन मन्त्रेण होमे सति रेतोरूपस्य ज्योतिश्शब्दस्य हिङ्करणात्[2] अन्तर्गतो गर्भो बहिः 'प्रजातं भवति'[3]॥३४॥

**अथ प्रातरिति।** स्पष्टम्॥३५॥

---

एलकिपुत्र जीवल ऋषि का कथन है कि—आरुणि के मतानुसार अग्निहोत्र की सायंकाल एवं प्रातःकाल की आहुतियाँ मंत्रगत 'ज्योतिः' शब्द को देवतावाची पदों से सम्पुटित कर यदि दी जाती है तो (सायंकाल की आहुति द्वारा) रेतस् गर्भ रूप में परिणत मात्र रहता है, सन्तानोत्पत्ति नहीं कराता। इसलिये 'अग्नि ज्योंतिर्ज्योतिरग्निः'—इस मंत्र से सायंकाल की आहुति दे॥३४॥

और प्रातःकाल—'ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा' (यजु. ३.९) इस मंत्र से आहुति दे। तब देवता के द्वारा ज्योतिरूपी अन्तःगर्भ को बाहर करने में समर्थ हो जाता है। बाहर आकर ही रेतस् रूप गर्भ उत्पन्न माना जाता है इसलिये इसके द्वारा उत्पत्ति करता है॥३५॥

---

१. ज्योतिः सूर्य इति वा प्रातः, का.श्रौ.सू. ४.३५५। २. 'बहिर्धाकरणात्' इ.पा.। ३. 'प्रजायते भवति' इ.पा.।

तदाहुः। (२) अग्नावेवैतत्सायँ सूर्यं जुहोति सूर्ये प्रातरग्निमिति तद्वै तदुदितहोमिनामेव यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्नास्य सा परिचक्षेयमेव परिचक्षा यत्तस्यै नाद्धा देवतायै हूयते याऽग्निहोत्रस्य देवताऽग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तत्र नाग्नये

---

तदाहुः—अग्नावेवैतत्सायं सूर्यं जुहोति, सूर्ये प्रातरग्निमिति। तद्वै तदुदितहोमिनामेव। यदा ह्येव सूर्योऽस्तमेति—अथाग्निर्ज्योतिः। यदा सूर्य उदेति—अथ सूर्यो ज्योतिः। नास्य सा परिचक्षा। इयमेव परिचक्षा—यत् तस्यै नाद्धा देवतायै हूयते याऽग्निहोत्रस्य देवता। 'अग्निर्ज्योतिर्ज्योतिरग्निः

---

**तदाहुरिति। अग्नावेवैतदिति।** अग्निर्ज्योतिरिति मन्त्रेण जुह्वत् 'अग्नावेव' सन्तं सूर्यं 'जुहोति' तथा च ज्योतिश्शब्दः सूर्यवचनः। प्रातःकाले सूर्ये सन्तमग्निं जुहोति। अतः सूर्योज्योतिरिति ज्योतिश्शब्दोऽग्निवचनः। अतो यथापठिताभ्यामेव मन्त्राभ्यां होम इत्यभिप्रायः **तदुदितहोमिनामित्यादि।** 'तत्' उक्तविधानाम् 'उदितहोमिनामेव', नानुदितहोमिनां सम्भवति। कथमिति चेत्, उच्यते—सूर्ये ह्यस्तङ्गते 'अग्निः ज्योतिः' प्रकाशमानो भवति, उदिते त्वाग्नेयतेजस्सङ्क्रमात् सूर्यश्च प्रकाशवान् भवति। तस्मात् 'अग्निर्ज्योतिः सूर्यो ज्योतिः'—इति मन्त्रनिष्पाद्यस्याग्निहोत्रहोमस्य अग्नौ पूर्वोक्तरूपं (श.प. २ का. ३ प्र. १ ब्रा. ३४ कं.) गर्भमेव करोति, न प्रजनयतीति एवंरूपा निन्दा नास्तीत्यर्थः।

तर्ह्युदितहोमपक्ष एवाश्रयणीय इत्याशङ्क्य तत्र दोषान्तरमाह—**इयमेव परिचक्षेति।** 'यद्' यस्मात् 'अग्नये स्वाहा', 'सूर्याय स्वाहा' इति तस्यै देवतायै

---

आहुति मंत्रों के विषय में कुछ लोग कहते हैं कि—वह सायंकाल में अग्नि में (अवस्थित) सूर्य के लिये आहुति देता है (अतः सायंकालीन आहुति मंत्रगत 'ज्योतिः' शब्द सूर्य का वाचक होगा); और प्रातःकाल सूर्य में (अवस्थित) अग्नि के लिये (अतः प्रातःकालीन आहुति मंत्रगत 'ज्योतिः' शब्द अग्नि का वाचक होगा)। यह उनके लिये ठीक है जो 'उदितहोमि' अर्थात् सूर्योदय के पश्चात् होम करने वाले हैं; क्योंकि जब सूर्य अस्त होता है तब अग्नि ज्योति होती है और जब

---

१. प्रातर्जुहोत्यनुदिते, का.श्रौ.सू. ४.३४६।

स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्र न सूर्याय स्वाहेति॥३६॥

(त्य) अनेनैव जुहुयात्। (त्स) सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजू रात्र्येन्द्रवत्येति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणो ऽअग्निर्व्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति॥३७॥

---

स्वाहा'–इति, तत्र नाग्नये स्वाहेति। अत प्रातः। 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा'–इति, तत्र न सूर्याय स्वाहेति॥३६॥

अनेनैव जुहुयात्–'सजूर्देवेन सवित्रा'–(वा.सं.अ. ३ मं. १०) इति, तत् सवितृमत्प्रसवाय। 'सजू रात्र्येन्द्रवत्या'–इति। तद् रात्र्या मिथुनं करोति। सेन्द्रं करोति, इन्द्रो, हि यज्ञस्य देवता। 'जुषाणः सूर्यो वेतु स्वाहा'–(वा.सं.अ. ३ मं. १०) इति, तद् अग्नये प्रत्यक्षं जुहोति॥३७॥

---

प्रत्यक्षं न हूयते, किन्तु 'अग्निर्ज्योतिः—सूर्यो ज्योतिः'—इति प्रथमान्तत्वेन सम्प्रदानविभक्तेरभावाद् देवतात्वस्य परोक्षमेवास्य पक्षस्य निन्देत्यर्थः॥३६॥

एवं निन्द्यनिन्दां प्रदर्श्य, अनिन्द्यं पक्षान्तरमाह—अनेनैवेति। तदुक्तम् सूत्रकृता—'प्रदीप्तामभिजुहोति अग्निर्ज्योतिरिति सजूरिति वा'—इति

---

सूर्य उदय होता है तो सूर्य 'ज्योति' होता है। इसमें कोई दोष नहीं है। दोष इसमें है कि जो अग्निहोत्र के देवता हैं उनको प्रत्यक्ष करके न कहा जाय (अर्थात् सूर्य और अग्नि को परोक्ष रूप से) वह कहता है—'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' यहाँ अभिप्राय 'अग्नये स्वाहा' से नहीं। इसी प्रकार प्रातःकाल के समय—'सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहा' यहाँ अभिप्राय 'सूर्याय स्वाहा' से नहीं॥३६॥

(उपर्युक्त दोष के कारण सायंकाल) इससे आहुति दे—'सजूर्देवेन सवित्रा' (यजु. ३.१०)। इस प्रकार सवितृ-युक्त हो जाता है, प्रेरणा के लिये। फिर कहता है—'सजूरात्र्येन्द्रवत्या' इससे वह इसको रात्रि से जोड़ देता है, और इन्द्र से युक्त करता है। इन्द्र ही यज्ञ का देवता है। 'जुषाणो अग्निर्वेतु स्वाहा' (यजु. ३.१०) कह कर वह प्रत्यक्षरूप से अग्नि के लिये आहुति देता है॥३७॥

(त्य) अथ प्रातः। सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजूरुषसेन्द्रवत्येत्यह्नेति वा तदुह्ना वोषसा वा मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणः सूर्य्यो व्वेतु स्वाहेति तत्सूर्य्याय प्रत्यक्षं जुहोति तस्मादेवमेव जुहुयात्॥३८॥

(त्ते) ते होचुः। को न इदउँ होष्यतीति ब्राह्मण ऽएवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ

---

अथ प्रातः 'सजूर्देवेन सवित्रा'-(वा.सं.अ. ३ मं. १०) इति, तत् सवितृमत्प्रसवाय। 'सजूरुषसेन्द्रवत्या'-(वा.सं.अ. ३ मं १०) इति, अह्ना-इति वा। तद् अह्ना वोषसा वा मिथुनं करोति। सेन्द्रं करोति। इन्द्रो हि यज्ञस्य देवता। 'जुषाणः सूर्यो वेतु स्वाहा'-(वा.सं.अ. ३ मं. १०) इति तत् सूर्याय प्रत्यक्षं जुहोति। तस्मादेवमेव जुहुयात्॥३८॥

ते होचुः-'को न इदं होष्यति'-इति। ब्राह्मण एवेति। ब्राह्मण! 'इदं जुहुधि' इति 'किं? मे ततो भविष्यति' इति, 'अग्निहोत्रोच्छिष्टमेव' इति। स यत् स्रुचि परिशिनष्टि तद्, अग्निहोत्रोच्छिष्टम्। अथ यत् स्थाल्याम्-यथा

---

(वा.सं.अ. ३.९.१०) (का.श्रौ.सू. ४.३२८)। तत् सवितृमदित्यादि, सुगमम्। प्रत्यक्षं जुहोतीति। 'जुषाण:' हवि: सेवमान: अग्नि:' 'वेतु' कामयतामिति प्रतिपादनात् अग्नेर्होम: प्रत्यक्ष इति प्रागुक्तात् पक्षाद् वैलक्षण्यमित्यर्थ:। प्रात:कालीनमन्त्रेऽप्येवं द्रष्टव्यम्॥३७॥३८॥

हुतशिष्टस्य स्थालीमध्यस्थपयसो ब्राह्मणानां पानं विधित्सु: ततोऽन्य एव ब्राह्मणोऽग्निहोत्रहोमस्याध्वर्युरिति प्रतिपादयति—ते होचुरित्यादिना। अथ यत्

---

अब प्रात:काल का आहुति मंत्र है—'सजूर्देवेन सवित्रा'। यह कह कर प्रेरणा के लिये सवितृ-युक्त करता है। अब कहता है—'सजूरुषसेन्द्रवत्या'। इस प्रकार वह इसको दिवस या ऊषा से जोड़ देता है और इसे इन्द्र-युक्त करता है। इन्द्र यज्ञ का देवता है। (तत्पश्चात्) 'जुषाण: सूर्यो वेतु स्वाहा' (यजु. ३.१०) कह कर वह प्रत्यक्ष रूप से सूर्य के लिये आहुति देता है। इसलिये इसी मंत्र से आहुति दे॥३८॥

उन्होंने (= देवों ने) कहा—'हमारे लिये कौन आहुति देगा? 'ब्राह्मण ही'। 'हे ब्राह्मण हमारे लिये आहुति दें'। 'तब मेरा भाग क्या होगा'? (उत्तर-) 'अग्निहोत्र

यत्स्थाल्यां यथा परीणहो निर्वपेदेवं तत्तस्मात्तद्य ऽएव कश्च पिबेत्तद्धै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत्॥३९॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम्॥२॥३॥

इति तृतीयाध्याये प्रथमं ब्राह्मणम्॥३॥१॥

---

**परीणहो निर्वपेद् एवं तत्। तस्मात्तद् य एव कश्च पिबेत्। तद्धै नाब्राह्मणः पिबेत्। अग्नौ ह्यधिश्रयन्ति। तस्मान्नाब्राह्मणः पिबेत्॥३९॥**

**।।इति अग्निहोत्रे होमविधिः।।**

---

**स्थाल्यामिति।** अग्निहोत्रहोमसाधनभूतायां स्रुचि यत् हुतशिष्टम्, तस्यैव 'द्विः प्राश्नाति'[1] इति प्राशनं विहितम्; यत्तु स्थाल्यामवशिष्यते, तत् नाग्निहोत्रोच्छिष्टम्। तत्र दृष्टान्तः—**यथा परीणह इति।** परितो नद्धं परिश्रितं[2] धान्यपूर्णं शकटस्योपरि स्थापितम् यथा तस्माद्धविषो निर्वापयितुं तद्गतं धान्यं न शेष्यते, किन्तु पुनरपि यागान्तरयोग्यमेव। 'एवं' 'तत्' स्थाल्यां पय इत्यर्थः। तथा चाध्वर्योरेव तत् पानमिति नियमाभावात् यः कोऽपि ब्राह्मणस्तत् पिबेदित्यर्थः[3]॥३९॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयाध्यायस्य प्रथमं ब्राह्मणम्।।२।।३।।१।।**

---

का उच्छिष्ट (बचा हुआ) हविष्य'। आहुति देने के बाद जो स्रुचि में रह जाता है वह अग्निहोत्र का उच्छिष्ट है। जो स्थाली में बचा हुआ दूध है वह वैसा ही शुद्ध है जैसा कि (गाड़ी के) घेरे में से (निकाला गया चावल)। यदि कोई इस स्थाली में बचे दूध को पिये तो ब्राह्मण के सिवाय अन्य न पीवे। यतः यह (पवित्र) अग्नि में पका हुआ (दूध) है, इसलिये अब्राह्मण न पीवे॥३९॥१॥

✻

---

१. अनामिकया द्विः प्राश्नाति, का.श्रौ.सू. ४.३४०। २. 'परिवीतम्' इति क्व.पा.। ३. स्थाल्यां परिशिनष्टि तदब्राह्मणः पिबेत्, का.श्रौ.सू. ४.३२५।

एता ह वै देवता योऽस्ति। तस्मिन्वसन्तीन्द्रो यमो राजा नडो नैषिधोऽनश्नन्त्साङ्गमनोऽसन्पाᳬंसवः॥१॥

(स्त) तद्वा ऽएषऽएवेन्द्रः। (न्द्रो) यदाहवनीयोऽथैष ऽएव गार्हपत्यो यमो राजाऽथैषऽएव नडो नैषिधो यदन्वाहार्य्यपचन-

---

### उपस्थानम्

एता ह वै देवता-योऽस्ति तस्मिन्वसन्ति-इन्द्रो, यमो, राजा नडो नैषिधः, अनश्नन्त्साङ्गमनः, असन् पांसवः॥१॥

तद्वा एष एवेन्द्रो-यदाहवनीयः। अथैष एव गार्हपत्यो यमो राजा। अथैष एव नडो नैषिधो-यदन्वाहार्यपचनः। तद्यदेतमहरहर्दक्षिणत आहरन्ति।

---

अथाग्न्युपस्थानं विधित्सुस्तेषामग्नीनाञ्च दैवतरूपतामाह—एता ह वा इति। 'योऽस्ति' यो यजमानो विद्यते, तस्मिन् 'एताः' वक्ष्यमाणा देवता निवसन्ति। ताश्च[1] 'इन्द्रः, यमः, नडः, नैषिधः' इति। निषधदेशाधिपतिर्नलः प्रसिद्धो राजा। 'अनश्नन्त्सङ्गमनः'[2] इति सभ्योऽग्निरुच्यते 'असन् पांसवः—इत्यावसथ्यः॥१॥

एवं[3] तच्छिष्टानां स्वरूपप्रतिपादनं तद्वा इत्यादिना क्रियते। 'अन्वाहार्यपचनः' अग्निः, 'एष एव' 'नडः' नलः, 'नैषिधः'—इति निर्दिष्टः। निषिधराजस्य च नलस्य, दक्षिणाग्नेश्च साम्यमाह—तद्यदिति। अग्निहोत्रहोमकाले 'एतम्'

---

जो कोई यज्ञ का यजमान होता है उसमें ये देवगण निवास करते हैं—इन्द्र, यम, राजा, नड-नैषिध (निषधदेशाधिपति राजा नल) अनश्नत्सांगमन (= सभ्याग्नि), तथा असन्पांसव (= आवसथ्य अग्नि)॥१॥

यह जो आहवनीय अग्नि है वह इन्द्र है, जो गार्हपत्य है वह राजा यम है। यह जो अन्वाहार्यपचन (= दक्षिणाग्नि) है वह नड-नैषिध (निषिधराज नल) है। चूँकि अग्निहोत्र-होमकाल में प्रतिदिन दक्षिण से (अग्नि) लाते हैं इसलिये (लोकोक्ति

---

१. 'इन्द्रः यमः नलो नैषिधः इति। 'तांश्चेन्द्राद्यान्नलो नैषधः' इति च क्व.पा.। २. अनश्नन् किमपि हविरगृह्णन् संगमयति प्रापयति यजमानमग्निहोत्रफलमिति अनश्नन्सङ्गमन इति प्रसिद्धिः। ३. एवमुद्दिष्टानाम् इ.क्व.पा.।

स्तद्यदेतमहरहर्दक्षिणत ऽआहरन्ति तस्मादाहुरहरहर्व्वै नडो नैषिधो यमꣳ राजानं दक्षिणत उपनयतीति॥२॥

(त्य) अथ य ऽएष सभायामग्निः। (रे) एष ऽएवान-श्नन्त्साङ्गमनस्तद्यदेतमनशित्वेवोपसङ्गच्छन्ते तस्मादेषोऽनश्नन्नथ यदेतद्भस्मोद्धृत्य परावपन्त्येष ऽएवासन्पाꣳसवः स यो हैवमेतद्वेदैवं मय्येता देवता व्वसन्तीति सर्व्वान्हैवैताँल्लोकाञ्जयति सर्व्वाँल्लोकाननुसञ्चरति॥३॥

---

तस्मादाहुः–अहरहर्वै नडो नैषिधो यमं राजानं दक्षिणत उपनयतीति॥२॥

अथ य एष सभायामग्निः–एष एवानश्नन्त्साङ्गमनः। तद् यदेतमनशित्वेवोपसङ्गच्छन्ते–तस्मादेषोऽनश्नन्। अथ यदेतद् भस्मोद्धृत्य परावपन्ति, एष एवासन् पांसवः। स यो हैवमेतद्वेद–'एवं मय्येता देवता वसन्तीति' सर्वान् हैवैताँलोकान् जयति, सर्वाँल्लोकाननुसञ्चरति॥३॥

---

अन्वाहार्यपचनं 'यद्' यस्मात् 'दक्षिणतः अहरहः आहरन्ति' तस्मादेव 'नैषिधः' नलोऽपि यमस्य राज्ञः 'दक्षिणतः उपगच्छतीति लोकप्रसिद्धिरित्यर्थः॥२॥

**अथ य एष सभायामग्निः, एष एवानश्नन्निति।** 'एषः' सभ्योऽग्निः, अनशित्वैव प्रातः सभ्यैः सङ्गम्यत इति व्युत्पत्त्या अनश्नत्सङ्गमनसम्बन्धात्सङ्गमन इति च पदद्वयेन प्रतिपाद्यत इत्यर्थः। **भस्मोद्धृत्येति।** गार्हपत्याहवनीयादिगतं भस्म उद्गृह्य यत्, प्रातरेव आवसथे 'परावपन्ति'। **एष एवासन्निति।** भस्मनः पांसुतुल्यत्वात् 'पांसवः' भस्मरूपाः पांसुसम्बन्धिनश्च। एवं पञ्चानामग्नीना-मिन्द्रादिदेवतात्मकत्वं प्रतिपाद्य एतद्वेत्तुः फलमाह—**स य इति**॥३॥

---

में) कहते हैं कि नड-नैषिध (निषिधदेशाधिपति राजा नल) प्रतिदिन राजा यम को दक्षिण से लाता है॥२॥

और यह जो सभा में अग्नि (= सभ्याग्नि) है उसका अपर नाम 'अनश्नत् सांगमन' है। इसको अनश्नत् इसलिये कहते हैं कि लोग बिना खाये उसके पास जाते हैं; और गार्हपत्य, आहवनीयादि की भस्म को निकालकर आवसथ में डालते हैं इसलिये वह 'असन्पांसव' है। जो विज्ञ इस बात को जानता है कि ये सब देवतागण मुझमें विराजमान हैं वह सभी लोंको को जीतता है, सब लोकों में विचरता है॥३॥

---

१. सङ्गमनः इति पाठभेदः। २. अनशित्वा प्रातर्मुहूर्तं सभासन सभ्यस्य। का.श्रौ.सू. ४.३७७।
३. भस्मोद्धृतमुपयात्। का.श्रौ.सू. ४.३७८।

तेषामुपस्थानम्। यदेव सायं प्रातराहवनीयमुप च तिष्ठत ऽउप चास्ते तदेव तस्योपस्थानमथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा तदेव तस्योपस्थानमथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्तदेव तं मनसोपतिष्ठेत तदेव तस्योपस्थानम्।।४।।

(म) अथ प्रातः। (र) अनशित्वा मुहूर्त्तुँ सभायामासित्वापि कामं पल्ययेत तदेव तस्योपस्थानमथ यत्रैव

---

'तेषामुपस्थानम्' यदेव सायं-प्रातराहवनीयमुप च तिष्ठते, उप चास्ते-तदेव तस्योपस्थानम्। अथ यदेव प्रतिपरेत्य गार्हपत्यम् आस्ते वा शेते वा-तदेव तस्योपस्थानम्। अथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्-तदेव तं मनसोपतिष्ठेत, तदेव तस्योपस्थानम्।।४।।

अथ प्रातरनशित्वा मुहूर्तं सभायामासित्वापि कामं पल्ययेत-तदेव

---

तेषामुपस्थानमिति। वक्ष्यत इति शेषः। आहवनीयस्य समीपेऽवस्थानमासनं वा क्रियते; 'तदेव तस्योपस्थानम्' तस्याग्नेस्तदेवोपस्थानमित्यर्थः। प्रतिपरेत्य आवहनीयागारात् प्रतिनिवर्त्य गार्हपत्यसमीपे यदासनं वा शयनं वा क्रियते 'तदेव तस्योपस्थानम्'। संव्रजन्निति। यत्र देशान्तरे प्रवसद्यजमानः अहरहः पाठकसमये तत्साधनभूतं स्वकीयान्वाहार्यपचनं स्यात्, तत्रैव 'तं मनसोपतिष्ठेत' 'तदेव तस्योपस्थानम्'[2] अग्निहोत्रं स्वाङ्गस्यापि तस्य सम्पद्यत इत्यर्थः।।४।।

अथ प्रातरिति। सभायामासित्वेति। भोजनात् प्रागेव 'मुहूर्तं' 'सभायाम्' उपविश्य, पश्चात् यथेच्छं 'पल्ययेत' परिगमनं कुर्वीत[3] 'तत्' आसनं 'तस्य'

---

अब उन (अग्नियों) के उपस्थान (उपासना) के विषय में बताते हैं। जो सायं और प्रातःकाल आहवनीय के पास खड़ा होता और बैठता है यही उसका उपस्थान या उपासना है और जब लौटकर गार्हपत्य के पास बैठता या शयन करता है वह उसका उपस्थान या उपासना है और जब अग्निहोत्री देशान्तर प्रवास में अपने पाककाल में दक्षिणाग्नि का मन में स्मरण करता है तो वही दक्षिणाग्नि की उपासना या उपस्थान होता है।।४।।

और प्रातःकाल बिना कुछ भी खाये मुहूर्त भर सभा में बैठना और फिर

---

१. सायं प्रातराहवनीयस्यासनोपस्थाने। का.श्रौ.सू. ४.३७४। शय्यासनं वा गार्हपत्ये। का.श्रौ.सू. ४.३७५।
२. संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम्। का.श्रौ.सू. ४.३७६। ३. १४४ पृष्ठे प्रथमा टिप्पणी द्रष्टव्या।

भस्मोद्धृतमुपनिगच्छेत्तदेव तस्योपस्थानमेवमु हास्यैता देवता ऽउपस्थिता भवन्ति॥५॥

यजमानदेवत्यो वै गार्हपत्यः। (त्योऽथै) अथैष भ्रातृव्य-देवत्यो यदन्वाहार्यपचनस्तस्मादेतं नाहरहराहरेयुर्न ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं विदुष ऽएतं नाहरहराहरन्त्यन्वाहार्यपचनो वा ऽएषः॥६॥

---

**तस्योपस्थानम्। अथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्–तदेव तस्योपस्थानम्। एवमु हास्यैता देवता उपस्थिता भवन्ति॥५॥**

**यजमानदेवत्यो वै गार्हपत्यः। अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनः। तस्मादेतं नाहरहराहरेयुः न ह वा अस्य सपत्ना भवन्ति। यस्यैवं–विदुष एतं नाहरहराहरन्ति–अन्वाहार्यपचनो वा एषः॥६॥**

---

सभ्याग्नेः 'उपस्थानम्'। उद्धृतभस्मोपनिगमनमेव आवसथ्योपस्थापनम् (का.श्रौ.सू. ४.३७७)॥५॥

यदेतदन्वाहार्यस्याहरहर्दक्षिणत आहरणम्, तदुपवसथ एवाहनि कर्त्तव्यं नान्यत्रेति विधित्सुराह—**यजमानदेवत्यो वा इति**। अहरहराहरणे यजमानस्य शत्रुदेहसम्बन्धिता भवतीत्यर्थः। **'अन्वाहार्यपचनः'**—इति यौगिकी संज्ञा, तस्मात् सोऽन्वाहार्यः॥६॥

---

यथेच्छा परिभ्रमण करना यही सभ्याग्नि की उपासना है और आवसथ्याग्नि से भस्म लेकर वहाँ ठहरना, वही उसकी उपासना है। इस प्रकार इन पञ्चाग्नि-देवताओं का उपस्थान या उपासना हो जाती है॥५॥

गार्हपत्य का अभिमानी देवता यजमान है और अन्वाहार्यपचन (= दक्षिणाग्नि) का अभिमानी देवता उसका शत्रु है, इसलिये (दक्षिणाग्नि का) प्रतिदिन (गार्हपत्य से) आहरण नहीं करना चाहिये। इससे उसके शत्रु उत्पन्न नहीं होते। जो इस रहस्य को जानता है उसके यहाँ इस अग्नि को प्रतिदिन आहरण नहीं करते। यह अन्वाहार्यपचन है॥६॥

---

१. सदावाहरणम्। का.श्रौ.सू. ४.३०१।

(ऽ) उपवसथ ऽएवैनमाहरेयुः। (र्यु) यत्रैवास्मिन्यक्ष्यन्तो भवन्ति तथो हास्यैषोऽमोघायाहृतो भवति॥७॥

नवावसिते[1] वैनमाहरेयुः। (स्त) तस्मिन्पचेयुस्तद्ब्राह्मणा ऽअश्नीयुर्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयितवै

---

उपवसथ एवैनमाहेरयुः। यत्रैवास्मिन्यक्ष्यन्तो भवन्ति। तथो हास्यैषोऽमोघायाहृतो भवति॥७॥

नवावसथे वैनमाहरेयुः। तस्मिन् पचेयुः तद् ब्राह्मणा अश्नीयुः। यद्यु तन्न विन्देद् यत् पचेद्, अपि गोरेव दुग्धमधिश्रयितवै ब्रूयात्, तस्मिन्

---

**उपवसथ**[2] इति। ओदनो यस्मिन्नहनि अग्नौ पक्तव्यः। तत्रैवोपवसथेऽहनि तस्यो[3]द्धरणं कर्त्तव्यमित्यर्थः। **अमोघायेति**[4]। सप्रयोजनायेत्यर्थः॥७॥

पक्षान्तरमाह—**नवावसथेवेति**। नव आवसथो नवावसथः नूतनं स्थानम्। प्राप्य 'एनम्' अन्वाहार्यपचनम् 'आहरेयुः'। आहरणप्रयोजनमाह—**तस्मिन्निति**[6]। **यद्यु तन्नविन्देदिति**। पक्तव्यालाभे गोर्दुग्ध्वा पय एव तस्मिन्नग्नौ 'अधिश्रयितवै' अधिश्रयितुं 'ब्रूयात्' तुमर्थे तवै प्रत्ययः। (पा.सू. ३.४.९) एवञ्चान्वाहार्यपचनस्याहरहर्दक्षिणत आहरणमित्येकः पक्षः। यत्तु देशान्तरे प्रवसन् यजमानः अहरहः पाकसमये तत्साधनभूतं स्वकीयमन्वाहार्यपचनं स्मरेत्, उपवसथ एवेति द्वितीयः; नवावसथे वेति तृतीयः। सूत्रकृताऽप्युक्तम्—'आहरणमेकेषामुपवसथे नवावसथे वा तस्मिन् पचेयुरमांसम्, पाक्याभावे गोः पयोऽधिश्रयितवै ब्रूयात् 'इति' एवमन्वाहार्यपचनस्य न प्रतिदिवसमाहरणं किंतूपवसथे नवावसथे वेति

---

उपवसथ (मुख्ययाग से पूर्व का दिवस) के दिन ही दक्षिणाग्नि का उद्धरण करना चाहिये जब इसमें यज्ञ करने वाले हों। इस प्रकार दक्षिणाग्नि का उद्धरण (यजमान के) अमोघ यज्ञ प्रयोजन होने पर ही होता है॥७॥

अथवा दक्षिणाग्नि का उद्धरण नये घर में किया जाता है। उसमें पकावें और ब्राह्मणों को भोजन कराये। यदि पकाने के लिये और कुछ न मिले तो गाय के दूध को ही दक्षिणाग्नि पर रख पकावे और ब्राह्मणों को पिला दें। जो विज्ञ इस

---

१. 'नवावसथे' इति सायणः। २. एकेषामुपवसथे। का.श्रौ.सू. ४.३०२। ३. तस्याहरणम् इ.क्व.पा.। ४. अमोघ्याय इ.क्व.पा.। ५. नवावसिते वा। का.श्रौ.सू. ४.३०३। ६. तस्मिन्पचेयुरमांसम्। का.श्रौ.सू. ४.३०४। ७. पाक्याभावे गोः पयोऽधिश्रयितवै ब्रूयात्। का.श्रौ.सू. ४.३०५।

**ब्रूयात्तस्मिन्ब्राह्मणान्पाययितवै ब्रूयात्पापीयाꣳसो ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं विदुष एवं कुर्व्वन्ति तस्मादेवमेव चिकीर्षेत्॥८॥**

**(त्त) तद्यत्रैतत्प्रथमꣳ समिद्धो भवति। धूप्यत ऽइव तर्हि हैष भवति रुद्रः स यः कामयेत यथेमा रुद्रः प्रजा ऽअश्रद्धयेव त्वत्सहसेव त्वन्निघातमिव त्वत्सचतऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति॥९॥**

---

ब्राह्मणान् पाययितवै ब्रूयात्। पापीयांसो ह वा अस्य सपत्ना भवन्ति, यस्यैवं-विदुष एवं कुर्वन्ति। तस्मादेवमेव चिकीर्षेत्॥८॥

तद्यत्रैतत् प्रथमं समिद्धो भवति-धूप्यत इव तर्हि हैष भवतिं रुद्रः। 'स यः कामयेत'-यथेमा रुद्रः प्रजा अश्रद्धयेव त्वत्, सहसेव त्वत्, निघातमिव त्वत्, सचते-'एवमन्नमद्यामिति' तर्हि ह स जुहुयात्। प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति॥९॥

---

यदुक्तम् तस्य फलमाह—**पापीयांस इति**। अन्वाहार्यपचनस्य भ्रातृव्यस्थानीयत्वात् तस्य प्रतिदिवसमाहरणाभावात् शत्रुक्षयो भवतीत्यर्थः॥८॥

अथाहवनीयाग्नेरवस्थाविशेषमुपजीव्य रुद्रवरुणेन्द्रादिदेवतारूपतां ब्रुवंस्तत्फलाय काम्यान् होमकालानाह—**तद्यत्रैतदिति**। काष्ठैः समिद्धोऽग्निर्यदा प्रथमं धूमायमानो भवति तस्मिन् समये एष रुद्रात्मको भवति। **यथेमा रुद्र इति**। 'यथा' खलु 'रुद्रः 'इमाः' सर्वाः 'प्रजाः' 'अश्रद्धयेव त्वत्' अप्रियेणेव एकवारम् 'सहसेव त्वत्' बलात्कारेणेव एकवारम्, तथा 'निघातमिव त्वत्' प्रजानां हननमिव एकवारम् 'सचते' समवेति; 'एवम्' एवाहं सर्वम् 'अन्नम्' उपसंहृत्य 'अद्याम्' भक्षयेयम् 'इति' 'यः कामयेत' 'सः' यजमानः 'तर्हि तस्मिन् रुद्रावस्थेऽग्नौ 'जुहुयात्' इत्यर्थः। एवमुत्तरत्रापि योज्यम्॥९॥

---

रहस्य को जानता है कि—यतः दक्षिणाग्नि (अन्वाहार्यपचन) भ्रातृव्य (शत्रु) स्थानीय होता है अतः उसका प्रतिदिन उद्धरण नहीं करता उस यजमान के शत्रु पापी (अवनति-शील) हो जाते हैं। इसलिये ऐसा ही करना चाहिये॥८॥

जब आहवनीय-अग्नि काष्ठादि द्वारा पहले जलाई जाती है और उसमें धुआँ ही निकलता है तब यह अग्नि-रुद्र रूप होती है। जैसे—रुद्र इन प्रजाओं को कभी

---

१. 'प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसान्नमत्स्यतः। का.श्रौ.सू. ४.३६०। २. धूप्यत इव भवति। ह.स्व.पा.।

(त्यु) अथ यत्रैतत्प्रदीप्ततरो भवति। तर्हि हैष भवति व्वरुणः स यः कामयेत यथेमा व्वरुणः प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत ऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं यऽएवं विद्वांस्तर्हि जुहोति॥१०॥

(त्यु) अथ यत्रैतत्प्रदीप्तो भवति। (त्यु) उच्चैर्धूमः परमया जूत्या बल्बलीति तर्हि हैष भवतीन्द्रः स यः कामयेतेन्द्र ऽइव

---

अथ यत्रैतत्प्रदीप्ततरो भवति–तर्हि हैष भवति वरुणः। 'स यः कामयेत–' यथेमा वरुणः प्रजा गृह्णन्निव त्वत्, सहसेव त्वत्, निघातमिव त्वत्, सचते–'एवमन्नमद्यामिति' तर्हि ह स जुहुयात्। प्राप्नोति हैवैतदन्नाद्यं–य एवं–विद्वांस्तर्हि जुहोति॥१०॥

अथ यत्रैतत् प्रदीप्तो भवति–उच्चैर्धूमः परमया जूत्या बल्बलीति–तर्हि

---

अथ यत्रैतत् प्रदीप्ततरो भवतीति। प्रदीप्तास्वथ आहवनीयो वरुणात्मकः। 'गृह्णन्निव' त्वदिति। वरुणो हि पापीयसीः प्रजाः आत्मीयैः पाशैः 'गृह्णन्निव' भवति, तद्वदयमपि सर्वमन्नाद्यमुत्पादयत इत्यर्थः॥१०॥

अथ यत्रैतत् प्रदीप्तो भवतीति। उच्चैर्धूम इति। यस्यामवस्थाया-माहवनीयः प्रदीप्तः सन्नुद्गतधूमो भूत्वा महता वेगेन 'बल्बलि'–'इति' एवं

---

अपने रोष से एक बार में ही मार डालता है; उसी प्रकार यदि कोई चाहे कि मैं सम्पूर्ण अन्न (एक बारगी खा जाँऊ तो वह अग्नि की प्रथमावस्था में आहुति दे)। जो कोई यह समझकर आहुति देता है उसको सम्पूर्ण अन्न-भक्षण सामर्थ्य की प्राप्ति हो जाती है॥९॥

जब अग्नि थोड़ी प्रदीप्त हो जाती है तो वरुण-रूप हो जाती है। जैसे वरुण पापिष्ठ प्रजा को अपने पाश से पकड़कर, कठोरता से मार डालता है उसी प्रकार यदि कोई चाहे कि मैं अन्न खाऊँ तो वह अग्नि की इस अवस्था में आहुति दे। जो कोई इस रहस्य को समझकर अग्नि में आहुति देता है उसको अन्नाद्य की प्राप्ति हो जाती है॥१०॥

जब अग्नि बहुत प्रज्वलित होती है और धुआँ ऊपर रहता है तथा ज्वालायें बल्वल-शब्द करती हुई उठतीं है तो यह इन्द्र-रूप हो जाती है। जो कोई चाहे

---

१. भूयिष्ठार्चिषि गृहीत्वेव सहसा। का.श्रौ.सू. ४.३६१। २. प्रदीप्ततमे श्रीयशस्कामस्य। का.श्रौ.सू. ४.३६२।

श्रिया यशसा स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति॥११॥

(त्य) अथ यत्रैतत्प्रतितरामिव। तिरश्चीवार्च्चिः सꣳशाम्यतो भवति तर्हि हैष भवति मित्रः स यः कामयेत मैत्रेणेदमन्नमद्यामिति यमाहुः सर्व्वस्य वाऽअयं ब्राह्मणो मित्रं न वा ऽअयं कञ्चन हिनस्तीति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति॥१२॥

---

भवतीन्द्रः स यः कामयेत–'इन्द्र इव श्रिया यशसा स्याम्' इति। तर्हि ह स जुहुयात्। प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति॥११॥

अथ यत्रैतत् प्रतितरामिव तिरश्चीवार्चिः संशाम्यतो भवति, तर्हि हैष भवति मित्रः। स यः कामयेत–'मैत्रेणेदमन्नमद्यामिति' यमाहुः–सर्वस्य वा अयं ब्राह्मणो मित्रम्। न वा अयं कंचन हिनस्तीति। तर्हि ह स जुहुयात्। प्राप्नोति हैवैतदन्नाद्यं–य एवं विद्वांस्तर्हि जुहोति॥१२॥

---

शब्दायते, तदवस्थोऽग्निरिन्द्रात्मक इत्यर्थः॥११॥

**अथ यत्रैतत् प्रतितरामिवेति।** काष्ठेषु दग्धेषु 'संशाम्यतः' अग्नेः अर्च्चिः' 'प्रतितरां' निकृष्टतराम् 'इव' ऊर्ध्वाऽधोगमनाभावे 'तिरश्चीव' भवति तदवस्थापन्न आहवनीयो मित्र इत्यर्थः। एतदवस्थहोमे योग्यमधिकारिणमाह—**यमाहुरिति।** ब्राह्मणस्य यजमानस्य होमकाले इत्यर्थः॥१२॥

---

कि इन्द्र के समान श्री और यश वाला हो जाऊँ तो वह अग्नि की इस अवस्था में आहुति दे। जो विज्ञ इस रहस्य को समझकर आहुति देता है उसको तथाविध अन्न आदि की प्राप्ति हो जाती है॥११॥

जब अग्नि की ज्वालायें घटती हुई शांत सी तिरछी जलती है तो यह मित्र-रूप हो जाती है। यदि कोई चाहे कि मित्रता से अन्न खाऊँ; जिसके विषय में कहा जाता है कि अमुक ब्राह्मण सबका मित्र है, वह किसी की हानि नहीं करता, तो वह अग्नि की इस अवस्था में आहुति दे। जो इस रहस्य को समझकर आहुति देता है वह तथाविध अन्नाद्यको प्राप्त कर लेता है॥१२॥

---

१. अर्चिः प्रत्यवाये मैत्रेणान्नमस्त्यतः। का.श्रौ.सू. ४.३६३। २. ऊर्ध्वाध गमनेन रहित इव भवति। इति स्व.भा.।

(त्यु) अथ यत्रैतदङ्गाराश्चाकश्यन्त ऽइव। तर्हि हैष भवति ब्रह्म स यः कामयेत ब्रह्मवर्च्चसी स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति॥१३॥

(त्ये) एतेषामेकꣳ संव्वत्सरमुपेत्सेंत्। (त्स्व) स्वयं जुह्वद्यदि वास्यान्यो जुहुयादथ योऽन्यथान्यथा जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यꣳ स सामि निवर्तेतैवं तदथ यः सार्द्धं

---

अथ यत्रैतदङ्गाराश्चाकश्यन्त इव-तर्हि हैष भवति ब्रह्म। स यः कामयेत-'ब्रह्मवर्चसी स्यामिति' तर्हि ह स जुहुयात्। प्राप्नोति हैवैतदन्नाद्यं-य एवं विद्वांस्तर्हि जुहोति॥१३॥

एतेषामेकं संवत्सरमुपेत्सेंत्-स्वयं जुह्वत्, यदि वाऽस्यान्यो जुहुयात्। अथ योऽन्यथान्यथा जुहोति-यथाऽपो वाऽभिखनन्, अन्यद्वान्नाद्यम्, स सामि निवर्तेत-एवं तत्। अथ यः सार्द्धं जुहोति-यथाऽपो वाऽभिखनन्,

---

अथ यत्रैतदङ्गाराश्चाकश्यन्त इवेति। सर्वासु ज्वालासु निवृत्तासु केवलमङ्गारा अत्यर्थं दीप्यन्ते; तस्यामवस्थायाम् 'एषः' अग्निः 'ब्रह्म' परब्रह्मात्मको 'भवति'॥१३॥

एतेषामेकमित्यादि। 'एतेषां' रुद्राद्यवस्थाविशेषाणां मध्ये 'एकं' 'संवत्सरं' संवत्सरपर्यन्तं निरन्तरमनुतिष्ठेत्। 'यदि' यजमानः 'स्वयम्' एवाग्निहोत्रं 'जुह्वत्' भवति 'अन्यो वा' 'अध्वर्युः जुहुयात्', उभयोरप्येष संवत्सरनियमः। यस्तु संवत्सरमध्ये उक्तनियमं परित्यज्य 'अन्यथा' प्रतिदिवसं प्रकारान्तरेण 'जुहोति', तस्य दोषं दृष्टान्तपुरस्सरमाह—यथेति। 'अपः' अभिलक्ष्य वापीकूपादिकं 'खनन्'

---

जब इस (अग्नि) की ज्वालायें शान्त होकर अंगारे मात्र जलते हैं तब यह ब्रह्म-रूप हो जाती है। जो चाहे कि मैं ब्रह्मवर्चस् सम्पन्न हो जाऊँ तो वह अग्नि की इस अवस्था में आहुति दे। जो इस रहस्य को समझकर आहुति देता है उसे तथाविध अन्न (फल) की प्राप्ति हो जाती है॥१३॥

उसको साल भर तक अग्नि की इन अवस्था विशेषों में से एक का सेवन करना चाहिये। चाहे यजमान स्वयं आहुति दे अथवा अध्वर्यु आदि किसी से दिलावे और जो एक वर्ष के इस नियम को छोड़कर प्रतिदिवस प्रकारान्तर से अर्थात् कभी

---

१. अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य। का.श्रौ.सू. ४.३६४। २. संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे। का.श्रौ.सू. ३.३७१।

जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यं तत्क्षिप्रेऽभितृन्द्यादेवं तत्॥१४॥

(दु) अभ्रयो ह वा ऽएता ऽअन्नाद्यस्य यदाहुतयः। (यो) अभि हैवैतदन्नाद्यं तृणत्ति यऽएवं विद्वानग्निहोत्रं जुहोति॥१५॥

सा या पूर्व्वाहुतिः। (स्ते) ते देवा ऽअथ योत्तरा ते मनुष्या ऽअथ यत्स्रुचि परिशिनष्टि ते पशवः॥१६॥

---

अन्यद्वान्नाद्यम्–तत् क्षिप्रेऽभितृन्द्यात् एवं तत्॥१४॥

अभ्रयो ह वा एता अन्नाद्यस्य यदाहुतयः। अभि हैवैतदन्नाद्यं तृणत्ति–य एवं विद्वानग्निहोत्रं जुहोति॥१५॥

सा या पूर्वाहुतिः–ते देवाः। अथ योत्तरा–ते मनुष्याः। अथ यत् स्रुचि परिशिनष्टि–ते पशवः॥१६॥

---

'अन्यद्' व्रीहियवादिकम् 'अन्नाद्यं वा' सम्पादयन् 'सामि' अर्द्धकृते 'यथा निवर्तेत' 'एवम्' एव 'तत्' अन्यथाऽग्निहोत्रहवनमित्यर्थः।

संवत्सरपर्यन्तं निरन्तरमेकं पक्षं कुर्वतो यजमानस्योद्दिष्टफलप्राप्तिमाह—**अथ य इति।** 'सार्द्धं' सह, नैरन्तर्येण 'यः' संवत्सरं 'जुहोति', सिद्धमन्यत्। 'अन्नाद्यम्' 'अभितृणत्ति' स उत्पादयतीत्यर्थः॥१४॥१५॥

---

किसी रूप में और कभी किसी रूप में आहुति देता है तो वह वैसा ही व्यर्थ है जैसे पानी के लिये कभी यहाँ खोदे, कभी वहाँ या अन्न उपजाने के लिये प्रयत्न करे और बीच में छोड़ दे। और यदि लगातार एक रूपतया आहुति देता जाय तो वैसा ही होता है जैसे खोदता-खोदता जल को या कृषि के लिये प्रयत्न करता-करता अन्न को शीघ्र प्राप्त कर लेता है॥१४॥

ये जो आहुतियाँ है वह एक प्रकार से अन्न प्राप्ति के साधन रूप उपकरण अभ्रि या खुरपा है। जो इस रहस्य को समझकर अग्निहोत्र करता है वह अन्न-समृद्धि की प्राप्ति करता है॥१५॥

जो पूर्वाहुति है वह देवगणों की है, जो उत्तराहुति है वह मनुष्य-गणों की और जो स्रुचि में बचा रहता है वह पशुओं की होती है॥१६॥

---

१. सायं प्रातर्वा का० श्रौ० सू० ४.१३.१।

स वै कुनीय ऽइव पूर्व्वामाहुतिं जुहोति भूय इवोत्तरां भूय इव स्रुचि परिशिनष्टि॥१७॥

स यत् कुनीय ऽइव पूर्व्वामाहुतिं जुहोति कुनीयाꣳसो हि देवा मनुष्येभ्यो ऽथ यद्भूयऽइवोत्तरां भूयाꣳसो हि मनुष्या देवेभ्योऽथ यद्भूय ऽइव स्रुचि परिशिनष्टि भूयाꣳसो हि पशवो मनुष्येभ्यः कुनीयाꣳसो ह वाऽअस्य भार्या भवन्ति भूयाꣳसः पशवो य एवं विद्वानग्निहोत्रं जुहोति तद्वै समृद्धं यस्य

---

स वै कनीय इव पूर्वामाहुतिं जुहोति, भूय इवोत्तराम्, भूय इव स्रुचि परिशिनष्टि॥१७॥

स यत् कनीय इव पूर्वामाहुतिं जुहोति–कनीयांसो हि देवा मनुष्येभ्यः। अथ यद् भूय इवोत्तराम्–भूयांसो हि मनुष्या देवेभ्यः। अथ यद् भूय इव स्रुचि परिशिनष्टि–भूयांसो हि पशवो मनुष्येभ्यः। कनीयांसो ह वा अस्य भार्या भवन्ति; भूयांसः पशवः। य एवं विद्वानग्निहोत्रं जुहोति। तद्वै

---

पूर्वोत्तराहुतिद्रव्ययोरवशिष्टस्य चोत्तरोत्तरं भूयस्त्वं विधाय प्रतिपादयति—सा येत्यादिना॥१६॥१७॥

**स यत् कनीय इति।** **भार्या भवन्तीति।** भर्त्तव्याः प्रजा भवन्तीत्यर्थः। **तद्वै समृद्धमिति।** यत्र खलु भोक्तॄणामल्पीयस्त्वम् भोग्यसम्पत्तिर्भूयसी, तत् खलु

---

पूर्वाहुति में थोड़ा कम हविष्य डालकर होम होता है, उत्तराहुति में अधिक और उससे भी अधिक स्रुचि में बचा रखता है॥१७॥

पूर्वाहुति में थोड़ा सा कम हविर्द्रव्य इसलिये डालता है कि देवगण मनुष्यों से कम है। दूसरी आहुति में अधिक हविर्द्रव्य इसलिये डालता है कि मनुष्य देवों से अधिक है। स्रुचि में अधिक इसलिये शेष रखता है कि पशु मनुष्यों से भी अधिक है। जो विज्ञ इस रहस्य को समझकर अग्निहोत्र करता है उसके आश्रित मनुष्यों (= भार्य) की अपेक्षा पशु अधिक होते हैं। जिसके भार्य (= आश्रित मनुष्य)

कुनीयाꣳसो भार्या ऽअसन्भूयाꣳसः पशवः॥१८॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम्॥३॥२॥

इति तृतीयाध्याये द्वितीयं ब्राह्मणम्॥३॥२॥

इति द्वितीयकाण्डे द्वितीयः प्रपाठकः॥२॥२॥

---

समृद्धम्। यस्य कनीयांसो भार्या असन्, भूयांसः पशवः॥१८॥

---

समृद्धमित्यर्थः॥१८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीये काण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम्।।२।।३।।२।।

---

कम और पशु अधिक हों उसी को समृद्ध पुरुष कहते हैं॥१८॥२॥

❊

---

१. स्वयं वा जुहुयात् अपरथे नियमः। का.श्रौ.सू. ४.१५१-८०।

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम्

## तृतीयाध्याये तृतीयं ब्राह्मणम्

हरिः ॐ। यत्र वै प्रजापतिः प्रजाः ससृजे। स यत्राग्निँ ससृजे स इदं जातः सर्व्वमेव दग्धुं दध्रऽइत्येवाबिलमेव ता यास्तर्हि प्रजाऽआसुस्ता हैनँ सम्पेष्टुं दध्रिरे सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय॥१॥

स होवाच। न वा ऽअहमिदं तितिक्षे हन्त त्वा प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिँल्लोके

---

यत्र वै प्रजापतिः प्रजाः ससृजे। स यत्राग्निं ससृजे स इदं जातः सर्वमेव दग्धुं दध्रे। इत्येवाबिलमेव ताः–यास्तर्हि प्रजा आसुः। ता हैनं सम्पेष्टुं दध्रिरे। सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय॥१॥

स होवाच–'न वा अहमिदं तितिक्षे, हन्त त्वा प्रविशानि, तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिंल्लोके जनयित्वा भरिष्यसि

---

अथैतयोर्गार्हपत्याहवनीययोरग्न्योरुपस्थानं विधित्सुः प्राग्विहिते आधानाग्निहोत्रे समुच्चित्य क्रमेण स्तौति—**यत्र वा इत्यादिना**। यदा खलु प्रजापतिः प्रजाः सृष्टवान्, तदा 'अग्निम्' इममपि ससर्ज। 'सः' च 'जातः' अग्निः 'सर्वम्' 'इदं' जगत् 'दग्धुम्' 'दध्रे' उद्युक्तो बभूव, 'इति' इदं सर्वं जगद् व्याकुलमभूदित्यर्थः। **ता हैनमिति**। 'एनम्' अग्निम्। **सोऽतितिक्षमाण इत्यादि**। 'अतितिक्षमाणः' प्रजाभिश्चिकीर्षितं पेषणमसहमानः कर्माधिकारिणं 'पुरुषम्' अभिजगामेत्यर्थः॥१॥

**स होवाचेति**। अभिगम्य किमुक्तवानिति, तदाह—**न वा अहमिति**।

---

(सृष्ट्यारम्भ में) जब प्रजापति ने प्रजायें उत्पन्न की तो अग्नि को भी उत्पन्न किया। यह उत्पन्न होते ही सबको जलाने लगी और समस्त प्रजायें व्याकुल हो गईं। तब जो प्रजायें थी उसने उसको बुझाना चाहा। यह सहन न करके वह (अग्नि) कर्म में अधिकार रखने वाले पुरुष के पास पहुँची॥१॥

उसने कहा—'मैं यह (= अपना धर्षण) सहन नहीं कर सकता। क्यों न मैं तुम्हारे में प्रविष्ट हो जाऊँ। तुम मुझे उत्पन्न करके पालन करना। जैसे तू इस लोक में मुझे जन्म देकर पालन करेगा वैसे ही मैं परलोक में तेरे (सूक्ष्म शरीर) को

जनयित्वा भरिष्यस्येवमेवाहं त्वाममुष्मिँल्लोके जनयित्वा भरिष्यामीति॥२॥

तथेति तं जनयित्वाऽबिभः। स यदग्नीऽआधत्ते तदेनं जनयति तं जनयित्वा बिभर्ति स यथा हैवैष एतमस्मिँल्लोके जनयित्वा बिभर्त्येवमु हैवैष ऽएतममुष्मिँल्लोके जनयित्वा बिभर्त्ति॥३॥

तन्न साम्युद्वासयेत। सामि हास्मै स ग्लायति स यथा हैवैष

---

एवमेवाहं त्वाममुष्मिल्लोके जनयित्वा भरिष्यामीति॥२॥

तथेति तं जनयित्वाऽबिभः। स यदग्नी आधत्ते–तदेनं जनयति–तं जनयित्वा बिभर्ति। स यथा हैवैष एतमस्मिँल्लोके जनयित्वा बिभर्ति, एवमु हैवैष एतममुष्मिँल्लोके जनयित्वा बिभर्ति॥३॥

तन्न साम्युद्वासयेत। सामि हास्मै स ग्लायति। स यथा हैवैष एतस्मा

---

'तितिक्षे' सोढुं शक्नोमि। निगदसिद्धमन्यत्॥२॥

एवमग्निना प्रार्थितः, 'तथा' 'इति' अङ्गीकृत्य पुरुषेण तथैवानुष्ठितमिति दर्शयति—**स यदग्नी इत्यादिना**॥३॥

एवमग्न्याधानेन जनितस्याग्नेर्भरणं विधाय, तस्य भरणात् प्राक् उद्वासनं निषेधति—**तन्नेति**। 'सामि' मध्ये यद्यग्निम् 'उद्वासयेत्' विसृजेत, तर्हि 'अस्मै' यजमानाय 'सः' अग्निः 'सामि' अर्द्धग्लानियुक्तो भवति। **स यथेत्यादि**। इह

---

जन्म देकर पालन करुँगी। (तब) उस (पुरुष) ने कहा—'तथास्तु'। उसने उसे उत्पन्न किया और पालन किया॥२॥

जब मनुष्य दो अग्नियों का आधान करता है तो (एक प्रकार से) उनको उत्पन्न करता है और उत्पन्न करके उनका (शिशुवत्) पालन-पोषण करता है और जैसा वह इस लोक में उत्पन्न करके इनका पालन करता है वैसे ही वह (अग्नि) उस लोक में पुरुष के सूक्ष्म शरीर को उत्पन्न करके उसका पालन करता है॥३॥

अग्न्याधान व अग्निहोत्र धारण करने के बाद मनुष्य को उसे बीच में नहीं छोड़ना चाहिये। यदि इसको बीच में हटा देगा तो जिस प्रकार इस लोक में वह अग्नि को बीच में ही ग्लानियुक्त करेगा उसी प्रकार अग्नि भी उस लोक में उसको

ऽएतुस्मा ऽअस्मिँल्लोके सामि ग्लायत्येवमु हैवैष एतुस्मा ऽअमुष्मिँल्लोके सामि ग्लायति तुस्मान्न साम्युद्वासयेत॥४॥

स यत्र म्रियते। यत्रैनमग्नावभ्यादधति तुदेषोऽग्नेरुधिजायते स ऽएष पुत्रः सुन्पिता भवति॥५॥

तुस्मादेतदृषिणाभ्युनूक्तम्। ( ॐ ) शतमिन्नु शरुदोऽअुन्ति देवा

---

अमुष्मिँल्लोके सामि ग्लायति–एवमु हैवैष एतस्मा अमुष्मिँल्लोके सामि ग्लायति। तस्मान्न साम्युद्वासयेत॥४॥

स यत्र म्रियते–यत्रैनमग्नावभ्यादधति–तदेषोऽग्नेरधिजायते। स एष पुत्रः सन् पिता भवति॥५॥

तस्मादेतदृषिणाभ्यनूक्तम्–'शतमिन्नु शरदो अन्ति देवाः। यत्रा नश्चक्रा

---

लोके येयमग्निग्लानिः, सा आमुष्मिकयजमानग्लानेर्हेतुर्भवतीत्यर्थः। तस्मादामरणान्तम् अग्निर्द्धार्य इति निगमयति—**तस्मादिति**। (का.श्रौ.सू. २.१०८)॥४॥

**स यत्रेति। यत्रैनमग्नाविति।** 'एनं' मृतं यजमानं पैतृमेधिकविधिना अग्नौ प्रक्षिपन्तीत्यर्थः। 'सः' 'एषः' अग्निः। **पुत्रः सन् पिता भवतीति।** यजमानस्य जीवनावस्थायामाधानेनोत्पादितत्वादग्निस्तस्य पुत्रः, मरणादूर्ध्वन्तु तस्मादग्नेर्यजमानस्य जननात् पुत्र एव तस्य पिता भवतीत्यर्थः॥५॥

ननु पुत्रस्य सतः पितृत्वं विरुद्धमित्याशङ्क्य काञ्चिदृचं संवादयति—**तस्मादिति।** 'ऋषिणा' मन्त्रेण। स च **'शतमिन्नु शरदः'** इत्यादिकः

---

ग्लानियुक्त कर देगा। इसलिये पुरुष को चाहिये कि अग्नि को यावज्जीवन धारण करे बीच में समाप्त नहीं करना चाहिये॥४॥

और जब वह (अग्निहोत्री) मरता है और उसे चिता की अग्नि पर रखते हैं तब वह अग्नि से ही (सूक्ष्म शरीर के रूप में) पुनः उत्पन्न होता है। जो (अग्नि) अब तक उसका पुत्र–स्थानीय था वह अब उसका पिता–स्थानीय हो जाता है॥५॥

इसीलिये मन्त्रद्रष्टा ऋषि ने कहा था—'शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः' (यजु. २५.२२; ऋ. १.८९.९)। (मन्त्रार्थ–) 'हे देवगण! आयु के रूप में सौ वर्ष ही हमारे सामने हैं, जिसमें हमारे शरीर अन्ततः वृद्धावस्था को प्राप्त कर जाते

---

१. 'धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान् प्राचः करोति' इति सूत्रभाष्ये कर्कोद्धृता श्रुतिः। अपि च। अग्न्युत्सर्गे दोषो दृश्यते इत्युपक्रम्य 'सवीरहा वा स एष भवति योऽग्नीनुत्सृजति' इति। 'वीरः अग्निः'। अग्निधारणं पुरुषधर्मः।

यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषतायुर्गन्तोरिति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मादग्नीऽआदधीत॥६॥

तद्वा ऽएष एव मृत्युः। (र्यु) य ऽएष तपति तद्यदेष ऽएव मृत्युस्तस्माद्या ऽएतस्मादर्व्वाच्यः प्रजास्ता म्रियन्तेऽथ याः पराच्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्व्वाः प्रजा रश्मिभिः

---

जरसं तनूनाम्। पुत्रासों यत्र पितरो भवन्ति। मा नो मध्या रीरिषतायुर्गन्तोः'–इति। (वा.सं.अ. २५ मं. २२) पुत्रो ह्येष सन्त्सः पुनः पिता भवति। एतन्नु तद्–यस्मादग्नी आदधीत॥६॥

तद्वा एष एव मृत्युः–य एष तपति। तद् यदेष एव मृत्युः–तस्माद्, या एतस्मादर्वाच्यः प्रजास्ता म्रियन्ते। अथ याः पराच्यस्ते देवाः। तस्मादु तेऽमृताः। तस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिताः।

---

(ऋ.सं. १.७९.९)। तस्य चायमर्थः—हे 'देवाः!' 'अन्ति' अन्तिके, मनुष्याणां समीपे आयुष्ट्वेन परिकल्पिताः 'शतं' शतसङ्ख्याका एव 'शरदः' संवत्सराः खलु 'यत्र' यस्मिन् आयुषि शतसंवत्सरे 'तनूनां' शरीराणां 'जरसं' जरां 'चक्रा' कृतवन्तः; 'यत्र' च 'पुत्रासः' सन्तोऽपि अपत्योत्पादनेन पितरो भवन्ति, 'नः' अस्माकं तत् आयुः 'गन्तोः' गमनात् पूर्वं मध्या' मध्ये मा रीरिषत हिंसनं मा कृषत इति। **पुत्रो ह्येष सन्निति।** मानुषस्य यजमानस्य 'एषः' अग्निः आधानादुत्पन्नतया 'पुत्रः सन्' देवशरीरमापन्नस्य तस्योत्पादनेन 'पुनः पिता भवति' 'इति' 'एतत्' खलु 'ऋषिणा' 'अभ्यनूक्तम्' इत्यर्थः॥६॥

अग्निहोत्रहोमस्यामृतत्वप्राप्तिसाधनत्वं वक्तुं सूर्यस्य मृत्युरूपतां प्रतिपादयति—**तद्वा एष एवेति। रश्मिभिरिति।** सूर्यस्य किरणैः प्राणेषु बद्धा

---

हैं। तब पुत्र पिता हो जाते हैं। आप हमारी उस पूर्ण आयु को बीच में मत विच्छिन्न करना'। जो (अग्नि) मनुष्य के लिये अब तक पुत्र अर्थात् पालनीय था अब मनुष्यके मरणोपरान्त वह अग्नि ही पिता (= पालक) हो जाता है। यही कारण है कि मनुष्य को अग्न्याधान (अवश्य) करना चाहिये॥६॥

यह जो महान् तेजस्वी सूर्य है वही मृत्यु (= यम) है। यतः यह मृत्यु का विनिर्धारक है अतः इसकी रश्मियों (किरणों) के नीचे रहने वाली प्रजायें मृत्युशील होती है और जो उससे परली ओर अर्थात् सूर्य-रश्मियों से ऊपर हैं, वे देव हैं,

प्राणेष्वभिहिता यथाश्वोऽश्वाभिधान्या वाभीशुभिर्व्वैवमस्येमाः सुर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहितास्तस्मादु रश्मयः प्राणानभ्युवतायन्ते॥७॥

स यस्य कामयते। तस्य प्राणमादायोदेति स म्रियते स यो हैतं मृत्युमनतिमुच्याथामुं लोकमेति यथा हैवास्मिँल्लोके न संयुतमाद्रियते यदा यदैव कामयतेऽथ मारयत्येवमु हैवामुष्मिँल्लोके पुनः पुनरेव प्रमारयति॥८॥

---

यथाऽश्वोऽभिधान्या वाभीशुभिर्वा–एवमस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिताः तस्मादु रश्मयः प्राणानभ्यवतायन्ते॥७॥

स यस्य कामयते–तस्य प्राणमादायोदेति–स म्रियते। स यो हैतं मृत्युमनतिमुच्य, अथामुम् लोकमेति यथा हैवास्मिँल्लोके न संयतमाद्रियते–यदा यदैव कामयते–अथ मारयति–एवमु हैवामुष्मिँल्लोके पुनः पुनरेव प्रमारयति॥८॥

---

इत्यर्थः। तत्र दृष्टान्तः—**यथेति**। अश्वोऽभिधीयते बध्यतेऽनयेत्यश्वाभिधानी तया; अभीशवोऽन्या रज्जवस्ताभिर्वेत्यर्थः। **तस्मादु रश्मय इति**। यस्मात् सूर्यरश्मिभिः प्राणेषु प्रजा बद्धाः तस्मादेव कारणात् ते 'रश्मयः 'प्रजानां प्राणान्' 'अभि'—लक्ष्य 'अवतायन्ते' अवसार्य्यन्ते॥७॥

**स यस्येत्यादि**। निगदसिद्धम्। **स यो हैतमिति**। 'एतं' सूर्यात्मकं मृत्युम् 'अनतिमुच्य' अनतिक्रम्य 'यः' स्वर्गं प्राप्नोति, 'सः' भूलोक इव तत्रापि 'पुनरेव' मार्यते, न त्वमृतत्वप्राप्तिस्तस्येत्यर्थः॥८॥

---

अतएव अमर हैं। ये सब प्रजायें सूर्य-किरणों द्वारा प्राणों में बाँधी हुई हैं। जिस प्रकार अश्व, नकेल से अथवा लगाम की रस्सियों से सारथि द्वारा नियंत्रित रहता है, उसी प्रकार सृष्टि की समस्त प्रजाओं के प्राण सूर्य-रश्मियों से आबद्ध हो नियंत्रित हैं; इसीलिये सूर्य-किरणें प्राणों तक जाती हैं॥७॥

यह सूर्य जिसके चाहता है उसके प्राण लेकर उदय होता है और वह (प्राणी) मर जाता है। इस सूर्य रूपी मृत्यु से कोई भी न बचकर (मरणोपरान्त) उस लोक में जाता है। (अग्न्याधान के माध्यम से अग्नि की उपासना न करने वाले) प्राणी को वहाँ भी बार-बार मारा जाता है। (उसी प्रकार जैसे इस लोक में कैदी पर सख्ती करते हैं और जब चाहते हैं तब मारते हैं)॥८॥

स यत्सायमस्तमिते द्वे ऽआहुती जुहोति। तुदेताभ्यां पूर्व्वाभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठत्यथ यत्प्रातरनुदिते द्वे ऽआहुती जुहोति तुदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठति स ऽएनमेष ऽउद्यन्नेवादायोदेति तुदेतं मृत्युमतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य एवमेतामग्निहोत्रे मृत्योरतिमुक्तिं व्वेद॥९॥

यथा वा ऽइषोरनीकम्। (मे) एवं यज्ञानामग्निहोत्रं येन

---

स यत् सायमस्तमिते द्वे आहुती जुहोति–तदेताभ्यां पूर्वाभ्यां पद्भ्यामेतस्मिन् मृत्यौ प्रतितिष्ठति। अथ यत् प्रातरनुदिते द्वे आहुती जुहोति–तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन् मृत्यौ प्रतितिष्ठति स एनमेष उद्यन्नेवादायोदेति। तदेतं मृत्युमतिमुच्यते। सैषाग्निहोत्रे मृत्योरतिमुक्तिः। अति ह वै पुनर्मृत्युं मुच्यते–य एतामग्निहोत्रे मृत्योरतिमुक्तिं वेद॥९॥

यथा वा इषोरनीकम्–एवं यज्ञानामग्निहोत्रम्। येन वा इषोरनीकमेति,

---

कथं तर्हि तस्य मृत्योरतिमोक इति, तत्राह—**स यदिति**। सायम्प्रातरग्निहोत्रहोमे द्वे द्वे आहुती हूयेते, अतस्ताभिश्चतसृभिराहुतिभिः तस्मिन् सूर्यात्मके 'मृत्यौ' विषयभूते सति, यजमानः प्रतितिष्ठति। 'स एषः सूर्यः 'एनं' यजमानं रश्मिभिः 'आदाय' एव 'उदेति', स च 'एतं' मृत्युम् अतीत्य 'मुच्यते' इत्यर्थः। एवमग्निहोत्रे मृत्योरतिमुक्तिं प्रतिपाद्य, तद्वेदितुः फलमाह—**अति हेति**॥९॥

एवमग्निहोत्रद्वारा इतरयज्ञेष्वतिमुक्तिः सिद्धेति दर्शयति—**यथा वा इत्यादिना**। 'यथा' खलु 'इषोः' बाणस्य 'अनीकम्' मुखम् प्रधानम्, 'एवम्' एव

---

अग्निहोत्र होम में जो सायंकाल सूर्यास्त होने पर दो आहुतियाँ देता है वह इन दो अगले पैरों से इस मृत्यु पर प्रतिष्ठा पाता है और जो सूर्योदय से पूर्व दो आहुतियाँ देता है वह मानो पिछले दो पैरों से इस मृत्यु पर प्रतिष्ठा पाता है। जब सूर्य निकलता है तो उसको लेकर उदित होता है, और वह अग्निहोत्री मृत्यु से ऊपर उठकर मुक्त हो जाता है। यह अग्निहोत्र के द्वारा मृत्यु से ऊपर उठकर मुक्त होने का विधान है। जो इस प्रकार अग्निहोत्र द्वारा मृत्यु से ऊपर उठकर मुक्ति का ज्ञान रखता है वह बार-बार की भौतिक मृत्यु (–बन्धन) से छूट जाता है॥९॥

जैसे तीर में नोक प्रमुख होती है वैसे ही यज्ञों में 'अग्निहोत्र' सर्वप्रमुख है। जिस लक्ष्य पर तीर की नोक गिरती है उसी में पूरा तीर प्रविष्ट हो जाता है,

वाऽइषोरुनीकमुेति सुर्व्वा वै तेनेुषुरेत्येतेुनो हास्य सुर्व्वे यज्ञक्रतुव एुतं मृत्युमुतिमुक्ताः॥१०॥

(ऽ) अुहोरात्रे ह वुा ऽअमुष्मिँल्लोकेु परिप्लुवमाने। पुुरुषस्य सुकृतुं क्षिणुतोऽर्व्वाुचीनं वाऽ अुतोऽहोरात्रे तुथो हास्याहोरात्रे सुकृतं नु क्षिणुतः॥११॥

स युथा रथोपस्थे तिुष्ठन्। (न्नु) उपुरिुष्टाद्रथचक्रे पल्युङ्गमाने[1]

---

सर्वा वै तेनेषुरेति। एतेनो हास्य सर्वे यज्ञक्रतवः-एतं मृत्युमतिमुक्ताः॥१०॥

अहोरात्रे ह वा अमुष्मिँल्लोके परिप्लवमाने पुरुषस्य सुकृतं क्षिणुतः। अर्वाचीनं वा अतोऽहोरात्रे तथो हास्याहोरात्रे सुकृतं न क्षिणुतः॥११॥

स यथा रथोपस्थे तिष्ठन्नुपरिष्टाद् रथचक्रे पल्यङ्गमाने उपावेक्षेत, एवं

---

'यज्ञानामग्निहोत्रम्'। 'येन' खलु लक्षणेन 'इषोरनीकं' शल्यरूपम् 'एति' प्राप्नोति 'तेन' 'सर्वा इषुः' प्राप्नोति एवम् अग्निहोत्रसम्बद्धाः सर्वे दर्शपूर्णमासादयः यज्ञक्रतवः तद्द्वारा सूर्यात्मकं 'मृत्युम्' अतिक्रान्ता इत्यर्थः॥१०॥

एवं मृत्योरतिमुक्तिरहोरात्राभ्यामपि यजमानेन ज्ञातव्येति प्रतिपादयति— **अहोरात्रे हेति**। 'परिप्लवमाने' पर्य्यावर्त्तमाने 'अहोरात्रे' आमुष्मिकं स्वर्गादिसुखहेतुभूतं 'सुकृतं' कर्म 'क्षिणुतः' क्षपयतः। यदा तु विद्वान् उदीरितरीत्या सूर्यमतिक्रम्य वर्त्तते, तदा 'अहोरात्रे' एवाधीने भवतः; तथा चाहोरात्रानाक्रान्तत्वाद् विदुषः सुकृतं न क्षीयत इत्यर्थः॥११॥

एतदेव दृष्टान्तेनोपपादयति—**स यथेति**। 'रथोपस्थे' रथस्योत्सङ्गे

---

उसी प्रकार इस (अग्निहोत्र) द्वारा दर्शपूर्णमासादि समस्त यज्ञ मृत्यु से ऊपर उठाकर मुक्ति के साधन बनते हैं॥१०॥

रात और दिन रूपी घूमता हुआ कालचक्र मनुष्य के स्वर्गादिसुखसाधनभूत सुकृत को क्षीण कर देता हैं। परन्तु विज्ञ पुरुष जब शास्त्रोक्त रीति से अग्निहोत्रादि कर्मानुष्ठान द्वारा मृत्यु से ऊपर उठ जाता है तो अहोरात्र उसके अधीन हो जाता है और तब दिन-रात रूपी कालचक्र उसके सुकृत को क्षीण नहीं करते॥११॥

जिस प्रकार रथ पर बैठा हुआ व्यक्ति रथ के घूमते हुये पहियों को ऊपर से देखता है उसी प्रकार अग्निहोत्रादि कर्मों से सूर्य (= मृत्यु) से ऊपर उठा हुआ व्यक्ति सूर्यमण्डल से नीचे प्रवर्तमान कालचक्र गति = दिन और रात को अवाङ्मुख हो

---

१. 'पल्यङ्क्ष' इति क्वचित्।

ऽउपावेक्षेतैवं परस्तादर्व्वाचीनोऽहोरात्रे उपावेक्षते न ह वा ऽअस्याहोरात्रे सुकृतं क्षिणुतो यऽ एवमेतामहोरात्रयोरतिमुक्तिं व्वेद॥१२॥

पूर्व्वेणाहवनीयं परीत्य। (त्या) अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं व्विदुस्त ऽएनमेतदन्तरेणातियन्तं व्विदुरयं वै नऽ इदं जुहोतीत्यग्निर्व्वै पाप्मनोऽपहन्ता तावस्याहवनीयश्च गार्ह-पत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति॥१३॥

---

परस्तादर्वाचीनोऽहोरात्रे उपावेक्षते, न ह वा अस्याहोरात्रे सुकृतं क्षिणुतः- य एवमेतामहोरात्रयोरतिमुक्तिं वेद॥१२॥

पूर्वेणाहवनीयं परीत्यान्तरेण गार्हपत्यं चैति। न वै देवा मनुष्यं विदुः। त एनमेतदन्तरेणातियन्तं विदुः-'अयं वै न इदं जुहोति' इति। अग्निर्वै पाप्मनोऽपहन्ता। तावस्याहवनीयश्च गार्हपत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति॥१३॥

---

'उपरिष्टात्' 'तिष्ठन्' पल्यङ्गमाने पर्यावर्त्तमाने रथचक्रे 'अर्वाचीनः' अवाङ्मुखः 'अवेक्षेत'। एवं सूर्यमतिक्रम्य स्थितो विद्वानपि सूर्यमण्डलस्याधस्तात्पर्यावर्तमाने अहोरात्रे अवाङ्मुखोऽवेक्षत इत्यर्थः। **न ह वेत्याद्युक्तार्थम्**॥१२॥

होमार्थमन्तरागमनं विधाय प्रशंसति—**पूर्वेणेति** (का.श्रौ.सू. ४.३७३)। दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु। अयं प्रवेशे द्वारनियमः। आहवनीयस्य पुरस्तात् परिक्रम्य गार्हपत्याहवनीययोर्मध्ये गच्छेदित्यर्थः। तथा च सूत्रितम्— 'अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः' (का.श्रौ.सू. ४.३०७) इति। **न वै देवा** इत्यादि सुगमम्॥१३॥

---

देखता है। जो इस प्रकार दिन और रात (रूपी कालचक्र-गति) से छुटकारा पाने का रहस्य जानता है, उसके सुकृत को दिन और रात क्षीण नहीं कर सकते॥१२॥

(यजमान) पूर्व की ओर से शाला में प्रविष्ट होकर आहवनीय की प्रदक्षिणा कर उसके और गार्हपत्य के बीच में होकर (अपने स्थान को) जाता है; क्योंकि (अभी) देवगण (इस) मनुष्य यजमान को पहचानते नहीं। परन्तु जब वह बीच में से जाता है तो पहचान जाते हैं कि यही हमको आहुति देगा। अग्नि पापों का

(त्यु) उत्तरतो वा ऽअग्निहोत्रस्य द्वारम्। (ष्टँ) स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत ऽएत्यास्ते यथा बहिर्धा चरेदेवं तत्॥१४॥

(न्नौ) नौर्ह वा ऽएषा स्वर्ग्या। यदग्निहोत्रं तस्याऽएतस्यै नावः स्वर्ग्यायाऽआहवनीयश्चैव गार्हपत्यश्च नौमण्डे ऽअथैष एव नावाजो[1] यत्क्षीरहोता॥१५॥

---

उत्तरतो वा अग्निहोत्रस्य द्वारम्। स यथा द्वारा प्रपद्येत–एवं तत्। अथ यो दक्षिणत एत्यास्ते–यथा बहिर्धा चरेद् एवं तत्॥१४॥

नौर्ह वा एषा स्वर्ग्या–यदग्निहोत्रम्। तस्या एतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डे। अथैष एव नावाजो यत्क्षीरहोता॥१५॥

---

**उत्तरतो वा इति।** यदेतद् 'दक्षिणेन वा' इति कात्यायनेन विकल्पेनोक्तम् तद् दूषयति—**अथ य इति।** अग्निहोत्रहोमार्थमुत्तरस्यां दिशि द्वारप्रवेशोपायः। तथा च उत्तरतः प्रवेशं विहाय गार्हपत्याहवनीययोर्मध्यमनतिक्रम्यैव 'यः' यजमानः दक्षिणस्यां दिशि एवागत्य आहवनीयसमीपे 'आस्ते', सोऽग्निहोत्रं प्रवेष्टुमशक्तो बहिरेवावतिष्ठते; यथा प्राकारपरिवृतस्याश्रमादेर्द्वारदेशमप्राप्य प्रवेष्टुमशक्तो बहिरवस्थितो भवति तद्वदित्यर्थः॥१४॥

अथैतदग्निहोत्रं नौरूपेण स्तुवन्नुत्तरतः प्रवेशं प्रतिपादयति—**नौर्हेत्यादिना। नौमण्डे इति।** 'स्वर्ग्यायाः' स्वर्गप्राप्तिहेतुभूतायास्तस्या अग्निहोत्ररूपायाः 'नावः' 'आहवनीयगार्हपत्यौ' 'नौमण्डे' उभे पार्श्वे, भित्ती इत्यर्थः। **नावाज इति।** नावमजति क्षिपति प्रेरयतीति नावाजः, (कर्णधारः)॥१५॥

---

नाशक है। जब अग्निहोत्र करने वाला व्यक्ति आहवनीय और गार्हपत्य के बीच में होकर जाता है तो दोनों अग्नियाँ उसके पाप को नष्ट कर देती हैं और उसका पाप नष्ट हो जाने पर वह श्री और यश से युक्त होकर दिव्य-ज्योति से समन्वित हो जाता है॥१३॥

(अथवा–) अग्निहोत्र-शाला के उत्तर द्वार से (प्रवेश करे)। ऐसा करने पर मानों वह द्वार से सुगमतया प्रविष्ट होता है (किन्तु) जो दक्षिण द्वार से आकर बैठ जाता है तो मानों वह अग्निहोत्र-शाला से बहिर्भूत ही रहता है॥१४॥

'अग्निहोत्र' एक प्रकार से स्वर्ग जाने की नौका है। आहवनीय और गार्हपत्य उस स्वर्गीय नौका के दो तरफ के पार्श्व हैं और दूध की आहुति देने वाला (= यजमान) ही उसका चलाने वाला नाविक है॥१५॥

---

१. नाविकः।

स यत्प्राङुपोदैति। तदेनां प्राचीमभ्यजति। स्वर्गं लोकमभि तया स्वर्गं लोकꣳ समश्नुते तस्या ऽउत्तरतऽआरोहणꣳ सैनꣳ स्वर्गं लोकꣳ समापयत्यथ यो दक्षिणत ऽएत्यास्ते यथा प्रतीर्णायामागच्छेत्स व्विहीयेत स तत ऽएव बहिर्धा स्यादेवं तत्॥१६॥

(द) अथ यामेताꣳ समिधमभ्यादधाति सेष्टका येन मन्त्रेण

---

स यत् प्राङुपोदैति–तदेनां प्राचीमभ्यजति–स्वर्गं लोकमभि। तया स्वर्गं लोकं समश्नुते। तस्या उत्तरत आरोहणम्। सैनं स्वर्गं लोकं समापयति। अथ यो दक्षिणत एत्यास्ते–यथा प्रतीर्णायामागच्छेत्, स विहीयेत, स तत एव बहिर्धा स्याद् एवं तत्॥१६॥

अथ यामेतां समिधमभ्यादधाति–सेष्टका। येन मन्त्रेण जुहोति–तद्

---

स यत् प्राङित्यादि। प्राङ्मुखः सन् गार्हपत्यादाहवनीयं प्रति होमायोपगच्छन् ताम् 'एनां' नावं प्राच्यां दिशि अवस्थितं 'स्वर्गम्' 'अभ्यजति' अभिप्रेरयति। **उत्तरत आरोहणमिति**। आरुह्यतेऽनेनेत्यारोहणं प्रवेशद्वारम्। ततश्च उत्तरत आरुह्यमाणा सा अग्निहोत्ररूपा नौः एनं यजमानं 'स्वर्गं लोकं' सम्यक् प्रापयति। दक्षिणतः प्रवेशने दोषमाह—**अथ य इति**। नावि 'प्रतीर्णायां' सत्यां यस्तरीतुम् 'आगच्छेत्' 'सः' तत्रैव 'विहीयेत'त्यज्येत, . ततश्च 'बहिर्धा' बाह्यो भवेत्'; एवमेव 'तत्' दक्षिणतः प्रवेशनमित्यर्थः॥१६॥

अथैतदग्निहोत्रं चित्याग्निसम्पत्त्या स्तौति—**अथ यामिति**। होमार्थं वा समिदग्नौ आधीयते 'सा' च 'इष्टका'; 'येन' च मन्त्रेण अग्निहोत्रं 'जुहोति' 'तद्'

---

अग्निहोत्र शाला में पूर्व दिशा के द्वार से प्रवेश करने वाला यजमान मानों इस नौका को पूर्व की ओर स्थित स्वर्ग को ले जाता है और उसके द्वारा स्वर्ग लोक को प्राप्त कर लेता है। अग्निहोत्ररूपी नौका पर उत्तर की ओर से आरूढ (प्रवेश) करने वाले यजमान को भी यह सम्यक्तया स्वर्गलोक में ले जाती है। (किन्तु) जो दक्षिण की ओर से घुसकर उसमें बैठता है तो ऐसा समझना चाहिये मानो वह उस समय नौका में प्रविष्ट होने के लिये आया जब वह चल पड़ी और वह पीछे तथा बाहर रह गया॥१६॥

(अग्निहोत्र को अग्निचयन के रूपक से भी प्रशंसित करते हैं कि–) अग्नि

---

१. मध्ये निगृह्योपविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्राणवती ꣳ स्वर्ग्या ꣳ स्वर्ग्यायोपदधामि भास्वतीम् इति। का.श्रौ.सू. ४.१४.१७।

जुहोति तद्यजुर्येनैतामिष्टकामुपदधाति यदा वा ऽइष्टकोपधीयतेऽथाहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता ऽआहुतयो हूयन्ते या ऽएताऽ अग्निहोत्राहुतयः॥१७॥

प्रजापतिर्व्वा ऽअग्निः। संव्वत्सरो वै प्रजापतिः संव्वत्सरे संव्वत्सरे ह वा ऽअस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते संव्वत्सरे संव्वत्सरे चित्यमग्निमाप्नोति य ऽएवं विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते चित्यमग्निमाप्नोति॥१८॥

---

यजुः। येनैतामिष्टकामुपदधाति–यदा वा इष्टकोपधीयते–अथाहुतिर्हूयते–तदस्योपहितास्वेवेष्टकास्वेता आहुतयो हूयन्ते–या एता अग्निहोत्राहुतयः॥१७॥

प्रजापतिर्वा अग्निः। संवत्सरो वै प्रजापतिः। संवत्सरे संवत्सरे ह वा अस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते। संवत्सरे संवत्सरे चित्यमग्निमाप्नोति–य एवं विद्वानग्निहोत्रं जुहोति, एतदु हास्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते, चित्यमग्निमाप्नोति॥१८॥

---

एव इष्टकोपधानार्थं 'यजुः'। **यदा वा** इत्यादि। सायम्प्रातःकालेषु समिदाधानमेवेष्टकोपधानम्। तथा चयनसंस्कृते एवाग्नौ सायम्प्रातराहुतयः कार्त्स्न्येन हुता भवन्तीत्यर्थः॥१७॥

अथ चित्यस्याग्नेः संवत्सररूपतां ब्रुवन् तावत्कालसाध्यस्याग्निहोत्रहोमस्य तत्सम्पत्तिमुपपादयति—**प्रजापतिर्वा इति**। चित्योऽग्निः प्रजापतिना सृष्टत्वात् तदात्मकः, प्रजापतिश्च संवत्सरकालात्मकः; अतः संवत्सरपर्यन्तमभितिष्ठन्तमग्निहोत्रं[1] चित्येनाग्निना समानं सत् 'संतिष्ठते' समाप्तं भवति। तथा च एकैकसंवत्सराग्निहोत्रानुष्ठानेन चित्याग्न्यनुष्ठानं कृतं भवतीत्यर्थः॥१८॥

---

में जो समिधा डाली जाती है, वह मानों ईंट है। जिस मन्त्र से आहुति देता है वह इष्टका रखने का यजु (= आधार भूमि) है। जब ईंट रख ली जाती है तब आहुति दी जाती है। इसलिये उन रखी हुई ईंटों पर ही (आगे की) आहुतियाँ दी जाती है, जो अग्निहोत्र की आहुतियाँ हैं॥१७॥

'प्रजापति' अग्नि है और प्रजापति संवत्सर है। इसलिये वर्ष-प्रतिवर्ष अग्निहोत्र

---

१. 'मनुतिष्ठन्तम्' इति पा.।

सप्त च वै शतान्यशीतीनामृचः। (चो) व्विꣳशतिश्च स यत्सायं प्रातरग्निहोत्रं जुहोति ते द्वे ऽआहुती ताऽअस्य संव्वत्सर ऽआहुतयः सम्पद्यन्ते॥१९॥

सप्त चैव शतानि व्विꣳशतिश्च। संव्वत्सरे संव्वत्सरे ह वा ऽअस्याग्निहोत्रं महतोक्थेन सम्पद्यते संव्वत्सरे संव्वत्सरे

---

सप्त च वै शतान्यशीतीनामृचो विंशतिश्च ७२० (५७६००)। स यत् सायंप्रातरग्निहोत्रं जुहोति–ते द्वे आहुती। ता अस्य संवत्सर आहुतयः सम्पद्यन्ते॥१९॥

सप्त चैव शतानि विंशतिश्च। संवत्सरे–संवत्सरे ह वा अस्याग्निहोत्रं महतोक्थेन सम्पद्यते। संवत्सरे–संवत्सरे महदुक्थमाप्नोति–य एवं

---

अथैतदग्निहोत्रं महदुक्थसम्पादनेन स्तौति—**सप्त चेति**। चित्योऽग्निः, महाव्रतं साम, बृहतीसहस्रात्मकं महदुक्थं[१] चैतानि त्रीणि सहचराणि। तत्र चित्याग्निसम्पत्तिरुक्ता, महदुक्थसम्पत्तिस्त्वेवमवगन्तव्या;—तत्र हि गायत्री-तृचाशीतिः; औष्णिही तृचाशीतिः; बार्हती तृचाशीतिरिति तिस्रस्तृचाशीतयो विहिताः, (ऐ.ब्रा. ५ अ. २.२ अ. ३.४.५) तासां तिसृणां तृचाशीतीनां सम्भूय परिगणिता ऋचो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति॥१९॥

प्रतिदिवसमग्निहोत्रे सायमाहुतिरेका, प्रातराहुतिश्चैकेति द्वे आहुती; संवत्सरस्य च षष्ट्युत्तरत्रिशतसङ्ख्याका अहोरात्राः, तेषु च क्रियमाणास्ता

---

करने से यह 'अग्निचयन-याग' के समरूप हो जाता है। जो यह रहस्य समझकर अग्निहोत्र करता है, उसका इस प्रकार वर्ष-प्रतिवर्ष अग्निचयन-याग सम्पन्न हो जाता है।।१८।।

(अग्निहोत्र 'महदुक्थ' याग के समरूप भी है; क्योंकि महदुक्थ में–) अस्सी तृच समूहों की (= गायत्री छन्दस्क ३ × ८०, उष्णिक् छन्दस्क ३ × ८०, बृहती छन्दस्क ३ × ८०) कुल सात सौ बीस ऋचायें होती हैं। सायं और प्रातः के अग्निहोत्र कर्म में सायं एक आहुति और प्रातः एक आहुति कुल दो आहुतियाँ प्रतिदिन की होती हैं। इस प्रकार वर्ष भर में (३६० × २ = ७२०) आहुतियाँ हो जाती हैं॥१९॥

एक वर्ष में सात सौ बीस आहुतियाँ होने पर वर्ष-प्रतिवर्ष यह अग्निहोत्र

---

१. 'बृहदुक्थं' इति क्व०। २. 'बृहदुक्थ' इति क्व०।

**महुदुक्थुमाप्नोति यु ऽएवं विद्वानग्निहोत्रं जुहोत्येतुदु हास्याग्निहोत्रं महुतोक्थेन सुम्पद्यते महुदुक्थुमाप्नोति॥२०॥**

**इति तृतीयप्रपाठके प्रथमं ब्राह्मणम्॥३॥१॥**

---

**विद्वानग्निहोत्रं जुहोति–एतदु हास्याग्निहोत्रं महतोक्थेन सम्पद्यते–महदुक्थमाप्नोति॥२०॥**

---

अग्निहोत्राहुतयो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति। अतश्चैकस्मिन् 'संवत्सरे' 'अस्य' यजमानस्य 'अग्निहोत्रं' तृचाशीतित्रयात्मकमहदुक्थेन 'सम्पद्यते' सम्पन्नं भवतीत्यर्थः। एतज्ज्ञानपूर्वकानुष्ठानं प्रशंसति—**संवत्सरे संवत्सर इति**॥२०॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयाध्यायस्य तृतीयं ब्राह्मणम्।।२।।३।।३।।**

---

**महदुक्थ समरूप हो जाता है और अग्निहोत्री महदुक्थ के फल को प्रतिसंवत्सर प्राप्त कर लेता है। जो अग्निहोत्री इस रहस्य को समझ कर नियमित अग्निहोत्र करता है उसको महदुक्थ की प्राप्ति हो जाती है॥२०॥३॥**

*

अग्नौ ह वै देवाः। सर्वान्पशून्निदधिरे ये च ग्राम्या ये चारण्या व्विजयं व्वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा॥१॥

तानु हाग्निर्निचकमे। तैः सङ्गृह्य रात्रिं प्रविवेश पुनरेम इति देवाऽएदग्निं तिरोभूतं ते ह व्विदाञ्चक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति तमेतत्प्रत्यायत्याᳬ रात्रौ सायमुपातिष्ठन्त देहि नः पशून्पुनर्नः पशून्देहीति तेभ्योऽग्निः पशून्पुनरददात्॥२॥

---

अग्नौ ह वै देवाः सर्वान् पशून्निदधिरे–ये च ग्राम्याः, ये चारण्या विजयं वोपप्रैष्यन्तः, कामचारस्य वा कामाय–'अयं नो गोपिष्ठो गोपायद्' इति वा॥१॥

तानु हाग्निर्निचकमे। तैः सङ्गृह्य रात्रिं प्रविवेश। 'पुनरेम'–इति देवा एदग्निं तिरोभूतम्। ते ह विदाञ्चक्रुः–इह वै प्राविक्षद्, रात्रिं वै प्राविक्षदिति। तमेतत् प्रत्यायत्यां रात्रौ सायमुपातिष्ठन्त–'देहि नः पशून् पुनर्नः पशून् देहि' इति। तेभ्योऽग्निः पशून् पुनरददात्॥२॥

---

अथ सायङ्कालीनमग्न्युपस्थानं विधित्सुस्तदर्थमाख्यायिकामाह—**अग्नौ हेति।** एतच्च पुनराधानब्राह्मणे (श.प. २ का. २ अ. ३ ब्रा. २-३ कं.) व्याख्यातम्। तत्र हि; 'ऋतून् प्रविवेश', अत्र तु 'रात्रिं प्रविवेश' इत्येतावान् विशेषः। **तमेतदित्यादि।** 'प्रत्यायत्याम्' आगामिन्यां 'रात्रौ' 'सायं'—काले 'तम्' अग्निं देवाः 'उपातिष्ठन्त'[१]। उपस्थानप्रकारमाह—**देहि न इति**॥१-२॥

---

देवों ने अपने सभी पशुओं को जो ग्राम्य (पालतू) थे या अरण्य के थे, उन्हें अग्नि को सौंप दिया। (जिस समय) देवगण विजय-यात्रा के लिए जा रहे थे या स्वतन्त्र विचरना चाहते थे या यह समझकर कि अग्नि रक्षक है, इनकी रक्षा करेगा (पशुओं को सौंप दिया था)॥१॥

अग्नि को उस पशु-सम्पदा पर लोभ आ गया। वह उनको लेकर रात्रि में प्रविष्ट हो गया। देवों ने (विचरण के बाद) परस्पर कहा—चलो, लौट चलें और अपने स्थान पर आने पर अग्नि को तिरोहित पाया। विचारणा कर उन्होंने जान

---

१. सायमाहुत्य ः हुतायां यजमानोऽग्नी उपतिष्ठते व्वात्सप्रेण। इति का.श्रौ.सू. ४.२७४। = उपप्रयन्त = ३ = ११ = इत्यादि = परिते = ३ = ३६ इत्यन्तं = व्वात्सप्रोपस्थानं = बृहदुपस्थानं वा।

(त्तु) तुस्मै कमग्नीऽउपतिष्ठेत। (ता) अग्नी वै दातारौ तावेवैतद्याचते सायमुपतिष्ठेत सायँ हि देवा ऽउपातिष्ठन्त दत्तो हैवास्माऽएतौ पशून्य ऽएवं विद्वानुपतिष्ठते॥३॥

(तेऽथ) अथ यस्मान्नोपतिष्ठेत। (तो) उभये ह वाऽइदमग्रे सहासुर्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवान्याचन्त ऽइदं वै नो नास्तीदं नोऽस्त्विति ते तस्याऽएव

---

**तस्मै कमग्नी उपतिष्ठेत। अग्नी वै दातारौ। तावेवैतद्याचते। सायमुपतिष्ठेत। सायं हि देवा उपातिष्ठन्त। दत्तो हैवास्मा एतौ पशून्–य एवं विद्वानुपतिष्ठते॥३॥**

**अथ यस्मान्नोपतिष्ठेत। उभये ह वा इदमग्रे सहासुः–देवाश्च, मनुष्याश्च। तद्यद्ध स्म मनुष्याणां न भवति–तद्ध स्म देवान् याचन्ते–'इदं वै**

---

यस्मादेवमग्न्युपस्थानात् पशवो देवैर्लब्धाः, तस्माद् यजमानोऽपि तदुपस्थानं कुर्यादिति विधत्ते—**तस्मा इति**। तस्मै पशुप्राप्तिलक्षणाय फलाय। 'कम्' इति वाक्यपूरणे[1]। अन्यन्निगदसिद्धम्। **दत्तो हैवेति**। य एवं सायमग्नी उपतिष्ठेतैव तस्मै यजमानाय तावग्नी अभिमतं फलं प्रयच्छत इत्यर्थः। एवमुपस्थानविधिः॥३॥

एवमुपस्थानं विधाय उपस्थानानुपस्थानपक्षौ पूर्वपक्षसिद्धान्तत्वेन[2] प्रतिपादयति—**अथ यस्मादिति**। यस्मात् अग्न्युपस्थानं न कर्त्तव्यम्, तत्कारणमुच्यते। देवाः खलु पुरा मनुष्यैः सार्द्धमिह लोके निवसन्तः तद्याचनेन

---

लिया कि अग्नि यहाँ छिपा है, रात्रि में छिपा है। जब सायंकाल रात्रि हुई तो उन्होंने अग्नि का उपस्थान कर कहा—'हमारे पशु लौटा दीजिये, हमारे पशु लौटा दो'। (तब) अग्नि ने उनके पशु लौटा दिये॥२॥

इसलिए दोनों अग्नियों का नम्रता से उपस्थान करना चाहिये। दोनों अग्नियाँ दाता हैं। उन्हीं से पशु-सम्पदा व समृद्धि माँगता है। सायंकाल अग्न्युपस्थान करना चाहिये; क्योंकि सायंकाल ही देवताओं ने अग्न्युपस्थान किया था। जो ज्ञानपूर्वक दोनों अग्नियों का उपस्थान करता है उसको वे निश्चय ही पशु-धन देते हैं॥३॥

(कतिपय लोग) अग्नियों का उपस्थान करने के विरुद्ध यह युक्ति देते हैं कि—पहले देवगण और मनुष्य दोनों साथ-साथ रहते थे। जो वस्तु मनुष्यों के पास नहीं होती थी उसको वह देवों से माँगते थे—'हमारे पास यह वस्तु नहीं

---

१. 'वाक्यप्रतिपूरणे' इति क्व.। २. 'अथोपस्थानदोषपरौ पूर्वपक्षौ सिद्धान्तत्वेन' इति क्व.।

याच्ञायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद्द्वेष्योऽसानीति तस्मान्नोपतिष्ठेत॥४॥

(ता) अथ यस्मादुपैव तिष्ठेत। यज्ञो वै देवानामाशीर्यजमानस्य तद्वाऽएष ऽएव यज्ञो यदाहुतिराशीरेव यजमानस्य तद्यदेवास्यात्र तदेवैतदुपतिष्ठमानः कुरुते तस्मादुपैव तिष्ठेत॥५॥

---

**नो नास्तीदं नोऽस्तु' इति। ते तस्या एव याञ्चायै द्वेषेण देवास्तिरोभूताः– 'नेद्धिनसानि, नेद्द्वेष्योऽसानि' इति। तस्मान्नोपतिष्ठेत॥४॥**

**अथ यस्मादुपैव तिष्ठेत। यज्ञो वै देवानामाशीर्यजमानस्य। तद्वा एष एव यज्ञो यदाहुतिः। आशीरेव यजमानस्य तद्–यदेवास्यात्र। तदेवैतदु-पतिष्ठमानः कुरुते। तस्मादुपैव तिष्ठेत॥५॥**

---

पीडिताः सन्तस्तिरोभूताः, अतोऽग्निरपि उपस्थानेन याच्यमानस्तिरोभवति, याचितफलस्याप्रदानेन नैव यजमानं 'हिनसानि', अत एव द्वेष्योऽपि न भवानीत्यनेनाभिप्रायेणेत्यर्थः। यस्मादेवं तस्मान्नोपस्थेयोऽग्निरिति पूर्वपक्षः॥४॥

**अथ यस्मादित्यादि।** यस्मात् कारणादग्न्युपस्थानं कर्त्तव्यम् तदुच्यते— 'देवानां' सम्बन्धी यो 'यज्ञः', स हि यजमानस्य 'आशीः'—फलप्रार्थनरूपः; 'तत्' तथा सति यैषाऽग्निहोत्राहुतिः 'एष एव यज्ञः' सैव यजमानस्याशीः। **तद्यदेवेत्यादि।** यजमानस्य यत्, तदाशीरूपं फलम्; तदेवास्मिन्नग्निहोत्रेऽग्नि-मुपतिष्ठमानः कुरुत इत्यर्थः॥५॥

---

है; इसे हमको दीजिये'। इस बार-बार के माँगने से पीड़ित होने के कारण देवगण मनुष्यों से तिरोहित हो गये। अतः अग्न्युपस्थान नहीं करना चाहिये ताकि कहीं अग्नि बुरा न मान लें या पीड़ित न हो जाँय॥४॥

अग्न्युपस्थान करने के पक्ष में यह युक्ति दी जाती है कि—देवों से सम्बन्धित यज्ञ वस्तुतः यजमान का फलप्रार्थन स्थान है; फलतः जो अग्निहोत्र की आहुतियाँ हैं, वह यज्ञ रूप है और जो कुछ वह (यजमान) वहाँ रहकर अग्न्युपस्थानादि करता है वह यजमान के लिये फलप्रार्थन (= आशीः) है। इसलिये अग्न्युपस्थान अवश्य करना चाहिये॥५॥

---

१. न वा विहितप्रतिषिद्धत्वाद्विकल्पः। का.श्रौ.सू. ४.१२.५।

(ता) अथ यस्मान्नोपतिष्ठेत। यो वै ब्राह्मणं वाशꣳसमानोऽनुचरति क्षत्रियं व्वाऽयं मे दास्यत्ययं मे गृहान्करिष्यतीति यो वै तं व्वाद्येन वा कर्म्मणा व्वाभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य आह किं नु त्वं ममासि यो मे न ददासीतीश्वर ऽएनं द्वेष्टोरीश्वरो निर्व्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतदित्त्वेवैष ऽएतं याचते यदिन्धे यज्जुहोति तस्मान्नोपतिष्ठेत॥६॥

---

अथ यस्मान्नोपतिष्ठेत। यो वै ब्राह्मणं वाशंसमानोऽनुचरति, क्षत्रियं वा–अयं मे दास्यति, अयं मे गृहान् करिष्यतीति। यो वै तं वाद्येन वा, कर्मणा वा अभिरिराधयिषति। तस्मै वै स देयं मन्यते। अथ य आह–किं नु त्वं ममासि, यो मे न ददासीति। ईश्वर एनं द्वेष्टोः, ईश्वरो निर्वेदं गन्तोः। तस्मान्नोपतिष्ठेत। एतदित्त्वेवैष एतं याचते–यदिन्धे, यज्जुहोति, तस्मान्नोपतिष्ठेत॥६॥

---

पुनरप्यनुपस्थानपक्षं प्रकारान्तरेण प्रतिपादयति—**अथ यस्मादित्यादिना। यो वै ब्राह्मणमित्यादि।** ब्राह्मणक्षत्रिययोरन्यतरमाशंसमानः फलाभिलाषी पुरुषः 'अनुचरति' अनुवर्त्तते। तस्माभिप्रायमाह—**अयं म इति।** यश्चैवमनुचरति पुरुषः, तं ब्राह्मणादिं 'वाद्येन' वदनीयेन स्तुतिशब्देन, 'कर्मणा वा' परिचरणलक्षणेन 'अभिरिराधयिषति' अभिराधयितुं सेवितुमिच्छति 'तस्मै' पुरुषायैव 'सः' ब्राह्मणादिः प्रभुः धनं देयं दातव्यं 'मन्यते'। यस्त्वेवं निष्ठुरं भाषते, सः 'एनं' ब्राह्मणादिं प्रभुं 'द्वेष्टोः' (पा.सू. ३.४.१३) विद्वेषणं कर्त्तुम् 'ईश्वरः' समर्थः स्यात्, तथा 'निर्वेदं' मनस्तापं 'गन्तोः' गन्तुम् 'ईश्वरः' स्यात्। निष्ठुरभाषणप्रकारमाह—**किं न्विति।** हे देवदत्त! यस्त्वं मह्यं न ददासि, स त्वं मम किं चासि? न किञ्चिदपि भवसि, त्वया किं प्रयोजनमित्यर्थः। एवं समन्त्रकहोमेनाग्नेराराधनमेव कार्यं, तदुपस्थानन्तु फलप्रार्थनरूपत्वेन निष्ठुरभाषणवदपराधहेतुरिति न कर्त्तव्यमित्याह—**एतदिति।** होमसमिन्धनाभ्यामग्निं प्राप्य पुनरुपस्थानेनैव याचते,

---

कुछ लोग अग्न्युपस्थान के विरुद्ध यह युक्ति देते हैं कि—जो कोई ब्राह्मण या क्षत्रिय के पास जाकर उसकी प्रशंसा एवं स्तुति इस मनोभाव से करता है कि—'यह मुझे दान देगा या मेरा घर बनवा देगा' तो वह उसको वाणी और कर्म से प्रसन्न करता है; फलत: प्रसन्न होकर वह उसे देने की सोचता है, परन्तु जो कहता है—'तू मेरा कौन है? मुझे क्या दे देगा'? तो वह प्रभु उससे अप्रसन्न रहेगा,

(ता) अथ यस्माद्रुपैव तिष्ठेत। (तो) उत वै याचन्दातारं लभतऽएवोतो भर्त्ता भार्य्यं नानुबुध्यते स यदैवाह भार्य्यो वै तेऽस्मि बिभृहि मेत्यथैनं व्वेदाथैनं भार्य्यं मन्यते तस्माद्रुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपतिष्ठेत॥७॥

---

अथ यस्मादुपैव तिष्ठेत। उत वै याचन्दातारं लभत एव, उतो भर्त्ता भार्य्यं नानुबुध्यते। स यदैवाह–'भार्य्यो वै तेऽस्मि, बिभृहि मा' इति। अथैनं वेद, अथैनं भार्य्यं मन्यते। तस्मादुपैव तिष्ठेत–इदमित्तु समस्तम्। यस्मादुपतिष्ठेत॥७॥

---

याचनं चायुक्तमित्यनुपस्थानपक्षो ज्यायानित्यर्थः (तै.सं. १ कां. ५ प्र. ९ अ. ६-७ खं.)॥६॥

**अथ यस्मादित्यादि**। लोके हि 'यावत्' पुरुषो 'दातारं' प्राप्नोति, स च 'भर्त्ता' पोषकः प्रभुः 'भार्य्यं' पोष्यं याचकं स्वतो 'नानुबुध्यते', 'सः' चैव याचकः एवम् 'आह' विज्ञापयति—हे स्वामिन्! अहं 'ते' त्वया 'भार्यः' पोष्यः 'अस्मि', 'मा' मां 'बिभृहि' पोषय 'इति'। एवं विज्ञापनानन्तरमेव 'एनं' याचकं पुरुषं 'वेद' जानाति। अनन्तरञ्च 'एनं' भार्यं पोष्यं 'मन्यते' तस्मात् ऋग्विधानरूपं स्वामिभूतस्याग्नेरुपस्थानं न दोषाय किञ्चित्। 'इदमित्' इदमेव 'समस्तं', सम्पूर्णमित्यर्थः॥७॥

---

उस पर रुष्ट होगा। इसलिये अग्न्युपस्थान नहीं करना चाहिये; क्योंकि प्रज्वलित करने और आहुति देने से वह माँग चुकता है, फिर-फिर (माँगने के लिये) अग्नियों का उपस्थान नहीं करना चाहिये॥६॥

अब अग्न्युपस्थान के पक्ष में यह युक्ति है कि—जो माँगता है उसको दाता भी मिल जाता है। कोई स्वामी अपने पोष्य की आवश्यकताओं को तब तक नहीं जान पाता जब तक पोष्य नहीं कहता कि—'मैं आप पर ही आधारित हूँ। आप मेरा पालन कीजिये'। जब भर्ता जान जाता है कि यह मेरे ही आश्रित है तो उसका पालन करता है। इसलिये अग्नियों का उपस्थान करना ही चाहिये। अग्नियों के उपस्थान करने के पक्ष में यह युक्तियाँ हैं॥७॥

---

१. एतदेवोपस्थानं वात्सप्रोपस्थानमुच्यते। उपप्रयन्तोऽअध्वरमित्यारभ्य परि ते दूडभ इत्यन्तं वात्सप्रोपस्थानम्। इति याज्ञिकदेवोक्तेः। तत्र च वत्सप्रीनामर्षिणा दृष्टं सूक्तं वात्सप्रम्, तदीयच्चं एवात्रोपस्थानस्य मन्त्रा इति बोध्यम्।

प्रजापतिर्व्वाऽ एष भूत्वा। यावतऽईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्व्वमुपतिष्ठमानोऽनुविकरोतीदꣳ सर्व्वमनुप्रजनयति॥८॥

स वा ऽउपवत्या प्रतिपद्यते। (तऽ) इयं वा ऽउप द्वयेनेयमुप यद्धीदं किञ्च जायतेऽस्यां तदुपजायतेऽथ यन्न्यृच्छत्यस्यामेव

---

**प्रजापतिर्वा एष भूत्वा–यावत ईष्टे, यावदेनमनु तस्य रेतः सिञ्चति–यदग्निहोत्रं जुहोति–इदमेवैतत् सर्वमुपतिष्ठमानोऽनुविकरोति, इदं सर्वमनु प्रजनयति॥८॥**

**स वा उपवत्या प्रतिपद्यते–इयं वा उप द्वयेनेयमुप। यद्धीदं किञ्च जायते–अस्यां तदुपजायते–अथ यत् न्यृच्छति–अस्यामेव तदुपोप्यते। तदह्वा**

---

यस्माच्चान्यस्मात् कारणात् अग्न्युपस्थानमवश्यं कर्त्तव्यं तदुच्यते— **प्रजापतिर्वा इति**। अग्निहोत्रहोमो हि रेतःसेकस्थानीयः, गर्भाशये निषिक्तस्य रेतसः हस्तपादादिमत्त्वेन यद् विशिष्टरूपकरणम्, तदग्न्युपस्थानसाध्यम्। अतोऽग्निमुपतिष्ठमानो यजमानः सर्वमिदं निषिक्तं विशिष्टरूपं कुर्वन् 'अनुप्रजनयति' अनुक्रमेणोत्पादयति। तस्मादवश्यमग्न्युपस्थानं कर्त्तव्यमित्यर्थः॥८॥

तत्र प्रथमाया ऋचो लिङ्गविशेषमुपन्यस्य प्रशंसति—**स वा इति**। 'उपवत्या' उपशब्दयुक्तया ऋचा (वा.सं. ३.११)। **इयं वा इत्यादि**। 'इयं वा उप' योऽयमुपेत्युपसर्गः, इयं भूमिरेव सः 'द्वयेन' द्विप्रकारेण 'इयं' भूमिः उपशब्दवाच्या। तत्प्रकारद्वयं दर्शयति—**यद्धीदमिति**। 'यत्' किञ्च जायमानं 'तत्'

---

यह (अग्निहोत्र करने वाला यजमान) प्रजापति स्थानीय होकर (अपनी इच्छित) सभी कामनाओं की निष्पत्ति का सर्जक बन जाता है। वह जो अग्निहोत्र-होम करता है वह (एक प्रकार से) रेतः सेचनवत् है। (आहुति से निषिक्त) इस बीज का ही विशिष्टीकरण अग्न्युपस्थान द्वारा यजमान सम्पादित करता है। अतः अग्नियों का (वात्सप्रसूक्त से) उपस्थान करते हुए यजमान आहित) इस समस्त कर्मबीज को (विशिष्ट रूप में परिणत कर) अनुक्रम से फलोत्पादक बनाता है (अतः अग्न्युपस्थान अवश्य करना चाहिये॥८॥

वह 'उप' शब्दयुक्त ऋचा से अग्न्युपस्थान (= प्रार्थना) करता है। यहाँ 'उप' का अर्थ 'भूमि' है। दो प्रकार से यह भूमि 'उप'-शब्दवाच्या है। (प्रथम तो–) जो कुछ इस संसार में उत्पन्न होता है वह इस पृथिवी पर उत्पन्न होता है

तदुपोप्यते तदुह्ना रात्र्या भूयोभूय ऽएवाक्षय्यं भवति तदक्षय्येणैवैतद्भूम्ना प्रतिपद्यते॥९॥

स ऽआह। (हो) उपप्रयन्तोऽअध्वरमित्यध्वरो वै यज्ञ ऽउपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं व्वोचेमाग्नयऽइति मन्त्रमु ह्यस्माऽएतद्वक्ष्यन्भवत्यारे ऽअस्मे च शृण्वतऽइति यद्यप्यस्मदारकादस्यथ नऽ एतच्छृण्वेवैवमेवैतन्मन्यस्वेत्येवै तदाह॥१०॥

---

रात्र्या भूयो-भूय एवाक्षय्यं भवति, तदक्षय्येणैवैतद् भूम्ना प्रतिपद्यते॥९॥

**अथ बृहदुपस्थानम्**

**स आह। (१) 'उपप्रयन्तो अध्वरम्'-इति (वा.सं. ३.११)। अध्वरो वै यज्ञः। उपप्रयन्तो यज्ञमित्येवैतदाह। 'मन्त्रं वोचेमाग्नये'-इति (वा.सं. ३.११)। मन्त्रमु ह्यस्मा एतद्वक्ष्यन् भवति। 'आरे अस्मे च शृण्वते'-इति (वा.सं. ३.११) यद्यप्यस्मदारकादसि अथ न एतच्छृण्वेव-एवमेवैतन्मन्यस्वेत्येवैतदाह॥१०॥**

---

सर्वम् 'अस्याम्' 'उपजायते'। 'यत्' 'न्यृच्छति' नितरामार्त्तिं प्राप्नोति, 'तत्' अपि 'अस्याम्' एव 'उपोप्यते' निलीयते। अतो जायमानेन लीयमानेन चेयं भूमिरुपगम्यत इति उपशब्दवाच्या या इत्यर्थः। यत्रेदं जायमानं लीयमानं यत्तद्भूय एव अहोरात्राभ्याम् अक्षय्यं भवति तत्सम्बद्धोपशब्दयुक्तः प्रतिपद्यमानः क्षयरहितेनैव भूम्ना 'प्रतिपद्यते' उपस्थानं प्रारभ्यत[1] इत्यर्थः॥९॥

क्रमेणोपस्थानमन्त्रान् विधित्सुस्तावदुपवतीमृचं विधाय प्रशंसति—**स आहेति। अध्वरो वै यज्ञ इत्यादि।** सुगमम्। द्वितीयं पादमनूद्य तत्र मन्त्रशब्दो वक्ष्यमाणमन्त्रपर इति व्याचष्टे—**मन्त्रमु ह्यस्मा इति। आरे अस्मे चेति।** अस्मच्छब्दात् पञ्चम्यर्थे शे आदेश इति व्याचष्टे—**अस्मदारकादिति।**॥१०॥

---

('उप' + जायते)। (दूसरे-) जो नष्ट या विशीर्ण होता है वह इस पृथ्वी में ही समा जाता है ('उप' + उप्यते)। इसलिये यहाँ रात-दिन अक्षय (= आधिक्य) होता रहता है। (अर्थात् पृथ्वी पर जो उत्पन्न हुआ वह भी आधिक्य है और जो उसमें लीयमान होता है, वह भी आधिक्य हुआ)। इसलिये वह ('उप'-पद युक्त मन्त्र से आरम्भ करके) एक प्रकार से अक्षय = आधिक्य से आरम्भ करता है॥९॥

अब वह अग्न्युपस्थान के मन्त्र कहता है—'उप प्रयन्तोऽअध्वरम्'। अर्थात् 'मैं अध्वर में (पर) जाऊँ। 'अध्वर' नाम है यज्ञ का। इसलिये अर्थ हुआ—'मैं यज्ञ-

---

१. 'प्रारभते' इति क्व.।

(हा) अग्निर्मूर्द्धा दिवः। ककुत्पतिः पृथिव्या ऽअयम्। अपाꣳ रेताꣳसि जिन्वतीत्यन्वेव धावति तद्यथा याचन्कल्याणं व्वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येव-मेषा॥११॥

(षाथै) अथैन्द्राग्नी। (ग्न्यु) उभा वामिन्द्राग्नी ऽआहुवध्याऽउभा राधसः सह मादयध्यै। उभा दाताराविषाꣳ-

---

(२) 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति'–इति (वा.सं. ३.१२)। अन्वेव धावति। तद्–यथा याचन् कल्याणं वदेद् 'आमुष्यायणो वै त्वमसि, अलं वै त्वमेतस्मा असि' इत्येवमेषा॥११॥

अथैन्द्राग्नी (३) 'उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै। उभा दाताराविषाꣳरयीणाम्। उभा वाजस्य सातये हुवे वाम्'–

---

अथ द्वितीयामृचमग्न्युपस्थाने वक्तव्यत्वेन सिद्धवदनूद्य तात्पर्यमाह—**अग्निर्मूर्द्धेति**। **अन्वेव धावतीति** अनुधावति अनुसृत्य[१] प्रशंसतीति यावत्। एतत् सदृष्टान्तमुपपादयति—**तद्यथेति**॥११॥

**अथैन्द्राग्नीति**। अग्निर्मूर्द्धेत्यनन्तरम् **उभा वाम्**—इतीन्द्राग्निदेवताका ऋक्

---

पथ में (या यज्ञ-मार्ग पर जाऊँ' ऐसा अर्थ हुआ)। अब कहता है—'मन्त्रं वोचेमाग्नये'। 'अग्नि के लिये हम मंत्र बोलते हैं'; क्योंकि वह मन्त्र बोलना प्रारम्भ करता है। अब कहता है—'आरेऽअस्मे च शृण्वते'। 'उसके लिये जो हमको दूर से सुनता है। अर्थात् हे अग्नि! यद्यपि आप हमसे दूर हैं तो भी हमारी इस प्रार्थना को सुनें और हमारा कल्याण करें'॥१०॥

अब कहता है—'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम्। अपाꣳ रेताꣳसि जिन्वति' (यजु. ३.१२)। (मन्त्रार्थ–) 'अग्नि, द्युलोक का मूर्धन्य, महान् तथा पृथिवी का पति है। यह जलों में शक्ति को स्थापित करता है'। इस प्रकार इस मन्त्र के द्वारा वह प्रार्थना करता हुआ मानो उसका अनुसरण करता है जैसे दाता का अनुसरण करते हुए याचक कहते हैं—'आप महान् पिता की सन्तान हैं, आप ऐसा करने में समर्थ हैं, आप ऐसे हैं' इत्यादि॥११॥

तदनन्तर इन्द्र और अग्नि का मन्त्र पढता है—'उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै। उभा दाताराविषाꣳरयीणामुभा वाजस्य सातये हुवे

---

१. 'अनुसति' इति पाठः।

रयीणामुभा व्वाजस्य सातये हुवे वामित्येष वाऽइन्द्रो य एष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ता ऽउपतिष्ठतऽउभौ मे सह सन्तौ दत्तमिति तस्मादैन्द्राग्नी॥१२॥

(ग्नीऽअ) अयं ते योनिर्ऋत्वियः। (यो) यतो जातोऽअरोचथाः। तं जानन्नग्नऽआरोहाथा नोव्वर्द्धया रयिमिति पुष्टं वै रयिर्भूयो भूयऽएव न इदं पुष्टं कुर्व्वित्येवैतदाह॥१३॥

---

इति (वा.सं. ३.१३)। एष वा इन्द्रो य एष तपति। स यदस्तमेति तदाहवनीयं प्रविशति। तदुभावेवैतत् सह सन्ता उपतिष्ठते 'उभौ मे सह सन्तौ दत्ताम्' इति। तस्मादैन्द्राग्नी॥१२॥

(४) 'अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्'–इति (वा.सं. ३.१४)। पुष्टं वै रयिः। भूयो–भूय एव न इदं पुष्टं कुरु–इत्येवैतदाह॥१३॥

---

अग्न्युपस्थाने प्रयोक्तव्येत्यर्थः। अस्यामृचि 'इन्द्राग्नी'—शब्दस्य विवक्षितमर्थमाह—**एष वा इन्द्र इति**॥१२॥

चतुर्थीमृचं पठित्वा स्तौति—**अयं त इति। पुष्टं वा इति।** यदत्र रयिशब्दवाच्यम्, तत् पुष्टिहेतुभूतं धनम्। भूयो भूय एवेत्यादि, मन्त्रगत—'वर्द्धय'—पदाभिप्रायकथनम्॥१३॥

---

वाम्' (यजु. ३.१३)। (मन्त्रार्थ–) 'हे इन्द्र और अग्नि! मैं आप दोनों को बुलाता हूँ। मैं आप दोनों को प्रीति की हवि से प्रसन्न करता हूँ। आप दोनों बल और धन के दाता हो। आप दोनों को अन्न व धन की प्राप्ति के लिये बुलाता हूँ'। 'इन्द्र' यह महान् तेजस्वी सूर्य का नाम है। जब वह अस्त होता है तो आहवनीय अग्नि में प्रविष्ट हो जाता है। इसलिये अग्निहोत्री-यजमान सहावस्थित उन दोनों से प्रार्थना करता है कि आप दोनों मिलकर मुझको देवें। अतएव इन्द्र और अग्नि वाला मन्त्र पढ़ता है॥१२॥

अब मन्त्र पढ़ता है—'अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः। तं जानन्नग्नऽआरोहाथा नो वर्धया रयिम्' (यजु. ३.१४)। (मन्त्रार्थ–) 'यह तेरी ऋतु के अनुकूल योनि है जहाँ से उत्पन्न होकर तू चमकता है। हे अग्नि! इस बात को जानकर उठिये और हमारे धनों का अभिवर्धन कीजिये'। 'रयि' का अर्थ है पुष्टि। इस मन्त्र का भावार्थ यह है कि हे अग्निदेव, हमारी तरक्की कीजिये'॥१३॥

(हा) अयुमिहु प्रथमुः। (मो) धायि धातृभिर्होता युजिष्ठोऽअध्वरेष्वीड्यः। यमुप्नवानो भृगवो व्विरुरुचुर्व्वुनेषु चित्रं व्विभ्वं व्विशेविशऽइत्युन्वेवु धावति तद्युथा याचन्कल्याणं व्वुदेदामुष्यायणो वै त्वमस्युलं वै त्वमेतुस्माऽअसीत्येवुमेषा युथोऽएवैष तुथोऽएवैनमेतुदाह यदाुह व्विभ्वं व्विशेविशऽइुति व्विभूर्ह्येषु व्विशे व्विशे॥१४॥

---

(५) 'अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विशे'—इति (वा.सं. ३.१५)। अन्वेव धावति तद्—यथा याचन् कल्याणं वदेत्—आमुष्यायणो वै त्वमसि, अलं वै त्वमेतस्मा असि इति—एवमेषा। यथो एवैष तथो एवैनमेतदाह—यदाह—'विभ्वं विशे विशे' इति। विभूर्ह्येष विशे-विशे॥१४॥

---

अथ तस्मिन्नुपस्थाने पञ्चमीमृचं विधाय तात्पर्यं कथयति—अयमिहेति। **विभूर्ह्येर्ष इति।** 'विशे-विशे' सर्वस्यै प्रजायै 'एषः' अग्निः 'विभूः' तत्तदभीष्टप्रदाने समर्थ इत्यर्थः॥१४॥

---

अब कहता है—'अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः। यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे' (यजु. ३.१५)। (मन्त्रार्थ–) 'यह आहवनीय अग्नि कर्मानुष्ठान में मुख्य है तथा प्राथम्येन स्थापित है। यह देवताओं का आह्वाता, यजिष्ठ एवं सोमयागादि में ऋत्विजों द्वारा स्तुत है। जिस अग्नि को अप्नवान तथा भृगुवंशीय ऋषियों ने अरण्य प्रदेशों में यज्ञार्थ प्रदीप्त किया था ऐसा यह अग्निदेव विविध कर्मों का साधक, अद्भुत एवं व्यापक है तथा प्रत्येक प्राणी का सर्वविध हितसाधक है। (हे अग्नि देव! मैं आपका स्तवन करता हूँ)'। इस स्तवन से यजमान अग्नि देव को तथैव अनुकूल करता है, जैसे लोक में याचक दाता की प्रशंसा करते हुए कहता है—'आप महान् पिता के पुत्र हैं', 'आप मेरी याचना पूर्ण करने में समर्थ हैं' आदि। अतएव अग्नि देव को मन्त्र में कहा गया कि—'आप प्रत्येक प्राणी के सर्वविध हितसाधक हैं'॥१४॥

(शेस्य) अस्य प्रत्नाम्। (मु) अनुद्युतँ शुक्रं दुदुहेऽ- अह्रयः। पयः सहस्रसामृषिमिति परमा वाऽएषा सनीनां यत्सहस्रसनिस्तदेतस्यैवावरुद्ध्यै तस्मादाह पयः सहस्र- सामृषिमिति॥१५॥

तदेतत्समाहार्य्यँ षड्टचम्। तस्योपवती प्रथमा प्रत्नवत्युत्त- मावोचाम तद्यस्मादुपवत्यथाद एव प्रत्नं यावन्तो ह्येव सनाग्रे

---

'अस्य प्रत्नामनुद्युतम्, शुक्रं दुदुहे अह्रयः। पयः सहस्रसामृषिम्'—इति (वा.सं. ३.१६)। परमा वा एषा सनीनां यत्–सहस्रसनिः। तदेतस्यैवावरुध्यै तस्मादाह पयः सहस्रसामृषिमिति॥१५॥

तदेतत् समाहार्य्यं षड्टचम्। तस्योपवती प्रथमा, प्रत्नवत्युत्तमा। अवोचाम तद्–यस्मादुपवती। अथाद एव प्रत्नम्। यावन्तो ह्येव सनाग्रे देवाः–तावन्त

---

षष्ठीमृचं विधाय प्रशंसति—**अस्येति**। **परमा वा एषा इति**। 'सनीनां' दानानां मध्ये 'यत्' 'सहस्रसनिः' सहस्रसङ्ख्याकस्य धनस्य दानं 'एषा' 'परमा' सर्वोत्कृष्टा सनिः। एताश्च षड्टचो मन्त्रकाण्डे एव व्याख्याता इति नात्र पुनर्व्याख्यायन्ते॥१५॥

अथैता ऋचः समूहीकृत्य प्रथमोत्तमयोर्लिङ्गविशेषोपजीवनेन स्तौति— **तदेतदिति**। 'समाहार्यम्' एकैकामृचं प्रदेशान्तरं पठित्वा समाहृत्य समुदायीकृतमेतत् 'षड्टचं' सूक्तम्। 'तस्य' 'प्रथमा' 'उपवती' 'उत्तमा' तु 'प्रत्नवती' प्रत्नशब्दयुक्ता। तत्रोपवती भूम्यात्मिकेत्येतत् प्रागेव 'अवोचाम' नेतः परं तत् प्रतिपाद्यत इत्यर्थः। **अथाद एवेति**। 'अदः' द्युलोक एव 'प्रत्नम्'। तस्य प्रत्नशब्दाभिधेयतामुपपादयति—**यावन्त इति**। 'सना' इति निपातः पुरेत्यस्यार्थे।

---

अब कहता है—'अस्य प्रत्नामनु द्युतँ शुक्रं दुदुहे अह्रयः। पयः सहस्रसामृषिम्' (यजु. ३.१५)। (मन्त्रार्थ–) '(अह्रयः) न शरमाने वाले लोगों ने (अस्य) इस अग्नि देव के चिरन्तन प्रकाश का अवलम्ब लेकर ऋषि-मुनि-मनुष्यादि सहस्रों यज्ञादिकर्म के साधक पवित्र दुग्ध को निश्शंक होकर दुहते हैं। (हे अग्निदेव, मैं आपका सावन करता हूँ'। 'सहस्रसा' का अर्थ है परमदान देनेवाला। इसी की प्राप्ति के लिये वह कहता है—'सहस्रसाम् ऋषिम्'॥१५॥

यह विभिन्न स्थलों पर पठित छः ऋचाओं के संग्रह का सूक्त है। इसमें पहली ऋचा में 'उप' शब्द है और अन्तिम में 'प्रत्न'। (अर्थात् यजुर्वेद के तीसरे अध्याय,

---

[illegible]

देवास्तावन्त एव देवास्तस्माददुः प्रत्नं तदिमेऽएवान्तरेण सर्व्वे कामास्तेऽअस्माऽइमे सञ्जानाने सर्व्वान्कामान्त्सन्नमतः॥१६॥

स वै त्रिः प्रथमां जपति। त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमां जपति त्रिरुत्तमाम्॥१७॥

---

**एव देवाः। तस्माददः प्रत्नम्। तदिमे एवान्तरेण सर्वे कामाः–ते अस्मा इमे सञ्जानाने सर्वान् कामान्त्सन्नमतः॥१६॥**

**स वै त्रिः प्रथमां जपति, त्रिरुत्तमाम्। त्रिवृत्–प्रायणा हि यज्ञाः, त्रिवृदुदयनाः। तस्मात् त्रिः प्रथमां जपति, त्रिरुत्तमाम्॥१७॥**

---

'यावन्त एव' हि 'अग्रे' 'सना' सनातनाः 'देवाः', 'तावन्त एव देवाः' इदानीमपि; 'तस्मात्' तदाश्रयभूता द्यौः पुरातनत्ववाचिना प्रत्नशब्देनोच्यत इत्यर्थः। **तदिमे एवेति।** 'इमे' द्यावापृथिव्यौ 'अन्तरेण' **'अग्निर्मूर्द्धा'**— इत्यादिमन्त्रप्रतिपाद्याः 'सर्वे कामाः' अवस्थिताः। **ते अस्मा** इत्यादि, स्पष्टम्॥१६॥

प्रथमोत्तमयोस्त्रिर्जपं विधाय प्रशंसति—**स वै त्रिः प्रथमां जपतीति।** अस्य षड्ऋचस्य सूक्तस्य 'उपप्रयन्त'—इतीयं प्रथमा, 'अस्य प्रत्नाम्'—इतीयमुत्तमा; उपस्थानकाले तयोस्त्रिर्जपः[1] कार्यः। यतः 'यज्ञाः' 'त्रिवृत्प्रायणाः' त्रिवृत्प्रारम्भाः, निर्वापप्रोक्षणसामिधेन्यनुवचनादिषु तथा त्रिवृदुदयनास्त्रिवृत्समाप्तायाः आज्य-प्रउगादि शस्त्रसमाप्तिषु परिधानीयायाः त्रिरावृत्तिदर्शनादित्यर्थः॥१७॥

---

११ से १६ मन्त्र तक)। इसमें 'उप' वाली ऋचा पृथ्वी से सम्बन्धित है, यह पहले ही बता चुके हैं। यह द्युलोक ही 'प्रत्न' है; क्योंकि जितने देवगण पहले थे उतने ही अब भी हैं इसलिये 'प्रत्न' का अर्थ पुरातन द्युलोक है। अब इन्हीं दोनों अर्थात् पृथ्वी और द्युलोक के बीच में सब कामनायें हैं और ये दोनों यजमान के हित के लिये और उसकी कामनाओं की पूर्ति के लिये अग्न्युपस्थान में संयुक्त हैं॥१६॥

(इस अग्न्युपस्थान में) पहला मन्त्र तीन बार जपता है और अन्तिम मन्त्र भी तीन बार; क्योंकि यज्ञ तीन से आरम्भ और तीन से अन्त वाले होते हैं। इसलिये तीन बार प्रथम मन्त्र जपता है और तीन बार अन्तिम॥१७॥

---

१. तिस्रस्त्रिरुपप्रयन्तोऽस्य प्रत्नां परिते चित्रावसविति न। का.श्रौ.सू. ४.२७६। प्रक्रमादेव त्रित्वसिद्धेस्तिसृ-ग्रहणात्स्वस्थानस्थितानामेव त्रिरावृत्तिः। चित्रावसविति यजुस्त्रिरेव जपेदिति कर्कः।

**यद्ध वाऽअत्राग्निहोत्रं जुह्वत्। (द्वा) व्वाद्येन वा कुर्मणा वा मिथ्या करोत्यात्मनस्तदुवद्यत्यायुषो वा व्वुर्चसो वा प्रजायै वा॥१८॥**

**तुदु खुलु तनूपा ऽअग्नेऽसि। तुन्वं मे पाह्यायुर्दाऽ-अग्नेऽस्यायुर्मे देहि व्वर्चोदा ऽअग्नेऽसि व्वुर्चो मे देहि। अुग्ने युन्मे तुन्वा ऊनं तुन्मऽआपृणेुति॥१९॥**

---

**यद्ध वा अत्राग्निहोत्रं जुह्वत्–वाद्येन वा कर्मणा वा मिथ्या करोति–आत्मनस्तदवद्यति–आयुषो वा, वर्चसो वा, प्रजायै वा॥१८॥**

**तदु खलु–'तनूपा अग्नेऽसि–तन्वं मे पाहि, आयुर्दा अग्नेऽसि–आयुर्मे देहि, वर्चोदा अग्नेऽसि–वर्चो मे देहि। अग्ने यन्मे तन्वा ऊनं तन्म आपृण'–इति (वा.सं. ३.१७) इति॥१९॥**

---

'**तनूपा अग्नेऽसि**'—इत्यादिमन्त्रैराहवनीयोपस्थानं विधित्सुस्तन्निवर्त्तुं(?)-दोषमुपन्यसति—**यद्ध वा इति**। अग्निहोत्रहोमं कुर्वन् 'वाद्येन वा' व्यवहारसाध्येन मन्त्रोच्चारणेन, शरीरसाध्येन 'कर्म्मणा वा', 'यत्' 'मिथ्या करोति' अन्यथाऽनुतिष्ठति, 'तत्' तेन 'आत्मनः' यजमानस्य 'आयुषः' जीवनस्य, 'वर्चसः' तेजसः, 'प्रजायै' प्रजायाश्च 'अवद्यति' खण्डयति। 'वा'—शब्दश्चार्थे॥१८॥

अथैतद्दोषपरिहाराय तदुचितमन्त्रकरणकोपस्थानमाह—**तदु खल्विति**। 'तत्' तत्र खलु दोषे सतीत्यर्थः॥१९॥

---

अग्निहोत्र होम करने में यजमान जो कुछ भूल वाणी या कर्म से करता है उससे वह आत्मा, आयु, वर्चस् और प्रजा को हानि पहुँचाता है॥१८॥

इस दोष के परिहार के लिये मन्त्र-पाठ करता है—'तनूपाऽअग्नेऽसि तन्वं में पाह्यायुर्दाऽअग्नेऽस्यायुर्मे देहि वर्चोदाऽअग्नेऽसि वर्चो में देहि। अग्ने यन्मे तन्वाऽऊनं तन्मऽआपृण' (यजु. ३.१७)। (मन्त्रार्थ–) 'हे अग्नि! आप शरीरों के रक्षक हैं, मेरे शरीर की रक्षा करें। हे अग्नि! आप आयु को देने वाले है, मुझे आयु दें। हे अग्नि! आप वर्चस् को देने वाले हैं, मुझे वर्चस दें। हे अग्नि! जो मेरे शरीर में कमी है उसको मेरे हितार्थ पूरा करें'॥१९॥

---

१. तन्निवर्तयितुम् इति पाठो युक्तः स्यात्।

यद्ध वाऽअत्राग्निहोत्रं जुह्वत्। (द्वा) व्वाद्येन वा कुर्मणा वा मिथ्याकरोत्यात्मनस्तदुवद्यत्यायुषो वा व्वर्चसो वा प्रजायै वा तन्मे पुनराप्यायय्येत्येवैतदाह तथो हास्यैतत्पुनराप्यायते॥२०॥

(तऽइ) इन्धानास्त्वा। शतᳬ हिमा द्युमन्तᳬ समिधीमहीति शतं व्वर्षाणि जीव्यास्मेत्येवैतदाह तावत्त्वा महान्तᳬ

---

यद्ध वा अत्राग्निहोत्रं जुह्वत्–वाद्येन वा कर्मणा वा मिथ्या करोति आत्मनस्तदवद्यति–आयुषो वा, वर्चसो वा, प्रजायै वा–तन्मे पुनराप्यायय–इत्येवैतदाह। तथो हास्यैतत् पुनराप्यायते॥२०॥

'इन्धानास्त्वा शतं हिमा द्युमन्तं समिधीमहि'–इति (वा.सं. ३.१८)। शतं वर्षाणि जीव्यास्म–इत्येवैतदाह। तावत् त्वा महान्तं समिधीमहीति।

---

यद्ध वा इत्याद्युक्तार्थम्। तन्म इत्यादि। यदेतन्मिथ्याकरणेनायुरित्यादि खण्डितम्, हे अग्ने! 'तत्' तच्च मदीयम् 'पुनः' आप्यायय 'वर्द्धयेति 'तन्म आ पृण'—इति मन्त्रभागस्य व्याख्यानम्॥२०॥

इन्धानास्त्वेत्यादि। 'शतᳬहिमाः'—इत्यस्य तात्पर्यमाह—शतं वर्षाणीति। शतसंवत्सरजीवनवन्तो भूयास्मेत्यर्थः। तैत्तिरीयकेऽप्येतद् विशदीकृतम्—'शतᳬहिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' इति (तै.सं. १.५.८.५)। द्युमन्तमिति मन्त्रपरभागस्यार्थमाह—तावत्त्वेति। 'तावत्' शतसंवत्सरजीवनावधि, हे अग्ने! त्वां 'द्युमन्तं' दीप्तिमन्तं 'महान्तं'

---

अग्निहोत्र करने में वह यजमान वाणी या कर्म से जो त्रुटि करता है उससे वह आत्मा, आयु, वर्चस् और प्रजा को हानि पहुँचाता है। जब वह इस मन्त्र को पढ़ता हुआ कहता है—'मेरी कमी को पूरा कीजिये' तो वह कमी पूरी हो जाती है॥२०॥

अब कहता है—'इन्धानास्त्वा शतᳬ हिमा द्युमन्तᳬ समिधीमहि' (यजु. ३.१८)। (मन्त्रार्थ–) 'हे अग्निदेव! आपको प्रज्वलित कर हम सौ वर्षों तक आपकी ज्वालाओं में समिधा का आधान करते रहें'। इससे तात्पर्य है कि—'हम सौ वर्ष जीते रहें और जलती हुई आपकी ज्वालाओं पर समिधा रखें' अर्थात् 'हे महान्! हम आपको प्रज्वलित करते रहें'। अब कहता है—'वयस्वन्तो वयस्कृतᳬसहस्वन्तः सहस्कृतम्' (यजु. ३.१८)। (मन्त्रार्थ–) 'अन्नवाले होकर हम अन्न देने वाले आपकी परिचर्या करें, बलवान होकर हम बल देने वाले आपकी परिचर्या करें'। तात्पर्य यह है कि—'हम अन्न वाले हों, आप अन्न देने वाले हों।

समिधीमहीति यदाह द्युमन्तꣳ समिधीमहीति व्वयस्वन्तो व्वयस्कृतꣳ सहस्वन्तः सहस्कृतमिति व्वयस्वन्तो व्वयं भूयास्म व्वयस्कृत्त्वं भूयाऽइत्त्येवैतदाह सहस्वन्तो व्वयं भूयास्म सहस्कृत्त्वं भूयाऽइत्त्येवैतदाहाग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यमिति त्वया व्वयꣳ सपत्नान्पापीयसः क्रियास्मेत्त्येवैतदाह॥२१॥

चित्रावसो स्वस्ति ते पारमशीयेति। त्रिरेतज्जपति रात्रिर्व्वै

---

यदाह–द्युमन्तं समिधीमहीति। 'वयस्वन्तो वयस्कृतम्, सहस्वन्तः सहस्कृतम्'– इति (वा.सं. ३.१८)। वयस्वन्तो वयं भूयास्म, वयस्कृत् त्वं भूयाः– इत्येवैतदाह। सहस्वन्तो वयं भूयास्म, सहस्कृत् त्वं भूया इत्येवैतदाह। 'अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्'–इति (वा.सं. ३।१८)। त्वया वयं सपत्नान् पापीयसः क्रियास्म–इत्येवैतदाह॥२१॥

'चित्रावसो स्वस्ति ते पारमशीय' इति (वा.सं. ३.१८)। त्रिरेतज्ज-

---

'समिधीमहि', सन्दीपयेमेत्यर्थः। **वयस्वन्तो वयस्कृतमित्यादि**। वय इत्यन्ननाम। (निघ. २.७.७) प्रभूतान्नयुक्ता भूत्वा वयसोऽन्नस्य कर्तारं त्वामुपतिष्ठेमहि। एवं 'सहस्वन्त:'—इत्यत्रापि योजना। उभयत्र विशेषणद्वयमपि विधेयाभिप्रायमिति व्याचष्टे—**वयस्वन्तो वयमिति**। वयः अन्नं करोतीति वयस्कृत्, सहः शत्रूणामभिभवनं तद्वन्तः सहस्वन्तः, तादृशं सहः शत्रुविषयकमभिभवनं करोतीति सहस्कृत्। **अग्ने सपत्नदम्भनमित्यादि**। सपत्नो दभ्यते हिंस्यतेऽनेनेति सपत्नदम्भनोऽग्निः। तथा च 'त्वया' 'वयं' 'सपत्नान्' शत्रून् 'पापीयसः' अतिशयेन निकृष्टान् 'क्रियास्म' करवामेति विशेषणतात्पर्यकथनम्॥२१॥

**'चित्रावसो'**—इत्यादिमन्त्रस्य त्रिर्जपं विधत्ते (का.श्रौ.सू. ४.२७६)— **चित्रेति। रात्रिर्वा इत्यादि**। 'हि' यस्मात् 'सा इयं रात्रिः' ग्रहनक्षत्रादीनि 'चित्राणि'

---

हम बल वाले हों, आप बल देने वाले हों'। अब कहता है—'अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम्' (यजु. ३.१८)। (अर्थ–) 'हे अग्नि! आप किसी के द्वारा भी धर्षित न होने वाले हो तथा शत्रुओं के विदारक हो अतः आपके आशीर्वाद से हम भी शत्रु-विदारक एवं अपराजेय बनें'। इसका तात्पर्य यह है कि— 'आपकी सहायता से शत्रुओं के विदारक एवं जयी बनें'॥२१॥

तीन बार इस मन्त्रांश का जप करता है—'चित्रावसो स्वस्ति ते पारमशीय' (यजु. ३।१८)। (अर्थ–) 'हे रात्रि देवता! (चित्रावसो) हम भली भाँति तेरे पार

चित्रावसुः सा हीयᳫँ सङ्गृह्येव चित्राणि व्वसति तस्मान्नार-काच्चित्रं ददृशे॥२२॥

(श ऽ) एतेनो ह स्म वाऽऋषयः। (यो) रात्रेः स्वस्ति पारᳫँ समश्नुवत ऽएतेनो ह स्मैनान्नात्रेर्नाष्ट्रा रक्षांसि न व्विन्दन्त्येतेनो ऽएवैष एतद्रात्रेः स्वस्ति पारᳫँ समश्नुतऽ-एतेनोऽएन ᳫँ रात्रेर्नाष्ट्रा रक्षाᳫँसि न व्विन्दन्त्येतावन्नु तिष्ठञ्जपति॥२३॥

---

पति। रात्रिर्वै चित्रावसुः। सा हीयं सङ्गृह्येव चित्राणि वसति। तस्मान्नारकाच्चित्रं ददृशे॥२२॥

एतेन ह स्म वा ऋषयो रात्रेः स्वस्ति पारं समश्नुवते, एतेनो ह स्मैनान् रात्रेर्नाष्ट्रा रक्षांसि न विन्दन्ति। एतेनो एवैष एतद् रात्रेः स्वस्ति पारं समश्नुते, एतेनो एनं रात्रेर्नाष्ट्रा रक्षांसि न विन्दन्ति। एतावन्नु तिष्ठन् जपति॥२३॥

---

'संगृह्य इव वसति', 'तस्मात्' 'चित्रावसुः' रात्रेर्नामधेयम्। अत एव इदानीमपि रात्रौ नभसि 'तारकालक्षणं चित्रं' 'ददृशे' दृश्यते॥२२॥

अस्य मन्त्रजपस्य प्रयोजनं वक्तुं पुरावृत्तमुदाहरति—**एतेनेति**। 'एतेन' 'चित्रावसो'—इति मन्त्रेण 'रात्रेः' 'पारम्' अवसानं 'स्वस्ति' क्षेमेण 'समश्नुवते स्म' सम्प्राप्नुवन्। तथा 'एनान्' ऋषीन् एतन्मन्त्रजपेनैव रात्रेः प्रीणनात् तत्सम्बन्धिनो राक्षसादयो 'न विन्दन्ति' 'नाविन्दन्'नालभन्त। इदानीन्तनस्यापि इमं मन्त्रमग्न्युपस्थाने जपतो यजमानस्य तत्फलमाह—**एतेनो एवेति**। **एतावन्न्विति**। 'उपप्रयन्त'—इत्यारभ्य 'चित्रावसो'—इत्येतावत्पर्यन्तमाहवनीयस्य समीपे 'तिष्ठन्' जपेत् (का.श्रौ.सू. ४.२७६)॥२३॥

---

को पा जाँय'। 'चित्रावसु' (चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां) रात्रि को कहते है; क्योंकि यह चित्रों को इकट्ठा करके रहती है। इसीलिये (रात में) दूर से चित्र अर्थात् स्पष्ट नहीं दीखता॥२२॥

इसी मन्त्र के प्रयोग से ऋषि लोग रात्रि के पार को भली-भाँति प्राप्त करते थे और इसी मन्त्र के प्रभाव से दुरात्मा राक्षसगण ऋषियों को बाधित न कर सके। अतएव इस

---

१. मूले तु बहुषु पुस्तकेषु 'तस्मान्नारकाच्चित्रं ददृशे' इत्येव पाठोऽस्ति। भाष्ये तु 'तारकालक्षणं चित्रं ददृशे, दृश्यते' इत्येव पाठोऽस्ति। तेन बहुमूलप्रतिपुस्तकस्थः 'तस्मान्नारकाच्चित्रं' इत्येव मूले पाठस्तथैव स्थापितोऽस्ति। कस्मिन्नपि पुस्तकेऽन्यथा नैवास्ति पाठः।

(त्य) अथासीनः। सं त्वमग्ने सूर्य्यस्य व्वर्चसागथा ऽइति तद्यदस्तं यन्नादित्य ऽआहवनीयं प्रविशति तेनैतदाह समृषीणाᳬ स्तुतेनेति तद्यदुपतिष्ठते तेनैतदाह सं प्रियेण धाम्नेत्याहुतयो वाऽअस्य प्रियं धामाहुतिभिरेव तदाह

---

अथासीनः। 'सं त्वमग्ने सूर्य्यस्य वर्चसागथाः'–इति (वा.सं. ३.१९)। तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति। तेनैतदाह 'समृषीणां स्तुतेन'–(वा.सं. ३.१९) इति। तद् यदुपतिष्ठते तेनैतदाह। 'सं प्रियेण धाम्ना'–(वा.सं. ३.१९)। आहुतयो वा अस्य प्रियं धाम। आहुतिभिरेव तदाह।

---

**अथासीन इति।** (का.श्रौ.सू. ४.२७७) वक्ष्यमाणान् **'सं त्वमग्ने'**— इत्यादिकान् मन्त्रान् तत्रैवासीनो जपेदित्यर्थः। हे 'अग्ने! त्वं सूर्यस्य' 'वर्च्चसा' तेजसा 'समगथाः' सङ्गतवानसि 'इति' प्रतीयमानमिमं मन्त्रार्थमुपपादयति—**तद् यदस्तं यन्निति।** 'अस्तं यन्' अस्तं गच्छन्नित्यर्थः। सूर्यस्य रात्रावाहवनीयप्रवेशः **'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा'**—इति होममन्त्रार्थकथनप्रस्तावे प्रतिपादितः। **समृषीणामित्यादि।** 'ऋषीणां' सम्बन्धि यत् 'स्तुतं' स्तोत्रं तेन सङ्गतवानसीति मन्त्रवाक्यार्थः।

एतर्हि प्रकृताग्न्युपस्थानाभिप्रायमाह—**तद्यदिति। आहुतयो वा अस्येति।** 'अस्य' अग्नेः आज्यदधिक्षीरादिद्रव्यसाध्याः 'आहुतयो वा' आहुतय एव 'प्रियं धाम' तेज्ज्योतिर्मयं शरीरम्। तथा चाहुतिभिरेव सङ्गतवानसीत्यर्थः।

---

मन्त्र के प्रभाव से वह निर्विघ्न रात बिताने में समर्थ हो जाता है और इसी के कारण दुरात्मा राक्षस उसके पास नहीं फटक सकते। 'उपप्रयन्त' से लेकर 'चित्रावसो स्वस्ति ते पारमशीय' तक के मन्त्रों को आहवनीय के पास जाकर जपता है।।२३।।

अब बैठ कर यह मंत्र जपता है—'सं त्वमग्ने सूर्यस्य वर्चसागथाः' (यजु. ३.१९)। (अर्थ–) 'हे अग्नि! आप रात्रिकाल में सूर्य के वर्चस् (प्रकाश) से सङ्गत हो जाते हैं; क्योंकि अस्तंगत होता हुआ सूर्य आहवनीय में प्रविष्ट हो जाता है, अतएव ऐसा कहा'। अब कहा—'समृषीणाᳬ स्तुतेन (यजु. ३.१९)। (अर्थ–) 'ऋषियों की स्तुति से भी आप सङ्गत होते हैं'। यतः सायं वह खड़े होकर स्वयं अग्न्युपस्थान करता है इसलिये ऐसा कहता है। आगे कहता है—'सं प्रियेण धाम्ना' (यजु. ३.१९)। (अर्थ–) 'प्रिय आहुतियों के द्वारा' (सङ्गत होते हैं)। आहुतियाँ अग्नि

---

१. 'तेजोमयम्' इति पाठः।

सुमहमायुषा सं व्वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीयेति यथा त्वमेतैः समगथा ऽएवमहमायुषा व्वर्चसा प्रजया रायस्पोषेणेति यद्भूम्नेति तदेवमहमेतैः सङ्गच्छा ऽइत्येवैतदाह॥२४॥

(ह्या) अथ गामभ्यैति। (त्य) अन्ध स्थान्धो वो भक्षीय मह

---

'समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मिषीय'-(वा.सं. ३.१९) इति। यथा त्वमेतैः समगथाः-एवमहमायुषा वर्चसा प्रजया रायस्पोषेणेति। यद् भूम्नेति-तदेवमहमेतैः सङ्गच्छा-इत्येवैतदाह॥२४॥

अथ गामभ्यैति-'अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीय'-

---

**समहमायुषेत्यादि।** हे अग्ने! यथा त्वमेतैरायुरादिभिः 'समगथाः' सङ्गतवानसि। गमेर्लुङि 'गातिस्था'—(पा.सू. २.४.७७) इति च्लेर्लुक् 'अनुदात्तोपदेश'—(पा.सू. ६.४.३७) इत्यनुनासिकलोपः। एवम् 'अहम्' अपि एतैः सङ्गच्छेयेत्यर्थः। **यद् भूम्नेति।** 'रायस्पोषेण'—इत्यस्य व्याख्यानम् 'भूम्ना' धनकनकादिबहुत्वेनेत्युक्ते यावानर्थो भवति, रायस्पोषेणेत्यनेन तावानर्थः प्रतिपाद्यत इत्यर्थः॥२४॥

**अथ गामभ्यैतीति**[1]। अग्निहोत्रहोमार्थस्य पयसो दोग्ध्री या गौः, ताम् **'अन्ध स्थान्धो वो भक्षीय'**—इति मन्त्रेण अभिगच्छेदित्यर्थः। अन्धःशब्दोऽन्नवाची

---

का प्रियधाम है। इसलिये 'धाम के द्वारा' का अर्थ है—आहुतियों के द्वारा। अब कहा—'समहमायुषा सं वर्चसा सं प्रजया सꣳरायस्पोषेणग्मिषीय' (यजु. ३.१९)। (अर्थ-) 'मैं आपकी कृपा से आयु, वर्चस्, सन्तान और धन की प्राप्ति करूँ'। इसका तात्पर्य यह है कि—'जैसे आपमें ये सारी समृद्धियाँ सङ्गत हैं, वैसे मैं भी आयुष्य, वर्चस्, सन्तान और धन की समृद्धि को प्राप्त करूँ'॥२४॥

अब इस मन्त्र को पढ़कर अग्निहोत्र की गाय के पास जाता है—'अन्ध स्थान्धो वो भक्षीय' मह स्थ महो वो भक्षीय (यजु. ३.२०)। (अर्थ-) 'हे गौ! आप अन्ध (अन्न) दात्री हो, मैं तुम्हारे अन्न = दूध का उपभोग करूँ, तुम धनदात्री हो, मैं तुम्हारे धन का सेवन करूँ'। इसका तात्पर्य है कि दुग्ध की पौष्टिकता है और जो तेजस्विता है उनका मैं उपभोग करूँ। अब कहता है—'ऊर्जस्थोर्जं वो

---

१. गां गच्छत्यन्धस्थेति। इति का.श्रौ.सू. ४.२७८। एतच्च सन्निधानात् कर्माङ्गभूतां गां प्रति गमनम्। सन्निहित-प्रत्ययन्यायात्। एवं च सति गोपक्ष एवैतदुपस्थानं नान्यत्रेति कर्कः।

स्थ मुहो वो भक्षीयेति यानि वो व्वीर्य्याणि यानि वो मुहाᳬं᳖सि तानि वो भक्षीयेत्येवैतुदाहोर्जं स्थोर्जं वो भक्षीयेति रुस स्थ रुसं वो भक्षीयेत्येवैतुदाह रायस्पोष स्थ रायस्पोषं वो भक्षीयेति भूमा स्थ भूमानं वो भक्षीयेत्येवैतुदाह॥२५॥ [शतम् ११००]

रेवती रमध्वमिति। रेवन्तो हि पशवस्तुस्मादाह रेवती

---

इति (वा.सं. ३.२०)। यानि वो वीर्याणि, यानि वो महांसि, तानि वो भक्षीय–इत्येवैतदाह। 'ऊर्ज स्थोर्जं वो भक्षीय'–इति (वा.सं. ३.२०)। रस स्थ रसं वो भक्षीय–इत्येवैतदाह। 'रायस्पोष स्थ रायस्पोषं वो भक्षीय'–इति (वा.सं. ३.२०)। भूमा स्थ भूमानं वो भक्षीय–इत्येवैतदाह॥२५॥

'रेवती रमध्वम्'–इति (वा.सं. ३।२१)। रेवन्तो हि पशवः।

---

(निरु. २.७.१; निरु. ५.१.१) तेन च तज्जनितं वीर्यं लक्ष्यत इति व्याचष्टे— **यानि वो वीर्य्याणीति।** हे गावः! यूयम् 'अन्धःस्थ' क्षीरान्नरूपा भवथ, अतस्तदुपभोगजनितानि 'वः' युष्मत्सम्बन्धीनि 'वीर्याणि' 'महाᳬंसि' तेजांसि, 'तानि' 'भक्षीय' सम्भजेयेत्यर्थः। **रस स्थेति** 'ऊर्ज्ज बलप्राणनयोः'— (धा.पा.चु.प. १६) इत्यस्मात् धातोर्निष्पन्न 'ऊर्क्'—शब्दो बलकरं रसमाचष्ट इत्यभिप्रायः। **भूमा स्थेति।** 'रायस्पोष'—शब्दस्य भूमार्थत्वं प्रागाम्नातम्— 'रायस्पोषेणेति यद् भूम्नेतीति' (श.प.ब्रा. २ कां. ३ अ. ४ ब्रा. २४ कं.)॥२५॥

**रेवती रमध्वमितीति। रेवन्तो हीत्यादि।** 'रेवन्तः' रयिमन्तः, पुत्रपौत्राद्यभिवृद्ध्या धनयुक्ताः पशवो रयिमन्तः 'रयेर्मतौ बहुलम्' (पा.सू. ६.१.३४ वा.) इति

---

भक्षीय' (यजु. ३.२०)। (अर्थ–) हे गौ, 'तुम बलीय रस की दात्री हो मैं तुम्हारे बलवर्द्धक रस को भोगूँ' अर्थात् 'तुम दुग्धादि रसयुक्त' हो। मैं तुम्हारे रस को भोगूँ'। अब कहता है—'रायस्पोष स्थ रायस्पोषं वो भक्षीय' (यजु. ३.२०)। (अर्थ–) 'तुम बहुफल (धन) दात्री हो, तुम्हारे बहुफलों को मैं भोगूँ' अर्थात् तुम समृद्धिरूपा हो, मैं तुम्हारी बहुविध समृद्धि का भोग करूँ॥२५॥

अब कहता है—'रेवती रमध्वम्' (यजु. ३.२१)। (अर्थ–) 'हे पशुगण! मेरे गोष्ठ में रमण करें'। रेवन्त अर्थात् वर्धिष्णु धन वाले पशु हैं। इसलिये कहा— 'रेवती रमध्वम्'। अब कहता है—'अस्मिन् योनावस्मिन् गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये। इहैव स्त मापगात'। (अर्थ–) 'हे पशुगण! इस स्थान में, इस बाड़े में, इस लोक

रुमध्वमित्यस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये। इहैव स्त मापगातेत्यात्मनऽएवैतदाह मदेव मापगातेति॥२६॥

(त्य) अथ गामभिमृशति। स ऍं हितासि विश्वरूपीति विश्वरूपा ऽ इव हि पशवस्तस्मादाह विश्वरूपीत्यूर्जा माविश गौपत्येनेत्यूर्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह॥२७॥

---

तस्मादाह रेवती रमध्वमिति। 'अस्मिन्योनावस्मिन् गोष्ठेऽस्मिंल्लोकेऽस्मिन् क्षये। इहैव स्त मापगात'–इति (वा.सं. ३.२१)। आत्मन एवैतदाह–मदेव मापगातेति॥२६॥

अथ गामभिमृशति–'संहितासि विश्वरूपी'–इति (वा.सं. ३.२२)। विश्वरूपा इव हि पशवः। तस्मादाह–विश्वरूपीति। 'ऊर्जा माविश गौपत्येन'–इति (वा.सं. ३.३२)। ऊर्जेति यदाह–रसेनेति तदाह। गौपत्येनेति यदाह–भूम्नेति तदाह॥२७॥

---

सम्प्रसारणम्। **आत्मन एवेति**। अस्मिन्निति मन्त्रगतेदंशब्देन सन्निहितवाचिना स्वसम्बद्धगृहगोष्ठानि विशेषेण 'आत्मनः' 'एव' स्वस्यैव एतत् फलमाशास्यत इत्यर्थः। हे गावः! यूयम् 'इहैव' मदीये गोष्ठादौ 'स्त' भवत, 'मापगात' मा अपगच्छतेति मन्त्रभागस्यार्थः। तत्रापगमनावधेरनुपादानात् तमुपन्यस्य योजयति—**मदेवेति**। मत्सकाशादेव मापगच्छतेत्यर्थः॥२६॥

समन्त्रकं गोस्पर्शनं विधाय प्रशंसति—**अथ गामिति**। 'विश्वानि' सर्वाणि, शुक्लकृष्णादीनि रूपाणि यस्याः सा विश्वरूपीति व्युत्पत्तिमभिप्रेत्य व्याचष्टे—**विश्वरूपा इव हीति**॥२७॥

---

में, मेरे इस घर में ही रहो' अर्थात् यहाँ से न जाओ। यहाँ अपने लिये कहा है अर्थात् 'मुझको छोड़कर न जाओ'॥२६॥

अब इस मन्त्र से गाय को छूता है—'सꣳहितासि विश्वरूपी' (यजु. ३.२२)। (अर्थ–) 'हे गौ! तुम यज्ञ से संयुक्त हो और नाना रूप वाली हो'। गवादि पशु भिन्न-भिन्न रूप-रंग वाले होते हैं इसलिये (गाय को) 'विश्वरूपी' कहा। अब कहता है—'ऊर्जा माविश गौपत्येन' (यजु. ३.२२)। '(गौपत्येन ऊर्जा) गौओं से सम्बन्धित

---

१. सं हितेत्यालपते गायत्र्या। काशौ सू. ४.२७९। २. 'व्यक्तिम्' इ.पा.।

(ह्रा) अथ गार्हपत्यमभ्यैति। स गार्हपत्यमुपतिष्ठत उप त्वाग्ने दिवे दिवे दोषावस्तर्द्धिया व्वयम्। नमो भरन्तऽ एमसीति नम एवास्माऽएतत्करोति यथैनं न हि ऽँ स्यात्॥२८॥

(द्रा) राजन्तमध्वराणाम्। गोपामृतस्य दीदिविम्।

---

अथ गार्हपत्यमभ्यैति। स गार्हपत्यमुपतिष्ठते–'उप त्वाग्ने दिवे दिवे दोषावस्तर्द्धिया वयम्। नमो भरन्त एमसि'–इति (वा.सं. ३.२२)। नम एवास्मा एतत् करोति–यथैनं न हिंस्यात्॥२८॥

'राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्द्धमानं स्वे दमे'–इति

---

एवमाहवनीयस्य समन्त्रकमुपस्थानं सप्रपञ्चं[1] विधाय, गार्हपत्यस्य[2] तद् विधत्ते—**अथ गार्हपत्यमभ्यैतीत्यादिना।**[3] **नम एवास्मा इति।** **'नमो भरन्तः'**—इति नमस्कारस्य सम्पाद्यत्वावगमात् अतिक्रमजनितापराधनिवृत्तयेऽस्मै गार्हपत्याय नमस्कारमेव करोतीत्यर्थः। इतरथा हि प्रथमाग्निं गार्हपत्यमतिक्रम्य आहवनीय-स्योपस्थानकरणात् स गार्हपत्यः क्रुद्धः सन् 'यथैनं' यजमानं 'न हिंस्यात्', तथा नमस्कारः क्रियत इत्यर्थः॥२८॥

एवं प्रथमाया ऋचस्तात्पर्यमभिधाय द्वितीयामृचं पठित्वा तात्पर्यविशेषमाह—**राजन्तमध्वराणामिति। स्वं वा इत्यादि।** दम इति गृहनाम। (निघं. ३.४.१२) यन्मदीयं गृहं हे अग्ने! 'ते' तव स्वभूतम्, अतस्तथाविधं

---

क्षीरादि रस के द्वारा (मा) मुझमें (विश) प्रविष्ट हो'। यहाँ 'ऊर्ज' का तात्पर्य 'रस' से है और 'गोपत्य' कहने से तात्पर्य है—'संवृद्धि' का॥२७॥

अब गार्हपत्य अग्नि के पास आता है और उसका उपस्थान करता है इस मन्त्र से—'उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्। नमो भरन्तऽएमसि' (यजु. ३.२२)। (मन्त्रार्थ–) 'हे अग्नि! रात्रि में प्रकाशशील एवं जागरूक रहने वाले आपके पास हम प्रतिदिन उपस्थित होते हैं तथा श्रद्धायुक्त बुद्धि से आपको नमस्कार करते हैं'। वह यजमान गार्हपत्य अग्नि का उपस्थान इसलिये करता है कि कहीं वह क्रुद्ध होकर उसको हानि न पहुँचाये॥२८॥

अब कहता है—'राजन्तमध्वराणां गोपामृतस्य दीदिवम्। वर्धमानꣳ स्वे दमे' (यजु. ३.२३)। (मन्त्रार्थ–) 'अति तेजस्वी, यज्ञों के रक्षक, ऋत (= सत्य) के व्रत को दीप्त करने वाले, अपने घर में बढ़ने वाले, हे अग्नि! हम आपके समीप

---

१. 'सप्रपन्नं' इति क्व.। २. 'गार्हपत्ये' इति क्व.। ३. गार्हपत्यं गत्वोपतिष्ठत उपत्वेति। कात्या. ४.२८०।

व्वर्द्धमानꣳ स्वे दुमऽइुति स्वं वै त ऽइदं यन्मुम तुन्नो भूयो-भूय ऽएवु कुर्व्वित्येवैतुदाह॥२९॥

सु नः। पितेव सूनवेऽग्ने सूपायनो भव। सुचस्वा नः स्वस्तयऽइुति युथा पिता पुत्राय सूपचुरो नैवैनं केन चन हिनुस्त्येवं नः सूपचुर एधि मैवु त्वा केन चनु हि ꣳ सिष्मेत्युवैतुदाह॥३०॥

---

(वा.सं. ३.२३)। स्वं वै त इदं-यन्मम। तन्नो भूयो भूय एव कुर्वित्येवैतदाह॥२९॥

'स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये'-इति (वा.सं. ३.२४)। यथा पिता पुत्राय सूपचरो-नैवैनं केनचन हिनस्ति-एवं नः सूपचर एधि, मैव त्वा केनचन हिंसिष्म-इत्येवैतदाह॥३०॥

---

गृहं 'नः' अस्माकं पुनः—पुनः कुर्विति 'स्वे दमे'—इति मन्त्रपदयोर्विवक्षितोऽर्थः इति भावः॥२९॥

स नः पितेवेति। गार्हपत्योपस्थाने तृतीया। तत्र 'पितेव सूनवे'—इति दृष्टान्तसिद्धमर्थं निष्कृष्यानुवदति—यथा पितेति। 'सूपचरः' सुष्ठु उपचरितुं नमस्कारादिभिरुपचारैः पुत्रस्य सेवितुं योग्य एव भवति। स च पुत्रः 'एनं' पितरं केनचिदपि साधनेन 'नैव' 'हिनस्ति' बाधते। एवं गार्हपत्याग्ने! त्वं 'नः' अस्माकं 'सूपचरः एधि' सुष्ठूपचरितुं योग्यो भव; वयमपि त्वां केनचिदपि साधनेन 'मैव हिꣳसिष्म' इति योजना।

एते चोपत्वाग्ने इत्यादिका मन्त्राः, वक्ष्यमाणाश्चाग्ने त्वमित्यादिकाः; सर्व एव संहितायां[1] व्याख्यातत्वाद् ग्रन्थविस्तरभयादत्र पुनर्न व्याख्यायन्ते॥३०॥

---

श्रद्धापूर्वक उपस्थित होते हैं'। इसका तात्पर्य है कि यह मेरा घर आपका ही घर है। इसको हमारे लिये समृद्धिशील कीजिये॥२९॥

अब मन्त्र कहते हैं—'स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये' (यजु. ३.२४)। (मन्त्रार्थ-) 'हे अग्नि, आप हमारे लिये उसी प्रकार सुलभ एवं कृपालु होवें जैसे पिता पुत्र के लिये होता है। हमारा कल्याण करें'। इसका

---

१. कण्वसंहितायामिति बोध्यम्।

(ह्वा) अथ द्विपदाः। (ऽ) अग्ने त्वं नोऽअन्तम ऽउत त्राता शिवो भवा व्वरुथ्यः। व्वसुरग्निर्व्वसुश्रवाऽ अच्छानक्षि द्युमत्तमँ रयिं दाः। तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः। स नो बोधि श्रुधी हुवमुरुष्याणो ऽअघायतः समस्मादिति॥३१॥

---

अथ द्विपदाः। 'अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः। वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमं रयिं दाः॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः। स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात्'-इति (वा.सं. ३.२५-२६)॥३१॥

---

अथ चतसृभिर्द्विपदाभिर्गार्हपत्यस्योपस्थानमाह—**अथ द्विपदा इत्यादि**। अथ **'उपत्वाग्ने'** इत्यादि (वा.सं. ३.२२-२४) गायत्रीणामनन्तरं गार्हपत्योपस्थाने 'द्विपदाः' प्रयोक्तव्याः। तत्र, **'अग्ने त्वम्'**—इति प्रथमा, **'वसुरग्निः'**—इति द्वितीया, **'तं त्वा शोचिष्ठ'**—इति तृतीया, **'स नो बोधि'**—इति चतुर्थी॥३१॥

---

तात्पर्य है कि जैसे पिता पुत्र के लिये सर्वदा सुलभ होता है और किसी प्रकार उसको हानि नहीं पहुँचाता, उसी प्रकार अग्निदेव भी हमारे लिये सर्वदा सुलभ हों तथा किसी प्रकार हानि न पहुँचायें॥३०॥

अब यजमान दो पद वाले मन्त्रों से उपस्थान करता है—'अग्ने त्वं नोऽअन्तमऽउत त्राता शिवो भवा वरुथ्यः। वसुरग्निर्वसुश्रवाऽ अच्छा नक्षि द्युमत्तमँ रयिं दाः' (यजु. ३.२५)। 'तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः। स नो बोधि श्रुधी हवमुरुष्याणोऽअघायतः समस्मात्' (यजु. ३.२६)। (मन्त्रार्थ-) 'हे अग्नि! आप सर्वदा मेरे निकट रहें। आप रक्षक, कल्याणकारी और परिवारजनों के हितकारक हो। हे अग्नि, आप वसु (धन) हो, 'वसुश्रवा' अर्थात् धन देने के लिये प्रसिद्ध हो। हे अग्नि! जब हम हवनार्थ उद्यत हों तब आप यज्ञस्थल पर प्रकट होंवें तथा हमको सुन्दर एवं दिव्य धन प्रदान करें' (यजु. ३.२५)। 'अपने मित्रों के सुख के लिये हम तुझ प्रकाश-स्वरूप और दीप्तिमान् के पास आते हैं। आप हमें शुभकर्मों के लिये प्रतिबोधित करें तथा हमारे आह्वान पर पधारें और हमको पापी शत्रु से तथा पापकर्मों से बचायें' (यजु. ३.२६)॥३१॥

यद्वा ऽआहवनीयमुपतिष्ठते। पशूँस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठतऽउच्चावचा ऽइव हि पशवोऽथ यद् गार्हपत्यं पुरुषांस्तद्याचते तद् गायत्रं प्रथमं त्रिचं गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति॥३२॥

(त्य) अथ द्विपदाः। पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा ऽअयं

---

यद्वा आहवनीयमुपतिष्ठते–पशूंस्तद्याचते। तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठते–उच्चावचा इव हि पशवः। अथ यद् गार्हपत्यं–पुरुषांस्तद्याचते। तद् गायत्रं प्रथमं त्रिचम्। गायत्रं वा अग्नेश्छन्दः। स्वेनैवैनमेतच्छन्दसोपपरैति॥३२॥

अथ द्विपदाः। पुरुषच्छन्दसं वै द्विपदाः। द्विपाद्वा अयं पुरुषः।

---

द्विपदाभिर्गार्हपत्योपस्थानस्य पुरुषप्राप्तिहेतुतां वक्तुमाहवनीयोपस्थानस्य पशुप्राप्तिहेतुतामाह—**यद्वा आहवनीयमिति**। **उच्चावचैरिति**। न्यूनाधिकपरिमाणयुक्तैः **'उपप्रयन्त'** इत्यादिमन्त्रैर्गायत्र्यादिच्छन्दोभिरित्यर्थः। **अथ यद् गार्हपत्यमित्यादि**। **'उपत्वाग्ने'** इत्यादिभिः 'यद्' 'गार्हपत्यम्' उपतिष्ठते, तेनोपस्थानेन 'पुरुषान्' पुत्रपौत्रादीनेव 'याचते' प्रार्थयत इत्यर्थः। तच्च पुरुषप्रार्थनं द्विपदाभिरेवेति वक्तुमुपत्वाग्न इति गायत्रतृचस्य प्रयोजनमाह—**गायत्रं वा अग्नेश्छन्द इति**। प्रजापतिमुखात् सहोत्पन्नत्वादित्यर्थः (तै.सं. ७ कां. १.१.४) 'उपपरैति' उपप्राप्नोति॥३२॥

**अथ द्विपदा इति**। **पुरुषच्छन्दसं वा इति**। पुरुषवत् पादद्वयोपेतत्वात् 'द्विपदाः पुरुषच्छन्दसम्' पुरुषसमानाकृतिकं छन्दः। छन्दश्शब्दादकारः समासान्तः

---

जब आहवनीय अग्नि का उपस्थान करता है तो यजमान पशुओं की याचना करता है, अतएव नानाविध छन्दस्क मन्त्रों को जपता है; क्योंकि पशु नानाविध प्रकार के होते हैं। जब गार्हपत्य अग्नि का उपस्थान करता है तो पुरुषों (पुत्र-पौत्रादि) की याचना करता है। इसलिये पहली तीन ऋचायें गायत्री छन्द में हैं। गायत्री अग्नि का छन्द है, इसलिये उसी के छन्द से स्तुति करता है॥३२॥

तदनन्तर वह 'अग्ने त्वं नो' मन्त्रों को जपता है। द्विपाद मन्त्र पुरुष छन्द हैं; क्योंकि पुरुष भी दो पैर वाला है, इसलिये द्विपात् छन्दस्क मन्त्रों से पुरुषों की याचना करता है। (यतः) पुरुषों की याचना करता है इसलिये द्विपात् = दो चरण वाले मन्त्र को

पुरुषः पुरुषानेवैतद्याचते पुरुषाह्नि याचते तस्माद् द्विपदाः पशुमान्ह वै पुरुषवान्भवति य ऽएवं विद्वानुपतिष्ठते॥३३॥

(तेऽथ) अथ गामभ्यैति। (तीं) इडऽएह्यदितऽएहीतीडा हि गौरदितिर्हि गौस्तामभिमृशति काम्या ऽएतेति मनुष्याणाᳬं ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या ऽएतेति मयि वः कामधरणं भूयादित्यहं वः प्रियो भूयासमित्येवैतदाह॥३४॥

---

पुरुषानेवैतद्याचते। पुरुषान् हि याचते-तस्माद् द्विपदाः। पशुमान् ह वै पुरुषवान् भवति-य एवं विद्वानुपतिष्ठते॥३३॥

अथ गामभ्यैति। 'इड एह्यदित एहि'-इति (वा.सं. ३.२७)। इडा हि गौः, अदितिर्हि गौः-तामभिमृशति। 'काम्या एत'-इति (वा.सं. ३.२७)। मनुष्याणां ह्येतासु कामाः प्रविष्टाः। तस्मादाह काम्या एतेति। 'मयि वः कामधरणं भूयात्'-इति (वा.सं. ३.२७)। अहं वः प्रियो भूयासमित्येवैतदाह॥३४॥

---

(पा.सू. ५.४.१०३)। **पशुमान् ह वै पुरुषवानिति**। आहवनीयगार्हपत्योपस्थानयोः समुच्चित्य प्रशंसाः, गार्हपत्योपस्थानस्यापि पुरुषवत्पादद्वयोपेतत्वात्॥३३॥

गोसमीपगमनं तदुपस्पर्शनञ्च समन्त्रकं विधत्ते—**अथ गामभ्यैतीति**[१]। **इड एहीति**। इडाऽदितिशब्दौ गोनामत्वेन प्रसिद्धावित्यर्थः। **कामाः प्रविष्टा इति**। 'मनुष्याणां' क्षीरदध्यादिविषयाः 'कामाः' 'हि' यस्मात् 'एतासु' गोषु 'प्रविष्टाः' 'तस्मात्' एताः कामनाविषयत्वात् 'काम्याः'[२] इत्यर्थः॥३४॥

---

जपता है। जो इस रहस्य को समझकर (दोनों अग्नियों का) उपस्थान करता है उसको पशु और पुरुष (= पुत्र-पौत्रादि) दोनों प्राप्त होते हैं॥३३॥

अब वह इस मन्त्र का पाठ करते हुए यज्ञ-धेनु के पास जाता है—'इड ऽएह्यदित एहि' (यजु. ३.२७)। (अर्थ–) 'हे इडा (= मनु की पुत्री), आ। हे अदिति आ'। इडा गौ है। अदिति 'गौ' है। अब गौ का स्पर्श करते हुए कहता है—'काम्याऽएत' अर्थात् 'कामना के योग्य तुम आओ'। गौ में मनुष्यों की कामनायें निहित हैं। इसलिये इनको 'काम्या एत' कहा' (यजु. ३.२७)। अब कहता है—

---

१. गां गच्छतीड एहीति। तामेव गाम्। का.श्रौ.सू. ४.२८१। २. काम्या एतेत्यालभते। का.श्रौ.सू. ४.२८२।

(हा) अथान्तरेणाहवनीयं च गार्हपत्यं च। प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं यऽ औशिजः। यो रेवान्यो ऽअमीवहा व्वसुवित्पुष्टिवर्द्धनः। स नः सिषक्तु यस्तुरः। मानः शꣳ सोऽअररुषो धूर्त्तिः प्रणङ् मर्त्यस्य। रक्षाणोब्रह्मणस्पतऽइति॥३५॥

यद्वाऽआहवनीयमुपतिष्ठते। दिवं तदुपतिष्ठतेऽथ यद् गार्हपत्यं

---

अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति। 'सोमानं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः'।-(वा.सं. ३.२८)। 'यो रेवान् यो अमीवहा वसुवित्पुष्टिवर्द्धनः। स नः सिषक्तु यस्तुरः'-(वा.सं. ३.२९) 'मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य। रक्षाणो ब्रह्मणस्पते'-इति (वा.सं. ३.३०)॥३५॥

यद्वा आहवनीयमुपतिष्ठते-दिवं तदुपतिष्ठते। अथ यद् गार्हपत्यम्-

---

अथान्तरेणेत्यादि, निगदसिद्धम्॥३५॥

सोमानमित्यस्य जप्यस्य तृचस्य च प्रयोजनमाह—यद्वा इति। आहवनीय-गार्हपत्योपस्थानाभ्यां द्यावापृथिव्योरुपस्थानं कृतं भवति। अनेन 'सोमानम्' इति (वा.सं. ३.२८-३०) तृचस्य जपेन द्यावापृथिव्योः मध्यवर्तिनोऽन्तरिक्षस्योपस्थानं

---

'मयि वः कामधरणं भूयात्' (यजु. ३.२७)। (अर्थ-) 'आपकी मेरे में इच्छा-पूर्ति हो'। अर्थात् मैं आपका प्रिय होऊँ, यह तात्पर्य है॥३४॥

अब आहवनीय और गार्हपत्य-अग्नियों के बीच में खड़ा होकर पूर्वाभिमुख हो (इन तीन मन्त्रों) को जपता है—(१) 'सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं यऽ औशिजः॥ (२) यो रेवान् योऽ अमीवहा वसुवित् पुष्टिवर्धनः। स नः सिषक्तु यस्तुरः॥ (३) मा नः शꣳ सोऽअररुषो धूर्तिः प्रणङ् मर्त्यस्य। रक्षाणो ब्रह्मणस्पते'॥ (यजु. ३.२८,२९,३०)। (मन्त्रार्थ-) (१) 'हे वाणी के पति, मुझ यजमान को समृद्धि प्रदान कर सोमयाजी बनाओ जिस प्रकार आपने उशिक् के पुत्र कक्षीवान् ऋषि को बनाया था'। (२) 'हे ब्रह्मणस्पते! आपके प्रसाद से हमें धनवान् व्याधियों (दुःखो) का नाशक, भाग्य और पुष्टि का वर्धयिता, शीघ्रकारी पुत्र प्राप्त हो'। (३) 'हे वेदों के रक्षक अग्नि! हमारी रक्षा कीजिये। यज्ञादिकर्म न करने वाले, बुरे और धूर्त मनुष्यों की संगति हमें प्राप्त न हो॥३५॥

जो आहवनीय का उपस्थान करता है तो मानो द्युलोक का उपस्थान करता है और जो गार्हपत्य का उपस्थान करता है तो मानो पृथ्वी लोक का उपस्थान

पृथिवीं तदुथैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेताँ ह्येतद्दिशमुपतिष्ठते तस्माद् बार्हस्पत्यं जपति॥३६॥

महि त्रीणामवोऽस्तु। द्युक्षं मित्रस्यार्य्यम्णः। दुराधर्षं वरुणस्य॥ न हि तेषाममाचन नाध्वसु व्वारणेषु। ईशे रिपुरघशँ सः॥ ते हि पुत्रासोऽ अदितेः प्र जीवसे मर्त्त्याय।

---

पृथिवीं तद्। अथैतदन्तरिक्षम्–एषा हि दिग् बृहस्पतेः। एतां ह्येतद्दिशमुपतिष्ठते। तस्माद् बार्हस्पत्यं जपति॥३६॥

'महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्य्यम्णः। दुराधर्षं वरुणस्य'–(वा.सं. ३.३१)। 'न हि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशंसः'–(वा.सं. ३.३२)। 'ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय।

---

कृतं भवतीत्यर्थः। तस्य देवताविशेषसम्बन्धं प्रशंसति—**एषा हीति**। द्यावापृथिव्योर्मध्ये वर्त्तमाना येयमूर्ध्वा 'दिक्' 'एषा' 'बृहस्पतेः' स्वभूता। अत एव तैत्तिरीयके समाम्नातम्—**'ऊर्ध्वा दिग् बृहस्पतिर्देवता'**—(तै.ब्रा. ३.११.५-६) इति। नन्वेतत् तृचं ब्राह्मणस्पत्यम्, कथं बार्हस्पत्यम्? इति। नैष दोषः, तयोर्भेदाभावात्। अत एव दाशतय्यां **'गणानां त्वा'**—(ऋ.सं. २.२३) इत्यादिषु ब्राह्मणस्पत्यसूक्तेषु तत्र बृहस्पतिः स्तूयते॥३६॥

**महि त्रीणामित्यादि।** एतदपि सूक्तमन्तराग्नी तिष्ठन् जपेदित्यनुषङ्गेण

---

करता है तथा 'सोमानम्॰' इस तृच के जप से अन्तरिक्ष का उपस्थान हो जाता है। द्यावापृथिवी के मध्य वर्तमान अन्तरिक्ष बृहस्पति की दिशा है। यतः इस अन्तरिक्ष का उपस्थान करता है अतएव बृहस्पति दैवत मन्त्रों को जपता है॥३६॥

अब जपता है—(१) 'महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः। दुराधर्षं वरुणस्य' (यजु. ३.३१)। (२) 'नहि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपुरघशꣳसः' (यजु. ३.३२)। (३) 'ते हि पुत्रासोऽअदितेः प्र जीवसे मर्त्याय। ज्योतिर्यच्छन्त्यजस्रम्' (यजु. ३.३३)। (मन्त्रार्थ–) (१) 'महान् द्युलोक सम्बन्धी, पराजित न होने वाले, मित्र, अर्यमा और वरुण—इन तीनों की रक्षा (हमें प्राप्त) हो'। (२) '(इन देवों से रक्षित) हम पर भयानक मार्गों अथवा घरों में पापी शत्रु स्वत्व प्राप्त नहीं कर सकते'। (३) '(ये अदिति के पुत्र देवगण) निरन्तर मनुष्य के जीवन के लिये ज्योति देते हैं'। मन्त्र में कहा गया—'नाध्वसु वारणेषु (भयानक

---

१. सोमानमित्यनुदकं वृतोमायनवत्। का.श्रौ.सू. ४.२.८३।

ज्योतिर्य्युच्छन्त्युजस्त्रमिति तुत्रास्ति नाध्वसु व्वारणेष्वित्येते ह वाऽअध्वानो व्वारणा युऽइमेऽन्तरेण द्यावापृथिवीऽएतान् ह्येतदुपतिष्ठते तस्मादाह नाध्वसु व्वारणेष्विति॥३७॥

(त्यु) अथैन्द्री।(न्द्रीन्द्रो) इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते कदा चन स्तरीरसि नेन्द्र सश्चसि

---

ज्योतिर्यच्छन्त्यजस्त्रम्'–इति (वा.सं. ३.३३) तत्रास्ति नाध्वसु वारणेष्विति। एते ह वा अध्वानो वारणाः–य इमेऽन्तरेण द्यावापृथिवी। एतान् ह्येतदुपतिष्ठते। तस्मादाह नाध्वसु वारणेष्विति॥३७॥

अथैन्द्री। इन्द्रो वै यज्ञस्य देवता। सेन्द्रमेवैतदग्न्युपस्थानं कुरुते। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे'–इति (वा.सं. ३.३४) यजमानो

---

वाक्यसमाप्तिः। अस्य तृचस्य प्रयोजनमाह—**तत्रास्तीति**। 'तत्र' तस्मिंस्तृचे 'न अध्वसु वारणेषु'—'इति' 'अस्ति', तस्याभिप्रायो वर्ण्यत इति शेषः। **एते ह वा इत्यादि**। द्यावापृथिव्योर्मध्ये य 'इमे' 'अध्वानः' वितताः 'एते' खलु पुरुषस्य फलप्राप्तिवारणाय भवन्ति, अतो द्यावापृथिवीसंस्तुतयोर्गार्हपत्याहवनीययोर्मध्ये स्थित्वा इमं तृचं जपन् 'एतान्' एव मार्गान् 'उपतिष्ठते' इत्यर्थः। एवमध्वनामुपस्थितत्वात् तं वारयितुं न कोऽपि ईश्वर इति **'नाध्वसु वारणेषु'**—इति मन्त्रपादस्यार्थः॥३७॥

**अथैन्द्रीत्यादि**। 'ऐन्द्री' इन्द्रदेवताका **'कदाचन स्तरीरसि'**—इत्यादिका अग्न्युपस्थाने प्रयोक्तव्या। तथा च तदग्न्युपस्थानमिन्द्रसहितं सत् यज्ञात्मना

---

मार्गों में)'; क्योंकि द्युलोक और पृथिवीलोक के बीच के मार्ग भयानक है। द्यावापृथिवी स्थानीय गार्हपत्य-आहवनीय के मध्य स्थित होकर इन मार्गों का उपस्थान करता है। अतएव मन्त्र में कहता है—'भयानक मार्गों में'॥३७॥

अब इन्द्र-दैवत मन्त्र का पाठ करता है। इन्द्र ही यज्ञ का देवता है। इसलिये अग्नि के उपस्थान को इन्द्र से सम्बद्ध करता है—'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' (यजु. ३.३४)। (अर्थ–) 'हे इन्द्र! आप हवि-प्रदाता सत्पुरुषों को कभी कष्ट नहीं देते और सर्वदा अपने भक्तों की रक्षा करते हैं'। 'दाशुषे' का तात्पर्य है—'हवि प्रदाता यजमान'। 'देवगण यजमान से कभी द्रोह नहीं करते'। यही इस मन्त्र

दाशुष ऽइति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीत्येवैतदाहोपोपेन्नु मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्यत ऽइति भूयो भूयऽएव न ऽइदं पुष्टं कुर्व्वित्येवैतदाह॥३८॥

(ह्य) अथ सावित्री। सविता वै देवानां प्रसविता तथो हास्मा ऽएते सवितृप्रसूता एव सर्व्वे कामाः समृध्यन्ते तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयादिति॥३९॥

---

वै दाश्वान्न यजमानाय द्रुह्यसि–इत्येवैतदाह। 'उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते'–इति (वा.सं. ३.३४)। भूयो–भूय एव न इदं पुष्टं कुरु–इत्येवैतदाह॥३८॥

अथ सावित्री। सविता वै देवानां प्रसविता। तथो हास्मा एते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते। 'तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रयोदयात्'–इति (वा.सं. ३.३५)॥३९॥

---

निष्पद्यत इत्यर्थः। तत्र पूर्वार्द्धमनूद्य तात्पर्यमाह—**कदाचनेति। यजमानो वै दाश्वानिति।** 'दाशृ दाने' (धा.पा.भ्वा ९१९) इत्यस्मात् 'दाश्वान् साह्वान्' (पा.सू. ६.१.१२) इति निपातनात् हविषां दाता यजमानो दाश्वानित्युच्यते। तथा च 'दाशुषे' यजमानाय कदाचिदपि 'स्तरीः' हिंसकः 'न असि' न भवसि न द्रुह्यसीति तात्पर्यार्थकथनम्। उत्तरार्द्धं व्याचष्टे—**उपोपेदिति।** 'हे मघवन्' अस्मभ्यं दीयमानं त्वदीयं धनं 'भूयो भूय एव' 'उपपृच्यते' समीपे प्राप्नोति; तदिदमाम्नातम्—**भूयो-भूय एवेति**॥३८॥

अथ सवितृदेवताकामृचं विधाय प्रशंसति—**अथ सावित्रीति।** का पुनरसौ सावित्री? इति, तामाह—**तत्सवितुरिति**॥३९॥

---

का तात्पर्यार्थ है। अब कहता है—'उपोपेन्नु मघवन् भूय ऽ इन्नु ते दानं देवस्य पृच्यते' (यजु. ३.३४)। (अर्थ–) 'हे मघवन्, तुझ देव का बहुतर दान शीघ्र ही अग्निहोत्री को प्राप्त होता जाता है'। इसका तात्पर्य यह है कि हमको अधिकाधिक पुष्ट कीजिये॥३८॥

अब सविता देवता के मन्त्र का जप करता है। 'सविता' देवों का प्रेरक है। सविता की प्रेरणा से ही सब काम सफल तथा समृद्ध होते हैं। इसलिये जपता है—'तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्' (यजु. ३.३५)॥३९॥

(त्यु) अथाग्नेयी। तुदग्नुयऽएुवैतुदात्मुानमन्ततः पुरिददाति गुप्त्यै पुरि ते दूडुभो रुथोऽस्मा२ँ। ऽअश्नोतु व्विश्वुतः। येुन रुक्षसि दाशुुष इुति यजमाना वैु दाश्वाुᳬंसो योु ह वाुऽअस्याुनाधृष्युतमो रुथस्तेुनैषु यजमानानभिुरक्षति स युस्तेऽनाधृष्युतमो रुथो येुन यजमानानभिरुक्षसि तेुन नः सर्व्वुतोऽभिुगोपायेुत्युैवैतुदाह त्रिुरेतुज्जपति॥४०॥

---

अथाग्नेयी। तदग्नय एवैतदात्मानमन्ततः परिददाति गुप्त्यै। 'परि ते दूडभो रथोऽस्मा२ँ॥ अश्नोतु विश्वतः। येन रक्षसि दाशुषः'–इति (वा.सं. ३.३६)। यजमाना वै दाश्वांसः। यो ह वा अस्यानाधृष्यतमो रथः– तेनैष यजमानानभिरक्षति। स यस्तेऽनाधृष्यतमो रथो येन यजमानानभि-रक्षसि, तेन नः सर्वतोऽभिगोपाय–इत्येवैतदाह। त्रिरेतज्जपति॥४०॥

---

अग्निदेवताकामृचं विधत्ते—अथाग्नेयीति। 'परिददाति' परिदानं रक्षणार्थं दानम्। तादर्थ्यमेव विव्रियते—गुप्त्या इति। यजमाना - वा इत्यादि। धर्षितुमशक्यः, परैरप्रधृष्यो यो रथो विद्यते, 'तेन' रथेन 'एषः' अग्निः 'यजमानान् अभिरक्षति'।

एवमग्नेः स्वभावमभिधाय मन्त्रे योजयति—स य इति। हे अग्ने! 'सः' प्रसिद्धः 'यः' 'रथः' 'ते' त्वदीयः, शत्रुभिरप्रधृष्यो विद्यते 'येन' च 'यजमानान्' 'अभितः' सर्वतः 'रक्षसि', 'तेन', 'रथेन' 'नः' अस्मान् सर्वतः अपि 'अभिगोपाय' इत्यर्थः। अस्या ऋचस्त्रिर्जपं विधत्ते—त्रिरेतदिति॥४०॥

---

अब अग्नि के मन्त्र का पाठ करता है। यजमान अपने को अन्त में रक्षार्थ अग्नि के ही समर्पण करता है—'परि ते दूडभोऽरथोऽस्मांऽ अश्नोतु विश्वतः। येन रक्षसि दाशुषः' (यजु. ३.३६)। (मन्त्रार्थ–) 'हे अग्ने! तेरा अधृष्य रथ हमको चारो ओर से ढक ले जिससे तू पूजकों की रक्षा करता है'। यहाँ 'दाशुषः' का अर्थ है 'यजमान'। अग्नि के पास जो अधृष्य रथ है उससे वह यजमानों की रक्षा करता है। इस कहने का तात्पर्य है कि—'हे अग्नि, जो अधृष्य रथ तेरे पास है और जिससे तू यजमानों की रक्षा किया करता है उससे सर्वतः हमारी रक्षा कीजिये'। तीन बार इस मन्त्र को जपता है॥४०॥

(त्यु) अथ पुत्रस्य नाम गृह्णाति। (ती) इदं मेऽयं व्वीर्य्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादुप्यात्मन एव नाम गृह्णीयात्॥४१॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम्॥३॥२॥

इति तृतीयाध्याये चतुर्थं ब्राह्मणम्॥३॥४॥

---

अथ पुत्रस्य नाम गृह्णाति। 'इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवद्' इति। यदि पुत्रो न स्याद्–अप्यात्मन एव नाम गृह्णीयात्॥४१॥ इति बृहदुपस्थानम्।

---

दर्शपूर्णमासयोरिवात्रापि पुत्रनामग्रहणं विधत्ते—अथ पुत्र[1]स्येति। 'अयं' मदीयः 'पुत्रः' 'इदं' यज्ञानुष्ठानलक्षणं 'वीर्यम्' 'अनुसन्तनवत्' अनुक्रमेण सन्तनुयात्, सन्ततमनवच्छिन्नं कुर्यात्, 'इति' अनेनाभिप्रायेण नामग्रहणम्। पुत्राभावे तु यजमानः स्वस्यैव 'नाम' गृह्णीयात्॥४१॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम्॥२॥३॥४॥**

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥१॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्।
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः॥२॥
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो।
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च॥३॥
धान्याद्रिं धन्य[2]जन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः।
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः॥४॥
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः।
रत्नाढ्यो रत्नरूपं गिरिमकृतमुदा पात्रसात्सिङ्गणार्यः॥५॥

**इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणा[3]चार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयोऽध्यायः समाप्तः॥२॥३॥**

---

अब वह अपने पुत्र का नाम लेता है। 'मेरा यह पुत्र (नाम लेकर) मेरे इस मंहिष्ठ यज्ञ-क्रम को जारी रखें'। यदि उसके पुत्र न हो तो अपना ही नाम ले लें॥४१॥४॥

---

१. पौर्णमासवत् पुत्रनामग्रहणम्। इति का.श्रौ.सू. ४.२८४। वत्युपदेशाच्च तन्त्वेत्वेत्यादि सर्वं प्रवर्तते। इत्येतन्नामग्रहणान्तं वात्सप्रम्। २. 'आज्यजन्मा' इ.पा.। ३. 'सायणापत्येन' इ.पा.।

अथ हुतेऽग्निहोत्र ऽउपतिष्ठते। भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचꣳ समर्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाऽऽशिषमाशास्ते सुप्रजाः प्रजाभिः स्यामिति

---

**अथ क्षुल्लकोपस्थानमासुरिदृष्टम्**

**अथ हुतेऽग्निहोत्र उपतिष्ठते–'भूर्भुवः स्वः'–(वा.सं. ३.३७) इति। तत्सत्येनैवैतद्वाचं समर्धयति। यदाह–भूर्भुवः स्वरिति। तया समृद्धयाऽऽ-शिषमाशास्ते। 'सुप्रजाः प्रजाभिः स्याम्'–इति (वा.सं. ३.३७)।**

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्।।४।।

एवमग्निहोत्रहोमोपस्थानं विधाय लघूपस्थानमन्त्रानपि दर्शयति—**अथ हुत इति**। अग्निहोत्रहोमानन्तरं 'भूर्भुवः स्वः, सुप्रजाः'—'इति' अनेनैव मन्त्रेण आहवनीयम् 'उपतिष्ठते'। पूर्वोक्तादुपस्थानमन्त्रजातादस्य मन्त्रस्यातिशयमाह—**तत् सत्येनेति**। सत्यरूपा ह्येता व्याहृतयः त्रयीसारत्वात्। तथा चाम्नातम्—'भूरित्यृग्वेदाद्, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्'—इति (ऐ.ब्रा. ५.५.७)। एवं [3]व्याहृतिरूपेण 'सत्येनैव' इमां मन्त्ररूपां 'वाचं' 'समर्द्धयति'। 'तया' च 'समृद्धया' वाचा प्रागुक्तां सर्वामपि 'आशिषम्' 'आशास्ते' प्रार्थयत इत्यर्थः। तदाशासनप्रकारं दर्शयति—**सुप्रजा इति**। 'प्रजाभिः'

---

अग्निहोत्रहोम के पश्चात् वह आहवनीय-अग्नि की 'भूर्भुवः स्वः' (यजु. ३.३७) मन्त्र पढ़कर प्रार्थना करता है। यह मन्त्र-पाठ कर वह अपनी वाणी को सत्य से पवित्र करता है तथा पवित्र वाणी से आशीर्वाद माँगता है—'सुप्रजाः प्रजाभिः स्याम्'। (यजु. ३.३७)। अर्थात् 'मैं अच्छी सन्तान वाला होऊँ'। इस प्रकार शोभन-सन्तान की याचना करता है। आगे कहता है—'सुवीरो वीरैः' (यजु. ३.३७)।

---

१. भूर्भुवः स्वरिति वोभौ। का.श्रौ.सू. ४.२८५। उभावप्यग्नी भूर्भुवः स्वरित्यनेनोपतिष्ठते। क्रमस्तु पूर्वोक्त एव। क्रमान्तराविधानात्। अस्य च वात्सप्रेण सह विकल्पः। एतच्च अगोपक्षेऽपि भवति। अत्रोपस्थाने गां प्रति गमनस्य स्पर्शनस्य चाविधानात् इति कार्कभाष्याशयः। २. 'मन्त्रगणादस्य' इति 'मन्त्रभावादस्य' इति। च क्व.पा.। ३. 'एवं तद्व्याहृतिरूपेण' इति क्व.।

तत्प्रजामाशास्ते सुवीरो व्वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्ते॥१॥

यद्वाऽअदो दीर्घमग्न्युपस्थानम्। (मा) आशीरेव साशीरियं तदेतावतैवैतत्सर्व्वमाप्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्वेव व्वयमुपचराम इति ह स्माहासुरिः॥२॥

---

तत्प्रजामाशास्ते। 'सुवीरो वीरैः'–इति (वा.सं. ३.३७)। तद्वीरानाशास्ते। 'सुपोषः पोषैः'–इति (वा.सं. ३.३७)। तत्पुष्टिमाशास्ते॥१॥

यद्वा अदो दीर्घमग्न्युपस्थानम्–आशीरेव सा। आशीरियम्। तदेतावतैवैतत्सर्वमाप्नोर्ति। तस्मादेतेनैवोपतिष्ठेत। एतेन न्वेव वयमुपचराम इति ह स्माहासुरिः॥२॥

---

पुत्रपौत्रादिरूपाभिः 'सुप्रजाः' शोभनप्रजोपेतः 'स्याम्'। एकः प्रजाशब्दोऽनुवादः। एवं **सुवीरो वीरैरिति**। वीर्यवन्तः पुत्राः वीराः; तेषां प्रजाशब्देन परिगृहीतत्वेऽपि पुनः प्राधान्यख्यापनार्थं पृथगाशासनमिति द्रष्टव्यम्॥१॥

प्रागुक्तोपस्थानेनास्य समानकार्यकारित्वात् विकल्पमाह—**यदिति**। 'अदः' पूर्वोक्तं 'दीर्घं' बहुकर्त्तव्योपेतं बहुमन्त्रसाध्यं यदग्न्युपस्थानम्, तत् 'आशीः' फलप्रार्थनम् 'एव'। तथा 'भूर्भुवः स्वः'—इति मन्त्रसाध्यमुपस्थानमपि तादृगाशीर्युक्तम्। 'तत्' ततः 'एतावतैव' उपस्थानेन 'एतत्' प्रागुक्तं 'सर्वं' फलम् 'आप्नोति'। अस्मिन्नुपस्थाने ऋषिवचनं संवादयति—**एतेन न्वेवेति**। 'एतेनैव' लघूपस्थानेनैव 'वयम्' अग्निम् 'उपचरामः' 'इति'। यस्मादेवम् 'आसुरिः' महर्षिः 'आह स्म' उक्तवान्, 'तस्मात्' इदमेवोपस्थानं कर्त्तव्यमित्यर्थः। अत एव सूत्र्यते—'भूर्भुवः स्वरिति वोभौ' (का.श्रौ.सू. ४.२८५) इति॥२॥

---

'स्वस्थ, बलशाली सन्तान प्राप्त करें'। इससे वीर सन्तति को चाहता है। आगे कहता है—'सुपोषः पोषैः' (यजु. ३.३७)। इससे पुष्टि की याचना करता है॥१॥

पूर्वोक्त बृहत् अग्न्युपस्थान भी फलेच्छापरक था और यह लघु अग्न्युपस्थान भी उसी के समरूप है। अतः इससे भी वह सब कुछ प्राप्त कर लेगा। फलतः यजमान यही लघु अग्न्युपस्थान कर अग्नि को प्रसन्न करे, ऐसा आसुरि महर्षि का कथन है॥२॥

(र्) अथ प्रवत्स्यन्। (न्गा) गार्हपत्यमेवाग्रऽउपतिष्ठते ऽथाहवनीयम्॥३॥

(ऊँ) स गार्हपत्यमुपतिष्ठते। नर्य प्रजां मे पाहीति प्रजाया हैष ईष्टे तत्प्रजामेवास्माऽएत्परिददाति गुप्त्यै॥४॥

(प्त्याऽ) अथाहवनीयमुपतिष्ठते। शꣳस्य पशून्मे पाहीति पशूनाꣳ हैष ईष्टे तत्पशूनेवास्मा ऽएतत्परिददाति गुप्त्यै॥५॥

---

## प्रवत्स्यदुपस्थानम्

अथ प्रवत्स्यन् गार्हपत्यमेवाग्र उपतिष्ठते–अथाहवनीयम्॥३॥

स गार्हपत्यमुपतिष्ठते। 'नर्य प्रजां मे पाहि'–इति (वा.सं. ३.३७)। प्रजाया हैष ईष्टे। तत् प्रजामेवास्मा एतत् परिददाति गुप्त्यै॥४॥

अथाहवनीयगुपतिष्ठते–'शंस्य पशून्मे पाहि'–इति (वा.सं. ३.३७)। पशूनां हैष ईष्टे। तत् पशूनेवास्मा एतत् परिददाति गुप्त्यै॥५॥

---

अथ प्रवासं करिष्यता यजमानेन कर्त्तव्यमुपस्थानं दर्शयति—**अथ प्रवत्स्यन्निति**[1]। 'प्रवत्स्यन्' प्रवासं करिष्यन्। विहिते गार्हपत्याहवनीयोपस्थाने॥३॥

तत्र गार्हपत्योपस्थानमनूद्य मन्त्रं विधत्ते—**स गार्हपत्यमिति**। मन्त्रस्य तात्पर्यमाह—**प्रजाया इति**। एष हि गार्हपत्यः 'प्रजाया ईष्टे'; कृत्स्नाग्नियोनिभूतत्वात्। अतः 'अस्मै' गार्हपत्याय प्रजाया रक्षणार्थं परिदानं क्रियत इत्यर्थः॥४॥

प्रवत्स्यतो यदाहवनीयोपस्थानं विहितम्, तदनूद्य मन्त्रं विधत्ते—**अथाहवनीयमिति**। **पशूनां हेत्यादि**, निगदसिद्धम्॥५॥

---

यदि यजमान को प्रवास (यात्रा) करना हो तो पहले गार्हपत्य अग्नि का उपस्थान करे, फिर आहवनीय अग्नि का उपस्थान करे॥३॥

गार्हपत्य अग्नि के पास जाकर मन्त्र पढ़े—'नर्य प्रजां मे पाहि' (यजु. ३.३७)। (अर्थ–) 'हे नरों के मित्र, मेरे सन्तानों की रक्षा करें'। (गार्हपत्य अग्नि) प्रजा का अधिष्ठाता है, अतः रक्षा के निमित्त वह प्रजा को उसी के आश्रित कर देता है॥४॥

अव आहवनीय-अग्नि के पास जाकर प्रार्थना करता है—'शꣳस्य पशून् में

---

१. प्रवत्स्यन् सर्व्वात्रयेति प्रतिमन्त्रम्। का.श्रौ.सू. ४.१२.८।

(प्त्याऽ) अथ प्र वा व्व्रजति प्र वा धावयति। स यत्र व्वेलां मन्यते तत्स्यत्त्वा* व्वाचं व्विसृजतेऽथ प्रोष्य परेक्ष्य यत्र व्वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात्॥६॥

---

अथ प्र वा व्रजति, प्र वा धावयति। स यत्र वेलां मन्यते तत्स्यत्त्वा वाचं विसृजते। अथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति। स यद्यपि राजान्तरेण स्यात्–नैव तमुपेयात्॥६॥

---

**अथ प्र वा व्रजतीति**[1]। एवं गार्हपत्याहवनीययोः समन्त्रकमुपस्थानं कृत्वा, वाहनरहितश्चेत् स्वयं 'प्रव्रजति' गच्छति; वाहनसहितश्चेत् अश्वरथादीन् 'धावयति' प्रगमयति। 'सः' च गच्छन् 'यत्र' यस्मिन् देशे 'वेलां' स्वनिवासग्राममर्यादां 'मन्यते', तत्स्थानप्राप्तिपर्यन्तं वाचंयमो गत्वा, तदनन्तरं 'वाचं विसृजेत्' न तु ततः प्रागित्यर्थः। पुनरागमनसमयेऽपि तत्स्थानप्रभृति अग्निसमीपगमनपर्यन्तं वाग्यमनं विधत्ते—**अथ प्रोष्येति**[2]। 'प्रोष्य' प्रवासं कृत्वा पुनरागत्य यत्र ग्राममर्यादां मन्यते, तत्र वाचंयमो भवेत्। एवं वाग्यतस्य यजमानस्य अग्न्यागारस्य च मध्ये यदि राजा आगच्छेत्, 'तम्' अपि नैव 'उपेयात्' उपगच्छेत्। वाग्यमनानन्तरं राजादिपूज्यजनसन्निधानेऽपि तदनादरेण अग्निगतमनस्क एव तत्समीपं गच्छेदित्यर्थः[3]। तदेतद् विस्पष्टमापस्तम्बेन सूत्रितम्—'आरादग्निभ्यो वाचं यच्छति, यद्येनं राजा पिताऽऽचार्यो वाऽन्तरेणाग्नीन् स्याच्छदिर्दर्शने नैनमाद्रियेत'—इति (आप.श्रौ.सू. २५.५.६)॥६॥

---

पाहि' (यजु. ३.३७)। (अर्थ–) 'हे प्रशंसनीय अग्निदेव! मेरे पशुओं की रक्षा कीजिये'। (आहवनीय अग्नि) पशुओं का अधिष्ठाता है, अतएव पशुओं की रक्षा के लिये (आहवनीय को) समर्पित करता है॥५॥

अब वह मौन होकर पैदल या (किसी यान में बैठकर) चलता है और जिस किसी स्थान को निवास की सीमा मानता है वहाँ पहुँचकर बोलता है (अर्थात् अब तक मौन था अब मौन तोड़ता है)। पुनरागमन (प्रत्यावर्तन) के समय भी मानी हुई सीमा से लेकर अग्नि के आगार (यज्ञशाला) पहुँचने तक मौन रहता है। इस बीच मध्य मार्ग में राजा भी उपस्थित हो जाय (तो भी उसके पास न जाकर) पहले अग्नि के पास ही जाये॥६॥

---

* 'स्यन्त्वा' इ.पा.। १. प्रवसन् याजमानं कुर्याद्यथाकालमात्मसंस्काराद्धर्ममात्रत्वाच्छ्रुतेश्च इति का.श्रौ.सू. ४.२८८। २. एत्य च मत्या वाग्यमनम्। इति का. ४.२८९। ३. समित्पाणिरनुपेत्य कश्चिदुपतिष्ठन्त-माहवनीयगार्हपत्यदक्षिणाग्नीनामन्मीति प्रतिमन्त्रम्। इति का. ४.२९०।

(त्स॒) स॒ ऽआहवनी॒यमेवा॒ग्रऽउ॒पतिष्ठते। (ते॒ऽथ) अ॒थ गा॒र्हपत्यं गृहा वै गा॒र्हपत्यो गृहा वै॒ प्रतिष्ठा त॒द्गृहे॒ष्वे॒वैत॒त्प्रतिष्ठा॒यां प्र॒तितिष्ठति॥७॥

स॒ ऽआहवनी॒यमु॒पतिष्ठते। (तऽआ॒) आ॒गन्म व्विश्व॒वेद-समस्म॒भ्यं व्वसुवि॒त्तमम्। अ॒ग्ने सम्राडभि॒ द्युम्न॒मभि स॒ह आ॒यच्छस्वेत्य॒थोपवि॒श्य तृ॒णान्यु॒पलु॒म्पति॥८॥

---

स आहवनीयमेवाग्र उपतिष्ठते–अथ गार्हपत्यम्। गृहा वै गार्हपत्यः, गृहा वै प्रतिष्ठा। तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति॥७॥

स आहवनीयमुपतिष्ठते–'आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्। अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व'–इति (वा.सं. ३.३८)। अथोपविश्य तृणान्यपलुम्पति॥८॥

---

प्रवत्स्यन्नुपस्थानवैपरीत्यमागतोपस्थानस्य विधत्ते—**स इति**। आहवनीयस्यैव प्रथममुपस्थानं पश्चाद् गार्हपत्यस्येत्यर्थः। गार्हपत्योपस्थानस्य पश्चाद्भावं प्रतिपादयति—**गृहा वा इति**। सर्वाग्नीनां योनित्वात् गृहपतिना संयुक्तत्वाच्च गार्हपत्यस्य गृहशब्दाभिधेयत्वम्॥७॥

तत्र प्रथमकर्त्तव्यमाहवनीयोपस्थानं समन्त्रकं दर्शयति—**स आहवनीयम् इति**। मन्त्रस्य चायमर्थः—हे 'सम्राट्' सम्यग्राजमान 'अग्ने!' 'विश्ववेदसं' सर्वधनोपेतम्, 'अस्मभ्यं' अस्मदर्थं 'वसुवित्तमं' वसुनः धनस्य लम्भयितृतमं त्वाम् 'आगन्म' आगमाम। त्वं च 'द्युम्नं' धनं, 'सहः' पराभिभवहेतुभूतं बलं च 'अभ्यायच्छस्व' अभिगमयेत्यर्थः।

समिदाधानं विधत्ते—**अथेति**[1]। उपस्थानानन्तरमाहवनीयसमीपे उपविश्य

---

यज्ञशाला में पहुँचकर पहले आहवनीय अग्नि का उपस्थान करे फिर गार्हपत्य अग्नि का उपस्थान करे। गार्हपत्य ही घर का अधिपति है और घर ही प्रतिष्ठा का स्थान है, इसलिए वह अपने को घर में अर्थात् प्रतिष्ठा के स्थान में स्थापित करता है॥७॥

वह इस मन्त्र से आहवनीय का उपस्थान करता है—'आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्' अग्ने सम्राडभि द्युम्नमभि सहऽआयच्छस्व' (यजु. ३.३८)। (अर्थ–) हे सम्राट् अग्नि! हम तुझ विश्ववेद (सबके जानने वाले)

---

१. समित्पाणिरनुपेत्य कश्चिदुपतिष्ठन्तमाहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम्। इति कात्या. ४.२९०। २. समित्परिसमूहनानि चोपविश्य। इति कात्या. ४.२९१।

(त्यु) अथ गार्हपत्यमुपतिष्ठते। (तेऽयु) अयमग्निर्गृहुपतिर्गार्हपत्यः प्रजाया व्वसुवित्तमः। अग्ने गृहपतेऽभि द्युम्नमभि सुह आयच्छस्वेत्युथोपविश्य तृणान्युपलुम्पत्येतन्नु जुपेनैतेुन न्वेव भूयिष्ठा ऽइवोपतिष्ठन्ते॥९॥

स वै खलु तूष्णीमेवोपतिष्ठेत। (ते) इदं वै युस्मिन्व्वुसति

---

अथ गार्हपत्यमुपतिष्ठते। 'अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभिद्युम्नमभि सह आयच्छस्व'–इति (वा.सं. ३.३९)। अथोपविश्य तृणान्यपलुम्पति। एतन्नु जपेनैतेन न्वेव भूयिष्ठा इवोपतिष्ठन्ते।।९।।

स वै खलु तूष्णीमेवोपतिष्ठेत। इदं वै यस्मिन् वसति ब्राह्मणो वा राजा

---

'तृणानि' तृणोपलक्षितानि समिदादीनि 'अपलुम्पति' प्रच्छिद्य तस्मिन्नग्नौ प्रक्षिपेत्। 'लुप्लृ छेदने' (धा.पा.तु.उ. १५०)॥८॥

आगतस्य यजमानस्य गार्हपत्योपस्थानं समन्त्रकं विधत्ते—**अथेति**। मन्त्रार्थस्तु—'गृहपतिः' गृहाणां पालयिता, गृहपतिना संयुक्तः 'अयमग्निः' अस्मदीयायाः प्रजायाः 'वसुवित्तमः' वसुनो धनस्य लम्भयितृतम इति परोक्षकृतः पूर्वोऽर्द्धर्च्चः। उत्तरस्तु प्रत्यक्षकृतः। हे 'अग्ने गृहपते!' **अभि द्युम्नमित्यादि**। पूर्ववद् योज्यम्॥९॥

इत्थं प्रवत्स्यदुपस्थानमागतोपस्थानं च समन्त्रकं विधाय, तयोरमन्त्रकपक्षमप्याह—**स वा ईति**। **इदं वा इत्यादि**। इदं खलु लोके दृश्यते,—

---

और वसुवित्तम (धन बाँटने वाले) के पास आते हैं। हमको समृद्धि और बल प्रदान करें'। अग्नि-प्रार्थना के अनन्तर यजमान बैठकर आहवनीयाग्नि में समिधादिकाष्ठ डालता है॥८॥

तदनन्तर गार्हपत्य-अग्नि का उपस्थान करता है—'अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः। अग्ने गृहपतेऽभि द्युम्नमभि सहऽआयच्छस्व' (यजु. ३.३९)। (अर्थ–) 'यह गार्हपत्य अग्नि घर का स्वामी है तथा सन्तान और धन का देने वाला है। हे घर के स्वामी अग्नि! हमको समृद्धि और बल प्रदान करें'। अब वह बैठकर तृणों (समिधादि) को अग्नि में डालकर प्रदीप्त कर देता है। इस प्रकार (यजमान) प्रवास से लौटने पर अग्नि के पास जाया करते हैं अर्थात् अग्न्युपस्थान करते हैं॥९॥

(द्वितीय पक्ष–) अथवा प्रवास जाते समय तथा प्रवास से लौटने पर अग्निहोत्री बिना मन्त्र बोले अर्थात् मौन होकर भी अग्निशाला में जा सकता है; क्योंकि (लोक

---

१. तूष्णीं वोपस्थानं पूर्ववत्। इति कात्या. श्रौ.सू. ४.१२.२३

ब्राह्मणो वा राजा वा श्रेयान्मनुष्योऽन्वेव तमेव नार्हति व्वक्तुमिदं मे त्वं गोपाय प्राहं व्वत्स्यामीत्यथास्मिन्नेते श्रेयाꣳसो व्वसन्ति देवाऽअग्नयः क उ तानर्हति व्वक्तुमिदं मे यूयं गोपायत प्राहं व्वत्स्यामीति॥१०॥

मनो ह वै देवा मनुष्यस्याजानन्ति। स व्वेद गार्हपत्यः परिदां मेदमुपागादिति तूष्णीमेवाहवनीयमुपतिष्ठते स व्वेदाहवनीयः परिदां मेदमुपागादिति॥११॥

---

वा श्रेयान्मनुष्यः अन्वेव-तमेव नार्हति वक्तुम् 'इदं मे त्वं गोपाय, प्राहं वत्स्यामि' इति। अथास्मिन्नेते श्रेयांसो वसन्ति-देवा अग्नयः। क उ तानर्हति वक्तुम्-'इदं मे यूयं गोपायत प्राहं वत्स्यामि' इति॥१०॥

मनो ह वै देवा मनुष्यस्याजानन्ति। स वेद गार्हपत्यः-'परिदां मेदमुपागाद्' इति। तूष्णीमेवाहवनीयमुपतिष्ठते। स वेदाहवनीयः-'परिदां मेदमुपागाद्' इति॥११॥

---

ब्राह्मणादीनामन्यतमः 'श्रेयान्' श्रेष्ठः पुरुषो 'यस्मिन्' एव जने 'वसति' सः 'मनुष्यः' 'तं' श्रेयांसम् अनुसृत्य वर्त्तमानः, मदीयम् 'इदं' गृहादिकं 'त्वं गोपाय', 'अहं' प्रवासं करिष्यामीति एवं नियोगतो 'वक्तुं' 'नार्हति'; यथैवं लोके, तथा 'अस्मिन्' यजमाने 'एते श्रेयांसो वसन्ति'; के पुनस्ते? इति, उच्यते—यजमाने निवसन्तस्ते श्रेयांसः 'अग्नयः' गार्हपत्याद्याः। 'क उ' नाम 'तान्' 'इदं मे यूयं गोपायत' इत्येवं नियोगेन 'वक्तुमर्हति'। अतः 'नर्य प्रजां मे पाहि शंस्य पशून् मे पाही' त्येवं नियोगरूपतया मन्त्रो न प्रयोक्तव्य इत्यर्थः॥१०॥

मन्त्रप्रयोगाभावेऽपि प्रजापालनादिविषया बुद्धिस्तेषां स्वयमेव भवतीत्याह— **मनो ह वै देवा इति।** 'मनुष्यस्य' 'मनः' यद्विषयं तत् सर्वं 'देवाः' स्वयमेव

---

मर्यादा है कि-)—'यदि किसी स्थान में कोई पूज्य ब्राह्मण, राजा या श्रेष्ठ मनुष्य रहता है तो कोई उससे यह नहीं कहता है कि मैं यात्रा पर जा रहा हूँ, आप मेरे वस्तुओं की रक्षा करना'। (इसी प्रकार) यहाँ (अग्निशाला में) भी श्रेष्ठ अग्नि देवों का निवास है। इसलिये कौन इनसे कह सकता है कि आप रक्षा कीजिये, मैं यात्रा पर जा रहा हूँ॥१०॥

देवगण मनुष्यों के मन को स्वयमेव जान लेते हैं। (प्रवास की मानसिकता यजमान की बनते ही) गार्हपत्य अग्नि को विदित हो जाता है कि यह अपने सम्पत्ति

(त्यु) अथ प्र वा व्व्रजति प्र वा धावयति। स यत्र व्वेलां[1] मन्यते तत्स्यत्त्वा व्वाचं व्विसृजतेऽथ प्रोष्य परेक्ष्य यत्र व्वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात्॥१२॥

(त्स) स आहवनीयमेवाग्रऽउपतिष्ठते। (तेऽथ) अथ गार्हपत्यं तूष्णीमेवाहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्युपलुम्पति तूष्णीमेव गार्हपत्यमुपतिष्ठते तूष्णीमुपविश्य तृणान्युपलुम्पति॥१३॥

---

**अथ प्र वा व्रजति, प्र वा धावयति। स यत्र वेलां मन्यते तत् स्यत्त्वा वाचं विसृजते। अथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति। स यद्यपि राजान्तरेण स्यात्, नैव तमुपेयात्॥१२॥**

**स आहवनीयमेवाग्र उपतिष्ठते–अथ गार्हपत्यम्। तूष्णीमेवाहनीय-मुपतिष्ठते, तूष्णीमुपविश्य तृणान्यपलुम्पति। तूष्णीमेव गार्हपत्यमुपतिष्ठते, तूष्णीमुपविश्य तृणान्यपलुम्पति॥१३॥**

---

सर्वतो 'जानन्ति'; अतः 'सः' 'गार्हपत्यः' अपि यजमानस्य मनोगतं स्वयमेव 'वेद' जानाति। किमिति, 'परिदां' परिदानं रक्षणम् उद्दिश्य 'मा' माम् 'इदम्' इदानीम् 'उपागात्' उपगतोऽयं यजमान 'इति'। यस्मादेवं जानाति, तस्मात् स गार्हपत्योऽपि तूष्णीमेवोपस्थेयः। आहवनीयोपस्थानस्यापि[2] तूष्णीं कर्त्तव्यता-माह—**तूष्णीमेवाहवनीयमित्यादिना**। योजना तु पूर्ववत्॥११-१३॥

---

का रक्षाभार मुझे सौंपने आया है। आहवनीय-अग्नि का भी मौन ही उपस्थान करे क्योंकि आहवनीय-अग्नि को भी विदित है कि यह स्व-सम्पत्ति का रक्षाभार मुझे सौंपने आया है (अतः समंत्रक अग्न्युपस्थान की आवश्यकता नहीं है)॥११॥

अब वह मौन धारण कर पैदल या सवारी में घर की ओर चल पड़ता है और निवास की नियत सीमा पर पहुँचकर वाग्विसर्ग करता है (मौन तोड़ता है)। जब घर से यज्ञशाला लौटता है तब भी जिसको सीमा मान रक्खा है वहाँ पहुँचते ही मौन धारण कर लेता है। घर से यज्ञशाला के मध्यमार्ग में चाहे राजा भी क्यों न मिल जाय; वह उसके पास नहीं जाता॥१२॥

यज्ञशाला पहुँचकर वह पहले आहवनीय का उपस्थान करता है और फिर गार्हपत्य का। आहवनीय के पास मौन उपस्थान ही करता है और बैठकर मौन

---

१. वेलो इति पाठभेदः। २. एवं प्रवत्स्यदुपस्थानस्यामन्त्रकपक्षमुक्त्वाऽऽगतोपस्थानस्यापि तमाह– इति पाठः।

( त्य ) अथातो गृहाणामेवोपचारः। ( ऽ ) एतद्ध वै गृहपतेः प्रोषुषऽआगताद् गृहाः समुत्रस्ता ऽइव भवन्ति किमयमिह व्वदिष्यति किं व्वा करिष्यतीति स यो ह तत्र किं चिद्वदति वा करोति वा तस्माद् गृहाः प्रत्रसन्ति तस्येश्वरः कुलं व्विक्षोब्धोरथ

अथातो गृहाणामेवोपचारः। एतद्ध वै गृहपतेः प्रोषुषः आगताद् गृहाः समुत्रस्ता इव भवन्ति–किमयमिह वदिष्यति। किं वा करिष्यतीति। स यो ह तत्र किञ्चिद्वदति वा करोति वा–तस्माद् गृहाः प्रत्रसन्ति। तस्येश्वरः कुलं

एवं प्रवासादागतस्य यजमानस्याग्निविषयं कर्त्तव्यमुपदिश्य गृहविषयमपि तद् वक्तुं प्रतिजानीते—**अथात इति**[१]। उपचरणमुपचारः समाश्वासनं वक्ष्यत इति शेषः। **'गृहा मा बिभीत'** इति (वा.सं. ३.४१) मन्त्रेणोपस्थानं विधित्सुस्तेषां भयसम्भावनामाह—**एतद्ध वा इति**। 'प्रोषुषः' प्रवासं कृतवतो यजमानात् 'गृहाः' 'समुत्रस्ताः' भीताः 'इव' भवन्ति। भीतिकारणमाह—**किमयमिति**। 'अयं' यजमानोऽस्मद्विषयं 'किं वदिष्यति' 'किं वा करिष्यति' 'इति' अनेनाभिप्रायेण तेषां भयशङ्का। **स यो हेत्यादि**। 'सः' खलु यजमान आगत्य तत्र 'गृहा मा बिभीत' इत्येतन्मन्त्रेण उपस्थानं विना यत् किञ्चिद् वदन् कुर्वन् वा भवति, अस्मद्विषये क्रुद्ध एवासौ वर्तत इति 'तस्मात्' यजमानाद् 'गृहाः' 'प्रत्रसन्ति' प्रकर्षेणोद्विजन्ते।

अस्तु गृहाणां प्रत्रासः; को दोषः इत्यत आह—**तस्येश्वर इति**। 'तस्य' यजमानस्य 'कुलं' वंशं 'विक्षोब्धोः' विनष्टं कर्तुम् 'ईश्वरः'। ईश्वर इति व्यत्ययेनैकवचनम् (पा.सू. ३.१.८५, २ श्लो.वा.)। ईश्वराः, गृहाः समर्था

ही तृणों (समिधादि काष्ठों) से अग्नि को समेधित करता है। गार्हपत्य अग्नि का भी मौन से उपस्थान करता है और मौन ही बैठकर तृणों (काष्ठों) से अग्नि को समेधित करता है॥१३॥

प्रवास से लौटकर घर (आने में) यह उपचार है। जब कोई अग्निहोत्री-गृहपति प्रवास से वापिस आता है तो घर वाले भीत रहते हैं कि यह क्या कहेगा या क्या करेगा और यदि वह कुछ कहता या करता है तो घर वाले भीत रहते हैं। उसके कुल में एक प्रकार का क्षोभ या संशय का वातावरण रहता है और जो गृहपति घर आकर न कुछ कहता है, न करता अपितु मन से 'गृहा मा बिभीत'। इस मन्त्र का नमस्कारपूर्वक पाठ करता है तो उसके घर वाले प्रसन्न मन से उसके पास आते हैं कि इसने कुछ नहीं कहा या कुछ नहीं किया (अर्थात् हम पर प्रसन्न

१. गृहा मा बिभीतेत्येत्य च। का.श्रौ.सू. ४.१९३।

**यो ह तत्र न व्वदति न किं चन करोति तं गृहा उपसꣳश्रयन्ते न वाऽअयमिहावादीन्न किं चनाकरदिति स यदिहापि सुक्रुद्ध इव स्याच्छ्व एव ततस्तत्कुर्याद्यद्वदिष्यन्वा करिष्यन्वा स्यादेष उ गृहाणामुपचारः॥१४॥**

**इति तृतीयप्रपाठके तृतीयं ब्राह्मणम्॥३॥३॥**

**इति चतुर्थाध्याये प्रथमं ब्राह्मणम्॥४॥१॥**

---

**विक्षोभ्योः। अथ यो ह तत्र न वदति, न किञ्चन करोति-तं गृहा उपसंश्रयन्ते-न वा अयमिहावादीत्, न किञ्चनाकरदिति। स यदिहापि सुक्रुब्ध इव स्यात्-श्व एव ततस्तत्कुर्यात्-यद् वदिष्यन्वा करिष्यन् वा स्याद्। एष उ गृहाणामुपचारः॥१४॥**

**।। इति अग्निहोत्रविधिः सम्पूर्णः ।।**

---

भवन्ति। **अथ यो हेत्यादि।** यस्तु गृहानुपगत्य किमपि न वदति, न करोति च, मौनमव केवलं भजते, 'गृहा मा बिभीत'—इति मन्त्रेणोपस्थानं वा करोति, 'तं' यजमानं गृहाः 'उपसंश्रयन्ते' उपगच्छन्ति। उपसंश्रयतां तेषामभिप्रायमाह— **न वा इति।** 'न' खल्वयं यजमानः 'इह' अस्मिन् समये 'किम्' अपि 'न' 'अवादीत्', 'किम्' अपि च 'न' 'अकरत्' अकार्षीत्; यदि अस्मदपराधः स्यात्, तदा तद्विषयं वदिष्यति, यत् किञ्च करिष्यति च; तस्मात् अस्य यजमानस्य अस्मिद्विषयः क्रोधो नास्तीत्यनेनाभिप्रायेण तमुपसंश्रयन्त इत्यर्थः।

**स यदिहापीत्यादि।** 'इह' अस्मिन् गृहविषये यद्यपि 'सः' आगतो यजमानोऽपराधश्रवणात् 'क्रुद्धः' 'इव' एव 'स्यात्' 'ततः' तस्मादागमनदिवसात् 'श्वः' अनन्तरदिवसे 'एव' 'तत्' वक्तव्यं कर्तव्यं वोपचारनिवृत्तये प्रयुञ्जीत; न त्वागमनदिवसे इत्यर्थः। तदुक्तं सूत्रकृता—'गृहा मा बिभीतेति[1] गृहानुपतिष्ठेते, क्षेमाय व इति प्रविशति, न हिंस्यात् गृह्यान् कामं श्वः[2]'॥१४॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थाध्यायस्य प्रथमं ब्राह्मणम्।।२।।४।।१।।**

---

हैं क्रोधित नहीं)। यदि गृहपति घरवालों के किसी (अपराध-श्रवण के कारण कुछ रुष्ट भी हो तो जो कुछ कहना या करना हो वह दूसरे दिन कहे या करे। यह घर में आने की मर्यादा एवं विधि है॥१४॥१॥

※

---

१. 'गृहानुपैति' इति का.श्रौ.सू. ४.२१५। २. का.श्रौ.सू. ४.२१६।

**प्रजापतिं व्वै भूतान्युपासीदन्। (न्प्र) प्रजा वै भूतानि व्वि नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदँस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वं व्वऽऊर्ग्वः सूर्यो वो ज्योतिरिति॥१॥**

---

**अथ पिण्डपितृयज्ञः**

**प्रजापतिं वै भूतान्युपासीदन्। प्रजा वै भूतानि। 'वि नो धेहि यथा जीवाम' इति। ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्। तानब्रवीत्–'यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग्वः, सूर्यो वो ज्योतिः' इति॥१॥**

---

अथामावास्यायां पिण्डपितृयज्ञस्य[1] मासि मासि कर्तव्यतां विधित्सुस्तदर्थमाख्यायिकामाह—**प्रजापतिं वा इति।** भवन्ति सद्भावं प्रतिपद्यन्त इति 'भूतानि'। 'प्रजाः' देवपितृमनुष्याद्या वक्ष्यमाणाः। तासामभिप्रायमाह—**वि न इति।** 'नः' अस्मान् 'विधेहि' त्वमित्थं कुरु—त्वमित्थं कुरु इत्याज्ञापय। 'यथा' येन प्रकारेण वयं 'जीवाम' जीवनवन्तो भवेम 'इति' अनेनाभिप्रायेणेत्यर्थः।

**ततो देवा इत्यादि।** प्रजापतेरुपासनहेतुत्वेनोपसदनसमये देवादिभिर्य्यद्यल्लिङ्गं धृतम्, तत्तल्लिङ्गानुसारेण तेषां देवादीनां यज्ञादिविशेषभाक्त्वं प्रजापतिर्जीवनहेतुत्वेनोपदिष्टवानिति प्रघट्टकार्थः। **यज्ञो वोऽन्नमिति।** हे देवाः! 'वः' युष्माकं 'यज्ञः' 'अन्नम्', अतो युष्माकमेव 'अमृतत्वम्'; ऊर्क् बलं' च 'वः' युष्माकमेव; 'सूर्यः' एव 'वः' युष्माकं 'ज्योतिः' 'इति'।

एवं यज्ञोपवीतित्वादिलिङ्गयुक्तान् देवान् प्रेक्ष्य, यज्ञादिचतुष्टयं प्रजापतिः तेषां जीवनहेतुत्वेनोपदिष्टवान्॥१॥

---

(देव-पितर-मनुष्य-पशु-असुरादि) प्राणि-लोक एक बार प्रजापति के पास गये। उन्होंने प्रजापति से कहा—'हम लोग किस विधि से जीवन-यापन करें–यह आदेश कीजिये'। सर्वप्रथम यज्ञोपवीत धारण किये देवगण दाहिनी जानु को नमाकर, प्रजापति के पास आकर बैठे। प्रजापति ने उनसे कहा—'यज्ञ ही तुम्हारा अन्न (=भोज्य-साधन) है, (अतः) अमृतत्व रस तुम्हारा बल है और सूर्य तुम्हारी ज्योति होगा'॥१॥

---

१. 'श्रुत्यर्थमनुविधित्सुनाऽऽचार्येण पौर्णमासमनुविहितमिदानीमवसरप्राप्तं दर्शस्यानुविधानं कर्त्तव्यम्, तत्र च प्राक्कालीनः पिण्डपितृयज्ञः सोऽनुविधेय इति (का.श्रौ.सू. ४.१.) भाष्ये कर्कः।

(त्यु) अथैनं पितरः। प्राचीनावीतिनः सव्व्यं जान्वाच्च्योपासीदँस्तानब्रवीन्मासि मासि वोऽशनꣳ स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति॥२॥

(त्यु) अथैनं मनुष्याः। प्रावृता उपस्थं कृत्त्वोपासीदँस्तानब्रवीत्सायंप्रातर्व्वोऽशनं प्रजा वो मृत्युर्व्वोऽग्निर्व्वो ज्योतिरिति॥३॥

---

**अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्। तानब्रवीत्–'मासि-मासि वोऽशनम्, स्वधा वः, मनोजवो वः, चन्द्रमा वो ज्योतिः' इति॥२॥**

**अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपासीदन्। तानब्रवीत्–'सायंप्रातर्वोऽशनम्। प्रजा वः, मृत्युर्वः, अग्निर्वो ज्योतिः' इति॥३॥**

---

**अथैनं पितर इत्यादि।** अत्राप्येवं योज्यम्। **मासि मासीति।** प्रतिमासं दर्शेऽनुष्ठीयमानं यत् पिण्डपितृयज्ञाख्यं हविः, तद् 'वः' युष्माकम् 'अशनम्'; 'स्वधा'—कारोऽपि 'वः' युष्माकमसाधारणम्; मनस इव जवः 'मनोजवः' सोऽपि युष्माकमेव। सोमलोकवर्त्तिनां युष्माकं 'चन्द्रमाः' एव ज्योतिः भवत्विति॥२॥

**अथैनं मनुष्या इत्यादि।** प्रावृताः उत्तरवाससा संवृताः कण्ठलम्बितवाससः[1], निवीतिन इत्यर्थः। अत एव तैत्तिरीयकम्—'निवीतं मनुष्याणाम्, प्राचीनावीतं पितृणाम्, उपवीतं देवानाम्' (तै.सं. २.५.११.१) इति। **उपस्थं कृत्वेति।** यतः प्रजापतेरुपसदनसमये मनुष्यैरुपस्थप्रावरणमनुष्ठितम्, अत एवेदानीं भुक्त्यादिसमये उपस्थप्रावरणेनोपसीदन्ति। **प्रजा व इति।** प्रजायन्त इति 'प्रजाः' पुत्रपौत्रादिरूपाः। 'उपसर्गे च संज्ञायाम्' (पा.सू. ३.२.९९) इति 'ड' प्रत्ययः। **मृत्युर्व इति।** देहारम्भकर्म्मोपजनितं मरणं 'वः' युष्माकमसाधारणो धर्म इत्यर्थः॥३॥

---

तदनन्तर पितृगण दाहिने कन्धे पर यज्ञोपवीत पहने, बाँई जानु नमाकर प्रजापति के पास बैठे। प्रजापति ने उनसे कहा—'आप लोगों का मासिक (मास में एक बार) भोजन होगा, 'स्वधा' शब्द आपके लिये होगा, आप मन की गति वाले (मनोजवा) होंगे और चन्द्रमा आपकी ज्योति' होगा॥२॥

तदनन्तर मनुष्य प्रजापति के पास निवीति (कण्ठ में यज्ञसूत्र धारण कर), कपड़े पहने (प्रावृत) और शरीर को झुकाये उपस्थित हुये। प्रजापति ने उनको कहा—'सायं और प्रातः तुम्हारा भोजन होगा, मृत्यु से युक्त होंगे, तुम्हारी प्रजायें (= पुत्र पौत्रादि) होंगीं और अग्नि तुम्हारी ज्योति' होगा॥३॥

---

१. 'केवलवीतवासः' इति क. पा.।

(त्यु) अथैनं पशव उपासीदन्। (दँस्ते) तेभ्यः स्वैषमेव चकार यदैव यूयं कदा च लभाध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकालेऽथैवाश्नन्ति॥४॥

(न्त्यु) अथ हैनएँ शश्वदप्यसुराऽउपसेदुरित्त्याहुः। (स्ते)

---

अथैनं पशव उपासीदन्। तेभ्यः स्वैषमेव चकार–'यदैव यूयं कदा च लभाध्वै–यदि काले, यद्यनाकाले–अथैवाश्नाथ' इति। तस्मादेते यदैव कदा च लभन्ते–यदि काले, यद्यनाकाले–अथैवाश्नन्ति॥४॥

अथ हैनं शश्वदप्यसुरा उपसेदुरित्याहुः। तेभ्यः तमश्च, मायां च प्रददौ।

---

गवादिपशूनामपि प्रजापत्युपसदनं, तत्कृतजीवनक्षयजनितं मरणं तदशनक्लृप्तिश्चाह—**अथैनं पशव इत्यादिना। स्वैषमेवेति।** यथा देवपितृमनुष्याणां यज्ञादिरूपां तत्क्लृप्तिं चकार, तथैव गवादिपशूनामपि तदुचिताहारक्लृप्तिं कृतवानित्यर्थः। तत्प्रकारं दर्शयति—**यदैवेति।** गवाद्याः पशवो यूयं 'यदा कदा च' काले अकाले वा तृणादिरूपमाहारजातं 'लभाध्वै', 'अथ' अनन्तरमेव तत् लब्धं तृणाद्याहारजातम् 'अश्नाथ'। 'इति'–शब्दः प्रजापतिवाक्यपरिसमाप्तौ। **तस्मादेत इत्यादि।** यस्मादेवं प्रजापतेः सकाशात् लब्धवराः, 'तस्मात्' 'एते' गवाद्याः पशवः तृणाद्याहारं 'यदा एव कदा च लभन्ते', 'काले' वा 'अकाले' वा, 'अथ' अनन्तरमेव तद् भक्षयन्ति; न त्वस्मदादिवत् सायम्प्रातरादिकालविशेषमपेक्षन्त इत्यर्थः॥४॥

अथासुरकृतं प्रजापतावुपसदनं परोक्षेण निर्दिशति—**अथ हैनमिति।** 'शश्वद्' बहुकृत्वः 'असुरा अपि' 'उपसेदुः' उपसदनञ्चक्रुरित्यभिज्ञाः कथयन्ति। एवं

---

तदनन्तर प्रजापति के समक्ष पशु उपस्थित हुए। उनको प्रजापति ने अपनी इच्छावाला (स्वेच्छाचारी) कर दिया और कहा—जब कभी तुम कोई चीज पाओ, चाहे समय पर, चाहे कुसमय, तुम खाना। इसलिये पशुगण जब भी कोई चीज पाते हैं, चाहे समय पर, चाहे कुसमय, वे खा जाते हैं॥४॥

तत्पश्चात् कहते हैं कि असुर भी (प्रजापति के पास) पहुँचे। उनको प्रजापति ने तमस् (दूसरों की दृष्टि को आच्छादित करने की शक्ति) और माया (अघटन घटन शक्ति) दी। इसीलिये आसुरीमाया प्रसिद्ध है। जीवनहेतुभूत अन्नादि न प्राप्त होने के कारण असुरगण तम और माया से ग्रस्त होकर नष्ट हो गये। देवपितृ

**तेभ्यस्तुमश्च मायां च प्रददावस्त्युहैवासुरमायेतीव पुराभूता हु त्वेव ताः प्रजास्ता इमाः प्रजास्तुथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्युदधात्॥५॥**

**(न्ने) नैव देवा ऽअतिक्रामन्ति। नु पितरो नु पशवो मनुष्या ऽएवैकेऽतिक्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति**

---

**अस्त्यहैवासुरमायेतीव पराभूता ह त्वेव ताः प्रजाः। ता इमाः प्रजास्तथैवोपजीवन्ति–यथैवाभ्यः प्रजापतिर्व्यदधात्॥५॥**

**नैव देवा अतिक्रामन्ति, न पितरो, न पशवः, मनुष्या एवैकेऽतिक्रामन्ति। तस्माद्यो मनुष्याणां मेद्यति–अशुभे मेद्यति, विहूर्च्छति हि न हि**

---

देवपितृमनुष्यादीनामुपसदनमिव असुरकृतमुपसदनं जिज्ञासिष्यन्नाह—**तेभ्यस्तमश्च मायाञ्चेति**। परेषां दृष्ट्याच्छादकं[1] तमः, अघटनघटनशक्तिर्माया[2]। तदुभयं यस्मात् प्रजापतिरसुरेभ्यो दत्तवान्, तस्मात् इदानीमपि 'असुरमाया' असुरस्य स्वभूता मायेत्यस्ति व्यवहारः। अत एव ते मायाविन इत्याख्यायन्ते। **पराभूता ह त्वेवेति**। 'ताः' असुर्याः 'प्रजाः' देवादिवदन्नादीनां जीवनहेतूनां प्रजापतिसकाशादलाभात् केवलं तमोमायाभ्यां ग्रस्ताः सत्यः पराभवं प्राप्ता इत्यर्थः। इत्थं प्रजापतिना देवादिभ्यः कल्पितां वृत्तिं प्रदर्श्य, तदनतिक्रमेण तेषां जीवनं प्रतिपादयति—**ता इमा इति**। प्रजायन्त इति 'प्रजाः' प्रागनुक्रान्ताः 'इमाः' देवपितृमनुष्याद्याः, 'यथा' येन प्रकारेण 'यज्ञो वोऽन्नम्' इत्यादिना वृत्तिं प्रजापतिः कल्पितवान्, 'तथैव' व्यवस्थितां वृत्तिं नियमेन देवाद्या उपजीवन्ति॥५॥

**नैव देवा इति**। न तु ते प्रजापतेराज्ञामतिक्रामन्ति। अथ मनुष्याणामशने नियमं विधित्सुरनियमप्रसक्तिं दर्शयितुं प्रजापतिक्लृप्तेरतिक्रममुपन्यस्यति—**मनुष्या एवेति**। 'एके' च नाम 'मनुष्याः' अज्ञानवशात् प्रजापतिना कल्पितां प्रागुदाहृतां

---

मनुष्यादि प्रजायें आज भी जीवन-यापन उसी प्रकार करती हैं, जैसे प्रजापति ने उनके लिए निर्धारित किया था॥५॥

(उन प्रजाओं में से) देवगण, पितृगण एवं पशुगण इन नियमों का उल्लंघन नहीं करते। केवल मनुष्य ही नियमों का उल्लंघन करते हैं। इसलिये मनुष्यों में जो भोज्यादि पदार्थों में अतिशय आसक्त हो जाता है वह अशुभ कार्यों व पाप

---

१. 'दृष्ट्याच्छादकसामर्थ्यं' इति 'दृष्ट्याच्छादनं सामर्थ्यं' इति अ. पा.। २. 'अघटितघटनाशक्तिर्माया' इति पा.।

**व्विहूर्च्छति हि नह्यु॒यनाय चन भ॒वत्य॒नृतᳪ᳭ हि॒ कृत्वा मे॒द्यति त॒स्मादु सायंप्रात॒राश्येव॒ स्यात्स यो॒ हैवं॒ व्विद्वान्त्सायम्प्रातराशी भ॒वति स॒र्व्वᳪ᳭ हैव॒युरेति य॒दु ह किं॒च व्वाचा॒ व्याह॒रति त॒दु हैव॒**

---

**अयनाय चन भवति। अनृतं हि कृत्वा मेद्यति। तस्मादु सायंप्रातराश्येव स्यात्। स यो हैवं विद्वान् सायंप्रातराशी भवति–सर्वं हैवायुरेति। यदु ह**

---

वृत्तिम् 'अतिक्रामन्ति' यस्मादेवं 'तस्मात्' मनुष्याणां मध्ये 'यः' 'मेद्यति', स्निह्यति पुष्यतीति यावत्। 'ञिमिदा स्नेहने'–(धा.पा.भ्वा.आ. ७४४) इति धातुः। स च मेद्यन्[1]मनुष्योऽदनादिजनितमदवशेन 'अशुभे' नरकपाताद्यनर्थहेतुभूते पापे 'मेद्यति' स्निह्यति, तात्पर्येण वर्त्तते। तस्मात् पापात् सः 'विहूर्च्छति' अधः पतति। 'हुर्च्छा कौटिल्ये'–(धा.पा.भ्वा.प. २११) इति धातुः। **अयनाय चनेति।** 'चन'–शब्दोऽप्यर्थे। 'अयनाय' पुण्यलोकगमनायापि 'न हि भवति'। कुत इत्यत आह—**अनृतं हीति।** यस्मात् 'अनृतम्' असत्यम्, प्रतिषिद्धं 'कृत्वा' 'मेद्यति' '[2]प्रमत्तो भवति। इत्थं प्रजापत्याज्ञातिक्रमेणानियमदर्शनात् मनुष्येषु नियमापेक्षा विद्यत इति तात्पर्यार्थः। औपोद्धातिकं नियमविधिं दर्शयति—**तस्मादिति।** सायम्प्रातरशितुं शीलमस्येति 'सायम्प्रातराशी' 'सुप्यजातौ णिनिस्ताच्छील्ये'–(पा.सू. ३.२.७८) इति णिनिः। 'एव'–कारेण अन्तरा भोजनं निवार्यते। विहितमनूद्य प्रशंसति—**स यो हैवमिति। यदु ह किञ्चेति।** उक्तभोजन-कालनियमवान् यदपि किञ्चिद् 'वाचं' 'व्याहरति' भाषते, तथैव यथार्थं भवति। 'हि' यस्माद्, असौ 'एतत्' 'देवसत्यं' देवेन प्रजापतिना कल्पितं सत्यं 'गोपायति' रक्षति। 'गुपू रक्षणे'–(धा.पा.भ्वा. ३९५) इति धातुः। 'गुपूधूपविच्छि'–(पा.सू. ३.१.२८) इत्यायप्रत्ययः। 'तद्ध' तदेव सत्यं 'तेजो नाम' 'तेजः'–शब्दवाच्यतया प्रसिद्धं 'ब्राह्मणम्' ब्राह्मणसम्बन्धि रूपम्। कः

---

के पथ का पथिक हो जाता है और वह अधः पतित होकर पुण्यलोक प्राप्ति में अनर्ह हो जाता है; क्योंकि वह कदाचरण से प्रमत्त है। इसलिये मनुष्य को सायं और प्रातःकाल ही भोजन करना चाहिए। जो विज्ञ इस रहस्य को जानकर सायं और प्रातः (अर्थात् मात्र दो समय) ही भोजन करता है वह पूर्ण आयु को प्राप्त होता है; और जो कुछ वह बोलता है वही यथार्थ हो जाता है; क्योंकि वह नैष्ठिक

---

१. 'पुरुषो' इ.पा.। २. 'प्रमत्तो' इ.पा.।

(तो) व्वारुण्युत्तरा भवति। व्वरुणो ह वा ऽअस्य प्रजा अगृह्णात्तत्प्रत्यक्षं व्वरुणपाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाऽजामितायै न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे व्वारुण्यौ स्यातामुतो ह वा ऽअस्य दक्षिणतो मरुतः प्रजा अजिघाᳬं᳭संस्तानेतेन भागेनाशमयत्तस्मान्मारुती दक्षिणा॥१०॥

---

**वारुण्युत्तरा भवति। वरुणो ह वा अस्य प्रजा अगृह्णात्–तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति। मारुती दक्षिणा। अजामितायै, न्वेव मारुती भवति। जामि ह कुर्यात्–यदुभे वारुण्यौ स्याताम्। अतो ह वा अस्य दक्षिणतो मरुतः प्रजा अजिघांसन्, तानेतेन भागेनाशमयत्। तस्मान्मारुती दक्षिणा॥१०॥**

---

'पयसः' कारणात् 'उभयतः' दक्षिणत उत्तरतश्च पार्श्वद्वयात्, प्रजानां वरुणपाशविमोचनं कृतवान् भवति॥९॥

अध्वर्युकर्तृकायाः पयस्याया देवतां विधाय स्तौति—**वारुणीति**। उत्तरस्यां वेद्यां या पयस्या, सा वरुणदेवताका कार्या। **तत्प्रत्यक्षमिति**। देवतान्तरयागेन वरुणपाशविमोचनं परोक्षम्, वरुणदेवताकेन तु यागेन 'तत्' पाशविमोचनं 'प्रत्यक्षम्' एवेति वरुणदेवताकत्वं युक्ततरमित्यर्थः।

प्रतिप्रस्थातृकर्तृकायाः पयस्याया देवतां विधाय स्तौति—**मारुती दक्षिणेति**। 'दक्षिणा' दक्षिणस्यां वेदौ क्रियमाणा पयस्या मरुद्देवताका भवेत्। **अजामिताया इति**। वरुणदेवतां परित्यज्य 'अस्याः' पयस्याया यत् मरुल्लक्षण-देवतान्तरकरणम्, तत् जामितादोषराहित्याय भवति। व्यतिरेकेण तदेवाह—**जामीति**। 'यद्' यदि 'उभे' अपि दक्षिणोत्तरपयस्ये वरुणदेवताके स्याताम्, तदा प्रयुक्ताया एव देवतायाः पुनः प्रयोगो नवीकरणाभावादलसतारूपजामितादोषः स्यादित्यर्थः।

मारुतत्वे कारणान्तरमाह—**अतो ह वा इति**। 'अतः' अस्माद्वक्ष्यमाणादपि हेतोः दक्षिणा पयस्या मारुती कार्या। अस्य हि प्रजापतेः सम्बन्धिनीः प्रजाः पुरा

---

इसलिये दोनों वेदियों की (अग्नियों) में पयस्या की आहुति (उत्तर-वेदि में अध्वर्यु के द्वारा तथा दक्षिण-वेदि में प्रतिस्थापित के द्वारा) होती है॥९॥

उत्तर-वेदि की पयस्या हवि वरुण के लिये होती है; क्योंकि वरुण ने ही तो प्रजापति की प्रजायें पाश में जकड़ी थी। इसलिये वह प्रत्यक्ष ही वरुण के पाश से प्रजा को मुक्त कराता है। दक्षिण-वेदि की पयस्या हवि मरुतों के लिये

तुयोरुभुयोरेवु करीराण्युावपति। कं वै प्रजुापतिः प्रजुाभ्यः करीरैरकुरुत कुम्वेवैषु ऽएतुत्प्रजुाभ्यः कुरुते॥११॥

तुयोरुभुयोरेवु शमीपलाशान्युावपति। शं व्वै प्रजुापतिः प्रजुाभ्यः शमीपलाशैरकुरुत शुम्वेवैषु ऽएतुत्प्रजुाभ्यः कुरुते॥१२॥

---

तयोरुभयोरेव करीराण्यावपति। कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत। कम्वेवैष एतत् प्रजाभ्यः कुरुते॥११॥

तयोरुभयोरेव शमीपलाशान्यावपति। कं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत। शम्वेवैष एतत् प्रजाभ्यः कुरुते॥१२॥

---

दक्षिणतो दक्षिणदिग्भागेन मरुतः 'अजिघांसन्' हन्तुमैच्छन्; तान् मरुतः प्रजापतिरेतेन पयस्यारूपेण भागेनाशमयत् शान्तिमनयत्। तस्माद् दक्षिणतः स्थितानां मरुतामुपशमनाय दक्षिणतः क्रियमाणैषा पयस्या मारुती कार्येत्यर्थः॥१०॥

करीराणामावपनं विधाय स्तौति—**तयोरिति**। तयोरुभयोः पयस्ययोः करीराणि प्रक्षिपेत् (तै.सं. २.४.९.४) मधुराः फलविशेषाः करीराणि; तानि चोत्तरापथे प्रसिद्धानि। **कं वा इत्यादि**। 'करीरैः' एतैः करीरफलैः 'प्रजापतिः' 'प्रजाभ्यः' अस्माकं यस्मात् 'कं' सुखम् 'अकुरुत' तस्मादिदानीमप्येष यजमानस्तदावपनेन सुखमेव प्रजाभ्यः कुरुते॥११॥

शमीपर्णानामावपनं विधत्ते—**तयोरिति**। 'शमीपलाशानि' शम्याः पर्णानीत्यर्थः। **शं वा इत्यादि**। 'शम्' उपद्रवाणां शमनमित्यर्थः। स्पष्टमन्यत्।

---

होती है। एक सा न हो जाय, इसलिये दूसरी हवि मरुतों के लिये होती है यदि दोनों आहुतियाँ वरुण के लिये कर दीं जाती तो पुनरावर्तन सा हो जाता। एक कारण यह भी है कि—दक्षिण से ही मरुतों ने प्रजापति की प्रजाओं को मारना चाहा था तब पयस्या रूपी हवि से (प्रजापति ने) उनको शान्त किया था। इसलिये दक्षिण में स्थित मरुतों की आहुति दक्षिण-वेदि में होती है॥१०॥

उन दोनों 'पयस्या' आहुतियों में करीर के फल (करीराणि) डालता है। प्रजापति ने करीर फल से ही प्रजाओं को सुखी (संस्कृत में 'क' का अर्थ सुख है) किया था; इसलिये यह यजमान भी पयस्या द्रव्य में करीर-फल डालकर प्रजाओं को सुख पहुँचाता है॥११॥

दोनों पयस्या आहुतियों में वह शमी वृक्ष के पत्ते भी डालता है। प्रजापति ने अपनी प्रजाओं के उपद्रव को शमी वृक्ष के पत्तों से ही शमन (शम्) किया

(तेऽथ) अथ काय ऽएककपालः पुरोडाशो भवति। कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैषऽएतत्प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात्काय एककपालः पुरोडाशो भवति॥१३॥

(त्यु) अथ पूर्व्वेद्युः। (र) अन्वाहार्यपचनेऽतुषानिव

---

अथ काय (५) एककपालः पुरोडाशो भवति। कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत। कम्वेवैष एतत् प्रजाभ्यः कायेनैककपालेन पुरोड्राशेन कुरुते। तस्मात् काय एककपालः पुरोडाशो भवति॥१३॥

अथ पूर्वेद्युरन्वाहार्यपचनेऽतुषानिव यवान् कृत्वा, तानीषदिवोपतप्य,

---

अत एवोक्तं कात्यायनेन—'उभयोः करीराण्यावपति शमीपलाशमिश्राणि'—इति (का.श्रौ.सू. ५.११२)॥१२॥

अथान्तिमं हविर्विधत्ते—**अथ काय इति**। कः प्रजापतिर्देवता अस्य, 'साऽस्य देवता'—इत्यणि 'कस्येत्'–(पा.सू. ४.२.२४,२५) इति 'क'–शब्दस्येकारान्तादेशः। एतस्य हविषः प्रयोजनमाह—**कं वा इति**। सुखात्मको हि प्रजापतिः 'क'–शब्दवाच्यः। अतस्तद्देवताकेन यागेन सुखकरणमुपपन्नमिति भावः॥१३॥

करम्भपात्राणां निर्माणं विधत्ते—**अथ पूर्वेद्युरिति**। यस्मिन् दिवसे वरुणप्रघासयागः ततः पूर्वेद्युः पूर्वे दिवसे। **अन्वाहार्यपचने इति**। अन्वाहार्य्यो

---

था। इसलिये यह यजमान भी प्रजाओं के रोगादि उपद्रवों को उसी शमीपर्ण मिलाकर शान्त करता है॥१२॥

वरुणप्रघास याग में अन्तिम हवि एक कपाल का पुरोडाश 'क' अर्थात् प्रजापति के लिये होता है। 'क' प्रजापति ने 'क' के लिये एक कपाल के पुरोडाश से प्रजाओं को सुख (कम्) पहुँचाया तथैव यह यजमान भी (क = प्रजापति) के लिये एक कपाल के पुरोडाश से प्रजा को सुख (कम्) पहुँचाता है। इसलिये 'क' (= प्रजापति) के लिये एक कपाल का पुरोडाश होता है॥१३॥

ततपश्चात् वरुणप्रघास यज्ञ के पहले दिन अन्वाहार्यपचन अर्थात् दक्षिणाग्नि

---

१. आषाढ्यामयं ते योनिरिति समारोह्योदवसाय निर्मथ्य व्वरुणप्रघासाः। पूर्व्वेद्युर्दक्षिणानौ निस्तुषाप-भृष्टयवानां करंभपात्रकरणं निस्तुषग्रहणं फलीकरणव्युदासार्थमिति कर्कः। यावतो यजमानगृह्या एकाधिकानि। प्रजायां जातश्रुतेः। त्रीणि नित्यत्वात्। द्विप्रजैकप्रजाऽप्रजानां त्रीण्येकाधिकानि करंभपात्राणि कर्तव्यानि। इतरेषां प्रजा[illegible]न्येकाधिकानि इत्यर्थः। इति (का.श्रौ.सू. ५.४७-५१)॥

**यु॒वान्कृ॒त्वाता॒नीष॒दिवोपत॒प्य ते॒षां करम्भपात्रा॒णि कुर्व्वन्ति या॒वन्तो गृह्याः स्युस्ता॒वन्त्ये॒केना॒तिरिक्तानि॥१४॥**

**तत्रा॒पि मेष॒ं च मेषीं॒ च कुर्व्वन्ति। तु॒योर्मेषे च मेष्यां च यद्य॒नैडकीरु॒र्णा व्विन्देत्ता॒ः प्रणि॒ज्य नि॒श्लेषयेद्यद्यु॒ऽअ॒नैडकीर्न व्विन्देदु॒थोऽ अ॒पि कुशोर्णा॒ ऽएव॒ स्युः॥१५॥**

---

**तेषां करम्भपात्राणि कुर्वन्ति, यावन्तो गृह्याः स्युः तावन्ति, एकेनातिरिक्तानि॥१४॥**

**तत्रापि मेषं च मेषीं च कुर्वन्ति। तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा विन्देत्–ताः प्रणिज्य निश्लेषयेत्। यद्यु अनैडकीर्न विन्देत्–अथोऽअपि कुशोर्णा एव स्युः॥१५॥**

---

नामेष्टिः। दक्षिणदिग्भागे मरुतः 'अजिघांसन्' हन्तुमैच्छन् तान् प्रजापतिरेतेन पयस्यारूपेण भागेन 'अशमयत्' शमितवानिति यावत्, तस्माद्दक्षिणात्वेन देय ओदनो यस्मिन् पच्यते स तथोक्तः। तस्मिन् दक्षिणाग्नौ 'अतुषान्' तुषरहितान् 'कृत्वा' सम्पूर्य्य 'तान्' 'ईषदिव' अत्यल्पमिव 'उपतप्य' श्रपयित्वोदकेनालोड्य, तैः 'करम्भपात्राणि' भृष्टयवचूर्णाः[1] करम्भाः[2], तन्मयानि पात्राणि 'कुर्वन्ति' अध्वर्य्युयजमानादयः। कियन्ति तानि पात्राणीत्यपेक्षायामाह—**यावन्त इति**। यावत्सङ्ख्याका यजमानस्य 'गृह्याः' स्वगृहे वर्त्तमानाः पुत्रपौत्रादिरूपा ज्ञातयो भवेयुः, 'तावन्ति' तावत्सङ्ख्याकानि करम्भपात्राणि कार्य्याणि तानि च जनिष्यमाणापत्यार्थम्, एकेन 'अतिरिक्तानि' अधिकानि कार्य्याणि॥१४॥

करम्भपात्रावशिष्टाद् यवपिष्टादेव मेषमेषीलक्षणमिथुनस्य निर्माणं विधत्ते—**तत्रापीति**। 'अपि'–शब्द एवकारार्थः। 'तत्र' करम्भपात्रनिर्माणसमये एव, तेनैव पिष्टेन मेषमेष्यौ कर्त्तव्ये। **तयोरिति**[3]। सम्भूयानूदितयोः मेषे च मेष्याञ्च इति पृथगुपादानं विस्पष्टार्थम्। **यद्यनैडकीरिति**[4]। एडको[5] मेषः, तत्सम्बन्धरहिता

---

पर तुष रहित जौ को अत्यल्प पका कर करम्भ (भृष्टयव चूर्ण) के इतने पात्र बनाते हैं जितने घर के सदस्य हों और एक अधिक बनाते हैं। (भृष्ट यवचूर्ण दही में सानकर उससे बनाये जाने वाले दीप-सदृश पात्र को 'करम्भ-पात्र' कहते हैं)॥१४॥

करम्भ-पात्र निर्माण से बचे हुए यवपिष्ट से एक मेष और एक मेषी भी बनाते है। यदि एडक अर्थात् भेड़ के अतिरिक्त किसी अन्य तत्समजातीय पशु के ऊन

---

१. 'पिष्टचूर्णाः' इति पा.। २. 'करम्भो दध्ना संयुताः सक्तवः' तन्मयानि पात्राणि करम्भपात्रणीति का.श्रौ.सू. ५.५.२ सू.या.दे। ३. मेषमिथुनं च। (का.श्रौ.सू. ५.५२)। ४. 'नैलकी' इति पा.। ५. 'एलको' इति पा.।

**(स्त) तद्यन्मेषश्च मेषी च भुवतः। (ऽ) एष वै प्रत्यक्षं व्वुरुणस्य पशुर्यन्मेषस्तुत्प्रत्युक्षं व्वरुणपाशुात्प्रजाः प्रुमुञ्चति यवमुयौ भवतो युवान् हिु जक्षुषी व्वरुणोुऽगृह्णान्मिथुनुौ भवतो मिथुनुादेुवैतुद्वरुणपाशुात्प्रजाः प्रमुञ्चति॥१६॥**

---

**तद् यन्मेषश्च मेषी च भवतः। एष वै प्रत्यक्षं वरुणस्य पशुः-यन्मेषः। तत्प्रत्यक्षं वरुणपाशात् प्रजाः प्रमुञ्चति। यवमयौ भवतः। यवान् हि जक्षुषीर्वरुणोऽगृह्णात्। मिथुनौ भवतः-मिथुनादेवैतत् वरुणपाशात् प्रजाः प्रमुञ्चति॥१६॥**

---

अनैडक्यः, 'ऊर्णाः' कम्बलोपादानभूतानि तज्जातीयानि[1] रोममयानि सूत्राणि यदि तास्तथाविधा ऊर्णाः 'विन्देत्' लभेत तदा 'ताः' 'प्रणिज्य' प्रक्षाल्य तयोः मेषमेष्योः 'निश्लेषयेत्' संश्लेषयेत् 'यद्यु' यदि खलु 'अनैडकीः'[2] ऊर्णाः 'न विन्देत्' न लभेत, तर्हि 'कुशोर्णा[3] एव स्युः' कुशमय्य एवोर्णाः, तयोः मेषमेष्योः संश्लेषणीयाः स्युः भवेयुः॥१५॥

मेषमेष्योः करणमनूद्य स्तौति—**तद्यदिति**। **वरुणस्य पशुर्यन्मेष इति**। 'यद्' 'एषः' खलु 'प्रत्यक्षं' 'वरुणस्य' हविर्भूतः 'पशुः' अत एव पश्वेकादशिन्याम्—'अधोरामः सावित्रो वारुणः कृष्ण एकशितिपात् पेत्वः' इत्याम्नायते (वा.सं. २९.५८)। पेत्वो विगतपुंस्को मेष इति हि तदर्थः। **यवमयाविति**। यवमयश्च मेषो यवमयी च मेषी। 'पुमान्त्रिया' (पा.सू. १.२.६७) इति पुंसः शेषः। यवविकारौ भवत इत्यर्थः। **यवान् हीति**। 'हि' यस्माद् 'यवान्' 'जक्षुषीः' भक्षितवतीः प्रजाः 'वरुणः' पाशेन 'अगृह्णात्' अतस्तद्यवप्रत्यर्पणाय मेषमेष्योर्यवमयत्वं सम्पद्यत इत्यर्थः। तयोः स्त्रीपुंसरूपतामनूद्य स्तौति—**मिथुनौ भवत इति**। 'मिथुनाद्'-इत्येतद् 'वरुणपाशाद्'-इत्यस्य विशेषणम्। द्वैरूप्याधिकरणाधिकरणात् दक्षिणस्यां मेषो न अपि तु वैयधिकरण्येन तत्प्रमोचने हेतुः[4]॥१६॥

---

को साफ करके मेष और मेषी लगा दे अर्थात् उन पर चिपका दे और यदि भेड़ से अतिरिक्त का ऊन न मिले तो कुशों के अग्र-भाग ही लगा दे॥१५॥

यह यवपिष्ट के मेष-मेषी क्यों बनाते है? क्योंकि मेष प्रत्यक्ष रूप से वरुण का पशु है। इस प्रयोग से प्रत्यक्ष ही वरुण के पाश से प्रजाओं को छुड़ा लेता

---

१. 'तज्जातीयरोममयानि' इति पा.। २. अनैडकीरूर्णाः प्रक्षाल्याश्लेषयत्तयोः। का.श्रौ.सू. ५.५३। ३. कुशोर्णा वाऽभावे। का.श्रौ.सू. ५.[illegible]। ४. मेषमिथुनं च यवमय्यां मेषम्। का.श्रौ.सू. [illegible]।

**स उ॒त्तरस्यामेव॒ पय॒स्यायां मेषी॒मवदु॒धाति। दु॒क्षिणस्यां मेष॒मेव॒मिव हि॒ मिथुनं॒ क्लृप्तमुत्तरतो हि स्त्री पु॒माꣳ-समुपशेते॥१७॥**

**स स॒र्व्वाण्येव॒ हवी॒ꣳष्यध्वर्युः। (रु॒) उ॒त्तरस्यां व्वे॒दावा॒-सादयत्यु॒थैता॒मेव॒ पयु॒स्यां प्रतिप्रस्थाता दु॒क्षिणस्यां व्वे॒दावा॒-सादयति॥१८॥**

---

**स उत्तरस्यामेव पयस्यायां मेषीमवदधाति, दक्षिणस्यां मेषम्। एवमिव हि मिथुनं क्लृप्तम्। उत्तरतो हि स्त्री पुमांसमुपशेते॥१७॥**

**स सर्वाण्येव हवींष्यध्वर्युरुत्तरस्यां वेदावासादयति–अथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति॥१८॥**

---

अथ तयोः प्रक्षेपं विधत्ते—**स इति**। अध्वर्युकर्तृकायाम् 'उत्तरस्याम्' पयस्यायाम् एव 'मेषीम्' 'अवदधाति' प्रक्षिपति। प्रतिप्रस्थातृकर्तृकायां 'दक्षिणस्यां' 'मेषं' प्रक्षिपति। अनयोर्दक्षिणोत्तरभावं लोकन्यायेनोपपादयति—**एवमिवेति**॥१७॥

हविषामासादनं विधत्ते—**स सर्वाण्येवेति**। आग्नेयादीनि 'सर्वाण्येव हवींषि' 'उत्तरस्यां' 'वेदौ' वेद्यां 'सः अध्वर्य्युः' 'आसादयेत्', 'प्रतिप्रस्थाता' तु 'एताम्' मारुती 'पयस्यामेव' 'दक्षिणस्यां' वेद्यामासादयेदित्यर्थः॥१८॥

---

है। इनको यवपिष्ट का इसलिये बनाते हैं; क्योंकि जब सृष्टयारम्भ में प्रजाओं ने जौ खाये तभी तो वरुण ने इनको स्वकीय पाश में जकड़ा था। मेष-मेषीका जोड़ा इसलिये बनाते हैं कि जोड़े से ही प्रजा वरुण के पाश से छूट जाये॥१६॥

उत्तर-वेदी में हवन की जाने वाली (उत्तरी) पयस्या में मेषी को प्रक्षिप्त करता है और दक्षिण-वेदि में हवन की जाने वाली पयस्या में मेष को; क्योंकि इसी प्रकार ठीक जोड़ा मिलता है; क्योंकि स्त्री, पुरुष से उत्तर की (बाईं) ओर लेटती है॥१७॥

अध्वर्यु आग्नेयादि सभी हवियों को उत्तर-वेदी में स्थापित करता है और प्रतिप्रस्थाता दक्षिण-वेदी में केवल पयस्या-हवि को रखता है॥१८॥

---

१. 'अतः'–इ.पा.। २. 'सर्व्वाणि हवीꣳष्युत्त'–रस्यामासादयति मारुतीꣳसहाज्यां प्रतिप्रस्थाता दक्षिणस्याम्। (का.श्रौ.सू. ५.१९५)।

(त्या) आसाद्य हवीꣳष्यग्निं मन्थति। (त्य) अग्निं मन्थित्वानु प्रहृत्याभिजुहोत्यथाध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीति ता ऽउभावेवेध्मावभ्याधत्त ऽउभौ समिधौ परिशिꣳष्ट

---

आसाद्य हवींष्यग्निं मन्थति। अग्निं मन्थित्वाऽनुप्रहृत्याभिजुहोति। अथाध्वर्युरेवाह–'अग्नये समिध्यमानायानुब्रूहि' इति। ता उभावेवेध्मावभ्याधत्तः, उभौ समिधौ परिशिंष्टः। उभौ पूर्वावाघारावाघारयतः।

---

हविरासादनोत्तरकालमग्निमन्थनं विधत्ते[1]—**आसाद्येति। अग्निं मथित्वेत्यादि।** अग्निमन्थनानन्तरं जातम् 'अग्निम्' आहवनीये 'भवतन्न'–(वा.सं. ५.३) इति मन्त्रेण 'अनुप्रहृत्य' प्रक्षिप्य, 'अग्नावग्निः'–(वा.सं. ५.४) इति मन्त्रेणाभिजुहुयात्। एतच्चाग्निमन्थनादिकम् 'अध्वर्युः' एकः 'एव' कुर्य्यात् न प्रतिप्रस्थातेत्यभिप्रायः। दक्षिणोत्तरयोरुभयोरप्याहवनीययोराहुत्यधिकरणत्वेनेध्माधानेन समिन्धनीयत्वात् तद्धेतुभूतः सामिधेनीप्रैषोऽपि अध्वर्य्युप्रतिप्रस्थातृभ्यामुभाभ्यां प्रयोक्तव्य इत्याशङ्क्याह—**अथाध्वर्य्युरेवेति।** 'एव'–कारः प्रतिप्रस्थातृ–व्यावृत्त्यर्थः[2]। एकस्याहवनीयस्य देशभेदेन द्विधाऽवस्थानात्, प्रतिप्रस्थातुरग्नेराहवनीयान्तरात्वाभावात्, प्रेष्यस्य च होतुरुभयत्रैकत्वाद्, अध्वर्य्युणोच्यमान एव प्रैष उभयत्रोपकरोति, तावुभौसमिधावित्यभिप्रायः। इध्माधानादिकन्तु ताभ्यां समनुष्ठेयमित्याह—**ता उभाविति।** 'तौ' अध्वर्य्युप्रतिप्रस्थातारौ 'उभौ' 'समिधौ' इति व्यधिकरणे पदे। 'उभौ' अध्वर्युप्रतिप्रस्थातारौ अनुयाजार्थं 'समिधौ' परिशेषयत इत्यर्थः। 'अथाध्वर्य्योरेव कर्त्तव्यमाह—

---

हवियों को उत्तर-दक्षिण वेदियों में रखकर अध्वर्यु अग्नि-मंथन करता है। अरणि-मंथन से उत्पन्न अग्नि को आहवनीय-कुण्ड में रखकर 'अग्नावग्निः'—इस मन्त्र से आहुति देता है। एतदनन्तर अध्वर्यु होता को प्रैष देता है—'अग्नये समिध्यमानायानुब्रूहि'। (जलाई गई अग्नि लिये मन्त्र पढ़िये) ऐसा कहता है। तब दोनों (अध्वर्यु और प्रतिप्रस्थाता) अग्नि में समिधा डाल कर एक-एक समिधा अनुयाज के लिये रख लेते हैं और अध्वर्यु-प्रतिप्रस्थाता दोनों पूर्वाघार (= अग्नि

---

१. आसाद्याग्निमंथनं। का.श्रौ.सू. ५.२१. अग्रेर्जनित्रमिति शकलमादाय वेद्यां करोति २२ वृषणाविति कुशतरुणे तस्मिन् २३, उर्व्वश्यसीत्यधरारणिं तयोः २४, आयुरसीत्युत्तरयाऽऽज्यस्थालीः संस्पृश्य पुरूरवा इत्यधिनिधानं २५, अग्नये मथ्यमानायानुवाचयति २६ मंथति गायत्रेणेति प्रतिमंत्रं त्रिः प्रदक्षिणम् २७ जाते जातायेति, २८ प्रह्रियमाणायेति प्रास्यन्। २९ भवतन्न इति प्रास्यति ३० अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण इत्यग्निमंथनं (का.श्रौ.सू. ५.२१-३१)। २. 'व्यवच्छेदार्थ इत्यर्थः'–इ.पा.।

ऽउभौ पूर्व्वावाघारावाघारयतोऽथाध्वर्युरिवाहाग्निमग्नीत्सम्मृड्ढी-त्यसम्मृष्टमेव भवति सम्प्रेषितम्॥१९॥

(म) अथ प्रतिप्रस्थाता प्रतिपरैति। स पत्नीमुदानेष्यन्-पृच्छति केन चरसीति व्वरुण्यं व्वाऽएतत्स्वीकरोति यदन्यस्य सत्यन्येन चरत्यथो वेन्मेऽन्तःशल्या जुहवदिति तस्मात्पृच्छति

---

अथाध्वर्युरिवाह–'अग्निमग्नीत् सम्मृड्ढि' इति। असम्मृष्टमेव भवति संप्रेषितम्॥१९॥

अथ प्रतिप्रस्थाता प्रतिपरैति। स पत्नीमुदानेष्यन् पृच्छति–'केन चरसि' इति। वरुण्यं वा एतत् स्वीकरोति–यदन्यस्य सती–अन्येन चरति, 'अथो नेन्मेऽन्तःशल्या जुहवदिति' तस्माद् पृच्छति। निरुक्तं वा एनः कनीयो

---

**अथाध्वर्य्युरिवेति।** हे 'अग्नीत्'; सामिधेनीप्रैषवत् 'अग्निम्' आहवनीयं 'सम्मृड्ढि' सम्मार्जनेन संस्कुरु। **असंमृष्टमेवेति।** करम्भपात्राणां होमस्य कालविधिः। अग्निमग्नीदिति सम्प्रैषे कृते तदर्थत्वात् आग्नीध्रेणानुष्ठिते इत्यर्थः॥१९॥

तस्य च करम्भपात्राणां होमस्य पत्नीकर्तृकत्वं विधित्सुस्तस्यां सम्भावितस्य पुरुषान्तरसङ्गतिजनितस्यैनसः प्रश्नं दर्शयति—**अथ प्रतिप्रस्थातेति।** अग्निमग्नीदिति सम्प्रैषानन्तरं 'प्रतिपरैति' निवर्तते, पत्नी यत्रास्ते तं देशं प्रतिगच्छेदित्यर्थः। 'सः' च प्रतिप्रस्थाता 'पत्नीम्' 'उदानेष्यन्' उदागमिष्यन् तां पत्नीं 'पृच्छति'–हे पत्नि! त्वं 'केन' जारेण 'चरसि' वर्त्तते 'इति'। पुरुषान्तरसङ्गतेर्दोषान्तरतामाह—**वरुण्यमिति।** तेन पापेन हेतुना वरुणपाशबन्धो भवति, तत् पापं 'वरुण्यम्'। 'अन्यस्य' पुरुषस्य पत्नी 'सती', 'अन्येन' पुरुषान्तरेण सह 'चरति' वर्त्तते इति। यत्, एतत्, वरुण्यमेव 'स्वीकरोति'। प्रष्टुः प्रतिप्रस्थातुरभिप्रायमाह—**अथो इति।** 'अथो' अपि च एषा पत्नी 'अन्तःशल्या'

---

में एक छोर से आरम्भ कर दूसरे छोर तक घृत-धारा की आहुति छोड़ते हैं। तदनन्तर अध्वर्यु अग्नीत् को प्रैष देता है—'अग्निमग्नीत् संमृड्ढि' (हे अग्नीत्, अग्नि को ठीक करें)। अभी केवल कहा जाता है अग्नि ठीक नहीं की जाती॥१९॥

तत्पश्चात् प्रतिप्रस्थाता (उस जगह जहाँ यजमान-पत्नी है) लौटता है। वह पत्नी को याग-स्थल पर ले जाते समय पूछता है—'हे देवि! क्या आपका कोई उपपति है'? (केन चरसि)। यदि स्त्री एक की होकर दूसरे के साथ सहवास करती है तो वह वरुण के पाश से बँधती है। वह इसलिये पूछता है कि कहीं वह

---

१. सम्मार्जनायप्रेषितेऽसंमृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति। का० श्रौ० सू० ५।५।६।

**निरुक्तं व्वा एनः कुनीयो भुवति सत्यँ्ँहि भवति तस्माद्धेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यैतदुहितँ स्यात्॥२०॥**

**( त्तां ) तां व्वाचयति। प्रघासिनो हवामहे मरुतश्च रिशादसः।**

---

**भवति। सत्यं भवति तस्माद्धेव पृच्छति। सा यन्न प्रतिजानीत–ज्ञातिभ्यो हास्यैतदहितं स्यात्॥२०॥**

**तां वाचयति 'प्रघासिनो हवामहे मरुतश्च रिशादसः। करम्भेण**

---

शरीरमध्ये दुश्चरितजनितेन पापरूपेण शल्येन युक्ता सती 'न इत्' नैव 'मे' मदीयेऽग्नौ 'जुहवत्' जुहुयात् इति। 'तस्मात्' कृतस्य पापस्य कनीयस्त्वम्। **तस्माद्धेवेति**। 'उ'–शब्दोऽपीत्यर्थे, 'एव'–कारो भिन्नक्रमः। तस्मादपि कारणात् 'पृच्छत्येवेत्यर्थः। विपक्षे बाधोपन्यासेन पत्न्या अपि यथार्थभाषणं कर्त्तव्यमिति विधत्ते—**सेति**। 'यत्' यदि 'सा' पत्नी पृष्टमर्थं 'न प्रतिजानीत' न प्रतिब्रूयात् 'तत्' तदा, 'असौ' षष्ठ्यर्थे चतुर्थी, अस्याः पत्न्याः 'ज्ञातिभ्यः' 'अहितम्' अनिष्टं स्यात्, तस्मादु वस्तुतो विद्यमानं वृत्तान्तमाचक्षीतेत्यर्थः। तैत्तिरीयकेऽप्याम्नायते—'यज्जारं सन्तं न प्रब्रूयात्, प्रियं ज्ञाति ँ रुन्ध्यात्, असौ मे जार इति निर्दिशेत्' इति–(तै.ब्रा. १.६.५.२) तदुक्तं कात्यायनेन—'प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति, संस्तुतानाचष्टे'–इति[1]। संस्तुताः परिचिता[2] जारा इत्यर्थः॥२०॥

तस्या वाचनं विधत्ते—**तां वाचयतीति**[3]। 'प्रघासिनः' इत्यादिर्वाचनीयो मन्त्रः। तस्यायमर्थः—'प्रघासिनः प्रघासः प्रघसनीयं भोज्यं हविः, तद्वतो 'मरुतः'

---

अन्तःशल्या (मानसिक पाप से युक्ता होकर) आहुति न दे। निरुक्त पाप (अर्थात् स्वीकार किया गया पाप) कम हो जाता है; क्योंकि तब यह सत्य में परिवर्तित हो जाता है। अतएव वह ऐसा पूछता है। यदि वह पाप को छिपा लेती है तो उसके निकट-सम्बन्धियों के लिये अनिष्ट होता है॥२०॥

अब वह यजमान-पत्नी से मन्त्र बुलवाता है—'प्रघासिनो हवामहे मरुतश्च रिशादसः। करम्भेण सजोषसः' (यजु. ३.४४)। 'करम्भ पात्रस्थित भोज्य हवियों को प्रीतिपूर्वक खाने वाले और हिंसक शत्रुओं का नाश करने वाले मरुतों को हम

---

१. 'पत्नी एतावन्तो मे जारा इति नामग्राहं कथयति, अमुना अमुना जारेण सह चरामीति वा; नो चेन्नान्येनेति। यदि लज्जादिवशात् न कथयति, प्रतिजारं तृणानि उद्गृह्णाति'। (का.श्रौ.सू. ५.११७) तृणानि वोद्गृह्णाति प्रतिसंस्तुतं। अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः। (का.श्रौ.सू. ५.११९)। २. 'परिजाताः'–३.परि. ४. 'आगच्छते प्रघासिन इत्येतां वाचयति नयन् (का. ५.१२०)।

करम्भेण सजोषस ऽइति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति॥२१॥

तानि वै प्रतिपुरुषम्। यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा

---

सजोषसः'-(वा.सं. ३.४४) इति। यथा पुरोऽनुवाक्या, एवमेवैषा। एतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति॥२१॥

तानि वै प्रतिपुरुषं यावन्तो गृह्याः स्युः, तावन्ति, एकेनातिरिक्तानि भवन्ति। तत् प्रतिपुरुषमेवैतदेकैकेन–या अस्य प्रजा जाताः ता वरुणपाशात्

---

'शुक्रज्योतिश्च चित्रज्योतिश्च'-(वा.सं. १७.८०.८६) इत्यादिना प्रतिपादित-नामधेयान् एकोनपञ्चाशत्सङ्ख्यान् देवान् 'हवामहे' आह्वयामः। मरुतो 'रिशादसः' रिशाः हिंसकाः शत्रवः, तेषां निरसितारः 'करम्भेण' करम्भपात्ररूपेण हविषा सजोषसः समानप्रीतयश्च भवन्ति, तान् मरुत इति।

एतन्मन्त्रं पुरोऽनुवाक्यानुवचनसादृश्येन स्तौति—**यथेति**। 'पुरोनुवाक्या' हि यक्ष्यमाणदेवताह्वानार्था, 'एवम् एव' 'एषा प्रघासिन इत्यृक्' अतः 'एतया एव' 'एनान्' मरुतः 'एतेभ्यः' पात्रेभ्यः' करम्भपात्रेभ्यः 'ह्वयति' होष्यमाणं करम्भपात्रलक्षणं हविर्भोक्तुमाह्वयतीत्यर्थः॥२१॥

करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्ति—इति वाक्येन प्राग्विहितम् (श.प. २.५.२.१४) तदनूद्य स्तौति—**तानि वा इति**। 'प्रतिपुरुषं' पुरुषं पुरुषं प्रत्येकैकं करम्भपात्रं भवति। यावन्त इत्याद्युक्तार्थम्। पुरुषसङ्ख्यया पात्रनिर्माणस्य प्रयोजनमाह—**तत् प्रतिपुरुषमिति**। 'अस्य' यजमानस्य 'याः प्रजाः जाताः' 'ताः' प्रतिपुरुषं' प्रत्येकम् 'एकैकेन' पात्रेण 'वरुणपाशात्' 'प्रमुञ्चति'

---

बुलाते हैं'। यह अनुवाक्या सदृश है। इससे वह करम्भ-पात्र स्थित हवि को भक्षण करने हेतु मरुद्गणों को बुलाती है॥२१॥

यजमान-परिवार के प्रत्येक सदस्य के उद्देश्य से एक-एक करम्भ-पात्र होता है। घर के जितने सदस्य होते हैं उतने ही करम्भ-पात्र होते हैं तदतिरिक्त एक अधिक होता है। एक-एक पुरुष के लिये एक-एक करम्भ-पात्र इसलिये होता है कि जो प्रजा उत्पन्न हुई है उनमें से प्रत्येक वरुण के पाश से मुक्त हो जाये और

**जातास्ता व्वरुणपाशात्प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता व्वरुणपाशात्प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति॥*२२॥**

**पात्राणि भवन्ति। पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवाह्नि जक्षुषीर्व्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते**

---

**प्रमुञ्चति। एकेनातिरिक्तानि भवन्ति। तद्या एवास्य प्रजा अजाताः, ता वरुणपाशात् प्रमुञ्चति। तस्मादेकेनातिरिक्तानि भवन्ति॥२२॥**

**पात्राणि भवन्ति। पात्रेषु ह्यशनमश्यते। यवमयानि भवन्ति। यवान् हि जक्षुषीर्वरुणोऽगृह्णात्। शूर्पेण जुहोति। शूर्पेण ह्यशनं क्रियते। पत्नी जुहोति।**

---

[१]एकातिरिक्ततामेषामनूद्य स्तौति—**एकेनेति**। जनिष्यमाणानां प्रजानां वरुणपाश-विमोचनार्थमेकमतिरिक्तं कर्त्तव्यमित्यर्थः॥२२॥

पुरोडाशादिरूपतां विहाय पात्ररूपेण निर्माणमुपपादयति—**पात्राणीति**। 'हि' यस्मात् 'पात्रेषु' कांस्यादिनिर्मितेषु 'अशनम्' अन्नम् 'अश्यते' भुज्यते, अतो मरुतां पयस्यारूपस्यान्नस्य भोजनीयपात्ररूपेणैवैतानि निर्मातव्यानीत्यर्थः। यवमयत्वमनूद्य स्तौति—**यवमयानीति**। 'जक्षुषीः' भक्षितवतीरित्यर्थः। अथ तेषां करम्भपात्राणां होमं विधत्ते—**शूर्पेणेति**[२]। जुह्वादिपात्रं विहाय शूर्पेणैवैतानि जुहुयात्। तेन हि 'शूर्पेण' तुषनिर्वपनद्वारा[३] 'अशनम्' अन्नं 'क्रियते' अतः

---

एक पात्र अतिरिक्त इसलिये बनाया जाता है कि जो सन्तानें अभी उत्पन्न नहीं हुई वे भी वरुण के पाश से मुक्त रहें। अतएव एक करम्भ-पात्र अधिक होता है॥२२॥

करम्भ-पात्र इसलिये बनाये जाते हैं कि पात्रों में ही भोजन किया जाता है। यवपिष्ट के इसलिये बनाये जाते हैं; क्योंकि सृष्ट्यारम्भ में प्रजाओं ने जौ खाये तभी वरुण ने उनको पाश से जकड़ा। करम्भ-पात्रों की शूर्प (छाज) से आहुति देते हैं; क्योंकि शूर्प (छाज) से ही (फटक कर) भोजनीय अन्न तैयार होता है।

---

* इयंश्रुतिः = जातश्रुतिरित्युच्यते। तदाह कात्यायनः। प्रजायां वा जातश्रुतेरिति = श्रौ.सू.अ. ५ कं. ३ सू. ४।

१. 'एतदतिरिक्तताम्–'इ.पा.। २. करंभपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेग्नौऽप्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य पूर्व्वेण वेदिमपरेण यद्ग्राम इति (का.श्रौ.सू. ५.२१) पत्नी शूर्पे मूर्द्धनि कृत्वाऽऽगच्छति। शूर्पे मस्तकादधोऽवतार्य शूर्पेणैव करंभपात्राणि जुहोति। न तु शीर्षाधिष्ठितशूर्पेण। जायापतीहोमपक्षे यजमानः पत्नीमन्वारभते। इति कर्काशयः। ३. 'परावपनद्वारा' इ.पा.।

पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति॥२३॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति। अहुतादो वै व्विशो व्विशो वै मरुतो यत्र वै प्रजापतेः प्रजा व्वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्रियरे च निषेदुश्च तद्धासां मरुतः पाप्मानं व्विमेथिरे

---

मिथुनादेवैतद् वरुणपाशात् प्रजाः प्रमुञ्चति॥२३॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति। अहुतादो वै विशः।विशो वै मरुतः। यत्र वै प्रजापतेः प्रजावरुणगृहीताः परिदीर्णा अनत्यश्च, प्राणत्यश्च–शिश्रियरे

---

शूर्पहवनं प्रशस्तम्। न चात्र शूर्पो हेत्वर्थः शङ्कनीयः; 'हेतुर्वा स्यादर्थवतोपपत्तिभ्याम्, स्तुतिस्तु शब्दपूर्वत्वात्' (जै.सू.मी. १.२.२६-३० अधि. ३) इत्यधिकरणे स्तुतित्वेनान्वयस्य प्रतिपादितत्वात् 'पत्नी जुहोति' इति कर्तृविधिः। 'मिथुनादेव' इत्यादि तत्प्रशंसा। स्त्रिया अपि कर्तृत्वेन होमेऽन्वयात् मिथुनं सम्पद्यते। तथा च यजमानपत्नीरूपान्मिथुनादेवेत्ययमर्थः सिध्यति॥२३॥

स्रुवाधारहोमादेः पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते—**पुरेति**। यज्ञो[1] वषट्कारप्रदानो यजतिचोदित आग्नेयः, आहुतयः स्वाहाकारप्रदाना जुहोतिचोदिताः[2]; एतत्पूर्वभावित्वमुपपादयति—**अहुतादो वा इति**। अहुतं होमसंस्काररहितम् अदन्ति भक्षयन्त्यहुतादः। मरुतां वैश्यजातित्वेन अहुतादानधर्मवत्वात् सर्वहोमात् पूर्वं तेभ्यो हविःप्रदानं युक्तमिति भावः। इतोऽपि करम्भपात्राणां पूर्वं होम इत्याह—**यत्रेति**। 'परिदीर्णाः' इत्यादिकं व्याख्यातम् (श.प. २.५.२.२ भा.)। 'यत्र' यदा खलु 'प्रजापतेः प्रजाः' 'वरुणगृहीताः'

---

करम्भ-पात्रों की आहुति पत्नी देती है; क्योंकि युग्म द्वारा ही वरुण के पाश से प्रजा को मुक्त कराता है॥२३॥

वषट्कार प्रदानात्मक यज्ञ से पूर्व तथा स्वाहाकार प्रदानात्मक आहुति से पूर्व ही करम्भ-पात्रों का होम यजमान पत्नी इसलिये करती है; क्योंकि देवताओं में मरुद्गण वैश्य जाति के हैं जो कि 'अहुताद' अर्थात् होमसंस्काररहित द्रव्य का भक्षण करते हैं। (दूसरा कारण यह भी है कि–) जब प्रजापति द्वारा सृष्ट प्रजा को वरुण ने पाश से जकड़ लिया और वेदना से विदीर्ण कर दिया येन-केन प्रकारेण वह श्वास-प्रश्वास लेती हुई म्रियमाण सी जी रही थी तब उनके पापजनित कष्टों को मरुतों ने ही दूर किया था। इसी प्रकार इस यजमान की प्रजाओं के

---

१. 'तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः' (का.श्रौ.सू. अ. १ सू. २७)।
२. 'उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः–' (का.श्रौ.अ. १ सू. २८)।

**त॒थो ऽए॒वैतस्य प्र॒जा॒नां मरुत॒ः पाप्मा॒नं व्वि॒मथ्नते त॒स्मात्पु॒रा य॒ज्ञात्पु॒राहु॒तिभ्यो जुहोति॥२४॥**

**सा वै द॒क्षिणेऽग्नौ॒ जुहोति। यद् ग्रा॒मे यद॒रण्य॒ऽइति ग्रा॒मे वा ह्यरण्ये वै॒नः क्रियु॒ते यत्सभा॒यां य॒दिन्द्रिय ऽइति यु॒त्सभायामि॒ति**

---

**च, निषेदुश्च–तद्धासां मरुतः पाप्मानं विमेथिरे। तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते। तस्मात् पुरा यज्ञात् पुराहुतिभ्यो जुहोति॥२४॥**

**सा वै दक्षिणेऽग्नौ जुहोति–'यद्ग्रामे यदरण्ये' (वा.सं. ३.४५) इति। ग्रामे वा ह्यरण्ये वैनः क्रियते। 'यत्सभायां यदिन्द्रिये' (वा.सं. ३.४५)**

---

परिदीर्णत्वादिरोगग्रस्ता अभवन् 'तत्' तदा 'आसां' प्रजानां 'पाप्मानं' 'मरुतः' 'विमेथिरे' विलोपयन्ति[१] स्म, संश्लेषितवन्त इत्यर्थः। 'तथो एव' एवमेव 'एतस्य' यजमानस्य 'प्रजानां' वरुणपाशगृहीतानां 'पाप्मानं' पाशविमोचनात् प्रागेव मरुतः 'विमथ्नते' संविश्लेषयन्ति। 'तस्माद्' वरुणपाशग्रहविमोचनार्थाद् यज्ञात्, 'आहुतिभ्यः' च पूर्वमेव करम्भपात्राणां होमेन मरुतां शमनं[२] युक्तमित्यर्थः॥२४॥

अग्निविशेषं विधत्ते—**सा वा इति।** 'सा' खलु पत्नी 'दक्षिणे' दक्षिणस्यां वेद्यामवस्थिते आहवनीये 'अग्नौ' 'जुहोति' **यद् ग्राम इति।** तत्र करणमन्त्रः। तं पदशोऽनूद्य व्याचष्टे—**यद् ग्रामे इत्यादिना।** 'यत् एनः क्रियते' 'तत्' ग्रामे वा अरण्ये वा भवति। 'यत् सभायाम्' इति द्वितीयपादस्य कार्त्स्न्येनानुवादः। तत्र प्रथमार्द्धमनूद्य सभाशब्दं व्याचष्टे—**यत्सभायामिति।** यन्मनुष्यसङ्घैः एनः क्रियत

---

पापजनित कष्टों को मरुद्गण ही दूर करेंगें इसलिये यज्ञ = वषट्कारप्रदानात्मक तथा स्वाहाकारप्रदानात्मक आहुतियों के पूर्व ही करम्भ-पात्रों की आहुतियाँ अर्पण करती है॥२४॥

वह दक्षिण-वेदि स्थित अग्नि में करम्भ-आहुति देती है यह मन्त्र पढ़कर— 'यद्ग्रामे यदरण्ये' (यजु. ३.४५)। (मन्त्रार्थ–) 'जो (पाप) गाँव में किया और जो वन में'। पाप गाँव में भी होता है और वन में भी। फिर कहती है—'यत् सभायां यदिन्द्रिये'। (यजु. ३.४५) अर्थात् 'जो पाप सभा में किया और जो अपनी इन्द्रियों द्वारा किया'। 'सभा' का तात्पर्य है मनुष्यों के संघ से। 'इन्द्रिये' का तात्पर्य है 'अपनी इन्द्रियों द्वारा देवताओं के प्रति (किया गया अपराध)'। अब कहती है—

---

१. 'विलोलयन्ति' इति मा.। २. 'शमनं' इति 'शंसनं' इति च मा.।

यन्मानुष ऽइति तदाह यदिन्द्रिय ऽइति यद्देवत्रेति तदाह यदेनश्चकृमा व्वयमिदं तदवयजामहे स्वाहेति यत्किञ्च व्वयमेनश्चकृमेदं व्वयं तस्मात्सर्व्वस्मात्प्रमुच्यामह ऽइत्येवै-तदाह॥२५॥

(ह्रा) अथैन्द्रीं मरुत्वतीं जपति। यत्र वै प्रजापतेः प्रजानां

---

इति। यत्सभायामिति–यन्मानुष इति। तदाह–यदिन्द्रिय इति–यद्देवत्रेति तदाह। यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहेति यत् किञ्च वयमेनश्चकृम–इदं वयं तस्मात् सर्वस्मात्–प्रमुच्यामहे–इत्येवैतदाह॥२५॥

अथैन्द्रीं मरुत्वतीं जपति। यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं

---

इति योऽर्थः। **तदाहेति।** अयमेव यत्सभायामिति मन्त्रभागः प्रतिपादयतीत्यर्थः। यदिन्द्रिय इतीन्द्रियपदस्य देवसङ्घपरत्वमाह—**यदिन्द्रिय इति।** 'इन्द्रिये' इन्द्रियसम्बन्धिनी देवसमूहे निमित्तभूते सति यदेनः क्रियत इति मन्त्रभागस्यार्थः। **देवत्रेति।** 'देवत्रा' देवेषु 'देवमनुष्य'–(पा.सू. ५.४.५६) इत्यादिना सप्तम्यर्थे त्राप्रत्ययः। तदुत्तरभागमनूद्य व्याचष्टे—**यदेन इति।** ग्रामादिस्थानेषु यत् पापं वयं 'चकृम' कृतवन्तः, 'तत्' पापम् 'इदम्' इदानीं करम्भपात्रलक्षणेन हविषा 'अवयजामहे 'समर्पयामः 'स्वाहा'–इति निपातो दानार्थे, सुहुतमिदमस्त्विवति मन्त्रभागस्यार्थः। **तस्मात् सर्वस्मादित्यादि।** कृतस्यैनसोऽवयजनं नाम 'तस्मात् सर्वस्मात्' 'प्रमोचनं' विश्लेषः। ग्रामारण्यादिस्थानभेदेन बहुविधस्यैनसः सङ्ग्रहाय सर्वस्मादिति विशेषणम्॥२५॥

यजमानस्य मन्त्रजपं विधत्ते—**अथेति।** 'अथ'–शब्दो होमानन्तर्ये, 'ऐन्द्रीम्' इन्द्रदेवताकाम्, 'मरुत्वतीं' मरुत्वच्छब्दयुक्ताम्, 'मो षूण इन्द्र'–इत्यादिकामृचं यजमानो जपेदित्यर्थः। उक्तं हि सूत्रकृता—'मो षू ण इति यजमानो जपति'–

---

'यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा' (यजु. ३.४५)। (अर्थ–) 'जो कुछ पाप हमने किये उसके अपनोदन के लिये हम करम्भ-पात्रों की आहुति देते हैं'। तात्पर्य यह है कि जो कुछ पाप हमने विभिन्न अवस्थाओं में किये हैं उन सबसे हम मुक्ति पाने की प्रार्थना करते हैं॥२५॥

करम्भ-पात्रों के होमानन्तर यजमान इन्द्र और मरुत् प्रतिपादक मन्त्र पढ़ता है।

मरुतः पाप्मानं व्विमेथिरे तद्धेक्षाञ्चक्रऽइमे ह मे प्रजा न व्विमथ्नीरन्निति॥२६॥

स एतामैन्द्रीं मरुत्वतीमजपत्क्षत्रं वाऽइन्द्रो व्विशो मरुतः क्षत्रं वै व्विशो निषेद्धा निषिद्धा असन्निति तस्मादैन्द्री॥२७॥

मो षू णः। (ऽ) इन्द्रात्र पृत्सु देवैरस्ति हि ष्माते

---

विमेथिरे–तद्धेक्षाञ्चक्रे–'इमे ह मे प्रजा न विमथ्नीरन्' इति॥२६॥

स एतामैन्द्रीं मरुत्वतीमजपत्। क्षत्रं वा इन्द्रः, विशो मरुतः। क्षत्रं वै विशो निषेद्धा। 'निषिद्धा असन्' इति तस्मादैन्द्री॥२७॥

'मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्माते शुष्मिन्नवयाः। महश्चिद्यस्य

---

(का.श्रौ.सू. ५.१३२) इति मरुत्वदिन्द्रदेवताकामृचं प्रशंसति—**यत्रेति। मरुतः पाप्मानमित्यादि।** यदा खलु वरुणपाशेन बद्धाः प्रजाः, तदा तासां यद् बन्धनकारणं पापं मरुतः, 'विमेथिरे' विलोपितवन्तः, 'तत्' तदानीं प्रजापतिः खलु 'ईक्षाञ्चक्रे' पर्यालोचितवान्–'इमे' खलु 'मरुतः मदीयाः 'प्रजाः' न विमथ्नीरन् न विबाधेरन् इति॥२६॥

**स एतामिति।** 'सः' प्रजापतिः पूर्वोक्तरूपं पर्यालोच्य 'एताम् ऐन्द्रीं मरुत्वतीम्' ऋचम् 'अजपत्' अत्रेन्द्रस्य प्रसङ्गमाह—**क्षत्रं वा इति।** 'इन्द्रः' खलु क्षत्रियजातिः, तस्येन्द्रस्य 'विशो मरुतः', क्षत्रियो हि प्रजानां 'निषेद्धा' निरोधकः, तेनेन्द्रेण 'निषिद्धाः' निवारिता भवेयुः। 'इति' अनेनाभिप्रायेणेन्द्रदेवताकाया ऋचो जप इत्यर्थः॥२७॥

तामृचं पठति—**मो षू ण इति।** अस्याश्चायमर्थः हे—'इन्द्र'! 'अत्र' एषु

---

सृष्ट्यारम्भ में जब प्रजापति की प्रजाओं को मरुतों ने पाप से छुड़ाया तब प्रजापति ने सोचा—'अब ये मेरी प्रजा का नाश नहीं करेंगे'॥२६॥

प्रजापति ने इन्द्र और मरुद्गणों के स्तावक-मंत्र को पढ़ा। देवताओं में इन्द्र क्षत्रिय है और मरुद्गण वैश्य (या साधारण लोग)। क्षत्रिय-शासक वैश्यादि लोगों को वश में करने वाले होते हैं। इन्द्र पदघटित मन्त्र को इसलिये पढ़ता है कि राष्ट्र में वैश्यादि प्रजायें वशवर्ती रहें॥२७॥

(मन्त्र–) 'मो षूणऽइन्द्राऽत्र पृत्सु देवैरस्ति हिष्मा ते शुष्मिन्नवयाः। महश्चिद् यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः' (यजु. ३.४६)। (मन्त्रार्थ–) 'हे इन्द्र, युद्धों में मरुद्गण के साथ रहने वाले आप हमारी प्रजाओं का विनाश न करें।

**शुष्मिन्नवयाः। महुश्चिद्युस्य मीढुषो यव्या हविष्मतो मरुतो व्वन्दते गीरिति॥२८॥**

**(त्यु) अथैनां व्वाचयति। (त्यु) अक्रन्कर्म कर्मकृतऽ-इत्युक्रन् हि कुर्म कर्मकृतः सहु व्वाचा मयोभुवेति सह हि**

---

**मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः'–इति॥२८॥**

**अथैनां वाचयति–'अक्रन् कर्म कर्मकृतः'–(वा. ३.४७) इति। अक्रन् हि कर्म कर्म्मकृतः। 'सह वाचा मयोभुवा'–(वा. ३.४७) इति।**

---

'पृत्सु' संग्रामनामैतत्। 'नः' अस्मदीयाः प्रजाः 'मा उ सु' हिंसीः। हे 'शुष्मिन्' बलवन्निन्द्र! 'देवैः' मरुद्भिः सहितस्य 'ते' तव 'अवयाः' अवपूर्वाद् यजेः 'अवयाः–श्वेतवाः'–(पा.सू. ८.२.६७) इति निपात्यते। अवयजनरूप-[1] करम्भपात्रहोमः 'अस्ति' खलु 'महश्चित्' महतोऽपि मीढुषः सेक्तुः यव्याः 'सुपां सुलुक्'–(पा.सू. ७.१.३९) इति भिस् आडादेशः। यवमयैर्हविर्भिः 'हविष्मतः' 'यस्य' इन्द्रस्य 'मरुतः देवान् अनुचरान् 'गीः' स्तुतिरूपा वाक् 'वन्दते' स्तौति 'वदि अभिवादनस्तुत्योः'–इति धातुः (धा.पा.भ्वा.प. ११) 'इति' इत्यस्य पूर्वत्रान्वयः॥२८॥

पत्न्या वाचनं विधत्ते—**अथैनामिति**। तं वाचनीयं मन्त्रं पदशोऽनूद्य व्याचष्टे—**अक्रन् कर्मेति**। कर्म कुर्वन्तीति 'कर्मकृतः' ये यजमानस्यामात्याः, ते हि इदानीं करम्भपात्रहोमरूपं 'कर्म' 'अक्रन्' अकार्षुः अतोऽक्रन् कर्म्मेति मन्त्रभागवाचनं युक्तम्। द्वितीयपादस्यार्थः प्रसिद्ध इत्याह—**सह हीति**। 'मयोभुवः' मयसः सुखस्य भावयित्र्या मन्त्ररूपया वाचा सह एतत् कर्म 'अक्रन्' अकार्षुः।

---

हे बलवान् इन्द्र! आपके लिये मरुद्गण के साथ करम्भ-पात्र की हवि यज्ञ में कल्पित है। हे बहुत दान की वर्षा करने वाले—यव निर्मित महान् हवि के साथ यजमान की मन्त्र-स्तुति आपकी तथा पूज्य मरुतों की प्रशंसा करती है॥२८॥

अब वह (पत्नी से) मन्त्र कहलवाता है—'अक्रन् कर्म कर्मकृतः' (यजु. ३.४४)। (मन्त्रार्थ–) 'कर्म के कुशल ऋत्विजों ने करम्भ-पात्र की आहुति रूप कर्म कर लिया'। आगे कहती है—'सह वाचा मयो भुवा' (यजु. ३.४७)। 'हर्ष-पूर्ण वाणी के साथ' (कर्म किया) (अर्थात् उन्होंने मन्त्र पढ़ते हुये कर्म किया)।

---

१. महीधरस्तु–'अवयाः' अवयुतो यागः 'अस्ति हि स्म' विद्यते खलु। अवपूर्वस्य यजतेरेतद्रूपम्' इत्याह। 'किंच गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन् वन्दते नमस्करोति, 'नमो मरुद्भ्यः इत्येवम्प्रकारया स्तुतेर्नमस्कारात्मकत्वात्' इति व्याचख्यौ।

व्वाचाऽक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वाऽस्तं प्रेत सचाभुव इत्यन्यतो ह्योढया सह भवन्ति तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघनार्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद् गृहा वाऽअस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति॥२९॥

---

सह हि वाचाऽक्रन्। 'देवेभ्यः कर्म कृत्वा'–(वा. ३.४७) इति। देवेभ्यो हि कर्म कृत्वा। 'अस्तं प्रेत सचाभुवः' (वा. ३.४७) इति। अन्यतो ह्योढया सह भवन्ति। तस्मादाह–सचाभुव इति। अस्तं प्रेतेति। जघनार्द्धो वा एष यज्ञस्य–यत्पत्नी। तामेतत् प्राचीं यज्ञं प्रासीषदत्। गृहा वा अस्तम्, गृहाः प्रतिष्ठा। तद्गृहेष्वेवैनामेतत् प्रतिष्ठायां प्रतिष्ठापयति॥२९॥

---

देवेभ्य इत्यादि। हे यजमानस्यामात्या ऋत्विजश्च! यूयं वरुणप्रघासाख्य-करम्भपात्रहोमरूपं च कर्म देवार्थं 'कृत्वा' 'अस्तं' गृहनामैतत्; यजमानस्य गृहान् 'सचाभुवः' पत्न्या सह भवन्तः, सह वर्त्तमानाः 'प्रेत' आगच्छतेति मन्त्रभागस्यार्थः। सचाभुव इत्येतद् व्याचष्टे—अन्यत इति। अन्यस्माद् देशाद् पत्न्यासनलक्षणात् 'ऊढया' आहवनीयसमीपं प्रापितया पत्न्या सह खल्विदानीं वर्त्तन्ते, तस्मात् सचाभुव इत्येतद् यथार्थम्। अस्तं प्रेतेत्यस्याभिप्रायमाह—जघनार्द्धो वा इति। तामेतत् प्राचीमिति यज्ञस्यापरभागेऽवस्थितां 'ताम्' 'एतत्' एतर्हि 'प्राचीं' प्रागू गच्छन्तीम् पूर्वभागसम्बन्धिनीं 'यज्ञं' 'प्रासीषदत्' प्रापीपत् प्रतिप्रस्थाता। सदेर्ण्यन्तात् लुङि चङि रूपम्। गृहा वा अस्तमिति। अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन्निति 'अस्तं गृहाः' 'क्तोऽधिकरणे च'–इति (पा.सू. ३.४.७६) क्तप्रत्ययः। 'एतत्' एतेन 'अस्तं प्रेत'–इति मन्त्रभागवचनेन गृहरूपायामेव 'प्रतिष्ठायां' पुनः 'एनां' स्थापितवान् भवति[1]॥२९॥

---

अब कहती है—'देवेभ्यः कर्मकृत्वा' (यजु. ३.४७)। 'देवों के लिये कर्म करके'; क्योंकि देवों के लिये ही तो कर्म किया गया। अब कहती है—'अस्तं प्रेत सचाभुवः (यजु. ३.४७)। 'हे मित्रवन्महदुपकारक एवं यजमान तथा यजमान पत्नी के सहयोग में रहने वाले ऋत्विग्गण! करम्भ-आहुति के पश्चात् घर जाइये'। 'सचाभुवः' इसलिये कहा कि यजमान पत्नी दूसरी जगह से लाई गयी थी और अब वे उसके साथ है। वह कहती है, 'अस्तं प्रेत' (घर अर्थात् स्व स्थान पर जाइये); पत्नी

---

१. अक्रन्कर्मेत्येनां व्वाचयति प्रतिनयत् (कर्कः)। का.श्रौ.सू. ५.१२३। प्रतिशब्दप्रयोगात्तेनैव मार्गेण प्रतिनयनमिति।

**प्रतिपराणीयोदैति प्रतिप्रस्थाता। सम्मृजन्त्यग्निँ सम्मृष्टेऽग्नौ ताऽउभावेवोत्तरावाघारावाघारयतोऽथाध्वर्युरिवाश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्यै व्वेदेर्होतृषदन ऽउपविशत्युपविश्य**

---

**प्रतिपराणीयोदैति प्रतिप्रस्थाता। सम्मृजन्त्यग्निम्। सम्मृष्टेऽग्नौ ता उभावेवोत्तरावाघारावाघारयतः। अथाध्वर्युरिवाश्राव्य होतारं प्रवृणीते। प्रवृतो**

---

अक्रन् कर्म्मेति मन्त्रवाचनानन्तरं कर्त्तव्यमुपदिशति—**प्रतिपराणीयोदैतीति**। पत्नीं प्रतिनिवर्त्त्य स्वस्थानं प्रापयितुं 'प्रतिप्रस्थाता' 'उदैति' उद्गच्छेत्[1]। इत्थम् 'अग्निमग्नीत्'–इति प्रैषसम्मार्जनयोर्मध्ये कर्त्तव्यमुक्त्वा, तत्सम्मार्जनप्रभृति प्रकृतिवदेवानुष्ठेयमिति दर्शयति—**सम्मृजन्तीत्यादिना**। एकस्मिन्नप्याग्नीध्रे पूजार्थं बहुवचनम्। एवमाहवनीये 'अग्नौ' 'सम्मृष्टे' 'उभावेव' एवकारोऽप्यर्थे। उभावपि अध्वर्युप्रतिप्रस्थातारौ 'उत्तरौ आघारौ आघारयतः' दीर्घधारया जुहुतः हविर्वेद्यग्नीनां भेदः प्रतिप्रस्थातुरपि दक्षिणेऽग्नौ आघारादिकं सर्वं प्रयोगजातमध्वर्युवदनुष्ठेयम्। अत एवतैत्तिरीयकर्म्[2]—'यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति' इति। **अध्वर्युरिवाश्रावयेदित्यादि**। प्रवरप्रयाजाज्यभागादिसम्प्रैषस्य प्रेष्यस्य होतुरेकत्वात् कालभेदाभावाच्चाध्वर्युणैव कृतः प्रैष उभयत्रापि तन्त्रेणोपकरोतीत्येवकाराभिप्रायः। प्रवरादीनां चोदकप्राप्तानामनुवादः। तेषां स्वरूपं प्रथमकाण्डे (श.प. १.५.१) व्याख्यातमिति नेह पठ्यते। प्रतिप्रस्थातुरपि कर्त्तव्यं प्रतिपादयति—**उत्तरस्यै वेदेरित्यादि**। होता सीदत्यस्मिन्निति होतृषदनम्। उत्तरस्या वेद्याः सम्बन्धिनि

---

यज्ञ का निचला भाग है और प्रतिस्थाता ने उसको यज्ञ के पूर्व की ओर बिठलाया है। 'अस्तं' का अर्थ है 'गृह'। घर अर्थात् बैठने की जगह का नाम है। इसलिये वह यजमान-पत्नी को नियत स्थान अर्थात् दक्षिणाग्नि के समीप में बिठलाता है[2] ।।२९।।

प्रतिप्रस्थाता यजमान पत्नी को बिठा कर स्वस्थान पर लौट आता है। अब अध्वर्यु एवं प्रतिप्रस्थाता अग्नि ठीक करते हैं। जब अग्नि ठीक हो जाती है तो दोनों (अध्वर्यु और प्रतिस्थाता) उत्तराघार संज्ञक आहुति देते हैं। फिर अध्वर्यु (आग्नीध्र को) आश्रावण की आज्ञा देकर होता का वरण करता है। वृत हुआ होता उत्तर-वेदी के होतृषदन स्थान में बैठता है और अध्वर्यु एवं प्रतिस्थाता को प्रैष देता है। वे दोनों ही प्रैष सुनकर स्रुचियों को लेकर स्व-स्व वेदी के (दक्षिण की

---

१. आगते सम्मार्जनाद्याज्यभागाभ्याम्। का.श्रौ.सू. ५.१२४। २. Perhaps this part is to be addressed by यज्ञपति to his पत्नी। He asks her to go home from the sacrificial place—एग्लिङ् का यह कथन भ्रमपूर्ण है।

**प्रसौति ता ऽउभावेव प्रसूतौ स्रुचऽ आदायातिक्रामतोऽति-क्रम्याश्राव्याध्वर्युरिवाह समिधो यजेति यज यजेति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः॥३०॥**

**(तोऽ) अथाध्वर्युरिवाहाग्नयेऽनुब्रूहीति। (त्या )आग्नेय-**

---

**होतोत्तरस्यै वेदेर्होतृषदन उपविशति। उपविश्य प्रसौति। ता उभावेव प्रसूतौ स्रुच आदायातिक्रामतः। अतिक्रम्याश्राव्याध्वर्युरिवाह–समिधो यज इति। 'यज यज' इति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः॥३०॥**

**अथाध्वर्युरिवाह–'अग्नयेऽनुब्रूहि' इति–आग्नेयमाज्यभागम्। ता**

---

'होतृषदने' 'स्थाने; न दक्षिणस्या इत्यर्थः। 'प्रसौति' अध्वर्युप्रतिप्रस्थातारौ; प्रयाजान् कर्त्तुं स्रुगादाने प्रेरयति 'षु प्रसवैश्वर्ययोः'–(धा.पा.अ.प. ३१) इति धातुः। 'प्रसूतौ' प्रेरितौ, अनुज्ञातावित्यर्थः। **स्रुच आदायेति**। अध्वर्युप्रति-प्रस्थात्रोरुभयोरपि प्रत्येकं जुहूपभृतौ स्तः, तदभिप्रायेण स्रुच इति बहुवचनम्। 'समिधो यज'–इति प्रथमप्रायजसम्प्रैषः। द्वितीयादिषु 'यज' इत्येव सम्प्रैषः। वीप्सा द्वितीयादिषु सर्वत्र सम्बन्धार्था। 'चतुर्थे चतुर्थे' इति वीप्सा कर्तृद्वित्वापेक्षया। उभावपि 'चतुर्थे चतुर्थे प्रयाजे' अपि हुतमाज्यं जुहूं 'समानयमानौ' प्रतिनयन्तौ 'नवभिः' नवसङ्ख्याकैः 'प्रयाजैः चरतः'[३]॥३०॥

आज्यभागयोरपि प्रतिप्रस्थातृसाहित्यं विधातुमाह—**अथाध्वर्युरिति**।

---

**ओर) आते हैं और 'आश्रावण' की आज्ञा देकर अध्वर्यु (होता से) कहता है— 'समिधो यज'। द्वितीयादि प्रयाजों के सम्प्रैष में नाम न लेकर मात्र—'यज' कहता है। चौथे प्रयाज में (स्रुक् से जुहू में) घी डालता है और इस प्रकार दोनों नौ प्रयाजों को करते हैं॥३०॥**

**अब अध्वर्यु (होता से) कहता है—'अग्नयेऽनुब्रूहि'। (अग्नि के यजन के लिये मन्त्र-पाठ कीजिये)। यह अग्नि के निमित्त आज्यभाग आहुति करने की ओर संकेत है। अब ये दोनों (अध्वर्यु एवं प्रतिस्थाता) ध्रुवा के आज्य में से चार बार लेकर (वेदि को लाँघते हुए यजति-स्थान पर) चले जाते हैं। (उत्तर की ओर) यजति-**

---

१. स्रुक्पाणिरास्ते प्रतिप्रस्थाता। का.श्रौ.सू. ५.१२५। २. घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पंचप्रयाजान्तसमिद्धतमे। यजयजेति शेषम्। (का.श्रौ.सू. २.३५-३६)। ३. नवप्रयाजं नवानुयाजं वैश्वदेवं पर्व। वरुणप्रघासा महाहविश्च (का.श्रौ. ५.३२-३३)।

मुाज्यभागं तौऽउभुावेव चतुराज्यस्यावदायुातिक्रामतोऽतिक्रुम्या-श्रुाव्याध्वर्युरिवाहाग्निं यजेति ताऽउभुावेव व्वुषट्कृते जुहुतः॥३१॥

(तोऽ) अुथाध्वर्यूरिवाह सुोमायुानुब्रूहीति। सौम्यमुाज्यभागं ताऽउभुावेवु चतुराज्युस्यावदायुातिक्रामतोऽतिक्रुम्याश्रुाव्याध्वर्यु-रेवाह सुोमं यजेुति ताऽउभुावेव व्वुषट्कृते जुहुतः॥३२॥

(स्त) तद्यत्किुञ्च व्वाचुा कर्तुव्यम्। (म) अध्वर्यूरिव

---

उभावेव चतुराज्यस्यावदायातिक्रामतः। अतिक्रम्याश्राव्याध्वर्युरिवाह–'अग्निं यज' इति। ता उभावेव वषट्कृते जुहुतः॥३१॥

अथाध्वर्युरिवाह–'सोमायानुब्रूहि' इति–सौम्यमाज्यभागम्। ता उभावेव चतुराज्यस्यावदायातिक्रामतः। अतिक्रम्याश्राव्याध्वर्युरिवाह–'सोमं यज' इति। ता उभावेव वषट्कृते जुहुतः॥३२॥

तद्यत् किञ्च वाचा कर्त्तव्यम्–अध्वर्युरेव तत् करोति, न प्रतिप्रस्थाता।

---

उभावेवेति। उभावपि अध्वर्युप्रतिप्रस्थातारौ ध्रौवस्य 'आज्यस्य' सकाशात् 'चतुरवदाय' जुह्वां चतुर्गृहीत्वेत्यर्थः। वषट्कृते जुहुत इति। एकस्मिन्नेव वषट्कारे उभावपि स्वस्वाहवनीये जुहुत इत्यर्थः॥३१॥

अथाध्वर्युरिवाह सोमायेत्यादि। एतेन द्वितीयाज्यभागस्यानुष्ठानप्रकारः प्रतिपादितः॥३२॥

सामिधेनीप्रैषादौ 'आश्राव्य' आश्रावणे चाध्वर्युरिवेति तत्र तत्र यत् प्रसङ्गत उक्तम्, तदिदानीं विधत्ते—तद्यदिति। 'यत्' किमपि आश्रावणादिकं 'वाचा

---

स्थान पर जाकर अध्वर्यु आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—'अग्निं यज'। मन्त्रपाठान्तर होता के 'वौषट्' शब्दोच्चारण के साथ वे दोनों आहुतियाँ देते हैं॥३१॥

अब पुनः अध्वर्यु कहता है—'सोमाय अनुब्रूहि' (सोम देवता के लिये हवि-प्रदानार्थ मन्त्रपाठ कीजिये)। यह सोम देवता के निमित्त आज्यभाग आहुति की ओर संकेत है। अध्वर्यु और प्रतिस्थाता ध्रुवास्थित आज्य में से चार बार स्रुचि में घृत लेकर वेदि के यजति-स्थान पर आकर अध्वर्यु 'आश्रावण' प्रैष अग्नीध्र को देकर होता से कहता है—'सोमं यज'। तब मन्त्रपाठान्तर होता के 'वौषट्' शब्दोच्चारण के साथ दोनों लोग आहुतियाँ डालते हैं॥३२॥

यहाँ जो कुछ वाणी से कथनीय है उसे अध्वर्यु ही कहता है, न कि

तुत्करोति नु प्रतिप्रस्थाता तद्युदध्वर्युरिवाश्रावयतीहैव यत्र वषट् क्रियुते॥३३॥

कृतानुकर ऽएवु प्रतिप्रस्थातुा। क्षत्रं वै व्वुरुणो व्विुशो मरुतस्तुत्क्षत्रायैवैतद्विशं कृतानुकरामुनुवर्त्मानं करोति प्रत्युद्या-

---

तद्यदध्वर्युरिवाश्रावयति इहैव यत्र वषट् क्रियते॥३३॥

कृतानुकर एव प्रतिप्रस्थाता। क्षत्रं वै वरुणो, विशो मरुतः। तत् क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं

---

कर्त्तव्यं' वागिन्द्रियसाध्यमिति, 'तत्' 'अध्वर्युरिव' कुर्यात्। 'प्रतिप्रस्थाता' तूष्णीं क्रियमाणमनुतिष्ठेत्, आश्रावणादिकं वाचा न प्रयुञ्जीत। इमामेव श्रुतिमभिप्रेत्य सूत्रितमापस्तम्बेन—'यत् किञ्च वाचा कर्माणि अध्वर्युरिव तत् कुर्यात्' (आप.श्रौ.सू. ८.५.१७) इति। अस्य नियमस्य प्रयोजनमाह—तद्यदिति। 'यत्र' उत्तरस्यां वेद्यां 'वषट् क्रियते' होत्रा वषट्कारः प्रयुज्यते। 'इहैव' अस्मिन्नेव स्थाने 'अध्वर्युरेक एव आश्रावयेति॥३३॥

कृतानुकर एवेति। 'प्रतिप्रस्थाता' अध्वर्युणा प्रथमं कृतस्य केवलमनुकर्मैव भवति न त्वासां पृथगाश्रावणं कुर्यात्। तथा क्षत्राय क्षत्रियाय 'विशं' वैश्यजातिं 'कृतानुकरां' कृतानुकुर्वाणाम् 'अनुवर्त्मानम्'। अनुगमनशीलां 'करोति'। विपक्षे बाधमाह—प्रत्युद्यामिनीमिति। 'यद्' यदि हि अध्वर्युवत् प्रतिप्रस्थातापि

---

प्रतिप्रस्थाता; क्योंकि उत्तर-वेदि में अध्वर्यु द्वारा 'आश्रावण' प्रैष दिया जायगा तथा उत्तर-वेदि में ही होता द्वारा मन्त्रपाठानन्तर 'वौषट्' शब्दोच्चारण किया जायेगा। दक्षिण-वेदि में स्थित प्रतिस्थाता कृतानुकर मात्र रहेगा॥३३॥

वस्तुतः यहाँ प्रतिप्रस्थाता केवल अध्वर्यु के किये का अनुकरण करता है। (उपपत्ति यह है कि–) वरुण क्षत्रिय (= शासक) है। मरुद्गण विश या प्रजा (प्रतिनिधि) है। इस अनुष्ठान-विधि द्वारा वह विशों या लोगों को क्षत्रिय का अनुकरणकर्ता (= शासकीय आदेश पालक) बनाता है। यदि (अध्वर्युवत्) प्रतिप्रस्थाता

---

१. प्रणीतापत्नीसन्नहनाग्निमंथनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्रांगुलिपर्व्वांजनावांतरेडा-भागापरग्न्यवभृथान्नप्रतिप्रस्थाता। का.श्रौ.सू. ५.११० न करोतीत्यर्थः।

मिनीᳪ᳭ह क्षत्राय विशं कुर्याद्यदुपि प्रतिप्रस्थाताऽऽ-श्रावयेत्तुस्मान्नु प्रतिप्रस्थाताुऽऽश्रावयति॥३४॥

पाणावेवु प्रतिप्रस्थाता। स्रुचौ कृत्वोपास्तेुऽथाध्वर्यु-रेवैतैर्हविर्भिः प्रुचरत्याग्नेयेुनाष्टाकपालेन पुरोडाशेन सौम्येुन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन सारस्वतेुन चरुणा पौष्णेुन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन॥३५॥

कुर्याद्। यदपि प्रतिप्रस्थाताऽऽश्रावयेत्। तस्मान्न प्रतिप्रस्थाताऽऽ-श्रावयति॥३४॥

पाणावेव प्रतिप्रस्थाता स्रुचौ कृत्वोपास्ते। अथाध्वर्युरेवैतैर्हविर्भिः प्रचरति–आग्नेयेनाष्टाकपालेन पुरोडाशेन, सौम्येन चरुणा, सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन, सारस्वतेन चरुणा, पौष्णेन चरुणा, ऐन्द्राग्नेन द्वादशकपालेन पुरोडाशेन॥३५॥

पृथगाश्रावणं कुर्यात्, तदा 'क्षत्राय' वैश्यजातिं प्रत्युद्यामिनी' प्रत्युद्यमनशीलां 'कुर्यात्'। तस्मादिति, उक्तार्थानुगमनम्॥३४॥

पाणावेवेति। एवमुभौ अध्वर्युप्रतिप्रस्थातारौ आज्यभागाभ्यां प्रचर्य, 'प्रतिप्रस्थाता' हस्ते एव जुहूपभृतौ धारयन् 'उपास्ते' उपविशति, आ पयस्याप्रचरणकालात्। 'अध्वर्युः' तु 'एतैः' आग्नेयादिभिः स्ववेद्यामासादितैः 'हविर्भिः 'प्रचरति'। तानि हवींषि परिगणयति—आग्नेयेनेत्यादिना॥३५॥

भी पृथक् 'आश्रावण' करेगा तो क्षत्रिय (= शासक) की प्रतिद्वन्द्विता में वैश्य-वर्ग को खड़ा कर देगा। इसलिये प्रतिप्रस्थाता 'आश्रावणादि' नहीं करता है॥३४॥

(आज्यभाग संज्ञक आहुति के बाद) प्रतिप्रस्थाता जुहू एवं उपभृत् स्रुचियों को हाथ में धारण किये हुए 'पयस्या' की आहुति होने तक बैठा रहता है। इधर उत्तर-वेदि में अध्वर्यु आसादित हवियों की आहुतियाँ करता है—अग्नि की आठ कपाल वाले पुरोडाश की आहुति, सोम की चरु से आहुति, सविता की बारह कपालों या आठ कपालों के पुरोडाश से आहुति, सरस्वती की चरु से आहुति, पूषा की चरु से तथा इन्द्र-अग्नि की बारह-कपालों के पुरोडाश से आहुति॥३५॥

१. कृतानुकरोऽन्यत्र दक्षिणस्याम्। का.श्रौ.सू. ५.१११। २. स्रुक्पाणिरास्ते प्रतिप्रस्थाता। का.श्रौ.सू. ५.१२५। ३. हविर्भिश्चरति। अध्वर्युः। का.श्रौ.सू. ५.१२६।

**(ना) अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ व्विपरिहरतः। स यो मेषो भवति मारुत्यां तं व्वारुण्यामवदधाति या मेषी भवति व्वारुण्यां तां मारुत्यामवदधाति तद्यदेवं व्विपरिहरतः क्षत्रं व्वै व्वरुणो व्वीर्यं पुमान्वीर्य्यमेवैतत्क्षत्रे धत्तोऽवीर्य्या वै स्त्री व्विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुतस्तस्मादेवं व्विपरिहरतः॥३६॥**

---

**अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः। स यो मेषो भवति मारुत्यां–तं वारुण्यामवदधाति। या मेषी भवति–वारुण्यां–तां मारुत्यामवदधाति। तद् यदेवं विपरिहरतः। क्षत्रं वै वरुणो वीर्यं पुमान्, वीर्यमेवैतत् क्षत्रे धत्तः। अवीर्य्या वै स्त्री, विशो मरुतः, तदवीर्यामेवैतद्विशं कुरुतः। तस्मादेवं विपरिहरतः॥३६॥**

---

**अथैताभ्यामित्यादि।** एवमैन्द्राग्नपर्यन्तैः षड्भिर्हविर्भिरिष्ट्वा 'अथैताभ्यां' वारुणीमारुतीभ्यां 'पयस्याभ्यां' 'प्रचरिष्यन्तौ' यज्ञं तावध्वर्युप्रतिप्रस्थातारौ मेषमेष्यौ 'विपरिहरतः'। तदेव विपरिहरणं दर्शयति—**स य इति।** 'सः उत्तरस्यामेव पयस्यायां मेषीम्'–(श.प. २.५.१७) इत्यादिना विधानात् 'वारुण्यां मेषी' स्यात् 'मारुत्यां मेषः'। तत्र यो मारुत्यां मेषो भवति, तं तत आहृत्य वारुण्यां स्थापयेत्। या च मेषी वारुण्यां, तां तत आहृत्य मारुत्यां स्थापयेत्। तदेतद् विपरिहरणमनूद्य स्तौति—**तद्यदेवमिति।** मेषो हि पुंरूपत्वाद् वीर्यरूपः; वरुणश्च क्षत्रियजातिः; तस्मिन् क्षत्रियमेषस्य निधानात् 'वीर्यमेव एतत् धत्तः 'अवीर्या' वीर्यं सामर्थ्यम्, तद्रहिता खलु 'स्त्रीः' मरुतश्च वैश्यजातिः। मारुते हविषि स्त्रीपशोर्मेष्या निधानात् तां वैश्यजातिम् 'अवीर्यां' वीर्यरहितामेव कुरुतः॥३६॥

---

**(उपर्युक्त छः हवियों के यजन के पश्चात्) अब वरुण तथा मरुद् देवों के निमित्त पयस्यायाग करते समय वे दोनों (अध्वर्यु और प्रतिप्रस्थाता) मेष और मेषी को बदल लेते हैं। जो मेष मरुतों के पयस्या-पात्र में था उसे वरुण के पयस्या-पात्र में रख देता है तथा जो वरुण के पयस्या-पात्र में मेषी थी उसे मरुतों के पयस्या-पात्र में रख देता है। यह परिवर्तन इसलिये करते हैं कि वरुण क्षत्रिय (= शासक) है। पुरुष-शक्ति (का प्रतीकभूत मेष) है। इस प्रकार वे क्षत्रिय में शक्ति स्थापित कराते हैं। स्त्री अपेक्षाकृत न्यून शक्ति होती है। मरुद्गण वैश्य जातीय (विश) हैं। इस प्रकार (मरुद्गणों के पयस्या-पात्र में 'मेषी' रखकर) वह राष्ट्र की वैश्य जाति को शासन के अधीन करते हैं। इस प्रयोजन से वे इस प्रकार बदलते हैं॥३६॥**

---

१. पयस्याप्रचरणकाले मेषी व्यतिहरतः। का.श्रौ.सू. ५.१२७।

(तो३) अथाध्वर्युरिवाह व्वरुणायानुब्रूहीति। स ऽउपस्तृणीतऽआज्यमथास्यै व्वारुण्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषमवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यतिक्रम्याश्राव्याह व्वरुणं यजेति व्वषट्कृते जुहोति॥३७॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा। दक्षिणेन प्रतिप्रस्थातुर्व्वा-

---

अथाध्वर्युरिवाह–'वरुणायानुब्रूहि' इति। स उपस्तृणीत आज्यम्। अथास्यै वारुण्यै पयस्यायै द्विरवद्यति। सोऽन्यतरेणावदानेन सह मेषमवदधाति। अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति। अतिक्रम्याश्राव्याह 'वरुणं यज' इति, वषट्कृते जुहोति॥३७॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह–

---

विपरिहरणानन्तरं वारुण्याः पयस्यायाः प्रचरणं विधत्ते—अथाध्वर्युरिति। वरुणायानुब्रूहीति। होतारं प्रत्यनुवाक्यार्थं सम्प्रैषमुक्त्वा, जुह्वामुपस्तीर्य, 'अस्यै वारुण्यै' षष्ठ्यर्थे चतुर्थी, वारुण्याः पयस्यायाः 'द्विरवद्यति'। 'सः' अवद्यन्नध्वर्युः 'अन्यतरेण' पूर्वेण उत्तरेण वा 'अवदानेन' 'सह' कृत्स्नं 'मेषं' स्रुचि 'अवदधाति' पुनरभिघार्य अवत्तप्रदेशे हविःप्रत्यञ्जनं कुर्यात्। स ततोऽतिक्रमणादीनि प्रकृतिवत् कुर्यादित्यर्थः॥३७॥

प्रतिप्रस्थातुर्मारुत्याः पयस्यायाः प्रचरणे विशेषमाह—सव्ये पाणाविति।

---

अब अध्वर्यु (होता से) कहता है—'वरुणाय अनुब्रूहि'। 'वरुण देवता के लिये हविः प्रदानार्थ मन्त्रपाठ कीजिये'। एतदनन्तर वह जुहू में आज्य का थोड़ा अंश (उपस्तरण) डालता है। तदनन्तर वरुण की पयस्या में से दो बार भाग लेकर इनमें से किसी भाग के साथ मेष को भी स्रुचि में रखता है। अब उन पर घी छोड़ता है तथा जहाँ से पयस्या भाग लिये गये उस स्थान पर घृत-सेचन कर देता है। फिर जुहोति-स्थान पर आ जाता है। इसके पश्चात् अध्वर्यु आश्रावण-प्रैष देकर होता से कहता है—'वरुणं यज'। (मन्त्रपाठानन्तर होता के 'वौषट्' शब्दोच्चारण के साथ) आहुति देता है॥३७॥

(मरुद्गणों के निमित्त पयस्या-याग के समय विशेष यह है कि–) अध्वर्यु बायें हाथ में दोनों स्रुचियों को लेकर दाहिने हाथ से प्रतिप्रस्थाता के वस्त्र का स्पर्श करते

---

१. अन्यतरेणावदानेन सह मेषम्। का.श्रौ.सू. ५.१२८।

सोऽन्वारभ्याह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीतऽआज्यं प्रतिप्रस्थाताऽथास्यै मारुत्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषी मवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यथाध्वर्युरेवाश्राव्याह मरुतो यजेति व्वषट्कृते जुहोति॥३८॥

(त्य) अथाध्वर्युरेव कायेन। (नै) एककपालेन पुरोडाशेन

'मरुद्भ्योऽनुब्रूहि' इति। उपस्तृणीत आज्यं प्रतिप्रस्थाता। अथास्यै मारुत्यै पयस्यायै द्विरवद्यति। सोऽन्यतरेणावदानेन सह मेषीमवदधाति। अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति। अथाध्वर्युरेवाश्राव्याह–'मरुतो यज' इति, वषट्कृते जुहोति॥३८॥

अथाध्वर्युरेव कायेनैककपालेन पुरोडाशेन प्रचरति। कायेनैककपालेन

स्वकीये 'स्रुचौ' जुहूपभृतौ अध्वर्युः आत्मीये 'सव्ये पाणौ' कृत्वा, 'दक्षिणेन प्रतिप्रस्थातुः' 'वासोऽन्वारभ्य', 'मरुद्भ्योऽनुब्रूहि'–इति होतारं प्रतिप्रेष्य उपस्तरणादिकं प्रतिस्थाता कुर्यात्। **सोऽन्यतरेणेति**। सः प्रतिप्रस्थाता पूर्वेणोत्तरेण वाऽवदानेन सह कृत्स्नं मेषे स्रुचि अवदध्यात्। ततो मेषीं वारुण्या प्रत्यञ्जनेनेति। ततः प्रतिप्रस्थाता वेदिमतिक्रामति। अनन्तरमध्वर्युरेव तदीयं वासोऽन्वारभ्य 'मरुतो यज' इति ब्रूयात्। होत्रा याज्यान्ते वषट्कृते सति केवलं प्रतिप्रस्थाता दक्षिणे आहवनीये हविर्जुहोति, तानु किञ्चिद् वाचाप्याहरेत्। एतत् सर्वं सङ्गृह्य कात्यायनेन सूत्रितम्–'पयस्याप्रचरणकाले मेषौ व्यतिहरतः, अन्यतरेणावदानेन सहमेषं, सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योनुवाचयति, वारुणीवदवदानम्—इति (का.श्रौ.सू. ५.१२७-१३०)॥३८॥

कायेन हविषा प्रचरणं विधत्ते—**अथेति**। प्रधानयागानन्तरमनुष्ठेयं स्विष्ट-

हुए कहता है—'मरुद्भ्योऽनुब्रूहि'। 'मरुतों के लिये हविः प्रदानार्थ मन्त्रपाठ कीजिये'। अब प्रतिप्रस्थाता जुहू में आज्य का थोड़ा अंश डालकर (= उपस्तरण) मरुतों के निमित्त पयस्या से दो बार भाग काटकर किसी एक अवदान के साथ मेषी को भी रखता है और पुनः ऊपर से घी छोड़ता है। जहाँ से दो बार पयस्या के भाग काटे गये थे वहाँ आज्य छोड़ता है और (दक्षिण की ओर) जुहोति-स्थान पर चला आता है। अब अध्वर्यु आश्रावण-प्रैष देकर होता से कहता है—'मरुतो यज'। मन्त्रपाठानन्तर होता के 'वौषट्' शब्दोच्चारण के साथ आहुति देता है॥३८॥

तत्पश्चात् अध्वर्यु 'क' (= प्रजापति) के एक कपाल-पुरोडाश का याग करता

प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्युरिवाहाग्नये स्विष्टकृतेऽनुब्रूहीति स सर्व्वेषामेव हविषामध्वर्युः सकृत्सकृदुवद्यत्यथैतस्याऽएव पयस्यायै प्रतिप्रस्थाता सकृदुवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयतस्ताऽउभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरिवाहाग्निᳲ स्विष्टकृतं यजेति ता ऽउभावेव वषट्कृते जुहुतः॥३९॥

---

पुरोडाशेन प्रचर्याध्वर्युरेवाह—अग्नये स्विष्टकृतेऽनुब्रूहि' इति। स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यति। अथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्यति। अथोपरिष्टाद् द्विराज्यस्याभिघारयतः। ता उभावेवातिक्रामतः। अतिक्रम्याश्राव्याध्वर्युरेवाह—'अग्निं स्विष्टकृतं यज' इति। ता उभावेव वषट्कृते जुहुतः॥३९॥

---

कृदादिप्रयोगजातं सर्वमनुक्रामति—**अध्वर्युरेवाहाग्नये स्विष्टकृत इत्यादिना**। **'अनुब्रूहि—' इति**। स्विष्टकृद्यागस्य पुरोऽनुवाक्याप्रैषः। अनुठितं प्रधानयागं न्यूनातिरेकदोषपरिहारेण स्विष्टं शोभनं यज्ञं करोतीति स्विष्टकृत्।

**स सर्वेषामेवेति**। आग्नेयादि—कार्यान्तानाम् सकृत्सकृदिति। प्रधानयागस्य। द्विरवदान-प्रसक्तिं वारयति—**एतस्या एवेति**। 'एतस्याः' मारुत्याः पयस्यायाः 'एव' हविषः सकाशात् स्विष्टकृदर्थं 'सकृत्' एव अवद्येत्, नान्यस्मादित्येवकारार्थः। चतुरवदानसम्पत्तये अभिघारणस्य द्वित्वं विधत्ते—**अथोपरिष्टादिति**। 'द्विः क्रियाभ्यावृत्तिगणनेऽर्थे, 'द्वित्रिचतुर्भ्यःसुच' (पा.सू. ५.४.८१)—इति द्विशब्दात् सुच्॥३९॥

---

है। 'प्रजापति' के एक कपाल-पुरोडाशयाग करने के बाद अध्वर्यु होता से कहता है—'अग्नये स्विष्टकृतेऽनुब्रूहि'। 'स्विष्टकृत अग्नि के निमित्त हविः प्रदानार्थ मन्त्रपाठ कीजिये'। अब अध्वर्यु सभी हवियों में से एक-एक भाग जुहू में लेता है और प्रतिप्रस्थाता भी उसी पयस्या में से एक भाग अपनी जुहू में लेता है। अब वे ली गई हवियों पर दो बार घी छोड़ते हैं और दोनों (दक्षिण की ओर) जुहोति-स्थान पर आते हैं। अध्वर्यु 'आश्रावण' का प्रैष देकर होता से कहता है—'अग्निं स्विष्टकृतं यज'। मन्त्रपाठानन्तर होता द्वारा 'वौषट्' शब्दोच्चारण के साथ वे दोनों आहुति देते हैं॥३९॥

---

१. हविर्विभाग उभौ [illegible] (का.श्रौ. ५.१२.१४)। २. [illegible] ३९—१९ द्रष्टव्यम्।

(तु॒ोऽ) अ॒थाध्वर्यु॒रेव॒ प्राशित्रम॒वद्यति। (ती॒) इ॒डाꣳ-समवद॒ाय प्रतिप्रस्थ॒ात्रेऽतिप्र॒जिहीते तत्र॒ापि प्रतिप्रस्थात॒ा मारुत्यै॒ पय॒स्यायै द्विरभ्य॒ुवद्यत्य॒थोप॒रिष्टाद् द्वि॒राज्यस्याभिघारयत्युपह्ू॒य मार्जयन्ते॥४०॥

(न्ते॒ऽथा) अ॒थाध्वर्यु॒रिवाह ब्र॒ह्मन्प्र॒स्थास्यामि। समि॒ध-

अथाध्वर्युरेव प्राशित्रमवद्यति। इडां समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते। तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। उपहूय मार्जयन्ते॥४०॥

अथाध्वर्युरिवाह–'ब्रह्मन् प्रस्थास्यामि' समिधमाधाय अग्निमग्नीत्

**अथाध्वर्युरेव प्राशित्रमिति।** प्रतिप्रस्थातुः प्राशित्रावदानं नास्तीत्येवकारार्थः। तस्य पयस्यारूपहविषः सान्नाय्यविकृतित्वात् प्रकृतौ सान्नाय्यात् प्राशित्रावदान-स्यादर्शनादित्यभिप्रायः। **इडां समवदायेति।** सर्वेभ्यो हविर्भ्यः सम्भूय एकस्मिन्निडापात्रे अवद्यादित्यर्थः। **अतिप्रजिहीत इति।** उत्तरां वेदिमतिक्रमय्य तदिडापात्रं प्रगमयेदित्यर्थः। 'ओहाङ् गतौ' (धा.पा.जु.प. ७) इत्यस्मात् अन्तर्णीतण्यर्थाल्लटि रूपम्–'भृञामित्'–(पा.सू. ७.४.७६) इति अभ्यास-स्येत्त्वम्। **मारुत्यै पयस्याया इति,** षष्ठ्यर्थे चतुर्थी। **द्विराज्यस्याभिघारयतीति।** अध्वर्युरेव, न प्रतिप्रस्थाता॥४०॥

**अथाध्वर्युरिवाह ब्रह्मन् प्रस्थास्यामीत्यादि।** इडोपह्वानादिकं प्रकृतिवदेव

अब अध्वर्यु प्राशित्र (= ब्रह्मा ऋत्विज के भाग) हेतु पुरोडाशादि हवियों से एक-एक हिस्सा लेता है। ब्रह्मा के निमित्त लिये गये इन हविर्भागों को इडापात्री में रख उत्तर-वेदी से जाकर प्रतिप्रस्थाता को सौंपता है। प्रतिप्रस्थाता उन पर मरुतों के निमित्त बनी पयस्या से दो बार भाग लेकर इडापात्री में रख देता है। अब (अध्वर्यु) उन गृहीत हविर्भागों पर दोबार घृत छोड़ता है और इडोपह्वान के मन्त्रपाठ होने के अनन्तर भागप्राशनादि करके सभी ऋत्विज वेदि के पश्चिम ओर बैठकर कुश-पवित्र द्वारा मार्जन करते हैं॥४०॥

तत्पश्चात् अध्वर्यु कहता है—'ब्रह्मन्! मैं अनुयाज यागार्थ जाता हूँ, अनुज्ञा

१. इडामवदाय प्रतिप्रस्थात्रे प्रयच्छति। का.श्रौ.सू. ५.१३२। तत्र प्रतिप्रस्थाता मारुत्याः। का.श्रौ.सू. ५.१३३। द्विरवद्यतीत्यर्थः।

माधायाग्निमग्नीत्संमृड्ढीति स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयतेऽथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत्स द्वेधा व्यानयत उतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत्स द्वेधा न्यानयते ताउभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह

---

संमृड्ढि' इति। स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयते। अथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति–तत् स द्वेधा व्यानयते। उतो तत्र पृषदाज्यं न भवति–स यदेवोपभृत्याज्यं तत् स द्वेधा व्यानयते। ता उभावेवातिक्रामतः।

---

कृत्वा, अनुयाजार्थमभ्यनुज्ञापकमिमं प्रैषमप्यध्वर्युरेव ब्रूयात्। यत् किञ्च वाचा कर्त्तव्यमध्वर्युरेव तत् करोति'–(श.प. २.५.२.३३) इति प्राक् प्रतिपादितस्यैवायं प्रपञ्चः, प्रैषार्थः प्रकृतावेव वर्णितः। **स स्रुचोरेवेत्यादि**। 'सः' अध्वर्युः 'स्रुचोः' जुहूपभृतोः 'एव' 'पृषदाज्यं' दधिमिश्रमाज्यं 'व्यानयते' विविधमासिञ्चति। पृषदाज्यधानीगतं पृषदाज्यं जुह्वामर्द्धमासिच्य, शिष्टमाज्यमुपभृति आनयेदित्यर्थः। प्रतिप्रस्थातुः पक्षद्वयमाह—**अथ यदीति**। आज्यग्रहणकाले यदि प्रतिप्रस्थाता पृषदाज्यं गृह्णीयात् तदा तत् पृषदाज्यम्, इदानीं स प्रतिप्रस्थाता अध्वर्युवत् जुहूपभृतोः द्विधा व्यासिञ्चेत्। उतो इति पक्षान्तरद्योतने। यदि तु तत्र ग्रहणसमये पृषदाज्यं न गृहीतं भवति, तदा स प्रतिप्रस्थाता उपभृति स्थितं यदेवाज्यं विद्यते, तस्यौपभृतस्याज्यस्य अर्द्धं प्रथमं जुह्वामासिच्य, शिष्टमाज्यं चतुर्थे प्रयाजे आसिञ्चेदित्यर्थः।

आसेचनानन्तरं कर्त्तव्यमतिक्रमणादिकमुपदिशति—**ता उभावेवेत्यादिना**।

---

दीजिये'। तदनन्तर समिधाओं को रखकर कहता है—'हे अग्नीध्र, अग्नि को प्रदीप्त कीजिये'। अब अध्वर्यु स्रुचियों में दधिमिश्रित घृत (पृषदाज्य) को डालता है और यदि प्रतिप्रस्थाता के पास भी पृषदाज्य हो तो उसके दो भाग मानकर, आधा भाग जुहू में तथा शेष भाग उपभृत् संज्ञक स्रुचियों में उड़ेलता है। परन्तु यदि प्रतिस्थाता ने पृषदाज्य-ग्रहण न किया हो तो उपभृत् में जो घी हो उसके दो भाग करके आधा भाग अभी जुहू में तथा शेष आधा चतुर्थ प्रयाजाहुति के समय जुहू में डालता है। अब वे दोनों (दक्षिण की ओर) जुहोति-स्थान पर आते हैं और अध्वर्यु आश्रावण-प्रैष देकर होता से कहता है—'देवान् यज'। इस प्रकार प्रत्येक अनुयाज

---

१. प्रतिप्रस्थाता च। का.श्रौ.सू. ५.१०८। पृषदाज्यं गृह्णातीत्यर्थः। नवा। का.श्रौ.सू. ५.१०९। इति विकल्पः पृषदाज्यग्रहणे।

दे॒वान्यजे॒ति य॒जयजे॒ति चतु॒र्थे॒ चतु॒र्थे॒ऽनुयाजे॒ समान॒यमानौ नव॒भिरनुयाजै॒श्चरतस्तद्यन्न॒वप्रयाजं भ॒वति न॒वानुयाजं त॒दुभय॒त ऽए॒वैत॒द्वरुणपाशात्प्रजाः प्र॒मुञ्चतीत॒श्चोर्ध्वा॒ इतश्चा॒वाचीस्त॒-स्मान्न॒वप्रयाजं भवति न॒वानुयाजम्॥४१॥

ता॒ऽउभा॒वेव॒ सादयित्वा स्रु॒चो॒ व्यूहतः। स्रु॒चो व्यु॒ह्य

अतिक्रम्याश्राव्याध्वर्युरिवाह-'देवान्यज' इति। 'यज-यज' इति चतुर्थे-चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतः। तद्यन्नवप्रयाजं भवति, नवानुयाजम्। तदुभयत एवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति-इतश्चोर्ध्वाः, इतश्चावाचीः। तस्मान्नवप्रयाजं भवति, नवानुयाजम्॥४१॥

ता उभावेव सादयित्वा स्रुचो व्यूहतः। स्रुचो व्युह्य, परिधीन् समज्य

'देवान् यज'-इति प्रथमोऽनुयाजप्रैषः। यजयजेत्यादिसर्वत्रः 'नित्यवीप्सयोः' इति (पा.सू. ८.१.४) यजेत्यस्य द्विर्वचनम्। जौहवेन पृषदाज्येन त्रिरिष्ट्वा चतुर्थे चतुर्थे अनुयाजे औपभृतम् 'समानयमानौ' उभावपि अध्वर्युप्रतिप्रस्थातारौ' नवभिः अनुजायैः' 'चरतः' प्रचरत इत्यर्थः। उभयापेक्षया 'चतुर्थे-चतुर्थे' इति वीप्सा। प्रयाजानुयाजानां तत्सङ्ख्याकत्वं सम्भूय प्रशंसति—**तद्यदिति**। प्रधान-यागात्प्रथममिज्यन्त इति प्रयाजाः, अनु पश्चादिज्यन्त इत्यनुयाजाः। कर्मणि घञि, तावेतौ 'प्रयजानुयाजौ यज्ञाङ्गे' इति (पा.सू. ७.२.६२) निपातनात् कुत्वाभावः। नव प्रयाजा अनुयाजाश्च यस्मिन् इत्युभयत्र बहुव्रीहिः, शिष्टमुक्तार्थम्॥४१॥

अनुयाजानन्तरभावि स्रुग्व्यूहनादिकमपि चोदकप्राप्तमुभाभ्यां कर्त्तव्य-मित्यनुक्रामति—**ता उभावेवेत्यादिना**। **परिधिमभिपद्येति**। मध्यमं परिधि-

में हवि प्रदानार्थ मन्त्रपाठ हेतु 'यज' शब्द घटित प्रैष होता को देता है और जुहू स्थित पृषदाज्य से तीन अनुयाजाहुति करने के बाद चौथे अनुयाज में उपभृत के पृषदाज्य को लेकर अध्वर्यु-प्रतिस्थाता दोनों नौ अनुयाज आहुति करते हैं। नौ प्रयाज और नौ अनुयाज इसलिये किये जाते हैं कि प्रजा को वरुण के उभयतः पाश से छुड़ाता है, अर्थात् ऊपर से और नीचे से। अतएव नौ प्रयाज होते हैं, और नौ अनुयाज॥४१॥

अब वे दोनों जुहू-उपभृत् का व्यूहन (अर्थात् जुहू को पूर्व की ओर तथा

१. स्रुचौ व्यूहतोऽध्वर्यू। का.श्रौ.सू. ५.१३४। अध्वर्युग्रहणं यजमानव्युदासार्थम्। तस्य हि व्यूहनं प्रकृतौ वैकल्पिकं विहितमस्ति।

परिधीन्त्समज्य परिधिमभिपद्याश्राव्याध्वर्युरिवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकꣳ होता प्रतिपद्यतेऽथैता ऽउभावेव प्रस्तरौ समुल्लुम्पत ऽउभावनुप्रहरत उभौ तृणेऽअपगृह्योपासाते यदा होता सूक्तवाकमाह॥४२॥

(ह्रा) अथाग्नीदाहानुप्रहरेति। ता ऽउभावेवानुप्रहरत

---

परिधिमभिपद्य, आश्राव्याध्वर्युरिवाह–'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय' इति। सूक्तवाकं होता प्रतिपद्यते। अथैता उभावेव प्रस्तरौ समुल्लुम्पतः, उभावनुप्रहरतः, उभौ तृणे अपगृह्योपासाते–यदा होता सूक्तवाकमाह॥४२॥

अथाग्नीदाह 'अनुप्रहर' इति। ता उभावेवानुप्रहरतः, उभावात्माना

---

मन्वारभ्येत्यर्थः। उक्तं हि कात्यायनेन—'प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषिता दैव्या इति (का.श्रौ.सू. ३.१२१) 'इषिता दैव्या' (श.प. १.८.३.१० भा.) इति सूक्तवाकप्रैषः प्रकृतावेव व्याख्यातः। समुल्लुम्पत इति। 'लुप्लृ छेदने' (धा.पा.तु.उ. १५१) समुच्छिन्तः समुद्गृह्णीत इति यावत्। उभावनु प्रहरत इति। सूक्तवाकेऽनूच्यमाने 'उभौ' अध्वर्युप्रतिप्रस्थातारौ 'अनुप्रहरतः स्वं स्वं प्रस्तरमग्नौ प्रक्षिपत इत्यर्थः। यदा होतेति। 'यदा' खलु होता सूक्तवाकं परिसमापयति॥४२॥

'अथ' अनन्तरम् 'अग्नीत्' आग्नीध्रः 'अनुप्रहर'–'इति' अध्वर्युं प्रति 'आह'

---

उपभृत् को पश्चिम की ओर अपसारण) करते हैं। स्रुचियों के व्यूहन के बाद, जुहूस्थित आज्य से परिधियों का समंत्रक अञ्जन कर प्रथम परिधि का स्पर्श करते हुए 'आश्रावण' प्रैष देकर अध्वर्यु होता से कहता है—'दिव्य-होता लोग भद्र-वाणी कहने के लिये बुलाये गये और मनुष्य होता सूक्तवाक् अर्थात् प्रार्थना के लिये सूक्त बोलें'। अब होता सूक्तवाक् कहता है। इधर दोनों (अध्वर्यु-प्रतिस्थाता) स्व-स्व-प्रस्तर (कुश-गुच्छा) में से एक कुश बचाकर सूक्तवाक् पाठ के अन्त में प्रस्तर को आहवनीय (अग्नि में) डाल देते हैं। तदनन्तर दोनों बचे हुए एक तृण को लेकर (अग्नि के पास) बैठे रहते हैं और जब होता सूक्तवाक् को पूर्णतया समाप्त कर लेता है–॥४२॥

तब अग्नीध्र कहता है—'अनुप्रहर (कुश डाल दें)'। तदनन्तर दोनों तृण अग्नि

ऽउभावात्मना ऽउपस्पृशेते॥४३॥

(ते अ) अथाह संवदस्वेति। (त्य) अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यध्वर्यु-रेवैतदाह ता ऽउभावेव परिधीननुप्रहरत ऽउभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः॥४४॥

---

उपस्पृशेते॥४३॥

**अथाह—'संवदस्व' इति। अगानग्नीद्—अगन्, श्रावय, श्रौषट्, 'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि'—इति अध्वर्युरेवैतदाह। ता उभावेव परिधीननुप्रहरतः, उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः॥४४॥**

---

उभावेवेति। यद्यप्यनुप्रहरेत्येकवचनेनाध्वर्युरिव प्रेर्यते तथापि कृतानुकरत्वात्[1] प्रतिप्रस्थातुरपि तृणानुप्रहरणं विद्यते इत्यर्थः। **आत्मना[2] उपस्पृशेते इति।** 'चक्षुष्पा' (वा.सं. २.१५) इति मन्त्रेण। तथा च सूत्रितम्—'चक्षुष्पा इत्यात्मानमालभते' इति (का.श्रौ.सू. ३.१३३)॥४३॥

संवदस्वागानग्नीदित्यादीनामुक्तिप्रत्युक्तिरूपं यदस्ति तदप्याग्नीध्रस्य अध्वर्युणोक्तेनैवेत्यभिप्रेत्याह—**अथाहेति।** 'अथ' अनन्तरं 'संवदस्व' 'इत्याह' आग्नीध्रः। तच्च संवदनमुक्तिप्रत्युक्तिरूपमनुक्रामति—**अगानिति।** ते च मन्त्राः प्रकृतौ व्याख्याताः। तेषु च विभागः सूत्रकृता दर्शितः—(श.प. १.८.३.२० भा.) एतेषां 'संवदस्वागाञ्छ्रौषडित्यग्नीच्छेषमितरोव्यत्यासं ब्रूतः (का.श्रौ.सू. ३.१३४)। इति **स्वगा दैव्या'** इति शंयुवाकप्रैषमध्वर्युरिव ब्रूयात्। परिधिप्रहरणादिकं तूभाभ्यामेवानुष्ठेयम्। **उभौ स्रुच इत्यादि।** 'सम्प्रगृह्य' सम्यग् गृहीत्वा विमोचनार्थं स्फ्ये 'सादयतः'॥४४॥

---

में डालते हैं और अपने शरीर का स्पर्श करते हैं॥४३॥

तत्पश्चात् आग्नीध्र अध्वर्यु से कहता है—'(मुझसे) संवाद कीजिये'। अध्वर्यु कहता है—'आग्नीध्र! क्या वह (प्रस्तर तृण प्रतीकभूत यजमान स्वर्गलोक) गया'? (अग्नीत् उत्तर देता है-) 'हाँ वह गया'। 'अध्वर्यु—अग्नीत्! यह होता को भी सुनाओ'। अग्नीत्—उन्होंने सुन लिया। अध्वर्यु—'दैव-होता विदा हों। मनुष्य-होता का कल्याण हो'। अब अध्वर्यु होता से कहता है—'शान्ति एवं कल्याणकारी मन्त्रपाठ कीजिये'। एतदनन्तर अध्वर्यु-प्रतिस्थाता स्व-स्व आहवनीय खर की

---

१. 'कृताऽनुकरोऽन्यत्र दक्षिणस्याम्' इति (का.श्रौ.सू. ५.१११) श.प.ब्रा. २.५.२.३४ कं. भाष्ये च द्रष्टव्यम्। २. 'आत्मानमुपस्पृशेते' इति ख.।

(तो) अथाध्वर्युरिव प्रतिपरेत्य। पत्नीः संयाजयत्युपास्त ऽएव प्रतिप्रस्थाता पत्नीः संयाज्योदेत्यध्वर्युः॥४५॥

(स्त्री) त्रीणि समिष्टयजूꣳषि जुहोति। तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्ये व्वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां ते ऽएवात्रापि स्यातामथास्यै व्वारुण्यै पयस्यायै

---

**अथाध्वर्युरिव प्रतिपरेत्य पत्नीः संयाजयति। उपास्त एव प्रतिप्रस्थाता। पत्नीः संयाज्योदेत्यध्वर्युः॥४५॥**

**त्रीणि समिष्टयजूंषि जुहोति। तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति। तद् ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्याताम्–ते एवात्रापि स्याताम्।**

---

**अथाध्वर्युरिवेति।** **प्रतिपरेत्येति।** आहवनीयदेशात् प्रतिनिवृत्य गार्हपत्यसमीपं गत्वेत्यर्थः। **उपास्त इति।** पत्नीसंयाजसमये तूष्णीमुपविशेत् प्रतिप्रस्थाता, न तु तस्य तदानीं कृतानुकरत्वमपेक्षितमित्यर्थः। **पत्नीः संयाज्योदेत्यध्वर्युरिति।** पत्नीसंयाजानन्तरमाहवनीयदेशं गत्वेत्यर्थः॥४५॥

**त्रीणि समिष्टयजूंषीति।** तानि च पूर्वस्मिन् वैश्वदेवब्राह्मणे व्याख्यातानि (श.प. २.५.१.२१ भा.) **तूष्णीमेवेति।** प्रतिप्रस्थातुः समिष्टयजुर्होमसमये आत्मीयां स्रुचं तूष्णीमेव दक्षिणाग्नौ प्रगृह्णीयात् स्रुगाप्तमाज्यं धारयेत्। तन्मन्त्रः स्वाहाकारोऽपि वा न विद्यत इत्यर्थः। **तद्ये वैश्वदेवेनेत्यादि।** वैश्वदेवयाजमाने समाप्ते 'यजमानयोः' यजमानपत्न्योर्ये 'वाससी' ते परिहिते भवतः।

वरुणप्रघासाङ्गत्वेनावभृथगमनं विधत्ते—**अथास्या इत्यादि।** या वरुणदेवताका पयस्या तस्याः 'क्षामकर्षमिश्रम्' क्षामोऽतिपाकेन दग्धः पात्रे

---

परिधियों को आहवनीय में डाल देते हैं और दोनों स्रुचियों को मिलाकर स्फ्य पर रख देते हैं॥४४॥

अब अध्वर्यु (गार्हपत्य अग्नि के पास) लौटकर 'पत्नी संयाज' (देव-पत्नियों के लिये होम) करता है। प्रतिप्रस्थाता ठहरा रहता है। अध्वर्यु पत्नी-संयाज करके उत्तर की ओर (आहवनीय के पास) चला जाता है॥४५॥

अब अध्वर्यु तीन समिष्ट-यजुष् संज्ञक आहुतियाँ देता है। दक्षिण-वेदि में प्रतिप्रस्थाता स्रुचि लेकर मौन होकर आहुति देता है। यजमान एवं पत्नी ने जो वस्त्र वैश्वदेवयाग के समय पहने थे वे ही अब भी धारित करेंगे। अब वरुण की

**क्षामकर्षमिश्रमादायावभृथं यन्ति व्वरुण्यं व्वा एतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किञ्चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति॥४६॥**

---

**अथास्यै वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायावभृथं यन्ति वरुण्यं वा एतत्–निर्वरुणतायै। तत्र न साम गीयते, नह्यत्र साम्ना किञ्चन क्रियते। तूष्णीमेवेत्याभ्यवेत्योपमारयति॥४६॥**

---

संसक्तः, 'कृष् विलेखने' (धा.पा.भ्वा.प. १०१५) कृष्यते विलिख्यते इति कर्षः, क्षामश्चासौ कर्षश्चेति क्षामकर्षः, तेन मिश्रं हविः 'आदाय' 'अवभृथम्' उदकं प्रति 'यन्ति' ऋत्विग्यजमानाः, उदकसमीपं गच्छेयुरित्यर्थः। गमनस्य प्रयोजनमाह— **वरुण्यं वेति**। 'एतत्' क्षामकर्षमिश्रं हविः 'वरुण्यम्' वरुणसम्बन्धि, पापदेवतया सम्बद्धमित्यर्थः, 'यो विदग्धः स नैर्ऋतः' (तै.सं. २.६.३.४) इति श्रुतेः। यद्वा पयस्याया वरुणदेवताकत्वात् तद्यागशिष्टं सर्वमपि वरुण्यम्। अतः निर्वरुणतायै वरुणसम्बन्धराहित्याय अवभृथगमनं युक्तमित्यर्थः।

सौमिकावभृथवत् प्रसक्तं सामगानं निषेधति—**तत्र न सामेति**। अवभृथगमनसमये हि 'अग्निष्टपति' इति साम (श.पा. ४.४.५.८) प्रस्तोत्रा गेयम्। 'तत्र' तस्मिन् वरुणप्रघासाङ्गावभृथगमने तन्न गातव्यम्। तदुपपादयति— **न हीति**। सोमयागे हि स्तोत्रादिरूपेण साम्नां प्रयोगात् तदङ्गावभृथगमनेऽपि सामगानमयुक्तम्। 'न' खलु 'अत्र' वरुणप्रघासे 'साम्ना' 'किम्' अपि प्रयोजनं 'क्रियते' अतोऽप्रयुज्यमानस्य साम्नोऽवभृथे अप्रयोग एव युक्त इत्यर्थः। अतः 'तूष्णीम्' अमन्त्रकम् 'एव' अवभृथसमीपम् 'अभ्यवेत्य' 'अवभृथ निचुम्पुण' (वा.सं. ३.४८) इति मन्त्रेण क्षामकर्षमिश्रं हविः 'उपमज्जयति' अप्सु प्रक्षिपति। सूत्रितञ्चेह—'वारुणीनिष्काषेणावभृथं, तूष्णीमेत्याभ्यवेत्य मज्जयत्यवभृथेति' इति (का.श्रौ.सू. ५.१३९.१४०)॥४६॥

---

पयस्या के जले भाग को लेकर अवभृथ-स्नान के स्थान में जाते हैं। क्षामकर्ष (बरतन में लगा जला दूध) की हवि वरुण से सम्बन्धित होती है, अतः वरुणसम्बन्ध-निवृत्ति के लिये यह अवभृथ-स्नान किया जाता है। यहाँ अवभृथ-स्नान गमन के समय साम नहीं गाया जाता; क्योंकि वरुणप्रघासयाग में साम का प्रयोग नहीं किया जाता। अतः अध्वर्यु अमन्त्रक (तूष्णीम्) ही जलाशय के पास जाकर 'अवभृथ निचुम्पुण.' इस मन्त्र से क्षामकर्ष-हवि यजमान-दम्पती जल में डाल देते हैं॥४६॥

**(त्यु) अुवभृथ निचुम्पुण। निचेरुुरसि निचुम्पुणः। अुव देवैुर्देवुकृतमेुनोऽयासिषमुव मुर्त्यैर्मुर्त्यकृतं पुरुुराव्णो देव रिषुस्पाहुीति कुामप्ँ हैते युस्मै कामुयेत तुस्मै दद्यान्न हिु**

---

**'अवभृथ! निचुम्पुण, निचेरुरसि निचुम्पुणः। अव देवैर्देवकृतमेनोऽ-यासिषमव मर्त्यैर्मर्त्यकृतम्। पुरुराव्णो देव रिषस्पाहि'–(वा. ३.४८) इति।**

---

**अवभृथेति।** मन्त्रस्यायमर्थः—सोमलिप्तानि पात्राणि अवाचीनान्यस्मिन् ध्रियन्त इत्यवभृथः। अवपूर्वात् भृञ औणादिकः थक् प्रत्ययः। हे 'अवभृथ'! 'निचुम्पुण' नितरां पुण्यहेतुर्भव पुण कर्मणि शुभे'–(धा.पा.तु.आ. ५२) इत्यस्माल्लोटि व्यत्ययेन द्विर्वचनमभ्यासस्य मुगागमश्चकारादेशश्च। यद्वा, 'चुपमन्दायां गतौ'–(धा.पा.भ्वा.प. ४०४) इत्यस्माल्लोटि वर्णव्यत्यये रूपं ज्ञेयम्। नीचीनं गच्छेत्यर्थः। यतश्च 'निचेरुः' नितरां चरणशीलः 'असि' अतो 'निचुम्पुण' नीचीनं गच्छ। 'देवैः' इन्द्रियैः, तदधिष्ठातृदेवैः 'देवकृतम् एनः' देवविषयं यदेनः कृतमस्ति, अहं तत् 'अवायासिषम्' अवाचीनं प्रापयामि अप्सु प्रक्षिपामीत्यर्थः। 'या प्रापणे'–(धा.पा.अ.प. ३९) इत्यस्माल्लुङि 'यमरमन-माताम्'–(पा.सू. ७.२.७३) इति सगिटौ। तथा मर्त्यैः मनुष्यैः ऋत्विग्भिः 'मर्त्यकृतं' मनुष्यविषये यत् कृतमेनः, तदपि 'अवायासिषम्' हे 'देव' स्वामिन्! अवभृथ! 'पुरुराव्णः' 'पुरुरावणशीलान् बहुविधाक्रोशकारणान्। रौतेरौणादि-कोऽनिण्प्रत्ययः–(उ. ४ पा. २४२ सू.)। यद्वा, 'रा दाने'–(धा.पा.अ.प. ४७) इत्यस्मात् 'आतो मनिन्–क्वनिप्–वनिपश्च'–(पा.सू. ३.२.७४) इति क्वनिप्। पुरु बहुलं संसारदुःखं राति ददातीति पुरुरावा, तस्मात् इन्द्रियहिंसकात् वरुणपाशग्रहलक्षणात् पापात् अस्मान् पाहीति। एवमनेन मन्त्रेण क्षामकर्षमिश्रं हविःशेषं जायापती जुहुतः। तदुक्तं सूत्रकारेण—'जायापतीस्नातोऽमज्जन्ता-

---

यजमान-दम्पती हविः प्रक्षेप के समय जल से प्रार्थना करता है—'अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरु राव्णो देव रिषस्पाहि' (यजु. ३.४८)। (मन्त्रार्थ–) 'हे जलाशय! तू मन्द लहरों (गति) से युक्त है। ज्ञानेन्द्रिय एवं कर्मेन्द्रियों द्वारा जो यज्ञ में देवों के प्रति अपराध हुए हैं उन पापों से हम छूट जायें और मनुष्यों के प्रति जो हमारी इन्द्रियों से अपराध (पाप) हुए हैं उन पापों को हम जल में मज्जित करते हैं, हम कृत पापों से मुक्त हो जायें। हे वरुण देव! हमें पापों से बचाइये'। तदनन्तर (स्नान के समय के वस्त्रों को) यजमान दम्पती मन चाहे किसी (व्यक्ति) को दे देवें, क्योंकि ये

दीक्षितवसने भवतः। स यथाऽहिस्त्वचो निर्मुच्येतैवꣳसर्व्व-स्मात्पाप्मनो निर्मुच्यते॥४७॥

(तेऽथ) अथ केशश्मश्रूप्त्वा। समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं

---

कामं हैते यस्मै कामयेत तस्मै दद्यात्। न हि दीक्षितवसने भवतः। स यथाऽहिस्त्वचो निर्मुच्येतैवं सर्वस्मात् पाप्मनो निर्मुच्यते॥४७॥

अथ केशश्मश्रूप्त्वा समारोह्याग्नी उदवसायेव ह्येतेन यजते। न हि तदवकल्पते–यदुत्तरवेदावग्निहोत्रं जुहुयात्। तस्मादुदवस्यति, गृहानित्वा,

---

वन्योन्यस्य पृष्ठे धावतः'–(का.श्रौ.सू. ५.१४१-१४२) इति। पूर्वयोर्वाससोर्दानं विधत्तेकाममिति[1]। स्नानानन्तरमन्ये वाससी परिधाय। पूर्वपरिधानं निषिद्धम्, 'न दीक्षितवसनं परिदधीत'[2]–इति श्रुतेः। एतद्दानं प्रशंसति—**स यथेति**। 'यथा' खलु 'अहिस्त्वचो निर्मुच्येत', 'एवम्' पूर्वपरिहितवासो दत्त्वा सर्वस्मात् पापादेव यजमानो निर्मुच्यते॥४७॥

अवभृथस्नानानन्तरं केशश्मश्रुवपनं विधत्ते[3]—**अथेति**। केशाश्च श्मश्रूणि च 'केशश्मश्रू' प्राण्यङ्गत्वादेकवद्भावः। 'उप्त्वा' वापयित्वेत्यर्थः। समारोहणपुरस्सरं गृहे प्रत्यागमनं विधत्ते—**समारोह्येति**[4]। 'अग्नी' गार्हपत्याहवनीयौ। **एतेन यजत इति**। वरुणप्रघासाख्येन यागेनेत्यर्थः। **न हि तदिति**। वरुणप्रघास-

---

वस्त्र दीक्षित पुरुष के परिधान योग्य नहीं होते। जैसे साँप केंचुल छोड़ता है, उसी प्रकार यजमान-दम्पती पूर्वपरिहित वस्त्रों को देकर सभी पापों से निर्मुक्त हो जाता है।।४७।।

अब यजमान बाल और दाढ़ी बनवाता है। तदनन्तर गार्हपत्य एवं आहवनीय अग्नियों का अरणियों में समारोप कर आगे की अग्निहोत्रादि क्रियाएँ स्थान-परिवर्तन कर होंगीं; क्योंकि वरुणप्रघास की उत्तर-वेदि में अग्निहोत्रादि करना विहित नहीं है। वरुणप्रघास-याग के स्थान का परित्याग कर घर पर आकर अरणि-मन्थन से

---

१. पूर्व्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् (का.श्रौ.सू. ५.१४४)। अधिकृतेभ्यः ऋत्विग्भ्य इत्यर्थः। २. अन्ये वाससी परिदधाते। का.श्रौ.सू. ५.१४३। द्विवचनात् जायापती। ३. पर्व्वसंस्थासु व्वपनं वा प्रागन्त्यात्। का.श्रौ.सू. ५.३४। ४. गृहेषु पौर्णमासः समारूढनिर्मथितयोस्तथा चेत्। का.श्रौ.सू. ५.४४।

जुहुयात्तुस्मादुदुवस्यति गृहानित्वा निर्मुथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्मास्यान्यथैषु क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदुवस्यति॥४८॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम्॥४॥३॥

इति पञ्चमाध्याये द्वितीयं ब्राह्मणम्॥५॥२॥

---

निर्मथ्याग्नी पौर्णमासेन यजते। उत्सन्नयज्ञ इव वा एषः—यच्चातुर्मास्यानि। अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम्। तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति—तस्मादुदवस्यति॥४८॥

।। इति वरुणप्रघासयागश्चातुर्मास्ये द्वितीयं पर्व ।।

---

निमित्तायामुत्तरवेद्यां 'यत्' अग्निहोत्रहवनम्, न तद् युज्यत इत्यर्थः। यस्मादेवं तस्मात् कारणाद् वरुणप्रघासस्थानादुदवसानं कर्त्तव्यमिति निगमयति—तस्मादिति। समारोपणानन्तरं तस्मात्स्थानान्निष्क्रम्य 'गृहान्' 'इत्वा' गत्वा, 'निर्मथ्य' तत्र 'पौर्णमासेन' यागेन 'यजेत' एतत्प्रतिष्ठाहेतुना स्तौति—उत्सन्नयज्ञ इत्यादिना। दर्शपूर्णमासवच्चातुर्मास्यानामनुष्ठानबाहुल्याभावादुत्सन्नयज्ञत्वम्। अतस्तेषाम[1]प्रतिष्ठाहेतुत्वेन तदनुष्ठाने यजमानस्यापि अप्रतिष्ठा सम्भाव्येत; अतः तस्य प्रतिष्ठायै स्वयं प्रतिष्ठितः पौर्णमासयागः सम्पद्यत इत्यर्थः। तस्मादुदवस्यतीति। वरुणप्रघासदेशान्निष्क्रमणविधेर्निगमनम्[2]॥४८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम्।।२।।५।।२।।

---

अग्नि प्रकट कर पौर्णमासेष्टि-याग करे। चातुर्मास्य-याग एक प्रकार से उत्सन्न यज्ञ (विरलतया अनुष्ठेय होने से अप्रतिष्ठ यज्ञ) है इसके विपरीत पौर्णमास-याग पूर्ण प्रतिष्ठित यज्ञ है। इसलिये वह अन्ततः पूर्ण प्रतिष्ठित यज्ञ द्वारा अपने को स्थापित करता है। अतएव वह चतुर्मास्य याग-स्थल का परित्याग कर स्व-गृह में आ जाता है।।४८।।२।।

।।वर्षाकाल का वरुण-प्रघासपर्व समाप्त।।

❋

---

१. 'मप्रतिष्ठत्वेन' इति पा.। २. आषाढ्यामयं ते योनिरिति समारोह्योदवसाय निर्मथ्य व्वरुणप्रघासाः। (का.श्रौ.सू. ५.१४७)। आ.श्रौ.सू. ८.५-८ कं. १२६ सूत्राणि चेह द्रष्टव्यानि।

व्वरुणप्रघासैर्व्वै प्रजापतिः। प्रजा व्वरुणपाशात्प्रामुञ्चत्ता-ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैष ऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यँ हन्ति तथोऽएव व्विजयते तस्माद्वाऽएष एतैश्चतुर्थे मासि यजते स वै द्व्यमनूचीनाहं यजते॥१॥

## अथ साकमेधपर्व

वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत्। ता अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त। अथैतैः साकमेधैः। एतैर्वै देवा वृत्रमघ्नन्। एतैर्वेव व्यजयन्त। येयमेषां विजितिः ताम्। तथो एवैष एतै पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति, तथो एव विजयते-तस्माद्वा एष एतैश्चतुर्थे मासि यजते। स वै द्व्यहमनूचीनाहं यजते॥१॥

अथ साकमेधाख्यस्य विधित्सितस्य तृतीयस्य पर्वणः पापरूपशत्रुजयहेतुत्वं वक्तुं वृन्तान्तं सङ्कीर्त्तयति—**वरुणप्रघासैरिति**। 'अनमीवाः' रोगरहिताः 'अकिल्विषाः' तन्निदानभूतपापपरिहीनाः। **अथैतैरिति**। वरुणप्रघासानन्तरमनुष्ठेयैः 'एतैः' विधित्सितैः 'साकमेधैः' प्रजापतिः ता एव प्रजा विजितपापा अकरोत्। एतेषां विजयहेतुत्वमाख्यायिकया प्रतिपादयति—**एतैर्वा इति**। 'वृत्रम्' आवरणशीलम्, एतन्नामानमसुरमित्यर्थः। **येयमेषामिति**। 'एषां' देवानां वृत्रहननकर्मणा 'येयं' 'विजितिः' विजयो विद्यते व्यजयन्तेति सम्बन्धः। अथाप्येषां तत्फलसाधनत्वमाह—**तथो एवैष इति**। 'द्विषन्तं' द्वेषणशीलमनर्थकारणं पापरूपं 'भ्रातृव्यं' शत्रुमिति सामानाधिकरण्येन सम्बन्धः। **तथो एव विजयत इति**। तथा हतः पापशत्रुः, तत्सजातीयस्यापि निवृत्त्या सर्वत्र साकमेधयाजिनो विजय एव, न कुत्रचित् प्रतिहतिरित्यर्थः। उक्तमर्थं हेतुतया इदानीं विधत्ते—**तस्मादिति**।

(चातुर्मास्य-याग के) वरुणप्रघास पर्व के द्वारा प्रजापति ने सृष्ट्यारंभ में प्रजा को वरुण के पाश से छुड़ाया था और तब प्रजायें रोगरहित और दोषरहित उत्पन्न हुईं। इन 'साकमेध' की आहुतियों के द्वारा देवों ने वृत्र को मारा और उस महान् विजय को प्राप्त किया जिसको वे इस समय भोग रहे हैं। उसी प्रकार यह (यजमान)

१. 'निःक्षत्रप्रायत्वात्'–इ.पा.।

स पूर्वेद्युः। (२) अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निᳬँ᳚ह वै देवा ऽअनीकं कृत्वोपप्रेयुर्व्वृत्रᳬँ᳚हनिष्यन्तः स तेजोऽग्निर्नाव्यथत तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं

---

**(१) स पूर्वेद्युः अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति। अग्निं ह वै देवा अनीकं कृत्वोपप्रेयुर्वृत्रं हनिष्यन्तः। स तेजोऽग्निर्नाव्यथत। तथो**

---

यस्मात् उक्तफलहेतवः साकमेधाः 'तस्मात्' 'एषः' वरुणप्रघासैरिष्टवान् पुनः 'चतुर्थे मासि' 'एतैः' साकमेधैर्यजेत। अनीकवत्यादीनां साकमेधगतानामिष्टीनां बहुत्वादेतैरिति बहुवचनम्। अहर्द्वयसाध्यत्वं विधत्ते—**स वा इति**। द्वयोरह्नोः समाहारो द्व्यहः 'तद्धितार्थ'–(पा.सू. २.१.५१) इति समासे 'न सङ्ख्यादेः समाहारे'–(पा.सू. ५.४.८९) इति अह्नादेशस्य प्रतिषेधः—**अनूचीनाहमिति**। अनु सम्यगञ्चतीत्यन्वक् अन्वगेवानूचीनम्; 'विभाषाऽञ्चेरदिक्स्त्रियाम्'- (पा.सू. ५.४.८) इति स्वार्थिकः खच्—प्रत्ययः। अनूचीनं नैरन्तर्येण वर्त्तमानमहः अनूचीनाहम् 'राजाहःसखिभ्यः'–(पा.सू. ५.४.४१) इति टच् समासान्तः॥१॥

तत्र पूर्वदिवसे प्रातर्मध्याह्नसायाह्नेषु तिस्र इष्टयोऽनुष्ठेयाः, तत्र प्रथमं विधाय स्तौति—**स पूर्वेद्युरित्यादिना**। 'सद्यःपरुत्–' (पा.सू. ५.३.२२) इत्यादिसूत्रेण पूर्वदिनशब्दस्य पूर्वेद्युरिति निपातः। साकमेधेषु प्रधानभूता महाहविराख्या इष्टिर्यस्मिन् दिवसेऽनुष्ठीयते, ततः पूर्वदिवसे चतुर्दश्यां प्रातरनीकवद्गुण-विशिष्टायाग्नयेऽष्टकपालेषु संस्कृतं पुरोडाशं निर्वपेदित्यर्थः। **अनीकं कृत्वेति**।

---

भी साकमेध-पर्वानुष्ठान से अपने पापी शत्रुओं और अहितैषियों को मारने में समर्थ होता है और उन पर विजय प्राप्त करता है। इसीलिये (वरुणप्रघास के) अनन्तर चौथे मास में यह (साकमेध) यज्ञ करता है। वह इस साकमेध-यज्ञ को लगातार दो दिनों में सम्पन्न करता है॥१॥

साकमेध-पर्व के प्रथम दिन 'अनीकवत्' अग्नि के लिये अष्टाकपाल पुरोडाश की हवि दी जाती है; क्योंकि अग्नि को 'अनीक' (मुखिया) करके ही देवगण वृत्र को मारने दौड़े थे और तेजस्वी अग्नि महासंग्राम में वृत्र द्वारा किये गये प्रहारों/ उपद्रवों से जरा भी विचलित नहीं हुए। उसी प्रकार यह (यजमान) भी पापी, अहितकारी शत्रु को नष्ट करने के लिये अग्नि को 'अनीक' (अगुआ) करता है।

---

१. पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः। का.श्रौ.सू. ५.१.१९।

भ्रातृव्यꣳ हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते॥२॥

(तेऽथ) अथ मरुद्भ्यः सान्तपनेभ्यः। (भ्यो) मध्यन्दिने चरुं निर्व्वपति मरुतो ह वै सान्तपना मध्यन्दिने व्वृत्रꣳ सन्तपुः स सन्तप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये तथोऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः॥३॥

---

एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति। स तेजोऽग्निर्न व्यथते। तस्मादग्नयेऽनीकवते॥२॥

(२) अथ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति। मरुतो ह वै सान्तपना मध्यन्दिने वृत्रं सन्तेपुः। स सन्तप्तोऽनन्नेव प्राणन् परिदीर्णः शिश्ये। तथो एवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति। तस्मान्मरुद्भ्यः सान्तपनेभ्यः॥३॥

---

प्रमुखं कृत्वेत्यर्थः। **स तेज इति**। स च तेजोरूपोऽग्निः वृत्रकृतादुपद्रवान्न 'अव्यथत' व्यथां न प्राप्तवान्। दार्ष्टान्तिकेन योजयति—**तथो एवैष इति**। उक्तहेतोरनीकवद्गुणवैशिष्ट्यं पुरोडाशदेवताया अग्नेर्युक्तमिति निगमयति—**तस्मादिति**॥२॥

मध्यन्दिनेऽनुष्ठेयामिष्टिं विधाय प्रशंसति—**अथेति**। देवताविशेषणमुपपादयति—**मरुतो ह वा इति**। 'मरुतो' हि सन्तपनकारिणः 'सान्तपनाः' तथाविधा मरुतो मध्यन्दिनसमये 'वृत्रम्' असुरं 'सन्तेपुः' सन्तप्तं कृतवन्तः। स च सन्तप्तः सन् श्वासप्रश्वासौ कुर्वन् 'परिदीर्णः' विदारितसर्वावयवः 'शिश्ये' शयनं कृतवान्। **तथो एवेति**, दार्ष्टान्तिकफलकथनम्॥३॥

---

वह तेजस्वी अग्नि-देव मनुष्यों के कष्ट दूर करने में कभी विचलित नहीं होते। इसीलिये 'अग्नि अनीकवान के लिये' हवि प्रदान की जाती है॥२॥

साकमेध-पर्व में दोपहर को 'सांतपन मरुतों' के लिये 'चरु' हवि होती है; क्योंकि वृत्र-युद्ध में मध्याह्न को गर्म (संतप्त करने वाली) हवाओं ने वृत्र को झुलसा दिया था और इसप्रकार झुलसकर, हाँफता हुआ वह जख्मी पड़ा रहा। अतः सांतपन मरुतों' के लिये हवि देने से उस यजमान के पापी, अहितकारी, शत्रुओं को

---

१. मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुः। का. श्रौ. सू. [illegible]

(भ्योऽ) अथ मरुद्भ्यो गृहमेधिभ्यः शाखया वत्सान-पाकृत्य पवित्रवति सन्दोह्य तं चरुꣳ श्रपयति चरुरुह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रꣳ-हनिष्यन्तस्तथोऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ

---

(३) अथ मरुद्भ्यो गृहमेधिभ्यः शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुं श्रपयति। चरुरु ह्येव सः–यत्र क्वचन तण्डुलानावपन्ति। तन्मेधो देवा दधिरे–प्रातर्वृत्रं हनिष्यन्तः। तथो एवैष एतत्पाप्मानं द्विषन्तं

---

सायाह्ने[1] कर्त्तव्यामिष्टिं विधत्ते—**अथेति**। गृहमेधित्वगुणविशिष्टेभ्यो 'मरुद्भ्यः' 'चरुं श्रपयन्ति'—इत्युपरितनेन सम्बन्धः। श्रपणप्रकारमाह—**शाखयेति**। दर्शयागवत् शाखाहरणवत्सापाकरणे कृत्वा, शाखापवित्रं निर्माय, तद्वति पात्रे गाः 'सन्दोह्य' दुग्ध्वा, 'तम्' इति (विधेयापेक्षया) निर्देशः। 'तं' दुग्धं पयः 'चरुं' 'श्रपयति' **चरुरु ह्येवेति**। 'सः' वै मरुद्भ्यो गृहमेधिभ्यः कृतः 'चरुः एव हि' ओदनः खलु, अत इदानीमपि तदर्थं चरुरेव श्रपयितव्य इत्यर्थः।।

**ह्यत्र क्वचेति**। यत्र कुत्रचिदवस्थितान् तण्डुलान् आहृत्य, तस्मिन् पयसि प्रक्षिप्ते तत् तथैव हि देवाः पुरुषादिभ्योऽपक्रम्य व्रीहिषु सङ्क्रान्ताः 'मेधः' सारं 'दधिरे' अधारयन्। तत्र कारणमाह—**प्रातरिति**। **हविष्मन्त** इति। हेतौ शतृप्रत्ययः। प्रातः करिष्यमाणाद् वृत्रहननाद्धेतोरित्यर्थः। **तथो एवेति**।

---

मरुद्गण झुलसा देते हैं। अतएव 'सांतपन मरुतों के लिये' चरु-हवि का विधान है।।३।।

इसके पश्चात् साकमेध-पर्व में (सायंकाल) 'गृहमेधी मरुतों' के लिये (चरु) हवि प्रदान की जाती है। एतदर्थ (पलाश की) शाखा से बछड़ों को गौओं से दूर रख के कुश-पवित्रों वाले बर्तन में (गायों को) दूहकर चरु को पकाता है। (जिसमें तण्डुल या चावल पकाते हैं वह 'चरु' कहलाता है)। जिस अगले दिन देवगण वृत्र को मारने जा रहे थे उसकी पूर्व सन्ध्या को देवों ने यही सारयुक्त अर्थात् पौष्टिक (मेध) भोजन किया था (मेधो दधिरे)[2]। इसी प्रकार यह यजमान भी पापी अहितकारी शत्रुओं को मारने के लिये इसी मेध या पुष्ट भोजन रूप चरु-हवि को देता है। यह हवि दूध और चावल (क्षीरौदन) की क्यों बनाते हैं? (क्योंकि) दूध

---

१. इध्मस्थाने शकलपरिधिं निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि। का.श्रौ.सू. ५.१५३। तत्र सायंशब्दोऽपराह्नवाची। इति कर्कः। २. यहाँ 'मेध' का अर्थ भोजन है ('Nourishment' according to Eggeling)।

ह॒निष्यन्मे॒धो धत्ते तद्यत्क्षीरौदनो भ॒वति मे॒धो वै प॒यो मेधस्त॒ण्डुलास्तमु॒भ॒यं मे॒धमात्म॒न्धत्ते त॒स्मात्क्षीरौदन॒ो भवति॥४॥

त॒स्यावृ॒त्। (त्सै) सैव॒ स्तीर्णा व्वे॒दिर्भवति य॒ा मरुद्भ्यः सान्तपने॒भ्यस्त॒स्यामेव॒ स्तीर्ण॒ायां व्वे॒दौ परिधी॒ंश्च शकलांश्चो-

---

भ्रातृव्यं हनिष्यन्मेधो धत्ते। तद्यत्क्षीरौदनो भवति। मेधो वै पयः, मेधस्तण्डुलाः। तमुभयं मेधमात्मन्धत्ते। तस्मात् क्षीरौदनो भवति॥४॥

तस्यावृत् सैव स्तीर्णा वेदिर्भवति—या मरुद्भ्यः सान्तपनेभ्यः। तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति। तथा सन्दोह्य, चरुं श्रपयति।

---

इदानीन्तनयजमानस्यापि तथैव प्रतिपादनम्। **क्षीरौदन** इति। पयसि तण्डुलान् प्रक्षिप्य श्रपणे सति क्षीरेण संस्कृत ओदनो निष्पद्यते 'अन्नेन व्यञ्जनम्'—(पा.सू. २.१.३४) इति तृतीयासमासः। द्रव्यद्वयं सम्भूय प्रशंसति—**मेधो वा** इति। बलकरः सारांशो मेधशब्दार्थः। स्पष्टमन्यत्।

एष च गृहमेधीययागः सान्नाय्यविकृतिरिति सप्तभिः पक्षैः पूर्ववत् स्वीकृत्य ततो वैकचोदनादिति राद्धान्तितं दशमे। कात्यायनोऽप्याह स्म—'मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि, सान्नाय्यवत्, तूष्णीं वैकचोदनात्'—(का.श्रौ.सू. ५.१५३-१५५) इति॥४॥

अतोऽत्र कर्तव्यान्यङ्गान्यनुक्रामति—**तस्यावृदिति**। 'तस्य' गृहमेधीययागस्य 'आवृत्' क्रिया, प्रयोगः, क्रमः, अभिधीयत इति शेषः। सान्तपनेष्टौ 'या वेदिः' बर्हिषा 'स्तीर्णा' अभूत्, गृहमेधीयस्यापि 'सैव' उपकरोति। तस्यांमेवेत्यादि, निगदसिद्धम्; अतः सन्दिग्धपदविवरणमात्रमेव क्रियते—**शकलांश्चेति**। इध्मस्य

---

'मेध' या शक्तिवाला पदार्थ है और चावल भी पौष्टिक भोज्यान्न है। इस प्रकार वह अपने में दोनों बलकारक पदार्थों (मेध) को स्थापित करता है। अतएव दूध और चावल का 'चरु' बनाते हैं॥४॥

(गृहमेधीय मरुद्गणों के चरुयाग की विधि इसप्रकार हैं—) कुशों से आच्छादित जो वेदी 'सांतपन मरुतों' के लिये थी वही अब भी काम में आयेगी। कुशों से आच्छादित (स्तीर्णा) इसी वेदी में 'परिधि' (बाहुमात्र पलाश शाखायें) और 'शकल' (अर्थात् समिधाओं के छोटे-छोटे टुकड़ों को रखता है और पूर्वोक्त प्रकार

पनिदधति तथा सन्दोह्यचरुꣳ श्रपयति श्रपयित्वाऽभिघार्यो-
द्वासयति॥५॥

(त्य) अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति। तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति स्रुवं च स्रुचं च सम्मार्ष्ट्यथैताऽओदनावादायोदैति स्रुवं च स्रुचं

---

श्रपयित्वाऽभिघार्योद्वासयति॥५॥

**अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति। तयोरेनं द्वेधोद्धरन्ति। तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति। स्रुवं च स्रुचं च सम्मार्ष्टि।**

---

स्थाने शकलानेव सम्मृज्य परिधिभिः सह तान् सादयेदित्यर्थः। **सन्दोह्य चरुमिति।** विहितानुवादः क्रमार्थः॥५॥

**अथ द्वे इति। पिशीले वेति।** पिशीलशब्दः शराववाची। अत एवोक्तं सूत्रकृता—'श्रपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति' (का.श्रौ.सू. ५.१५७)। **पात्र्यौ वेति। निर्णेनिजतीति।** प्रक्षालयतीत्यर्थः। 'णिजिर् शौचपोषणयोः'—इति धातुः (धा.पा.जु.उ. ११)। **द्वेधोद्धरन्तीति।** 'एनं' चरुं द्वेधा विभज्य तयोः शरावयोः पात्र्योर्वा निदध्यादित्यर्थः। **सर्पिरासेचने इति।** सर्पिः सर्पणशील-माज्यम्, आसिच्यते आनीयतेऽस्मिन्निति सर्पिरासेचनम्। अधिकरणे ल्युट्। पात्रस्थयोस्तयोरोदनयोर्मध्ये सर्पिःपूरणायावटौ कृत्वेत्यर्थः। **स्रुवं चेति।** एकत्वमविवक्षितम्। प्रयाजानुयाजाभावेनोपभृतः प्रयोगाभावात् तामेव संमृज्यादित्यर्थः। **ओदनावासादयतीति।** पात्रद्वये स्थापितौ तावेवौदनौ गृहीत्वा वेद्यामासादयितुं गच्छेदित्यर्थः। ओदनमध्यस्थितेनैवाज्येन कृत्स्नाज्यकार्यनिष्पत्तेः

---

से दुग्ध दूहकर चरु पकाता है तथा पकाकर उसमें थोड़ा घी डालकर आग पर से उतार लेता है॥५॥

तदनन्तर दो बर्तनों या थालियों को जल से धोकर चरु के दो बराबर भाग करके दो पात्रों में रख देता है। पात्रस्थित चरु के बीच में गड्ढा करके उसमें घी छोड़ता है। तत्पश्चात् स्रुचि और स्रुक् दोनों को झाड़ता व पोंछता है और चरु (ओदन) के दोनों पात्रों को लेकर (वेदी पर स्थापनार्थ) आता है। फिर वह स्रुवा और स्रुचि को लेकर (वेदी तक) आता है और कुशों से आच्छादित वेदी को

---

१. इध्मस्थाने शकलपरिधिं निधाय। का.श्रौ.सू. ५.१५३। २. आसेचने मध्ये कृत्वा सर्पिरासिंचत्याज्यार्थम्। का.श्रौ.सू. ५.१५८।

**चादा॒योदै॑ति स॒ ऽइमा॒मेव॒ स्तीर्णां॒ व्वे॒दिमभिमृ॒श्य परिधी॒न्परिधा॒य या॒वतः शकलान्का॒मयते ता॒वतोऽभ्या॒दधात्य॒थैता॒ ऽओदनावा॒सादयति स्रुवं॒ च स्रुचं चा॒सादयत्यु॒पविशति हो॒ता होतृषदने स्रुवं च स्रुचं चाद॒दान ऽआह॥६॥**

**(हा) अग्नये॒ऽनुब्रूहीति। (त्या) आग्नेयमा॒ज्यभागँ॒ स**

---

**अथैता ओदनावादायोदैति। स्रुवं च स्रुचं चादायोदैति। स इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतोऽ-भ्यादधाति। अथैता ओदनावासादयति स्रुवं च स्रुचं चासादयति। उपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह॥६॥**

**'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम्। स दक्षिणस्यौदनस्य**

---

ध्रुवाया अप्यप्रयोग इति जुहुम इत्यर्थः। **इमामेवेति।** सान्तपन्यामिष्टौ या वेदिः बर्हिषाऽऽस्तीर्णाऽस्ति, तामेव वेदिम् गृहमेधीयाङ्गत्वेनास्तरणमन्त्रेण तूष्णी-मेवावमृशेत। यदाह कात्यायनः—'स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्'—(का.श्रौ.सू. ५.१.६०) इति। न पुनर्बर्हिषाऽऽस्तरणं कर्त्तव्यमित्यर्थः। इध्मवत्तत्कार्यशकलानां सङ्ख्या नियमप्रसक्तावाह—**यावत इति।** यावद्भिः शकलैराहवनीयस्य प्राबल्यं भवति तानयं कामयेत; 'तावतः' शकलांस्तत्राभ्यादध्यादित्यर्थः। तस्यां वेद्यां हविरासादनं विधत्ते—**अथैताविति। उपविशति होतेति।** सामिधेन्यनुवचनादेरभावात् होतृषदने तूष्णीमेवोपविशेत्। होतुरुपवेशनानन्तरमाज्यभागमित्येव कर्त्तव्यम्, न पुनराघारादिकमित्यभिप्रेत्याह—**स्रुवञ्च स्रुचञ्चेत्यादिना॥६॥**

**अग्नयेऽनुब्रूहीति। दक्षिणस्यौदनस्येति।** दक्षिणोत्तरभागेन वेद्यामासादि-तयोरोदनयोः यो दक्षिणस्थित ओदनः, तस्य 'सर्पिरासेचनात्' सर्पिषा पूर्णात्

---

स्पर्शकर परिधि-समिधायें रखकर जितने लघु-समित्काष्ठों की आवश्यकता हो उतने रख लेता है। तदनन्तर वह चरु (ओदन) के दोनों पात्रों को एवं स्रुचि और स्रुक् को (वेदि में) यथोचित स्थान पर रख देता है। होता अपने आसन (होतृषदन) पर बैठ जाता है। अध्वर्यु स्रुवा और स्रुचि को लेकर यह प्रैष देता है—॥६॥

'अग्नि के लिये हविः प्रदानार्थ मन्त्रपाठ कीजिये'। तदनन्तर अध्वर्यु दाहिने ओर रखी हुई चरु (ओदन) स्थाली के ओदन गड्ढे के घी में से चार बार स्रुचि में लेकर जुहोति-स्थान पर जाता है तथा आग्नीध्र के लिये 'आश्रावण' प्रैष देने

दुक्षिणस्यौदनुस्य सर्पिरासेुचनाच्चतुराज्यस्यावदायुाति-क्रामत्यतिक्रम्याश्रुाव्याहाग्निं यजेुति व्षट्कृते जुहोति॥७॥

(त्यु) अुथाह सुोमायुानुब्रूहीति। सौम्यमुाज्यभाग सऽउुत्तर-स्यौदनुस्य सर्पिरासेुचनाच्चतुराज्यस्यावदायुातिक्रामत्यति-क्रम्याश्रुाव्याह सुोमं यजेुति व्षट्कृते जुहोति॥८॥

(त्यु) अुथाह मरुुद्भ्यो गृहमेधिभ्युोऽनुब्रूहीति। स दुक्षिणस्यादनुस्य सर्पिरासेुचनात्तुतऽअुाज्यमुपस्तृणीते तुस्य

सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति। अतिक्रम्याश्राव्याह 'अग्निं यज' इति। वषट्कृते जुहोति॥७॥

अथाह–'सोमायानुब्रूहि' इति सौम्यमाज्यभागम्। स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति। अतिक्रम्याश्राव्याह–'सोमं यज' इति। वषट्कृते जुहोति॥८॥

अथाह–'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति। स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते। तस्य द्विरवद्यति। अथोपरिष्टादाज्य-

पात्रात् पूर्वाज्यभागार्थं चतुरवदानम्, उत्तरस्यौदनस्य सर्पिरासेचनात् द्वितीयस्याज्य-भागस्यावदानम्। तथा प्रधानयागस्य गृहमेधीयस्य दक्षिणौदनस्य सर्पिरासेचनात् उपस्तरणाभिघारणे उत्तरौदनस्य सर्पिरासेचनात् स्विष्टकृद्यागस्योपस्तरणाभिघारणे। अत एव सूत्रितं कात्यायनेन—'आज्यभागाभ्यां चरति, आग्नेयं दक्षिणात्,

के बाद (होता से) कहता है—'अग्निं यज'। हविः प्रदानार्थ होता द्वारा मन्त्रपाठानन्तर 'वौषट्' शब्दोच्चारण के साथ आहुति देता है॥७॥

अब सोम के आज्यभाग की आहुति के निमित्त होता से कहता है—'सोम-देवता के निमित्त हविः प्रदानार्थ मन्त्रपाठ कीजिये। तदनन्तर बाँये रखे हुए ओदन-पात्र के गड्ढे के घी में से चार बार स्रुचि में लेता है और यजति-स्थान पर आकर आग्नीध्र को 'आश्रावण' प्रैष देने के अनन्तर होता से कहता है 'सोमं यज'। इसके अनन्तर हविः प्रदानार्थ होता द्वारा मंत्रपाठ के समनन्तर 'वौषट्' शब्दोच्चारण के साथ आहुति देता है॥८॥

तत्पश्चात् कहता है—'गृहमेधी मरुतों के निमित्त हविः प्रदानार्थ मंत्रपाठ कीजिये'। दाहिने रखे हुए ओदन-पात्र के गड्ढे में से घी लेकर जुहू में फैलाता है। फिर चरु में से दो हवि-भाग लेकर उन पर घी छोड़ता है और जुहोति-स्थान पर आता है। वहाँ आकर आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—

**द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति व्वषट्कृते जुहोति॥९॥**

**(त्यु) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति। सऽउत्तरस्यौदनस्य सर्पिरासेचनात्तत ऽआज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति व्वषट्कृते जुहोत्यथेडामेवावद्यति न प्राशित्रमुपहूय मार्जयन्त ऽएतन्वेकमयनम्॥१०॥**

---

**स्याभिघारयति। अतिक्रामति। अतिक्रम्याश्राव्याह–'मरुतो गृहमेधिनो यज' इति। वषट्कृते जुहोति॥९॥**

**अथाह–'अग्नये स्विष्टकृतेऽनुब्रूहि' इति। स उत्तरस्यौदनस्य सर्पिरासेचनात्तत। आज्यमुपस्तृणीते। तस्य द्विरवद्यति। अथोपरिष्टादाज्यस्याभिघारयति। अतिक्रामति। अतिक्रम्याश्राव्याह–'अग्निं स्विष्टकृतं यज' इति। वषट्कृते जुहोति। अथेडामेवावद्यति, न प्राशित्रम्। उपहूय, मार्जयन्ते। एतन्वेकमयनम्॥१०॥**

---

सौम्यमुत्तरात्, गृहमेधीयस्विष्टकृतौ चाज्यभागवत् समवदानौ (५.१६३-१६४) इति। निगदसिद्धमन्यत्॥७-९॥

**अथाहाग्नय इति।** **न प्राशित्रमिति।** प्रशित्रावदानं न कर्त्तव्यम्; पयसि संस्कृतत्वेन सान्नाय्यविकृतित्वात्[१], न हि प्रकृतौ सान्नय्यात् प्राशित्रमवदीयते। उक्तमुपयोगक्रमं निगमयति—**एतदिति।** 'एतत्' खलु 'एकमयनं' गृहमेधीयस्यानुष्ठानमार्गः॥१०॥

---

गृहमेधी मरुतों के निमित्त हविः प्रदानार्थ मंत्रपाठ कीजिये। हविः प्रदानार्थ होता द्वारा मंत्रपाठानन्तर 'वौषट्' शब्दोच्चारण के साथ आहुति देता है॥९॥

अध्वर्यु तत्पश्चात् होता से कहता है—'स्विष्टकृत अग्नि के निमित्त हविः प्रदानार्थ मंत्रपाठ कीजिये'। बायें रखे हुए ओदन-पात्र के गड्ढे से घी लेकर जुहू में फैलाता है फिर चरु में दो हवि-भाग लेकर उन पर घी छोड़ता है और जुहोति-स्थान पर आता है। वहाँ आकर आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—'अग्निं स्विष्टकृतं यज'। होता द्वारा मंत्रपाठानन्तर 'वौषट्' शब्दोच्चारण के साथ आहुति देता है। अब इडा हेतु पुरोडाश को काटता है परन्तु साकमेधयाग में प्राशित्रावदान (ब्रह्मभाग) नहीं होता। तदनन्तर इडा का उपह्वान (प्रजा-पशु-यज्ञादि

---

१. न प्राशित्रमिडान्तं भवति। का.श्रौ.सू. ५.१६८।

(म) अथेदं द्वितीयᳪं सैव स्तीर्णा व्वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां व्वेदौ परिधींश्च शकलांश्चोपनिदधति तथा सन्दोह्य चरुᳪं श्रपयति तदेव प्रतिवेशमाज्यमधिश्रयति श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथैतᳪं सोखमेव चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चादायोदैति सऽइमामेव स्तीर्णां व्वेदिमभिमृश्य परिधीन्परिधाय

---

अथेदं द्वितीयम्। सैव स्तीर्णा वेदिर्भवति–या मरुद्भ्यः सान्तपनेभ्यः। तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधति। तथा सन्दोह्य चरुं श्रपयति नेदेव प्रतिवेशमाज्यमधिश्रयति। श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्टि। अथैतं सोखमेव चरुमादायोदैति। स्थाल्यामाज्यमादायोदैति। स्रुवं च स्रुचं चादायोदैति। स

---

अन्यदप्ययनं दर्शयति—**अथेदमिति**। अस्मिन् पक्षेऽपि पूर्ववदेव **सैव स्तीर्णा वेदिर्भवतीत्यदेरर्थः**। एतावांस्तु विशेषः—श्रपितस्य चरोर्द्वयोरुद्धरणम्, तत्र सर्पिरासेचनकरणम्, तदासेचनञ्चोत्पत्त्यैव न भवति, किन्तु यदा चरुं श्रपयति 'तत्' तदानीमेव 'प्रतिवेशं' समापनार्थं प्रतिनिधित्वेन निवेशनस्थानं प्रतिवेशः, तत्स्थानीयमाज्यम्; दक्षिणाग्नावाज्यस्थाल्यामधिश्रयेदित्यर्थः। **उद्वास्यानक्तीति**। उद्वासनात् पूर्वमभिघार्य तदुत्तरकालमपि हविरञ्ज्यादित्यर्थः।।

**सोखमेवेति**। यस्यां स्थाल्यां चरुः श्रप्यते, तत्सहितमेव; न पुनः पात्रान्तरे धारणं कर्त्तव्यमित्यर्थः। **स्थाल्यामाज्यमिति**। स्थालीसहितमेव चरुं वेद्यामासाद्य,

---

समृद्धि की प्रार्थना) कर ऋत्विग्यजमानादि वेदि के पश्चिम बैठकर कुश-पवित्र जलों से मार्जन करते हैं। यह गृहमेधीय-याग का एक अनुष्ठान-प्रकार है।।१०।।

(गृहमेधीय-याग का) दूसरा अनुष्ठान-प्रकार यह है—वही स्तीर्ण वेदी रहती है जो 'सांतपन मरुतों' के लिये थी। इसी कुशाच्छादित वेदी में परिधि (बाहुमात्र पलाश शाखायें) और शकलों (लघुकाष्ठों) को रखे और (गौओं को पूर्वोक्त प्रकार से) दूहकर चरु पकाये। उसी समय दक्षिणाग्नि में आज्यस्थाली में घृत तपाये। चरु पका कर उसमें घी डालता है और तब अग्नि से उतार लेता है और पुनः चरु-हवि पर घृत डालता है। थाली में घी को निकालता है, स्रुव और स्रुचि को पोंछता है। तदनन्तर जिस पात्र में चरु पकाया गया है उसी में चरु लेकर (वेदी तक) आता है। फिर आज्यस्थाली लेकर आता है और तत्पश्चात् स्रुव और स्रुचि

यावतः शकलान्कामयते तावतोऽभ्यादधात्यथैतँ सोखमेव चरुमासादयति स्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान ऽआह॥११॥

(हा) अग्नयेऽनुब्रूहीति। (त्या) आग्नेयमाज्यभागँ स स्थाल्यै चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति व्वषट्कृते जुहोति॥१२॥

(त्य) अथाह सोमायानुब्रूहीति। सौम्यमाज्यभागँ स

---

इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतोऽभ्यादधाति। अथैतं सोखमेव चरुमासादयति। स्थाल्यामाज्य-मासादयति। स्रुवं च स्रुचं चासादयति। उपविशति होता होतृषदने। स्रुवं च स्रुचं चाददान आह॥११॥

'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम्। स स्थाल्यै चतुराज्य-स्यावदायातिक्रामति। अतिक्रम्याश्राव्याह–'अग्निं यज' इति। वषट्कृते जुहोति॥१२॥

अथाह–'सोमायानुब्रूहि' इति। सौम्यमाज्यभागम्। स स्थाल्या एव

---

आज्यस्थालीतलगतमाज्यमप्यासादयेदित्यर्थः। आज्यभागादिषु यदाज्यकार्यं तत्

---

को लेकर आता है तथा वेदी पर स्थापित करता है। अब वह कुशास्तृ वेदी को छूता है और परिधियों को (आहवनीय अग्नि-कुण्ड के चारों ओर) रखता है तथा जितने लकड़ी के टुकड़ों की आवश्यकता है उतने रख देता है। तदनन्तर वह चरु के बर्तन को वेदी पर रखता है, घृत-पूर्ण पात्र को रखता है तथा स्रुव और स्रुचि को वेदि पर रख देता है। होता होतृषदन (होता के आसन) पर बैठता है। तत्पश्चात् स्रुव और स्रुचि को लेकर (अध्वर्यु) कहता है—॥११॥

हे होता! 'अग्नि के लिये हविः प्रदानार्थ मंत्रपाठ कीजिये'। यह अग्नि देवता के आज्यभाग आहुति के विषय में प्रैष है। अब आज्यस्थाली में से घी के चार भाग लेकर (अग्नि के दक्षिण ओर) जाता है तथा आग्नीध्र को 'आश्रावण' प्रैष देकर (होता से) कहता है—'अग्निं यज'। मंत्रपाठानन्तर होता द्वारा 'वौषट्' शब्दोच्चारण के साथ आहुति डालता है॥१२॥

अब अध्वर्यु होता से कहता है—'सोम देवता के निमित्त हविः प्रदानार्थ

स्थाल्या ऽएव चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति व्वषट्कृते जुहोति॥१३॥

(त्यु) अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति। स ऽउपस्तृणीत ऽआज्यमथास्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदानेऽअतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति व्वषट्कृते जुहोति॥१४॥

(त्यु) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति। स उपस्तृणीत ऽआज्यमथास्यचरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभि-

---

चतुराज्यस्यावदायातिक्रामति। अतिक्रम्याश्राव्याह–'सोमं यज' इति। वषट्कृते जुहोति॥१३॥

अथाह–'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति। स उपस्तृणीत आज्यम्। अथास्य चरोर्द्विरवद्यति। अथोपरिष्टादाज्यस्याभिघारयति। प्रत्यनक्त्यवदाने अतिक्रामति। अतिक्रम्याश्राव्याह–'मरुतो गृहमेधिनो यज' इति। वषट्कृते जुहोति॥१४॥

अथाह–'अग्नये स्विष्टकृतेऽनुब्रूहि' इति। स उपस्तृणीत आज्यम्। अथास्य चरोः सकृदवद्यति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। न

---

सर्वं स्थालीगताज्यादेव कर्त्तव्यमिति। अयमेव पूर्वस्मात्पक्षादस्य पक्षस्य विशेषः,

---

मंत्रपाठ कीजिये'। यह सोम देवता के निमित्त आज्यभाग के सम्बन्ध में प्रैष है। अब आज्यस्थाली से चार बार स्रुचि में आज्य लेकर जुहोति-स्थान पर जाता है। वहाँ आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—'सोमं यज'। होता द्वारा मंत्रपाठानन्तर 'वौषट्' शब्दोच्चारण के साथ आहुति देता है॥१३॥

तदनन्तर कहता है—'गृहमेधी मरुद्गणों के निमित्त हविः प्रदानार्थ मंत्रपाठ कीजिये'। तत्पश्चात् वह (जुहू में) घी को फैलाता है तथा उस पर चरु में से दो भाग लेकर रखता है फिर उस पर घी डालता है। तदनन्तर जहाँ से दो भागों को लिया वहाँ घृत डालता है और वेदी के जुहोति-स्थान पर आता है। वहाँ आकर आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—'मरुतो गृहमेधिनो यज'। होता द्वारा मंत्रपाठानन्तर 'वौषट्' शब्दाच्चारण के साथ आहुति दे देता है॥१४॥

अब कहता है—'स्विष्टकृत अग्नि के निमित्त हविः प्रदानार्थ मंत्रपाठ कीजिये'। तत्पश्चात् वह जुहू में घी को फैलाता है तथा चरु में से एक भाग लेता है और

घारयति न प्र॒त्यनक्त्यव॒दा॒नमु॒तिक्रामत्यतिक्र॒म्याश्रा॒व्याहा॒ग्निॅं स्वि॒ष्टकृ॒तं यजे॒ति व्वु॒षट्कृते जुहोति॥१५॥

(त्यु) अ॒थेडा॒मे॒वावद्यति न॒ प्राशित्र॒म्। (मु) उपहू॒य प्रा॒श्नन्ति या॒वन्तो गृ॒ह्या हविरुच्छिष्टाशाः स्युस्ता॒वन्तः प्रा॒श्नीयु॒र॒थो ऽअप्यृत्वि॒जः प्रा॒श्नीयु॒र॒थो ऽअ॒प्य॒न्ये॒ ब्रा॒ह्म॒णाः प्रा॒श्नीयु॒र्य॒दि

---

प्रत्यनक्त्यवदानम्। अतिक्रामति। अतिक्रम्याश्राव्याह–'अग्निं स्विष्टकृतं यज' इति। वषट्कृते जुहोति॥१५॥

अथेडामेवावद्यति, न प्राशित्रम्। उपहूय प्राश्नन्ति। यावन्तो गृह्या हविरुच्छिष्टाशाः स्युः तावन्तः प्राश्नीयुः–अथो अप्यृत्विजः प्राश्नीयुः। अथो

---

शिष्टं समानं पूर्वेण॥११-१५॥

**अथेडामेवावद्यतीति।** इडोपह्वानानन्तरं यत् प्राशनम्, तत्र विशेषमाह— **यावन्त इति।** गृहे भवा 'गृह्याः' यजमानगृहे वर्त्तमानाः पुत्रपौत्रभ्रात्रादिरूपाः 'यावन्तः' सन्ति, 'तावन्तः' 'हविरुच्छष्टाशाः' भवेयुः; अस्यैव विवरणं 'प्राश्नीयुः'—इति, हविःशेषं सर्वं प्राश्नीयुरित्यर्थः। 'अथो' अपि च 'ऋत्विजः अपि' 'प्राश्नीयुः'। 'अपि च' 'अन्ये' 'ये ब्राह्मणाः' आगताः, तेऽपि 'प्राश्नीयुः'। 'यदि' 'ओदनः' 'बहुः' अधिकः 'स्यात्' तदा अन्येषां प्राशनमित्यर्थः।

---

उस पर दो बार घी डालता है। चरुस्थाली में बिना घृत डाले हुये जुहोति-स्थान पर आता है। वहाँ आग्नीध्र को 'आश्रावण' प्रैष देकर होता से कहता है—'अग्निं स्विष्टकृतं यज'। होता द्वारा मंत्रपाठानन्तर 'वौषट्' शब्दोच्चारण के साथ अध्वर्यु आहुति दे देता है॥१५॥

अब बचे हुए हविर्भाग का कुछ हिस्सा इडा में लेता है, परन्तु प्राशित्रावदान (ब्रह्मभाग) नहीं लिया जायगा। इडा का उपह्वान (प्रजा-पशु-यज्ञादि समृद्धि हेतु मंत्रपाठ कर वे (ऋत्विग्गण स्व-स्व इडाभाग) भक्षण करते हैं। किन्तु विशेषता यह है कि—घर के जितने लोग बची हुई हवि को खाने वाले हों वे सभी खावें तथा ऋत्विज लोग भी खावें। यदि ओदन की मात्रा अधिक हो तो अन्य ब्राह्मण भी प्राशन करें। ओदन-पात्र अर्थात् कुम्भी (बटलोई) में थोड़ा शेष रखे और उसे अन्य पात्र से ढककर 'पूर्ण-दर्व' कर्म के लिये रख देते हैं। इस रात्रि को गायों के लिये

---

१. प्राश्नन्ति युक्ताः। यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत्। का.श्रौ.सू. ५.१७०-१७१।

**बहुरोदनः स्यादुथैतामुनिरशितां कुम्भीमपिधाय निदधति पूर्णदर्व्वाय मातृभिर्व्वत्सान्त्समवार्ज्जन्ति तदु पशवो मेधमात्मन्दधते यवाग्वैताँ रात्रिमग्निहोत्रं जुहोति निवान्यां प्रातर्दुहन्ति पितृयज्ञाय॥१६॥**

---

**अप्यन्ये ब्राह्मणाः प्राश्नीयुः-यदि बहुरोदनः स्यात्। अथैतामनिरशितां कुम्भीमपिधाय निदधति पूर्णदर्वाय। मातृभिर्वत्सान्त्समवार्जन्ति। तदु पशवो मेधमात्मन्दधते। यवाग्वैतां रात्रिमग्निहोत्रं जुहोति। निवान्यां प्रातर्दुहन्ति पितृयज्ञाय॥१६॥**

---

कुम्भीनिधानं विधत्ते—**अथैतामिति।** निःशेषेण अशिता निरशिता, तद्विपरीता अनिरशिता ताम्, शेषसहितामित्यर्थः। तादृशीं कुम्भीं पात्रान्तरेण अपिधाय, 'पूर्णदर्वाय' हविषा पूर्णा दर्वी यस्मिन् कर्मणि, तत् पूर्णदर्वम्, तस्मै पूर्णदर्वाय कर्मणे, तदर्थं स्थापयेत्[1]। अस्यां रात्रौ वत्सानां मातृभिः सह वासं विधत्ते—**मातृभिरिति।** 'समवार्जन्ति' 'अर्ज गतिस्थानार्जनेषु'—(धा.पा.भ्वा.प. २२४) संसृष्टान्कुर्युरित्यर्थः। **तदु पशव इति।** 'तत्' तेन वत्ससङ्गमेन पशवोऽपि 'मेधम्' आत्मीयं सारम् 'आत्मन्' स्वात्मनि अस्यां रात्रौ 'दधते' धारयन्ति। अग्निहोत्रार्थमपि तस्यां रात्रौ पयो न दोग्धव्यमिति द्रव्यान्तरं विधत्ते—**यवाग्वैतामिति।** एवं यजमानगृहवर्त्तिनां सर्वेषां वत्सानां मातृसमवार्जनप्रसक्तौ प्रातः पितृयज्ञार्थं दोह्याया निवान्याया गोर्वत्सस्य बन्धनं कर्त्तव्यमित्यभिप्रेत्याह—**निवान्यामिति।** स्वयं नष्टवत्सा अन्यदीयेन वत्सेन या गौर्दुह्यते सा निवान्या, ताम् 'प्रातः' पितृयज्ञार्थं यतो दुहन्ति, अतस्तस्य वत्सस्य बन्धनं कर्त्तव्य-मित्यध्याहृत्य योजनीयम्। अत एव कात्यायन आह—'मातृभिर्वत्सान्संसृज्य निवान्यावत्सं बध्नाति' इति। (का.श्रौ.सू. ५.१७५)॥१६॥

---

बछड़ों को छोड़ देते हैं। इस प्रकार रात्रि में पशुगण भी अपने पौष्टिक भोज्य को पाते हैं। उस रात को यजमान यवागू (जौ और गुड़ का मिला हुआ पाक) से सायंकालीन अग्निहोत्र करता है। प्रातःकाल पितृ यज्ञ के लिये निवान्या गौ (नष्टवत्सा गौ जो दूसरे के बछड़े से दुहाती है) के बछड़े को रात्रि में बाँधते हैं ताकि प्रातः दूह सकें॥१६॥

---

१. अरिक्ताः स्थालीं निदधाति। का.श्रौ. ५.१७२।

(या) अथ प्रातर्हुते वाऽहुते वा। यतरथा कामयेत सोऽस्या ऽअनिरशितायै कुम्भ्यै दर्व्योपहन्ति पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा ऽइषमूर्जꣳ शतक्रतविति यथा पुरोऽनुवाक्यैव मेषैतयैनमेतस्मै भागाय ह्वयति॥१७॥

---

अथ प्रातर्हुते वाऽहुते वा–यतरथा कामयेत–सोऽस्या अनिरशितायै कुम्भ्यै दर्व्योपहन्ति। 'पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो' (वा.सं. ३.४९) इति। यथा पुरोऽनुवाक्या–एवमेषा। `एतयैवैनमेतस्मै भागाय ह्वयति॥१७॥

---

पूर्णदर्वाख्यस्य कर्मणः कालं विधत्ते—**अथेति**। 'प्रातः'—अग्निहोत्रे 'हुते वा अहुते वा' अनयोः पक्षयोः 'यतरथा' येन प्रकारेण 'कामयेत' तथैवानुष्ठेयमित्यर्थः। होमाय समन्त्रकं हविर्ग्रहणं विधत्ते—**सोऽस्या इति**। षष्ठ्यर्थे चतुर्थी। सोखायाः गृहमेधीयकुम्भ्याः सकाशात् 'पूर्णा दर्वि'—इति मन्त्रेण दर्व्या आघातेन 'उपहन्ति' गृह्णीयात्। मन्त्रस्यायमर्थः—हे 'दर्वि'! प्रथमं हविषा 'पूर्णा' सती अस्याः सकाशात् 'परापत' परागच्छ, देवान् प्राप्नुहि, पुनः कर्मफलेन 'सुपूर्णा'—सती अमुतः सकाशात् अस्मान् पुनरागच्छ, हे 'शतक्रतो' इन्द्र! 'वस्ना' वसुना मूल्येन 'इव' आवाम् 'इषम्' इष्यमाणम् अन्नम् 'ऊर्जम्' बलकरं रसं च 'विक्रीणावहै' त्वया दत्तं फलं स्वीकृत्य हविर्दास्यामि त्वयि; मया दत्तं हविर्गृहीत्वा मह्यं फलं दास्यसि त्वम्; एवं व्यतिहारेण कर्म क्रीणावहा इत्यर्थः। एतन्मन्त्रोच्चारणं प्रशंसति—**यथेति**। 'एनम्' इन्द्रम् 'एतस्मै' पूर्णदर्वाख्याय 'भागाय' पुरोनुवाक्यास्थानीयया पुरोवक्तव्यया एतया 'आ-ह्वयति' आकारयति॥१७॥

---

(पूर्ण-दर्वाख्यकर्म का विधान करते हैं—) अगले दिन प्रातःकाल अग्निहोत्र करने के बाद अथवा उससे पहले, जैसा भी वह चाहे, पूर्वदिन चरुशेष के साथ रखी हुई कुम्भी (बटलोई) में से दर्वी (काष्ठ चम्मच) के आघात द्वारा चरु लेकर इन्द्र का आह्वान इस मंत्र (यजु. ३.४९) से करता है—'पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा ऽइषमूर्जꣳशतक्रतो'। मन्त्रार्थ—'हे पूर्णे हविष्य से पूर्ण हो़कर देवताओं के पास जाओ तथा वहाँ से कर्मफलों से पूरित हुई हमारे पास आओ। हे शतक्रतु इन्द्र, वस्ना अर्थात् मूल्य द्वारा वस्तु व्यापार (= लेन-देन) के समान हम दोनों परस्पर अन्न-हवि का दान और उसके बदले आपसे स्वाभिलषित

---

१. प्रातर्हुत्वाऽहुत्वा स्थाल्या दर्व्यादत्ते पूर्णा दर्व्वीति। का.श्रौ.सू. ५.१७७।

(त्यु) अथऽर्षभमाह्वयितवै ब्रूयात्। (त्स) स यदि रुयात्स व्वषट्कार ऽइत्यु हैक ऽआहुस्तस्मिन्वषट्कारे जुहुयादित्यथो ऽइन्द्रमेवैतत्स्वेन रूपेण ह्वयति व्वृत्रस्य वधायैतद्वा ऽइन्द्रस्य रूपं यदृषभस्तत्स्वेनैवैनमेतद्रूपेण ह्वयति व्वृत्रस्य व्वधाय स यदि

---

अथर्षभमाह्वयितवै ब्रूयात्। स यदि रुयात्–स वषट्कारः–इत्युहैक आहुः। तस्मिन् वषट्कारे जुहुयादिति। अथो इन्द्रमेवैतत् स्वेन रूपेण ह्वयति–वृत्रस्य वधाय। एतद्वा इन्द्रस्य रूपं यदृषभः। तत्स्वेनैव रूपेण

---

ऋषभध्वनौ होतव्यमिति विधित्सुराह—**अथेति**[1]। 'आह्वयितवै' आह्वातुम् 'तुमर्थे सेसेनसे'—(पा.सू. ३.४.९) इति तवै-प्रत्ययः। **स यदीत्यादि**। 'सः' आहूतः ऋषभः, 'यदि' 'रुयात्' शब्दं कुर्यात्। 'रु शब्दे' (धा.पा.अ.प. २४) इति धातुः। तद्ध्वनिर्वषट्कारात्मक इति केचिदाहुः। तथा च तैत्तिरीयकम्—'ऋषभमाह्वयति, वषट्कार एवास्य स इति कथयन्ति' इति। अतः तस्मिन् वषट्कारे हविर्जुहुयादित्येकं मतम्[2]।

पक्षान्तरमाह—**अथो इति**। योऽयमृषभस्य ध्वनिः, नासौ वषट्कारः, किन्तु इन्द्रस्य स्वभूतेन ऋषभाख्येन रूपेण तमेव 'इन्द्रम्' एतेन शब्देन 'ह्वयति' किमर्थम् 'वृत्रस्य वधाय' वृत्रमसुरं हन्तुमित्यर्थः। वृत्रस्येति कर्मणि षष्ठी। 'तुमर्थाच्च भाववचनात्'—(पा.सू. २.३.१५) इति वधशब्दाच्चतुर्थी। एतदेव विवृणोति—**एतद्वा इति**। अभिभवनशीलवृषम् 'इन्द्रस्य रूपम्'। नहीन्द्रादन्यस्याभिभवनसामर्थ्यमस्तीत्यभिप्रायः। **स यदीत्यादि**। 'यदि' 'सः' ऋषभः शब्दं कुर्यात् तदा 'आ म इन्द्रो यज्ञमगन्' आगमत्, तथा च मदीयो यज्ञः

---

फलों की प्राप्त करें। अन्य यागों की पुरोनुवाक्या के समान इस ऋचा को कहकर वह उसे (इन्द्र को) भाग-ग्रहण के लिये बुलाता है।।१७।।

तत्पश्चात् वह यजमान से कहे—'बैल को उपस्थापित कराईये'। कुछ आचार्य कहते हैं कि 'यदि बैल रंभा दे तो यह वषट्कार स्थानीय है। इसी वषट्कार के पश्चात् आहुति दे देनी चाहिये' (यह एक पक्ष है)। (दूसरा पक्ष यह है कि—) ऋषभ की ध्वनि वषट्कार न होकर इन्द्र का आह्वान करने वाली ध्वनि है वृत्र-वध के निमित्त। ऋषभ (बैल) इन्द्र का रूप है। इस प्रकार वृत्र-वध के लिये इन्द्र को उसी के रूप में बुलाता है। यदि बैल रंभाये तो जानना चाहिये कि—'मेरे

---

१. ऋषभमाह्वयितवै ब्रूयात्। का.श्रौ.सू. ५.१७८। २. रुते जुहोति। का.श्रौ.सू. ५.१७९।

रुयादु मऽइन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ ऽइति ह विद्याद्यद्यु न रुयाद् ब्राह्मण एव दक्षिणत ऽआसीनो ब्रूयाज्जुहुधीति सैवेन्द्री वाक्॥१८॥

(क्स) स जुहोति। देहि मे ददामि ते नि मे धेहि नि ते दधे।

---

ह्वयति–वृत्रस्य वधाय। स यदि रुयात्–आ म इन्द्रो यज्ञमगन्, सेन्द्रो मे यज्ञः–इति ह विद्यात्। यद्यु न रुयाद्–ब्राह्मण एव दक्षिणत आसीनो ब्रूयात्–'जुहुधि' इति। सैवैन्द्री वाक्॥१८॥

स जुहोति–'देहि मे–ददामि ते, नि मे धेहि–नि ते दधे। निहारं च

---

इन्द्रसहितोऽभवदिति 'विद्यात्' जानीयात्। यज्ञे ऋषभस्य शब्दाकरणेऽनुष्ठानप्रकारमाह—यद्यु नेति। 'यदि' तु 'न' 'रुयात्' शब्दं कुर्यात्, तदा 'दक्षिणतः' उपविष्टः 'ब्राह्मणः' ब्रह्मैव, 'जुहुधीति' अध्वर्युं प्रति 'ब्रूयात्' शंसेद् 'सैव' 'ऐन्द्री' इन्द्राह्वानार्था वाक्[1]॥१८॥

अथ समन्त्रकं होमं विधत्ते—स जुहोतीति। दर्व्या गृहीतं हविः 'देहि मे'—इति मन्त्रेण तथैव[2] दर्व्या आहवनीये जुहुयात्। मन्त्रस्यायमर्थः। इन्द्रो ब्रवीति—हे यजमान! त्वं 'मे' मह्यं प्रथमं हविः 'देहि', अहमपि 'ते' तुभ्यम् इष्टं फलं 'ददामि' तथा त्वं 'मे' मह्यं 'हविः' 'निधेहि' नियमेन हि ह्रियत इति निहारो मूल्यद्रव्यम् 'निहारं' हविषो मूल्यभूतम् फलस्य मूल्यभूतं अहमपि तुभ्यं फलं 'निदधे' निदधामि, नियच्छामि नितरां धारय, हविः; 'च'—शब्दश्चेदर्थे, त्वं चेत् प्रथमं 'हरासि' हरेः, दद्य, इत्यर्थः। हरतेर्लेट्यडागमः; अनन्तरमेव 'ते' तुभ्यम् अहमपि 'निहारं' हविषो मूल्यभूतं फलं 'निहराणि' नितरां प्रापयामि 'स्वाहा' इदं

---

यज्ञ में इन्द्र आ गया'। मेरा यज्ञ इन्द्र-युक्त हो गया और यदि (बैल) न रंभाये तो दक्षिण की ओर बैठा हुआ ब्रह्मा-ऋत्विक् (ब्राह्मण) कहे—'जुहुधि' (आहुति दो) और वस्तुतः यह इन्द्र के आह्वान की वाणी हो जाती है॥१८॥

अब वह इस मन्त्र से आहवनीय में दर्वि द्वारा आहुति देता है—'देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारं च हरासि मे निहारं निहराणि ते स्वाहा' (यजु. ३.५०)। (मन्त्रार्थ—) (इन्द्र कहता है—हे यजमान), 'मुझे हविष्य दो। तदनन्तर मैं तुझे इष्ट-फल देता हूँ। नियमित रूप से मुझे हविष्य अर्पण करें। मैं

---

१. अव्याहरति ब्रह्मा जुहुर्वत्याह। का.श्रौ.सू. ५.१८०। २. तथैव इति पा.।

निहारं च हरासि मे निहारं निहराणि ते स्वाहेति॥१९॥

(त्र्यु) अथ मरुद्भ्यः क्रीडिभ्यः सप्तकपालं पुरोडाशं निर्व्वपति। मरुतो ह वै क्रीडिनो वृत्रं हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तस्तथो ऽएवैतं पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्तमभितः परिक्रीडन्ते महयन्तस्तस्मान्मरुद्भ्यः

---

हरासि मे-निहारं निहराणि ते-स्वाहा' (वा.सं. ३.५०) इति॥१९॥

**अथ महाहविर्यागः**

**अथ मरुद्भ्यः क्रीडिभ्यः सप्तकपालं पुरोडाशं निर्वपति। मरुतो ह वै क्रीडिनो वृत्रं हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुः महयन्तः। तथो एवैतं पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्तमभितः परिक्रीडन्ते महयन्तः।**

---

हविः स्वाहुतमस्तु इति। एतत् सर्वं कात्यायनेन सूत्रितम्—'प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्यादत्ते पूर्णा दर्वीति, ऋषभमाह्वयितवै ब्रूयाद्, रुते जुहोति, अव्याहरति ब्रह्मा जुहुधीत्याह, देहि म इति जुहोति'—इति (का.श्रौ.सू. १७७-१८१)॥१९॥

एतदनन्तरकर्त्तव्यामिष्टिं विधत्ते—**अथेति**। क्रीडन्तीति क्रीडिनः एतद्गुणविशिष्टेभ्यः 'मरुद्भ्यः' सप्तसु कपालेषु संस्कृतं पुरोडाशं निर्वपेदित्यर्थः। क्रीडिन इति मरुतां यथार्थं विशेषणमिति प्रतिपादयति—**मरुतो ह वा इत्यादिना**। वृत्रं हन्तुमुद्युक्तमिन्द्रमभितो यस्माद् 'परिचिक्रीडुः' क्रीडितवन्तः, तस्मादेतेषां 'क्रीडिन' इति नाम सम्पन्नम्। इदानीं कृतस्य साकमेधेन हविषा यक्ष्यमाणस्य समीपे मरुतां क्रीडनं प्रतिपाद्यते—**तथो एवेत्यादिना**। तस्मादिन्द्रवद्यजमानस्य समीपे क्रीडनशीलेभ्यो मरुद्भ्यो यागः कर्त्तव्यः। साकमेधेषु प्रधानभूताया महाहविराख्याया इष्टेरारम्भं प्रतिजानीते—**अथातं इति**।

---

भी आप लोगों के लिये तत्तुल्य फल अर्पण करता हूँ। आप लोग मुझे यदि हविष्य का उपहार देंगे; तदनन्तर मैं भी आपके लिये तत्तुल्य उपहार दूँगा। स्वाहा'॥१९॥

अब 'मरुद्भ्यः क्रीडिभ्यः' खेलने वाले मरुतों के लिये (सात कपालों का पुरोडाश) देता है; क्योंकि जब इन्द्र, वृत्र को मारने के लिये उद्यत हुआ तो क्रीडनशील मरुद्गण आकर उसके चारों ओर खेलने लगे और उसका

---

१. मरुद्भ्यः क्रीडिभ्यः सप्तकपालः। का.श्रौ.सू. ५.१८२। २. अदित्यै चरुरन्यत्रापि। का.श्रौ.सू. ५.१८३।

**क्रीडिभ्योऽथातो महाहविष ऽएव तद्यथा महाहविषस्तथो तस्य॥२०॥**

**इति चतुर्थप्रकरणम् चतुर्थं ब्राह्मणम्॥४॥४॥**

**इति पञ्चमाध्याये तृतीयं ब्राह्मणम्॥५॥३॥**

**॥समाप्तोऽयं चतुर्थं प्रकरणम्॥**

---

**तस्मान्मरुद्भ्यः क्रीडिभ्यः। अथातो महाहविष एव तद् यथा महाहविषः-तथो तस्य॥२०॥**

---

यजोऽनुष्ठानकालः प्राप्तः, अतः प्राप्तावसरत्वात् महाहविषः प्रयोगोऽधिकरिष्यत इत्यर्थः। वरुणप्रघासतन्त्रं तत्रातिदिशति—**तद्यथेति**। तत्र 'महाहविषः महान्ति बहूनि हवींषि यत्र, महाहविर्वरुणप्रघासाख्यो यागः, 'तस्य' वक्ष्यमाणस्य महाहविराख्यस्य यागस्य 'यथा' एवमिति सम्बन्धः। तस्य पूर्वोक्तस्य वरुणप्रघासस्य हविषो यथाऽनुष्ठानम्, तथैव महाहविषो वक्ष्यमाण-स्यापीति॥२०॥

**इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम्॥२॥५॥३॥**

---

उत्साहवर्द्धनात्मक सहयोग करने लगे। क्योंकि इन्द्र दुष्ट और अहितकर शत्रु को मारने जा रहा था। इसी प्रकार द्वेषी पापियों और शत्रुओं को नष्ट करने हेतु उद्यत इस यजमान के भी चारों ओर मरुद्‌गण क्रीडन करते हैं तथा उत्साहवर्द्धन करते हैं अतः 'खेलने वाले मरुतों' के लिये आहुति दी जाती है। इसके पश्चात् 'महाहविष्'—प्रयोग होता है। महाहविष् ('महान्ति बहूनि हवींषि यत्र'—अर्थात् जहाँ बहुत हवियाँ प्रदान की जाती है) का अनुष्ठान 'वरुणप्रघास' पर्व के समान यहाँ अनुष्ठित होता है॥२०॥३॥

❋

महाहविषा ह वै देवा वृत्रं जघ्नुः। (स्ते) तेनोऽएव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते तस्माद्वा ऽएष यजते॥१॥

तस्यावृत्। (द्व) उपकिरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजं भवति नवानुयाजं त्रीणि समिष्टयजूꣳषि भवन्त्यथैतान्येव पञ्च हवीꣳषि भवन्ति॥२॥

---

महाहविषा ह वै देवा वृत्रं जघ्नुः। तेनो एव व्यजयन्त येयमेषां विजितिः-ताम्। तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति-तथो एव विजयते। तस्माद् वा एष एतेन यजते॥१॥

तस्यावृत्। उपकिरन्त्युत्तरवेदिम्, गृह्णन्ति पृषदाज्यम्, मन्थन्त्यग्निम्। नवप्रयाजं भवति, नवानुयाजम्, त्रीणि समिष्टयजूंषि भवन्ति। अथैतान्येव पञ्च हवींषि भवन्ति॥२॥

---

अथ तस्य महाहविषः प्रयोगक्रमं विधित्सुः प्राग् 'एतैर्वै देवा वृत्रमघ्नन्'— इत्यादिना यत् साकमेधानां फलं प्रतिपादितम्, तत्फलं महाहविष एव साक्षात् साधनत्वमिति प्रतिपादयति—**महाहविषा ह वा इत्यादिना**। महत्त्वगुणविशिष्ट इन्द्रो देवता यस्मिन् यागे तत्साधनं हविः महाहविः। अन्यद् व्याख्यातम्॥१॥

तस्य प्रयोगमनुक्रामति—**तस्यावृदित्यादिना**। आवृच्छब्दः क्रियावाची। उत्तरवेदीनिवपनपृषदाज्यग्रहणाग्निमन्थनादीनि वरुणप्रघासवदेवात्रापि कार्याणीत्याह—**उपकिरन्तीत्यादिना**। अत एव सूत्रकृतोक्तम्—'उत्तरवेद्यग्निप्रणयनमन्थनपृषदाज्यञ्च वरुणप्रघासवत्'—(का.श्रौ.सू. ५.१८८) इति। **अथैतान्येवेति**। यानि वैश्वदेवेऽनुक्रान्तानि आग्नेयादीनि पञ्च सञ्चराणि हवींषि 'एतानि एव' अत्रापि कर्त्तव्यानि भवन्तीत्यर्थः॥२॥

---

देवगण वृत्र को महाहवि के प्रयोग द्वारा मारने में सफल हुए। उसी से उन्होंने वह विजयश्री और वैभव प्राप्त किया जो उनको मिली हुई है। इसीलिये जो इस यज्ञ को करता है वह यजमान भी अपने पापी, अहितकारी शत्रुओं को नष्ट करने में सफल होता है और उन पर विजय पा लेता है॥१॥

उस (महाहवि-याग) की विधि इस प्रकार है—एक उत्तर वेदी बनाते हैं। घी के स्थान पर पृषदाज्य लेते हैं और अरणि-मन्थन द्वारा अग्नि को उत्पन्न करते

स युदाग्नेयोऽष्टाकपालः पुरोडाशो भुवति। (त्य) अग्निना ह वा ऽएनं तेजसाऽघ्नन्त्स तेजोऽग्निर्नाव्यथत तुस्मादाग्नेयो भवति॥३॥

(त्यु) अथ युत्सौम्युश्चरुर्भुवति। सोमेन ह वाऽएनँ राज्ञाऽघ्नन्त्सोमराजान एव तुस्मात्सौम्युश्चरुर्भवति॥४॥

(त्यु) अथ युत्सावित्रः। (त्रो) द्वादशकपालो

---

स यदाग्नेयो (१)ऽष्टाकपालः पुरोडाशो भवति। अग्निना ह वा एनं तेजसाऽघ्नन्। स तेजोऽग्निर्नाव्यथत। तस्मादाग्नेयो भवति॥३॥

अथ यत्सौम्यश्चरुर्भवति(२)। सोमेन ह वा एनं राज्ञाऽघ्नन्। सोमराजान एव। तस्मात्सौम्यश्चरुर्भवति॥४॥

अथ यत्सावित्रो(३) द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो

---

तत्राग्नेयमनूद्य स्तौति—**स यदिति**। **एनं तेजसाऽघ्नन्निति**। पुरा खलु देवाः 'अग्निना' अग्निलक्षणेन 'तेजसा' 'एनं' वृत्रम् 'अघ्नन्' अहिंसन् 'सः' च तेजोरूपः 'अग्निः' 'न अव्यथत' व्यथितः पीडितो नाभवत्। तस्मादाग्नेययागस्य प्राथम्यं युक्तम्॥३॥

सौम्यं हविरनूद्य स्तौति—**अथ यदिति**। **सोमराजान एवेति**। सोमो राजा येषां ते तथोक्ताः 'राजाहःसखिभ्यष्टच्'-(पा.सू. ५.४.९१)। इति टच्—समासान्तो न भवति; तत्पुरुषाधिकारात्। सोमराजेनाधिष्ठिता देवाः, तेनैव 'राजा सोमेन' 'एनं' वृत्रम् 'अघ्नन्' अहिंसन्नित्यर्थः॥४॥

तृतीयं हविरनूद्य स्तौति—**अथ यत् सावित्र इति**। **द्वादश-**

---

हैं। महाहविर्याग में—नौ प्रयाज होते हैं, नौ अनुयाज और तीन समिष्ट यजु। इसके अतिरिक्त वैश्वदेव याग की आग्नेयादि पहली पाँच हवियें होती हैं॥२॥

अग्नि के लिये आठ कपालों पर संस्कृत पुरोडाश की हवि होती है। पुराकाल में देवगणों ने तेजस्वी अग्नि को आगे करके (वृत्र को) मारा था और वह तेजस्वी अग्नि, महासंग्राम में विचलित नहीं हुआ था, इसलिये अग्नि की पुरोडाश-हवि होती है॥३॥

तदनन्तर सोम देवता के निमित्त चरु-याग होता है। सोम राजा की सहायता से देवों ने वृत्र को मारा था। इसलिये सोम राजा के निमित्त चरु-हवि होती है॥४॥

तत्पश्चात् सविता देवता के लिये बारह कपालों या आठ कपालों पर संस्कृत

वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता सवितृप्रसूता हैवैनमघ्नंस्तस्मात्सावित्रो भवति॥५॥

(त्यु) अथ यत्सारस्वतश्चरुर्भवति। व्वाग्वै सरस्वती व्वागु हैवानुममाद प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति॥६॥

(त्यु) अथ यत्पौष्णश्चरुर्भवति। (ती) इयं वै पृथिवी

---

भवति। सविता वै देवानां प्रसविता। सवितृप्रसूता हैवैनमघ्नन्। तस्मात्सावित्रो भवति॥५॥

अथ यत्सारस्वतश्चरुर्भवति(४)। वाग्वै सरस्वती। वागु हैवानुममाद— 'प्रहर, जहि' इति। तस्मात्सारस्वतश्चरुर्भवति॥६॥

अथ यत् पौष्णश्चरुर्भवति(५)। इयं वै पृथिवी पूषा, इयं हैवेनं वधाय

---

कपालोऽष्टाकपालो वेति। कपालसङ्ख्यायाविकल्पः। सवितृप्रसूता इति। यतः सवित्रा देवेन प्रेरिता एव देवाः 'एनं' वृत्रम् 'अघ्नन्' तस्मात्सावित्रयागः कर्त्तव्यः॥५॥

चतुर्थं हविरनूद्य स्तौति—अथ यत् सारस्वत इति। वागु हैवेति। वागात्मिका हि सरस्वती सैव खलु वाक् वृत्रं हनिष्यन्तमिन्द्रम् 'अनुममाद' हृष्टा बभूव। अनुमदनप्रकारमाह—हे इन्द्र! 'प्रहर' वज्रेण वृत्रं ताडय, ततस्तं 'जहि' मारयेति। जहीति हन्तेर्लोटि मध्यमैकवचने 'हन्तेर्ज'–(पा.सू. ६.४.३६) इति जादेशः तस्य 'असिद्धवदत्राभात्'–(पा.सू. ६.४.२२) इति असिद्धत्वात् हेर्लुग् न भवति॥६॥

पञ्चमं हविरनूद्य स्तौति—अथ यत् पौष्णश्चरुर्भवतीति। इयं वै

---

पुरोडाश हवि होती है। सविता देवों का प्रेरक है। सविता देवता की प्रेरणा से प्रेरित हो देवों ने वृत्र को मारा था इसलिये सविता देवता के निमित्त हवि दी जाती है॥५॥

तत्पश्चात् सरस्वती के निमित्त चरु-हवि होती है। वाणी ही सरस्वती है और वाणी ने ही इन्द्र को यह कहकर उत्साह दिलाया था कि—'मारो-मारो'। इसलिये सरस्वती के निमित्त चरु-याग होता है॥६॥

तदनन्तर पूषा के निमित्त चरु होता है। यह पृथिवी ही पूषा है। इसी ने वध

---

१. 'सावित्रोऽष्टाकपालो द्वादशकपालो वा। का.श्रौ.सू. ५.४।

**पूषेयुँ हैवैनं व्वधाय प्रति प्रददावनया हैवैनं प्रतिप्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति॥७॥**

**(त्यु) अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति। (त्ये) एतेन हैवैनमघ्नंस्तेजो वा अग्निरिन्द्रियं व्वीर्यमिन्द्र एताभ्यामेनमुभाभ्यां व्वीर्याभ्यामघ्नन्ब्रह्म वाऽअग्निः क्षत्रमिन्द्रस्तेऽउभे**

---

**प्रतिप्रददौ। अनया हैवैनं प्रतिप्रत्तं जघ्नुः। तस्मात् पौष्णश्चरुर्भवति॥७॥**

**अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति(६)। एतेन हैवैनमघ्नन्। तेजो वा अग्निः, इन्द्रियं वीर्यमिन्द्रः। एताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन्।**

---

**पृथिवीत्यादि।** इयमेव हि पृथिवी पोषयति भूतजातानीति पूषा, इयमेव खलु 'एनं' वृत्रं 'वधाय' हननाय 'प्रतिप्रददौ' प्रत्यर्पयामास, अतः 'अनयैव' पृथिव्या साधनेनं 'एनं' वृत्रं देवाः 'प्रतिजघ्नुः प्रत्येकं हतवन्त इत्यर्थः॥७॥

षष्ठं हविर्विधत्ते—**अथैन्द्राग्न इति। एतेन हेत्यादि।** 'एतेन' इन्द्राग्निदेवताकेन यागेन। इन्द्राग्न्योर्वृत्रहननहेतुत्वमुपपादयति—**तेजो वा अग्निरित्यादिना।** योऽयम् 'अग्निः' स दहनसमर्थः 'तेजः' यदिदं पुरुषे प्रविष्टम् 'इन्द्रियम्' इन्द्रलिङ्गम्, इन्द्रेण दत्तं 'वीर्यम्', तदात्मक इन्द्रः; तथा च 'एताभ्याम् उभाभ्याम्' इन्द्राग्निसम्बन्धिभ्याम् 'एनं' वृत्रम् देवाः 'अघ्नन्' तस्मादैन्द्राग्नो यागो युक्त इत्यर्थः।

प्रकारान्तरेण स्तौति—**ब्रह्म वा अग्निरिति।** 'अग्निः', 'ब्रह्म' ब्राह्मणजातिः; ब्राह्मणेन सह प्रजापतिमुखादुत्पन्नत्वात्। 'इन्द्रः', 'क्षत्रम्' क्षत्रियजातिः;

---

के लिये वृत्र को प्रस्तुत कर दिया था और पृथ्वी के पेश कर देने पर उन्होंने उसे मारा। इसलिये पूषा के निमित्त चरु-याग होता है॥७॥

तत्पश्चात् बारह कपालों पर संस्कृत पुरोडाश इन्द्र और अग्नि के लिये दिया जाता है। इन्हीं अग्नि और इन्द्र के सहयोग से उन्होंने उसे मारा था। अग्नि ही तेज है और इन्द्र वीर्य (=शक्ति)। इन्हीं दो शक्तियों के द्वारा देवों ने वृत्र को मारा।

---

१. नित्येभ्योऽधिकान्येद्राग्नो माहेन्द्रश्चरुर्व्वैश्वकर्म्मण एककपालः। का.श्रौ.सू. ५.१८७।

**सँरम्य ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां व्वीर्याभ्यामघ्नंस्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति॥८॥**

**(त्य) अथ माहेन्द्रश्चरुर्भवति। (ती) इन्द्रो वा ऽएष पुरा व्वृत्रस्य व्वधादथ व्वृत्रँहत्वा यथा महाराजो व्विजिग्यानऽएवं**

---

**ब्रह्म वा अग्निः, क्षत्रमिन्द्रः, ते उभे संरभ्य, ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन्। तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति॥८॥**

**अथ माहेन्द्रश्चरुर्भवति (७)। इन्द्रो वा एष पुरा वृत्रस्य वधात्। अथ वृत्रं हत्वा-यथा महाराजो विजिग्यानः-एवं महेन्द्रोऽभवत्। तस्मान्-**

---

प्रजापतेरुरसो बाहुभ्यां च सकाशात् क्षत्रियेण सहोत्पत्तेः। 'ते उभे' ब्रह्मक्षत्रे 'संरभ्य' अवलम्ब्य 'सयुजौ' परस्परं सहायभूते 'कृत्वा' 'ताभ्यामुभाभ्यां' ब्रह्मक्षत्रसम्बन्धिभ्यां वीर्याभ्याम् 'एनं' वृत्रम् 'अघ्नन्'॥८॥

सप्तमं हविर्विधत्ते—**अथ माहेन्द्रश्चरुर्भवतीति**। (का.श्रौ.सू. ५.१८७)। महांश्चासाविन्द्रो महेन्द्रः 'आन्महतः'-(पा.सू. ६.३.४६) इत्यात्त्वम्। महेन्द्रो देवता अस्य माहेन्द्रः 'महेन्द्राद्घाणौ च' (पा.सू. ४.२.२९) इत्यण्। अस्येन्द्रस्य महत्त्वमुपपादयति—**इन्द्रो वा एष इति**। वृत्रवधात् पूर्वं केवल इन्द्र एवासीत्, स च तं हत्वा 'महेन्द्रोऽभवत्' 'यथा' शत्रुं 'विजिग्यानः' विजितवान् राजा 'महाराजः' इत्याख्यायते, तद्वत् 'विजिग्यानः' विपूर्वाज्जयतेः 'विपराभ्यां जेः' (पा.सू. १.३.१९) इत्यात्मनेपदम्, लिटः कानच्, 'सन् लिटोर्जेः' (पा.सू. ७.३.५७) इत्यभ्यासादुत्तरस्य कुत्वम्।

---

अग्नि ब्राह्मण-तेज है, इन्द्र क्षत्रिय-तेज। इन दोनों को मिलाकर अर्थात् ब्रह्म-शक्ति और क्षत्र-शक्ति का अवलम्ब लेकर उन्होंने वृत्र को मारा था। इसलिये बारह कपालों पर संस्कृत पुरोडाश-याग इन्द्र और अग्नि के निमित्त किया जाता है॥८॥

तदनन्तर महेन्द्र के लिये चरु-याग होता है। वृत्र के वध से पहले वह केवल 'इन्द्र' नाम से प्रख्यात था। वृत्र-वध के अनन्तर 'महेन्द्र' (महान्+इन्द्र) हो गया जैसे शत्रु-विजय के पश्चात् 'महाराज'—इस अभिख्या से प्रख्यात होता है। अतएव 'महेन्द्र' के निमित्त चरु-याग होता है। वृत्र-वध के विशिष्ट कार्य के कारण उसे

महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैनमेतत्खलु करोति व्वृत्रस्य व्वधाय तस्माद्वेव माहेन्द्रश्चरुर्भवति॥९॥

(त्यु) अथ व्वैश्वकर्मण ऽएककपालः पुरोडाशो भवति। व्विश्वं वा ऽएतत्कुर्म कृतᳫं सर्व्वं जितं देवानामासीत्साकमेधैरीजानानां व्विजिग्यानानां व्विश्वम्वेवैतस्यैतत्कर्म कृतᳫं सर्व्वं जितं भवति साकमेधैरीजानस्य व्विजिग्यानस्य तस्माद्वैश्वकर्मण ऽएककपालः पुरोडाशो भवति॥१०॥

---

माहेन्द्रश्चरुर्भवति। महान्तमु चैवैनमेतत् खलु करोति–वृत्रस्य वधाय। तस्माद्वेव माहेन्द्रश्चरुर्भवति॥९॥

अथ वैश्वकर्मण एककपालः पुरोडाशो भवति (८)। विश्वं वा एतत् कर्म कृतम्, सर्वं जितं देवानामासीत् साकमेधैरीजानाना विजिग्यानानाम्। विश्वम्वेवैतस्यैतत् कर्म कृतम्, सर्वं जितं भवति–साकमेधैरीजानस्य विजिग्यानस्य। तस्माद्वैश्वकर्मण एककपालः पुरोडाशो भवति॥१०॥

---

**महान्तमु चैवैनमिति।** प्रकारान्तरेण स्तुतिः महत्त्वेनेन्द्रस्य विशेषणान्-महान्तमेवैनं कृतवान् भवतीत्यर्थः। **तस्मादु एवेति।** 'उ'–शब्दोऽप्यर्थे। तस्मादपि महत्कर्म्मकरणाद्धेतोरित्यर्थः॥९॥

अष्टमं हविर्विधत्ते—**अथ वैश्वकर्मण इति।** (का.श्रौ.सू. ५.१८७)। विश्वं सर्वं जगत् कर्म कार्यं यस्य स विश्वकर्मा देवता अस्यासौ 'वैश्वकर्मणः'। 'साऽस्य देवता'–(पा.सू. ४.२.२४) इत्यणि 'अन्'–(पा.सू. ६.४.१६७) इति प्रकृतिवद्भावः। एतस्य हविषो विश्वकर्म्मदेवताकत्वं प्रशंसति—**विश्वं वा एतदित्यादिना।** साकमेधैः यागैः 'ईजानानाम्' इष्टवतां 'विजिग्यानानां' वृत्रं विजितवतां 'देवानाम्' 'एतत्' 'विश्वं' सकलं 'कर्म' निरवशेषं 'कृतम्' अनुष्ठितम्, 'जितम्' प्राप्तकालं च 'आसीत्'। दार्ष्टान्तिके योजयति—**विश्वम्वेवेति।** 'उ'–शब्दोऽप्यर्थः, शिष्टमुक्तार्थम्॥१०॥

---

'महान्' अभिख्या से विभूषित कर यशस्वी कर देता है। फलतः महेन्द्र के निमित्त चरु-याग किया जाता है॥९॥

तदनन्तर विश्वकर्मा-देवता के लिये एक कपाल पर संस्कृत पुरोडाश-याग होता है। देवों ने साकमेध याग करके और (वृत्रपर) विजय प्राप्तकर अपने कार्य को पूरा कर लिया ('विश्वं कृतं' का अर्थ है पूरा कर लेना) और सब कुछ जीत

(त्ये) एतेन वै देवाः। (०) यज्ञेनेष्ट्वा येयं देवानां प्रजातिर्या श्रीरेतद्बभूवुरेताᳫं ह वै प्रजातिं प्रजायत एताᳫँ श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत॥११॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम्॥५॥१॥
इति पञ्चमाध्याये चतुर्थं ब्राह्मणम्॥५॥४॥

---

एतेन वै देवा यज्ञेनेष्ट्वा येयं देवानां प्रजातिः, या श्रीः–एतद् बभूवुः। एतां ह वै प्रजातिं प्रजायते, एतां श्रियं गच्छति–य एवं विद्वानेतेन यज्ञेन यजते। तस्माद्वा एतेन यजेत॥११॥

॥इति साकमेधपर्वणि महाहविर्यागः॥

---

उपक्रमावसरायोदीरितफलसाधनत्वमस्य निगमयति—एतेन वा इति। येयं[1] देवानां 'प्रजातिः' 'श्रीः' च दृश्यते, 'एतेन' अनेनैव हि महाहविषा 'यज्ञेन' 'इष्ट्वा' तया प्रजात्या श्रिया च 'बभूवुः' प्रवृद्धा अभवन्। यद्वा, 'भू प्राप्तावात्मनेपदी' (धा.पा.चु.आ. ३११) अत्र व्यत्ययेन परस्मैपदी; एतदुभयं प्रापुरित्यर्थः। एतां ह वा इत्यादि, निगदसिद्धम्॥११॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम्।।२।।५।।४।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः।।१।।

---

लिया। इसी प्रकार जो पुरुष साकमेध याग कर लेता है वह विजय पा लेता है और वह अपने को पूर्ण कर लेता है। अतएव 'विश्वकर्मा' के निमित्त एक कपाल पर संस्कृत पुरोडाश-याग होता है॥१०॥

देवों की जो प्रजाति (=दृश्यमान ऐश्वर्य, विस्तार है) और जो श्री है वह सब इसी याग को करके हुई है। इसी प्रकार जो विज्ञ इस रहस्य को समझ कर साकमेध याग करता है उसका वंश-विस्तार होता है और उसको श्री भी प्राप्त होती है। इसलिये इस यज्ञ को करना चाहिये॥११॥

---

१. 'येषाम्' इ.पा.।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्तोब्धीन्[1] पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च।।१।।

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः।।

**इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमोऽध्यायः समाप्तः।।५।।**

*

---

१. 'सप्ताद्रीन्'–इ.ख. पुस्तके।

## षष्ठाध्याये प्रथमं ब्राह्मणम्

महाहवि॒षा ह वै॒ देवा॒ व्वृत्रं॒ जघ्नुः। (स्ते॒) ते॒नोऽएव॒ व्यजयन्त॒ येय॒मेषां व्वि॒जितिस्तामु॒थ या॒ने॒वैषां तस्मिन्त्सङ्ग्रामे॒ऽ-घ्नंस्ता॒न्पितृयज्ञेन स॒मैरयन्त पित॒रो वै त॒ ऽआसंस्त॒स्मात्पितृयज्ञो ना॒म॥१॥

त॒द्वसन्तो॒ ग्रीष्मो॒ व्वर्षाः॒। (ऽ) एते ते ये व्यु॒जयन्त शर॒द्धेमन्तः शि॒शिरस्त॒ ऽउ ते यान्पुनः समै॒रयन्त॥२॥

---

### अथ (पिण्ड—) पितृयज्ञः

**महाहविषा ह वै देवा वृत्रं जघ्नुः। तेनो एव व्यजयन्त—येयमेषां विजितिः—ताम्। अथ यानेवैषां तस्मिन् सङ्ग्रामेऽघ्नन्, तान् पितृयज्ञेन समैरयन्त। पितरो वै त आसन्—तस्मात् पितृयज्ञो नाम॥१॥**

**तद्वसन्तो, ग्रीष्मो, वर्षाः। एते ते—ये व्यजयन्त। शरद्धेमन्तः शिशिरः। त उ ते—यान्पुनः समैरयन्त॥२॥**

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम्॥

अथ पिण्डपितृयज्ञं विधित्सुः पितृणामुत्पत्तिमाह—**महाहविषा ह वा** इत्यादि। **येयमेषां विजितिरिति।** व्यजयन्तेति सम्बन्धः। **अथ यानित्यादि।** 'तस्मिन्' वृत्रासुरयुद्धे 'एषां' देवानां मध्ये 'यान्' 'एव' असुराः 'अघ्नन्' अमारयन्, 'तान्' हतान् देवान् पितृयज्ञाख्येन वक्ष्यमाणेन कर्मणा 'समैरयन्त' समागच्छन्त। ते मृताः पितृदेवता एव अभवन्। पितॄनुद्दिश्य क्रियमाणत्वात् 'पितृयज्ञः' इति अन्वर्थेयं संज्ञेत्याह—**तस्मादिति**॥१॥

**तद्वसन्त इत्यादि।** 'तत्' तत्र 'ये' देवाः 'व्यजयन्त' विजयमेव प्राप्ताः, न पुनरसुरेण हताः 'ते' वसन्ताद्यृतुत्रयात्मकाः 'यान्' हतवन्तः, 'ते' पितृयज्ञेन

---

देवों ने (पिण्डपितृयज्ञान्तर्गत) 'महाहवि' के प्रभाव द्वारा ही वृत्र को मारा और उस विजय को पाया जिससे वे इस समय विभूषित हैं। उस वृत्रासुर-संग्राम में जो देव मारे गये उनको पितृयज्ञ के माध्यम से (अन्य) देवों ने जिलाया। वे (संग्राम में मृत देवगण पुनर्जीवित होने तक) पितृ-देवता हो गये थे। इसलिये पितरों से सम्बन्धित होने के कारण इस याग का नाम पितृयज्ञ पड़ा॥१॥

इनमें वसन्त, ग्रीष्म और वर्षा—ये वे हैं जिन्होंने (वृत्र) को जीता था। शरद,

(न्ता) अथ यदेष ऽएतेन यजते। तन्नाहु न्वेवैतस्य तथा कंचन घ्नन्तीति देवा ऽअकुर्व्वन्निति न्वेवैष ऽएतत्करोति यमु चैवैभ्यो देवा भागमकल्पयंस्तमु चैवैभ्य ऽएषऽएतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु

**अथ यदेष एतेन यजते तन्नाह न्वेवैतस्य तथा कंचन घ्नन्तीति देवा अकुर्वन्। इति न्वेवैष एतत् करोति–यमु चैवैभ्यो देवा भागमकल्पयन्। तमु चैवैभ्य एष एतद्भागं करोति। यानु चैव देवाः समैरयन्त–तानु चैवैतदवति।**

'समैरयन्त' समगच्छन्, 'ते' एव शरदाद्यास्त्रय ऋतवः एतेषामनुरूपत्वप्रतिपादनम् उपरिष्टात् 'ऋतवः पितरः'—इति करिष्यमाणस्तुत्योपोद्घातत्वेन।।२।।

इदानीन्तनानुष्ठानस्यापि उक्तफलसाधनत्वमाह—**अथ यदिति**। 'अथ' इदानीमपि 'एष' यजमान 'एतेन' पितृयज्ञेन 'यजते' इति 'यत्' 'तत्' तस्मात्। 'अह' 'नु' 'एव' इति त्रयो निपाताः। 'एतस्य' यजमानस्य सम्बन्धिनं 'कञ्चन' 'चन'—शब्दोऽप्यर्थे, कमपि पुरुषं 'न' एव 'घ्नन्ति' असुरादयो न मारयन्ति। तत्र कृतानुकरत्वे हेतुमाह—**इति देवा इति**। इत्थं 'देवाः' पुरा 'अकुर्वन्' पितृयज्ञाख्यं कर्म। 'नु' शब्दोप्यर्थे। एष यजमानोऽपि इत्येवमेव एतत्पितृयज्ञाख्यं कर्म करोति। देवैर्येन प्रकारेणानुष्ठितम्, तेनैव प्रकारेणानुतिष्ठति, न स्वातन्त्र्येण किञ्चित् करोतीत्यर्थः। तदेव द्रव्यदेवतासाम्यं प्रतिपादयन्विवृणोति—**यमु चैवैभ्य इत्यादिना**। 'एभ्यः' पितृभ्यो 'यम्' एव पुरोडाशधानादिरूपम् 'भागं' 'देवाः' 'अकल्पयन्', 'एतत्' एतर्हि 'एषः' यजमानोऽपि 'तम्' एव भागम् 'एभ्यः' 'करोति'। तथा देवाः पुरा असुरहतान् पितृभावं प्राप्तान् 'यान्' एव 'समैरयन्त' समागच्छन्, 'तान्' एव पितृत्वं प्राप्तान् देवान् 'एतद्' यजमानः 'अवति' हविषा तर्पयति। अवतिरत्र तृप्त्यर्थः (धा.पा.भ्वा.प. ६०१)। तेन च पितृदेवतातर्पणेन 'स्वान्' स्वकीयानेव 'पितृन्' पितृपितामहाद्यान् 'श्रेयांसम्' प्रशस्यतमं 'लोकम्' 'उपोन्नयति' उपप्रापयति अपिच 'अत्र' अस्मिन् कर्म्मणि 'अस्य यजमानस्य

हेमन्त और शिशिर—ये वे हैं जिनको देवों ने पुनर्जीवित किया था।।२।।

यह जो मनुष्य यजमान 'पितृयज्ञ' करता है वह इसलिये कि—एक तो (असुर) उसके किसी (सम्बन्धी) को न मार सकें, दूसरे इसलिये कि—देवों ने इस पितृयज्ञ को किया था। इसके अतिरिक्त वह इसलिये भी पितृयज्ञ करता है कि देवों ने जिन-जिन पितरों के लिये जो भाग निर्धारित किये थे वे भाग पितृयज्ञ के माध्यम से उनको प्राप्त हो जावें। इसीप्रकार जिनको देवों ने पुनर्जीवित किया

चैवैतत्पितॄञ्छ्रेयाँ्ँसं लोकमुपोन्नयति यदु चैवास्यात्रात्मनोऽनुचरणेन हन्यते वा मीयते वा तदु चैवास्यैतेन पुनराप्यायते तस्माद्वा ऽएष ऽएतेन यजते॥३॥

स पितृभ्यः सोमवद्भ्यः। षट्कपालं पुरोडाशं निर्व्वपति सोमाय वा पितृमते षड्वा ऽऋतव ऽऋतवः पितरस्तस्मात्षट्-कपालो भवति॥४॥

---

स्वानु चैवैतत् पितॄञ्छ्रेयांसं लोकमुपोन्नयति। यदु चैवास्यात्रात्मनोऽनुचरणेन हन्यते वा मीयते वा, तदु चैवास्यैतेन पुनराप्यायते। तस्माद्वा एष एतेन यजते॥३॥

स पितृभ्यः सोमवद्भ्यः (१) षट्कपालं पुरोडाशं (१) निर्वपति, सोमाय (१) वा पितृमते षड् वा ऋतवः, ऋतवः पितरः-तस्मात् षट्कपालो भवति॥४॥

---

'आत्मनः' स्वस्य 'अनुचरणेन' अनुगमनेन च यदेव प्राणिजातं 'हन्यते', 'मीयते' ताड्यते। यद्वा 'मीयते'[1] 'मीङ् हिंसायाम्'—इति धातुः (धा.पा.दि.आ. ३१)। 'एतेन' पितृयज्ञेन अस्य तदेव पुनराप्यायते, पुनः प्रवृद्धं भवतीति। **तस्मादिति**। पितृयज्ञस्य विधिः[2]। यस्मात् उदीरितफलहेतुः पितृयज्ञः, तस्मादेनेन यष्टव्यमित्यर्थः। 'यजते'-इति पञ्चमलकारो न वर्त्तमानोपदेशः॥३॥

तत्र प्रथमं हविर्विधत्ते—**स पितृभ्य इति**। सोम एषामस्तीति सोमवन्तः कृतसोमयागाः। एतद्विशेषयागविशिष्टेभ्यः 'पितृभ्यः' षट्सु कपालेषु संस्कृतं 'पुरोडाशं' 'सः' यजमानः निर्वपेत्। देवताविकल्पमाह—**सोमाय वेति**। सोमाय पितृमते वा निर्वापः कर्त्तव्यः। तदुक्तं कात्यायनेनापि—'पितृभ्यः सोमवद्भ्यः षट्कपालः, सोमाय वा पितृमते'-(का.श्रौ.सू. ५ अ. १९७-१९८) इति। इमं देवताविकल्पमाश्वलायनोऽप्याह स्म—'पितरः सोमवन्तः सोमो वा पितृमान्'-इति (आ.श्रौ.सू. २.१९-२१)। कपालसङ्ख्यां प्रशंसति—**षड्वा इति**। **ऋतवः**

---

था उनको भी निर्धारित हविर्भाग प्रदान कर यजमान सन्तुष्ट करता है और इस पितृयज्ञानुष्ठान से अपने पितरों को भी श्रेय-लोक तक पहुँचाता है साथ ही दैनन्दिन जीवन में अज्ञानवश जो कुछ हिंसा या अपघात अपने अनुचित आचार से हो जाता है उसका प्रतीकार कर लेता है। इसलिये यह पितृयज्ञ करना चाहिये॥३॥

छः कपालों पर संस्कृत 'पुरोडाश' हवि 'सोमवन्त पितरों' के लिये या 'सोमाय

---

१. 'यद्वा मिद्यते मिद् हिंसायाम्' इति क्व.। २. 'पितृयज्ञ उपा॰ शुचरणम् (का.श्रौ.सू. ५. ९९०)।

**( त्यु ) अ॒थ पि॒तृभ्यो ब॒र्हि॒षद्भ्यः। ( द्भ्योऽन्वा ) अ॒न्वा॒हा॒र्य॒- प॒च॒ने धा॒नाः कु॒र्व्व॒न्ति त॒तो॑ऽर्धाः पि॒ꣳषन्त्य॒र्धा ऽइ॒त्येव॒ धा॒ना ऽअ॒पि॑ष्टा भवन्ति ता॒ धा॒नाः पि॒तृभ्यो ब॒र्हि॒षद्भ्यः॥५॥**

---

**अथ पितृभ्यो बर्हिषद्भ्यः (२) अन्वाहार्यपचने धानाः कुर्वन्ति। ततोऽर्द्धाः पिंषन्ति, अर्द्धा इत्येव धाना अपिष्टा भवन्ति। ता धानाः (२) पितृभ्यो बर्हिषद्भ्यः॥५॥**

---

**पितर इति।** शरद्धेमन्तशिशिराः, त एते यत् पुनः समैरयन्तेत्याम्नातत्वात् तत् पितृणामृतुतादात्म्यम्। यद्वा 'यस्मिन् वा ऋतौ पुरुषः प्रमीयते, सोऽस्यामुष्मिँल्लोके भवति'–इति श्रुत्यत्यन्तरेण प्रसिद्धेः[1] (तै.ब्रा. १.६.८.३) वसन्ताद्यृत्वात्मकाः पितरः॥४॥

द्वितीयं हविर्विधत्ते—**अथ पितृभ्यो बर्हिषद्भ्य इति।** बर्हिषि सीदन्तीति बर्हिषदोऽकृतसोमयागाः, केवलहविर्यज्ञयाजिनः पितरः। पृषोदरादित्वात् वर्णलोपः (पा.सू. ६.३.१०९)। एतद्गुणविशिष्टेभ्यः पितृभ्यो धानारूपं हविः कर्त्तव्यमितिशेषः[2]। तत्करणप्रकारमाह—**अन्वाहार्यपचन इति।** भृष्टयवतण्डुला धानाः, तदर्थं दक्षिणाग्नौ भर्जनकपालमधिश्रित्य, तत्र तत्तण्डुलानोप्य भर्जनं कुर्यादित्यर्थः। ततो भर्जनानन्तरं ता धाना द्वेधा विभज्य, अर्द्धाः प्रकृतिवत् समन्त्रक 'पिंषन्ति' चूर्णयन्ति। 'पिषॢ सञ्चूर्णने'–(धा.पा.रु.प. १५) इति धातुः। 'अर्द्धा इत्येव' एवमेवापरा अर्द्धा 'धानाः' 'अपिष्टाः' पेषणरहिता अधिकृता भवन्ति। 'ताः' अपिष्टा धानाः 'पितृभ्यो बर्हिषद्भ्यः' देयाः[3]॥५॥

---

पितृमते' के लिये होती है। (क्योंकि)—छः ऋतुयें होती है। ऋतुयें ही पितर् हैं। इसलिये षट् कपाल पर संस्कृत पुरोडाश हवि दी जाती है॥४॥

पितृयज्ञ में द्वितीय हवि (के निमित्त)—'बर्हिषद् पितरों' (अकृत सोमयाजी पितरों) के लिये अन्वाहार्यपचन (दक्षिणाग्नि) पर धान भूनते हैं। इनमें से भूंजे हुए आधे धान पीस लेते हैं और आधे बिना पिसे रखते हैं। भूंजे हुए किन्तु अपिष्ट धाना 'बर्हिषद् पितरों' के लिये प्रदान किये जाते हैं॥५॥

---

१. श्रुत्यन्तरे प्रसिद्धे' इति क्व.। २. पितृभ्यो बर्हिषद्भ्यो धानाः (का.श्रौ.सू. ५.१९९)। ३. अभिमृश्यार्द्धाः पिष्ट्वा निवान्या दुग्धे सकृन्मथित एकशलाकया मंथः। अग्रहणं मंथस्य ततोऽर्द्धाः पिꣳशतीति श्रुतेः (का.श्रौ.सू. ५.२०६-२०७)।

(ब्द्यो॒ऽ) अ॒थ पि॒तृभ्यो॒ऽग्निष्वात्तेभ्यः। (भ्यो) निवा॒न्यायै दुग्धे॒ सकृदुपमथित॒ ऽएकशलाकु॒या मन्थो॒ भवति सकृ॒दु॒ ह्येव पु॒राञ्चः पि॒तु॒रस्तु॒स्मात्सकृदुपमथितो॒ भवत्येतानि हवी॑ꣳषि भवन्ति॥६॥ [श. १३००]

तद्ये सो॒मेनेजानाः। (स्ते॒) ते॒ पि॒तु॒रः सो॒मवन्तो॒ऽथ ये॒ दत्ते॒न

---

अथ पितृभ्योऽग्निष्वात्तेभ्यः (३) निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो (३) भवति। सकृदु ह्येव। पराञ्चः पितरः। तस्मात् सकृदुपमथितो भवति। एतानि हवींषि भवन्ति॥६॥

तद्ये सोमेनेजानाः–ते पितरः सोमवन्तः। अथ ये दत्तेन पक्वेन लोकं

---

अथ तृतीयं यागं विधत्ते—**अथ पितृभ्योऽग्निष्वात्तेभ्य**[१] **इति**। आधानसंस्काराभावेन त्रेताग्न्यभावात् केवलमौपासनाग्निनैवास्वाद्यमानाः पितरोऽग्निष्वात्ताः। एतद्गुणविशिष्टेभ्यः पितृभ्यः। 'निवान्यायै' स्वयं नष्टवत्सा अन्यदीयेन 'वत्सेन दुह्यमाना गौः 'निवान्या'। षष्ठ्यर्थे चतुर्थी। तस्याः पयसि प्रक्षिप्तो मथितो धानाचूर्णः 'एकशलाकया' एका चासौ शलाका च, 'पूर्वकालैकसर्व.' (पा.सू. २.१.४९) इत्यादिना समासः। एकयैव शलाकया 'सकृत्' एकवारम् 'उपमथितः' आलोडितो हविः 'मन्थो भवति' इत्यर्थः। उपमथनस्य सकृत्त्वं प्रशंसति—**सकृदु ह्येवेति**। एकवारमेव हि अध्वर्युस्तस्माद् गार्हपत्यापरदेशादुत्थाय अन्वाहार्यपचनस्यादूरेणोत्तरप्रदेशे मन्थमुपमथ्नाति। **पराञ्च इति**। परागता अपुनरावृत्ताः सन्तः पितरो भवन्ति, अतस्तेषां सकृत्त्वमसाधारणधर्म इति तद्धविःसंस्कारस्यापि सकृत्त्वमुचितमिति भावः। विहितानि त्रीणि हवींषि सम्भूय निगमयति—**एतानीति**॥६॥

एतेषां हविषां या देवताः 'पितृभ्यः सोमवद्भ्यः'–इत्यादिना निर्दिष्टाः तासां स्वरूपं परस्परासङ्कीर्णमिति निर्ब्रूते—**तद्य इति** 'तत्' तत्र 'सोमेनेजानाः'

---

अब (पितृयज्ञ की तृतीय हवि—) 'अग्निष्वात्ता पितरों' के लिये होती है। यह हवि—(पिसे हुये धानों में) अन्य के बछड़े से पिन्हाने वाली मृतवत्सा गाय का दूध मिलाकर और उसे एक शलाका से एक बार ही आलोडितकर 'मन्थ'— हवि बनाते हैं। (यतः) पितर एक बार परलोक को पहुँचकर अपुनरावृत्त होते हैं इसलिये 'मन्थ' हवि को भी एक ही बार आलोडित करते हैं। पितृयज्ञ में ये तीन हवियाँ होती है॥६॥

(त्रिविध पितर् ये होते हैं—) जिन्होंने सोमयाग किया था वह हुये 'सोमवन्त

---

१. पितृभ्योऽग्निष्वात्तेभ्यो मंथ. (का.श्रौ.सू. ५.२७०)।

पुक्वेन लोकं जुयन्ति तु पितुरो बर्हिषुदोऽथ ये तुतो नान्यतरुच्चन यानग्निुरेव दुहन्त्स्वदुयति तु पितुरोऽग्निष्वात्तुा एतु ऽउ ते युे पितुरः॥७॥

स जघुनेन गार्हपत्यम्। प्राचीनावीतुी भूत्वुा दक्षिणुाऽऽसीन एतँ षट्कपालं पुरोडुाशं गृह्णाति स तुत एुवोपोत्था-

---

जयन्ति–ते पितरो बर्हिषदः। अथ ये ततो नान्यतरच्चन, यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ताः एत उ ते ये पितरः॥७॥

स जघनेन गार्हपत्यं प्राचीनावीती भूत्वा दक्षिणाऽऽसीन एतं षट्कपालं पुरोडाशं गृह्णाति। स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा

---

सोमेनेष्टवन्तः पञ्चत्वं प्राप्ताः 'ते पितरः' 'सोमवन्तः' इत्युच्यन्ते। 'अथ' शब्दस्त्वर्थः 'ये' तु 'पक्वेन' पाकसंस्कारसंस्कृतेन, चरुपुरोडाशादिहविषा देवेभ्यो दत्तेन केवलं हविर्यज्ञयाजिन[1] एव सन्तो 'लोकं जयन्ति', 'ते पितरः' 'बर्हिषदः' इत्याख्यायन्ते। 'ये' पुनः 'ततः' तयोर्मध्ये 'अन्यतरत्' अपि 'न' प्राप्नुवन्ति, केवलमौपासनाग्निरेव 'दहन्' शरीरान्ते 'स्वदयति' आस्वादयति, भक्षयतीत्यर्थः। ते पितरः 'अग्निष्वात्ताः' इत्युच्यन्ते। **एत उ इति। ये पितर इति।** पितृदेवतात्वेन प्रसिद्धाः एते सोमवदादय एव ते। नान्य इत्यर्थः। तैत्तिरीयकेऽप्याम्नातम्—'ये वै यज्वानः, ते पितरो बर्हिषदः०–० ये वा अयज्वानो गृहमेधिनः ते पितरोऽग्निष्वात्ताः'–इति (तै.ब्रा. १.६.९.६)॥७॥

पितृयज्ञप्रयुक्तं विशेषं वक्तुं चोदकप्राप्तमङ्गकलापमनुक्रामति—**स जघनेनेत्यादिना**। दक्षिणामुखत्वं प्राचीनावीतित्वं च हविर्ग्रहणे विशेष इत्यर्थः। **स तत एवेत्यादि**। 'सः' अध्वर्युः तस्माद् गार्हपत्यापरदेशादुत्थाय

---

पितर' और जो अग्नि पाक संस्कृत चरु-पुरोडाशादि हवियों को देवताओं को प्रदान कर लोक को जीतते हैं वे हुये 'हविर्यज्ञयाजी'–'बर्हिषद् पितर' और जिन्होंने जीवन में न सोमयाग किया और न हविर्याग किया अपितु औपासनाग्नि की उपासना करते हुए शरीर छोड़ा और पितृ कोटि में अवस्थित हुए वे हुये 'अग्निष्वात्ता' पितृगण। ये त्रिविध पितर् हुये॥७॥

पितृयज्ञ में अध्वर्यु षट् कपाल संस्कृत पुरोडाश निर्माण के लिये गार्हपत्याग्नि के पीछे दक्षिणाभिमुख बैठकर तथा प्राचीनावीति होकर (अर्थात् दाहिने कन्धे पर सामने की ओर यज्ञोपवीत रखकर) (चावल) निकालता है। तदनन्तर वहाँ से उठकर

---

१. याजिन इति पा.।

योत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति॥८॥

स दक्षिणैव दृषदुपलेऽउपदधाति। दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपदधाति तद्यदेतां दक्षिणां दिशꣳ सचन्तऽएषा हि दिक्पितॄणां तस्मादेतां दक्षिणां दिशꣳ सचन्ते॥९॥

---

तिष्ठन्नवहन्ति। सकृत्फलीकरोति। सकृदु ह्येव पराञ्चः पितरः। तस्मात्सकृत्फलीकरोति॥८॥

स दक्षिणैव दृषदुपले उपदधाति। दक्षिणार्धे गार्हपत्यस्य षट् कपालान्युपदधाति। तद्यदेतां दक्षिणां दिशं सचन्ते–एषा हि दिक् पितॄणाम्–तस्मादेतां दक्षिणां दिशं सचन्ते॥९॥

---

अन्वाहार्यपचनस्यादूरेणोत्तरदेशे दक्षिणामुखस्तिष्ठन् अवहन्यात्[1]। चोदकप्राप्तं फलीकरणस्य त्रिष्करणमपास्य सकृत्त्वं विधत्ते—**सकृत्फलीकरोतीति**॥८॥

**स दक्षिणेवैति**। 'सः' अध्वर्युः दक्षिणामुख एव सन् अवहननदेशे पेषणार्थं 'दृषदुपले' उपदध्यात्। षट्कपालस्य पुरोडाशस्य गार्हपत्यदक्षिणायां श्रपणं विधाय स्तौति—**दक्षिणार्द्धे गार्हपत्यस्येत्यादिना**[2]। **तद् यदेतामिति**। 'तत्' तत्र पितृयज्ञसम्बन्धित्वेनानुष्ठेयपदार्थेषु 'यद्' यस्मात् कारणात् 'एतां दक्षिणां दिशं सचन्ते' ऋत्विग्यजमानाः समवयन्ति। 'षच् समवाये' (धा.पा.भ्वा.उ. १०२२) इति धातुः। **एषाहीति**। 'हि'–शब्दो दक्षिणस्या दिश इह श्रुत्यन्तरप्रसिद्धं पितृसम्बन्धं द्योतयति। तथाच तैत्तिरीयकम्—'देवमनुष्या दिशो व्यभजन्त, प्राचीं देवा दक्षिणा पितरः' इति (तै.सं. ६.१.१.१)॥९॥

---

अन्वाहार्यपचन (= दक्षिणाग्नि) के उत्तर की ओर दक्षिणाभिमुख खड़ा होकर धान कूटता है तथा शूर्प से केवल एक बार पछोरता है। क्योंकि पितृगण एक बार परलोक पहुँचकर अपुनरावृत्त रहते हैं अतः हविर्धान्य को एक ही बार पछोरता है॥८॥

तत्पश्चात् अध्वर्यु दक्षिणाभिमुख ही अवहनन स्थान पर दृषद् और उपल (सिल-लोढ़ी) को रखता है और गार्हपत्य कुण्ड के दक्षिण भाग में छः कपालों को पुरोडाशश्रपणार्थ रखता है। दक्षिण भाग में कपालों को इसलिये रखते हैं कि दक्षिण दिशा पितृगणों की है; अतः गार्हपत्य कुण्ड में दक्षिण दिशा की ओर पुरोडाशश्रपणार्थ षट् कपाल स्थापित करते हैं॥९॥

---

१. गार्हपत्यस्य पुरस्तादवहननपेषणे (का.श्रौ.सू. ५.२०२)। २. दक्षिणार्द्धे कपालोपधानम्। धानाभर्जनं दक्षिणाग्नौ (का.श्रौ.सू. ५.२०३,२०४)।

**(न्तेऽथ) अथ दक्षिणेनान्वाहार्यपचनम्। चतुःस्रक्तिं व्वेदिं करोत्यवान्तरदिशोऽनु स्रक्तीः करोति चतस्रो वा ऽअवान्तर-दिशोऽवान्तरदिशो वै पितरस्तस्मादवान्तरदिशोऽनु स्रक्तीः करोति॥१०॥**

**तन्मध्येऽग्निउँ समादधाति। पुरस्ताद्वै देवाः प्रत्यञ्चो**

---

**अथ दक्षिणेनान्वाहार्यपचनं चतुःस्रक्तिं वेदिं करोति। अवान्तरदिशोऽनु स्रक्तीः करोति। चतस्रो वा अवान्तरदिशः। अवान्तरदिशो वै पितरः। तस्मादवान्तरदिशोऽनु स्रक्तीः करोति॥१०॥**

**तन्मध्येऽग्निं समादधाति। पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्ताः।**

---

पित्र्याया वेदेर्निर्माणं विधत्ते—**अथ दक्षिणेनेति।** **चतुःस्रक्तिमिति।** चतस्रः स्रक्तयः कोणा यस्याःसा तथोक्ता। तासां चतुःस्रक्तीनामाग्नेयाद्यवान्तरदिक्सम्बन्धं विधत्ते—**अवान्तरदिशोऽन्विति।** लक्षणे अनोः कर्मप्रवचनीयत्वम् (पा.सू. १.४.८४) 'कर्मप्रवचनीययुक्ते'-(पा.सू. २.३.८) इति द्वितीया। अवान्तरदिक्स्थाः स्रक्तीः कुर्यादित्यर्थः। स्रक्तीनां चतुष्ट्वमुपपादयति—**चतस्रो वा इति।** पितृणामवान्तरदिक्स्थता श्रुत्यन्तरप्रसिद्धया अवगन्तव्या॥१०॥

अथाग्निस्थापनं विधत्ते—**तन्मध्य इति।** दक्षिणाग्निमाहृत्य तस्या वेदेर्मध्ये स्थापयेदित्यर्थः। तथा च कात्यायनः-'अवान्तरदिक्स्रक्तिमाह्यान्ते, दक्षिणाग्निं, मध्येऽस्याः करोति'-(का.श्रौ.सू. २०९.२१०) इति एतन्मध्ये स्थापनमुप-पादयति—**पुरस्ताद्वा इत्यादि।** 'पुरस्तात्' पूर्वस्यां दिशि आहवनीयसमीपे 'प्रत्यञ्चः' प्रत्यङ्मुखाः सन्तो देवाः 'मनुष्यान्' ऋत्विग्यजमानान् 'अभि' लक्ष्य 'उपावृत्ताः' उपगता भवन्ति 'तस्मात्' कारणात् 'तेभ्यः' देवेभ्यः 'प्राङ्' मुखः

---

अब दक्षिणाग्नि के दक्षिण की ओर एक चौकोर वेदि बनाता है, जिसके कोने अवान्तर दिशाओं की ओर होते हैं। अवान्तर दिशायें चार हैं तथा अवान्तर दिशा ही पितरों (से सम्बन्धित) है। इसलिये वेदि के कोने (आग्नेयादि) अवान्तर दिशाओं की ओर होते हैं॥१०॥

उस वेदि के मध्य में दक्षिणाग्नि से आहृत अग्नि को रखता है। यज्ञशाला में पूर्व दिक्स्थ आहवनीय के समीप पश्चिमाभिमुख होकर देवगण ऋत्विग्यजमानादि मनुष्यों के निमित्त स्थित रहते हैं। अतएव अध्वर्यु पूर्वाभिमुख खड़ा होकर आहुति देता है। (किन्तु) पितृगण सभी ओर स्थित रहते है। अवान्तर दिशायें पितरों का

---

१. दक्षिणेन दक्षिणाग्निं परिवृत्तमुद्धारं तन्मध्ये वेदिं करोत्यवांतरदिक्स्रक्तिमाह्यांते (का.श्रौ.सू. ५.२१)।

मनुष्यानभ्युपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति सर्व्वतः पितरोऽवान्तरदिशो वै पितरः सर्व्वत ऽइव हीमा अवान्तर-दिशस्तस्मान्मध्येऽग्निँ समादधाति॥११॥

स तत एव प्राक्स्तम्बयजुर्हरति। स्तम्बयजुर्हृत्वाऽथेत्येवाग्रे

---

तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति। सर्वतः पितरः। अवान्तरदिशो वै पितरः। सर्वत इव हीमा अवान्तरदिशः। तस्मान्मध्येऽग्निं समादधाति॥११॥

स तत एव प्राक् स्तम्बयजुर्हरति। स्तम्बयजुर्हृत्वा–अथेत्येवाग्रे

---

'तिष्ठन्' अध्वर्युः जुहोति। पितरस्तु सर्वतो व्याप्यावस्थिताः। तेषां सर्वतोमुखत्वमुपपादयति—**सर्वतः पितर इति।** अवान्तरदिशां व्यापित्वेन तद्रूपाणां पितॄणामपि व्यापित्वात् प्राच्याद्यन्यतमदिङ्मुखत्वं दुर्ज्ञानमिति सर्वतः परीत्य हवनार्थं मध्येऽग्नेः स्थापनमिति निगमनवाक्यस्यार्थः॥११॥

**स तत एवेत्यादि।** अस्मिन् हि पितृयज्ञे दक्षिणा दिक् प्राची जाता, ततः प्राक्प्रतीच्यौ तु दक्षिणोत्तरदिशौ सम्पन्ने; तत्र वामभागेऽवस्थिता प्राची दिक् उत्तरा, दक्षिणभागावस्थिता प्रतीची दिक् दक्षिणा; तथाच प्रकृतौ उदीच्यां दिशि क्रियमाणं स्तम्बयजुर्हरणमत्र प्राच्यां सम्पद्यते। अयमर्थः—तस्या वेदेः सकाशादेव सोऽध्वर्युः प्राक् प्राच्यां दिशि स्तम्बयजुर्हरेत्। तस्या वेदेः परिग्रहमभिनयेन दर्शयति—**अथेत्येवाग्रे इति।** 'अग्रे' प्रथमम् 'इत्येव' एवमेव पश्चाद्भागे दक्षिणापवर्गं रेखया परिगृह्णीयात्। 'अथ' अनन्तरम् 'इति' एवम् उत्तरतः प्रागपवर्गं परिगृह्णीयात्। एवं पुरस्ताद् दक्षिणापवर्गं परिगृह्णीयात्। अत्र प्रतीच्युदीचीप्राचीत्यनेन क्रमेण पूर्वोक्तरीत्यादक्षिणाप्रतीच्युदग्दिशो भवन्ति। तासु दिक्षु परिग्रहणं प्रकृतौ व्याख्यातम् (श.प.कां. १.४.८-२१) सूत्रितश्च कात्यायनेन—'पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च'–इति (का.श्रौ.सू. २.१६७)।

---

स्थान है। (जिसप्रकार) आग्नेयादि अवान्तर दिशायें चारों ओर हैं (तथैव पितृगण भी सर्वतो व्याप्त हैं) इसलिये वह अग्नि को मध्य में रखता है (ताकि पितृगणों को हवि प्राप्त हो)॥११॥

अध्वर्यु चतुरस्रवेदि स्थान से स्तम्बयजु संज्ञक (कुश) को पूर्व दिशा की ओर फेंकता है। तत्पश्चात् कुशों से वेदी को घेरता है पहले इस प्रकार (पश्चिम की ओर), फिर इस प्रकार (उत्तर की ओर), फिर इस प्रकार (पूर्व की ओर)। तदनन्तर (अध्वर्यु) रेखा खींचता है। लकीर (या पंक्ति) प्रतीची-उदीची-प्राची (=दक्षिण-प्रतीची-उदीची) क्रम से रेखाकरण करता है और जो कुछ हटाना होता है उसे

**परिगृह्णात्यथेत्यथेति पूर्व्वेण परिग्रहेण परिगृह्य लिखति हरति यद्धार्य्यं भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह प्रोक्षणीरासादयेत्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति स्रुचः सम्मार्ष्ट्याज्येनोदैति स यज्ञोपवीती भूत्वाऽज्यानि गृह्णाति॥१२॥**

---

**परिगृह्णाति, अथेति, अथेति–पूर्वेण परिग्रहेण परिगृह्य लिखति। हरति–यद्धार्यं भवति। स तथैवोत्तरेण परिग्रहेण परिगृह्णाति। उत्तरेण परिग्रहेण परिगृह्य, प्रतिमृज्याह–'प्रोक्षणीरासादय' इति। आसादयन्ति प्रोक्षणीः। इध्मं बर्हिरुपसादयन्ति। स्रुचः सम्मार्ष्टि। आज्येनोदैति। स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति॥१२॥**

---

लेखनादीनि यानि वेदिसम्बन्धीनि कर्माणि एतानि सर्वाणि अत्रापि[1] तथैव कर्त्तव्यानि इत्यभिप्रेत्य सिद्धवदनुक्रामति—**लिखति हरति यद्धार्यमित्यादिना**। 'यत्' 'हार्यं' हरणीयं भवति, तत् हरेत् इति सम्बन्धः। **स तथैवेति**। येन प्रकारेण पूर्वपरिग्रहः कृतः, तेनैव प्रकारेणोत्तरं परिग्रहं कुर्यात्।

ननु 'परौ यज्ञे'–(पा.सू. ३.३.४७) इति परिपूर्वाद् ग्रहेर्यज्ञविषये घञा भवितव्यम्, कथमच्पूर्व-पूर्वपरिग्रहेणेति, उत्तरपरिग्रहेणेति च रूपसिद्धिः? नैष दोषः—'व्यत्ययो बहुलम्'–(पा.सू. ३.१.८५) इति 'ग्रह-वृ-दृ-नि-श्चि-गमश्च' (पा.सू. ३.३.५८) इत्यप् भवति।

**प्रतिमृज्येति**। 'पुरा क्रूरस्य'–इति प्रकृतौ यदनुमार्जनम् तत् कृत्वेत्यर्थः। प्रकृतिवदेव 'प्रोक्षणीरासादय'–इति प्रैषमग्नीध्रप्रेषितार्थमनुष्ठानञ्चाह—**प्रोक्षणीरित्यादिना। स यज्ञोपवीतीति**। एतावत् कर्म प्राचीनावीतिनैवाध्वर्युणा कर्त्तव्यम्; 'सः' अध्वर्युः इदानीं 'यज्ञोपवीती' 'भूत्वा' प्रकृतिवदेव 'आज्यानि' गृह्णीयात्[2]॥१२॥

---

**भी इसी क्रम से हटा देता है। अब अध्वर्यु ने जिसप्रकार वेदी का पूर्वपरिग्रह किया उसीप्रकार उत्तर-परिग्रह भी करता है। तदनन्तर स्फ्य से वेदी का समीकरण एवं दक्षिणप्रवणता सम्पादित कर अध्वर्यु अग्नीध को प्रैष देता है—'प्रोक्षणी को स्थापित कीजिये'। तदनन्तर वे प्रोक्षणी को रखते हैं, समिधा और बर्हि को प्रोक्षणी के पास रखते हैं। तत्पश्चात् स्रुचियों को पोंछता है और आज्यग्रहण करता है। यहाँ अध्वर्यु सव्य यज्ञोपवीत धारण किये ही आज्यग्रहण करता है॥१२॥**

---

१. पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात् (का.श्रौ.सू. २.१७०)। २. यज्ञेपवीत्याज्यग्रहणे (का.श्रौ.सू. ८.३१३)।

तुदाहुः। ( द्विँ ) द्विरुपभृति गृह्णीयाद्वौ ह्यत्रानुयाजौ भुवत इति तुद्वष्टावेव कृत्व उपभृति गृह्णीयान्नेद्यज्ञस्य विधाया अयानीति तुस्मादष्टावेव कृत्व ऽउपभृति गृह्णीयादाज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा॥१३॥

प्रोक्षणीरुध्वर्युरादत्ते। स इध्ममेवाग्रे प्रोक्षत्युथ व्वेदिमुथास्मै

तदाहुः–द्विरुपभृति गृह्णीयात्। द्वौ ह्यत्रानुयाजौ भवत इति। तद्वष्टावेव कृत्व उपभृति गृह्णीयात्। नेद्यज्ञस्य विधाया अयानीति तस्मादष्टावेव कृत्व उपभृति गृह्णीयात्। आज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा॥१३॥

प्रोक्षणीरध्वर्युरादत्ते। स इध्ममेवाग्रे प्रोक्षति। अथ वेदिम्। अथास्मै

तत्रोपभृतिग्रहणे केषाञ्चिन्मतमुपन्यस्यति—**तदाहुरिति**। 'द्वौ ह्यत्र'–इति तत्र कारणाभिधानम्। 'अत्र' खलु पितृयज्ञे 'हि' यस्माद् 'द्वौ' एव 'अनुयाजौ' प्रयाजानुयाजानामपि बर्हिष्ट्वस्य विधास्यमानत्वात् प्रथमस्यानुयाजस्य बर्हिषोऽननुष्ठाने सति द्वावेवानुयाजौ 'भवतः', अतस्तदर्थं 'द्विरुपभृति गृह्णीयात्'। ननु प्रयाजेषु समानयनार्थमपि ग्रहीतुमाज्येन भवितव्यमिति चेत्, न; प्रयाजेष्वपि बर्हिर्युक्तस्य चतुर्थयागस्य प्रतिषेधेन तत्प्रयुक्तस्य समानयनस्याप्यभावात्। अत एवोक्तं सूत्रकृता—'असमानयनं वा बर्हिःसंयोगात्' (का.श्रौ.सू. ५.२२४) इति। इदानीं पक्षान्तरमाह—**तद्वष्टावेवेति**। प्रकृतिवद् अष्टकृत्व एव 'उपभृति गृह्णीयात्'। गृह्णतोऽभिप्रायमाह—**नेदिति**। यज्ञसम्बन्धिन्याः विधायाः विधा प्रकारः संख्या तस्मात् 'न एव अयानि' गच्छामि 'इति' अनेनाभिप्रायेणेत्यर्थः। आज्यग्रहणानन्तरमिध्मप्रोक्षणादिकर्मस्वध्वर्योः पुनः प्राचीनावीतित्वञ्च विधत्ते—**आज्यानि गृहीत्वेति**॥१३॥

इध्मप्रोक्षणादिकं प्रकृतिवदेव कर्त्तव्यमित्यनुक्रामति—**प्रोक्षणीरित्यादिना**। **अथास्मा इति**। 'अथ' वेदिप्रोक्षणानन्तरम् 'अस्मै' अध्वर्यवे 'बर्हिः प्रयच्छन्ति'

इस सम्बन्ध में कुछ लोग कहते हैं कि—पितृयज्ञ में दो अनुयाज होते हैं; इसलिये उपभृत् में दो बार आज्यग्रहण करे। परन्तु पक्षान्तर यह है कि—उसे उपभृत् में आठ बार आज्यग्रहण करना चाहिये। क्योंकि कहीं ऐसा न हो कि वह यज्ञ की विधि से दूर हो जाय। इसलिये आठ बार आज्यग्रहण करे। आज्यग्रहण के अनन्तर यज्ञोपवीत अपसव्य (दाहिने कन्धे पर) करके–॥१३॥

अध्वर्यु प्रोक्षणी लेता है और पहले समिधों पर जल छिड़कता है, फिर वेदी पर। तत्पश्चात् अध्वर्यु को बर्हि (= कुशायें) देते हैं और वह बर्हि को पूर्व की

१. 'मेव' इति पा.।

**बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्त्रᳬंस्य ग्रन्थिन्न प्रस्तरं गृह्णाति सकृदु ह्येव पराञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति॥१४॥**

**(त्यु) अथ सन्नहनमनुविस्त्रᳬंस्य। (स्या) अपसलवि त्रिः परिस्तृणन्पर्यैति सोऽपसलवि त्रिः परिस्तीर्य यावत्प्रस्तरभाजनं**

---

बर्हिः प्रयच्छन्ति। तत् पुरस्ताद् ग्रन्थ्यासादयति। तत् प्रोक्ष्य, उपनिनीय, विस्त्रंस्य ग्रन्थिम्। न प्रस्तरं गृह्णाति। सकृदु ह्येव पराञ्चः पितरः। तस्मान्न प्रस्तरं गृह्णाति॥१४॥

अथ सन्नहनमनुविस्त्रंस्य, अपसलवि त्रिः परिस्तृणन् पर्यैति। सोऽपसलवि त्रिः परिस्तीर्य यावत् प्रस्तरभाजनं तावत् परिशिनष्टि। अथ

---

आदाय अध्वर्युहस्ते परिकर्मिणो दद्युरित्यर्थः। **तत्पुरस्ताद्ग्रन्थीति**। 'तद्' बर्हिः 'पुरस्ताद्ग्रन्थि' पूर्वस्यां दिशि यथा भवति तथा वेद्यामध्वर्युरासादयेदित्यर्थः[1]। तत् प्रकृतिवदेव प्रोक्षणीशेषम् 'उपनीय' बर्हिषः सन्नहनस्य, ग्रन्थिं विस्त्रंस्य, ततः सकाशात् प्रस्तरमुष्टिं पृथङ् न गृह्णीयात्[2]। तत्र कारणमाह—**सकृदु ह्येवेति**। बर्हिषः सकाशात् प्रस्तरस्य पृथक्करणे बर्हिषः सकृत्त्वं व्याहन्येत, न चैतत् पितृयज्ञे युक्तमिति भावः॥१४॥

बर्हिषः स्तरणप्रकारमाह—**अथ सन्नहनमिति**। सन्नह्यतेऽनेनेति सन्नहनं रज्जुः। 'अपसलवि' अप्रदक्षिणम्, अग्निं परितो वेद्यां 'त्रिः परिस्तृणन्' पर्येतीत्यर्थः। एवं परितः स्तरणानन्तरं 'यावद्' बर्हिः 'प्रस्तरभाजनं' प्रस्तरस्य

---

ओर गाँठ करके वेदी पर रखता है। तत्पश्चात् उस पर जल छिड़क कर, गाँठ खोलता है; किन्तु उन कुशाओं (बर्हि) में से प्रस्तर हेतु बर्हि नहीं निकालता है क्योंकि एक ही बार पितृगण ऊर्ध्व लोक जाते हैं इसलिये वह बर्हि से प्रस्तर हेतु कुशाओं को पृथक् नहीं करता क्योंकि तब सकृतत्त्व नष्ट हो जायगा॥१४॥

(बर्हि (कुशाओं) के मुट्ठे को) खोलकर वह अप्रदक्षिण-क्रम से अर्थात् दाहिनी ओर से बाईं ओर वेदी पर कुशायें बिछाते तीन बार घूमता है। दाहिनी ओर से बाईं ओर अर्थात् अप्रदक्षिण-क्रम से तीन तहों में वेदी पर कुशायें फैलाकर वह इतने कुश बचा लेता है कि प्रस्तर (कुशमुष्टि) बन सके। तदनन्तर वह तीन बार

---

१. प्राग्ग्रन्थि बर्हिः (का.श्रौ.सू. ५.२१५)। २. विस्रंस्य यूनं चाग्रे गृहीत्वा (का.श्रौ.सू. ५.२१६)। यूनं सन्नहनमिति याज्ञिकदेवः।

तावत्परिशिनष्ट्यथ पुनः प्रसलवि त्रिः पर्येति तद्यत्पुनः प्रसलवि त्रिः पर्येति तद्यानेवामूंस्त्रयान्पितॄनन्ववागात्तेभ्य एवैतत्पुनरपोदेतीमꣳ स्वं लोकमभि तस्मात्पुनः प्रसलवि त्रिः पर्येति॥१५॥

स दक्षिणैव परिधीन्परिदधाति। दक्षिणा प्रस्तरꣳ स्तृणाति

---

पुनः प्रसलवि त्रिः पर्येति। तद्यत्पुनः प्रसलवि त्रिः पर्येति। तद् यानेवामूंस्त्रयान् पितॄनन्ववागात्–तेभ्य एवैतत् पुनरपोदेति–इमं स्वं लोकमभि। तस्मात् पुनः प्रसलवि त्रिः पर्येति॥१५॥

स दक्षिणैव परिधीन् परिदधाति। दक्षिणा प्रस्तरं स्तृणाति। नान्तर्दधाति

---

योग्यं पर्य्याप्तं भवति, 'तावत्' 'परिशिनष्टि' अवशेषयेत्। **अथ पुनरित्यादि।** 'अथ' अप्रदक्षिणपरिगमनानन्तरम् 'पुनः' 'प्रसलवि' प्रदक्षिणं 'त्रिः पर्येति'। अत एव सूत्रकृतोक्तम्—'बर्हिः—विस्रंस्य यूनश्चाग्रे गृहीत्वा त्रिस्तृणन्नग्निं पर्येति, प्रस्तरमात्रं शिष्ट्वा तावत् प्रतिपर्येति'—इति (का.श्रौ.सू. ५.२१५-२१७)।

एतत् प्रतिपरिगमनमनूद्य स्तौति—**तद्यानेवेति।** 'तत्' तत्र स्तरणसमये त्रिरप्रदक्षिणगमनेन 'यान्' एव 'अमून्' विप्रकर्षेण पितृलोकेऽवस्थितान् त्रिविधान् 'पितृभ्यः सोमवद्भ्यः'—इत्यादिना हविर्देवतात्वेन प्राग्दर्शितान् 'अन्ववागात्' अनुप्राप्नोत् 'एतत्' एतेन पुनस्त्रिः प्रदक्षिणकरणेन 'तेभ्य एव' पितृभ्यः सकाशात् 'पुनः' 'अपोदेति' अपगच्छति, 'स्वं' स्वकीयम् 'इमं लोकम्' 'अभिं' प्राप्तुम्। तस्मादिति, प्रतिपादितार्थनिगमनम्॥१५॥

**स दक्षिणैव परिधीनिति।** 'सः' स्वयं 'दक्षिणा' दक्षिणाग्रान् 'एव' 'परिधीन्' परिदध्यात्। ततः पश्चात् पुरस्ताच्च तत्र दक्षिणाग्नौ परिधीन्, उत्तरप्रागग्रं प्रस्तरं, सर्वमवशेषितं बर्हिश्च दक्षिणाग्रं स्तृणीयात्। प्रकृतितः प्राप्तं

---

प्रदक्षिण-क्रम से अर्थात् बाईं ओर से दाहिनी ओर को प्रतिपरिगमन करता (घूमता) है। वह तीन बार प्रदक्षिण-क्रम से बाईं ओर से दाहिनी ओर को इसलिये आता है कि पहले अध्वर्यु वेदी पर बर्हिस्तरण के समय जिन दूरस्थ अपने तीन पितरों के लिये गया था अब वह फिर अपने लोक को वापिस आ जाता है। अतएव वह तीन बार प्रदक्षिण-क्रम से बाईं ओर से दाहिनी ओर को आता है॥१५॥

अध्वर्यु परिधियों को दक्षिणाग्नि के समीप दक्षिणाग्र रखता है और प्रस्तर को भी वहीं दक्षिणाग्र कर रखता है। दो विधृति संज्ञक कुशाओं को बीच में नहीं रखता; क्योंकि पितर सकृत् ही परलोक को जाते हैं। इसलिये विधृति संज्ञक

**नान्तुर्द्दधाति व्विधृती सकृदु ह्येव पुराञ्चः पितरस्तुस्मान्नान्तुर्दधाति व्विधृती॥१६॥**

**स तुत्र जुहूमासादयति। (त्यु) अुथ पूर्व्वामुपभृतमुथ ध्रुवामुथ पुरोडुाशमुथ धाना ऽअुथ मन्थुमासुाद्य हवीꣳषि संमृशति॥१७॥**

**ते सुर्वऽएवु यज्ञोपवीतुिनो भूत्वा। (त्वे) इत्थाद्युजमानश्च ब्रह्मा च पश्चात्परीतुः पुरुस्तादग्नीत्॥१८॥**

---

**विधृती। सकृदु ह्येव पराञ्चः पितरः। तस्मान्नान्तर्दधाति विधृती॥१६॥**

**स तत्र जुहूमासादयति। अथ पूर्वामुपभृतम्, अथ ध्रुवाम्, अथ पुरोडाशम्, अथ धानाः, अथ मन्थमासाद्य हवींषि संमृशति॥१७॥**

**ते सर्व एव यज्ञोपवीतिनो भूत्वा, इत्थाद्यजमानश्च ब्रह्मा च पश्चात् परीतः। पुरस्तादग्नीत्॥१८॥**

---

विधृत्यन्तर्द्धानं निषेधति—**नान्तर्दधातीति**। अन्तर्द्धाने हि प्रस्तरबर्हिषी विभज्येयाताम्। तथा च सकृत्त्वं हीयेतेत्यभिप्रेत्याह—**सकृदु ह्येवेति**॥१६॥

तस्मिन् प्रस्तरे जुह्वादीनामासादनस्य प्रकारविशेषं विधत्ते—**स तत्रेति**। प्रस्तरस्योपरि पश्चाद्भागे प्रथमं 'जुहूम्' आसाद्य, ततः पूर्वभागे 'उपभृतम्', ततः पुरस्तात् 'ध्रुवाम्' अन्ततो 'हवींषि' 'संमृशति' इत्यनेन क्रमेणासादयन्नासादित-हविषामभिमर्शनं कुर्यादित्यर्थः[1]॥१७॥

**ते सर्व एवेति**। न केवलमध्वर्युरेव, ऋत्विग्यजमानाः सर्व एव ते अस्मिन् समये 'यज्ञोपवीतिनः' भवेयुः 'इत्थात्' इत्यभिनयदर्शने; अनेन प्रकारेण ब्रह्मयजमानौ आहवनीयस्य पुरतो गत्वा, अप्रदक्षिणं पश्चात्' पितृयज्ञवेदेः पश्चाद्देशं

---

कुशद्वय को बीच में नहीं रखता (ताकि प्रस्तर-बर्हि में पृथक्त्व न हो)॥१६॥

अब अध्वर्यु प्रस्तर के पश्चाद्भाग पर जुहू को रखता है और उसके पूर्व भाग में उपभृत को तथा उसके आगे ध्रुवा तत्पश्चात् क्रमशः पुरोडाश, धाना और मन्थ को रखकर हवियों को स्पर्श करता है॥१७॥

तदनन्तर ऋत्विग्यजमान सभी यज्ञोपवीती (= सव्य) होकर यजमान और ब्रह्मा आहवनीय के आगे जाकर पितृयज्ञवेदी के पश्चिम भाग से चलते हैं और अग्नीध

---

१. प्राक्संस्थं हविरासादनम् (का.श्रौ.सू. ५.२१९)।

(त्ते) तेनोपाꣳशु चरन्ति। तिर इव वै पितरस्तिर इवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति॥१९॥

परिवृते चरन्ति। तिर इव वै पितरस्तिर इवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति॥२०॥

(न्त्य) अथेध्ममभ्यादधदाह। (हा) अग्नये समिध्य-

---

**तेनोपांशु चरन्ति। तिर इव वै पितरः। तिर इवैतद्–यदुपांशु। तस्मादुपांशु चरन्ति॥१९॥**

**परिवृते चरन्ति। तिर इव वै पितरः। तिर इवैतत्–परिवृतम्। तस्मात् परिवृते चरन्ति॥२०॥**

**अथेध्ममभ्यादधदाह–'अग्नये समिध्यमानायानुब्रूहि' इति। स एकामेव**

---

'परीतः' परिक्रामत इत्यर्थः। आग्नीध्रस्तु तस्या वेदेः 'पुरस्तात्' पूर्वदेशं गच्छन् तत्र हि स्तम्बयजुर्हरणं कृतम्॥१८॥

पितृयज्ञेनोपांशुप्रचरणं विधत्ते—**तेनोपांशु चरन्तीति। तिर इव वा इति।** तिरोहिता एव पितरोऽभवन्, तेभ्यः 'यद्' 'उपांशु' करणम्, 'तत्' अपि 'तिरः' तिरोहितमेव भवति तथा चान्तर्हितान्पितॄनुद्दिश्योपांशुप्रचरणं युक्तमिति भावः॥१९॥

पितृयज्ञस्थानस्य परिश्रयणं विधाय स्तौति—**परिवृत इति।** 'परिवृते' परिवेष्टिते स्थाने; सिद्धमन्यत्॥२०॥

**स एकामेवेति।** 'सः' होता 'अग्नये समिध्यमानाय' इति अध्वर्युणा प्रेषितः

---

पितृयज्ञ वेदी से पूर्व की ओर जाकर स्तम्बयजुर्हरण करता है॥१८॥

पितृयज्ञ में सभी कार्य उपांशु=मन्द स्वर में करते हैं। क्योंकि पितर भी तिरोहित हैं और जो धीरे-धीरे उपांशु पढ़ा जाय वह भी तिरोहित के ही समान है। इसलिये उपांशु ही कर्म करते हैं॥१९॥

पितृ-यज्ञ को घिरे हुए स्थान में करते हैं। (क्योंकि) पितृगण तिरोहित रहते हैं और जो घिरे हुए स्थान में कर्म किया जाता है वह भी तिरोहित के तुल्य है॥२०॥

अब अध्वर्यु समिधों को हाथ में लेकर होता से कहता है—'प्रदीप्त अग्नि के निमित्त मंत्रपाठ कीजिये'। तदनन्तर होता एक सामिधेनी ऋचा को ही तीन बार

---

१. सामिधेनीप्रैषाद्याज्यभागाभ्यां यज्ञोपवीतिनः सर्व्वे। पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत् (का.श्रौ.सू. ५.२२०.२२१)। २. पितृयज्ञ उपांशुचरणम्। पूर्वेणाहवनीयं प्रणीताः परिहरत्यर्थवच्च (कौ.श्रौ.सू. ५.१९०-१९६)।

मानायानुब्रूहीति स एकामेव होता सामिधेनीं त्रिरन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मादेकाᳫंहोता सामिधेनीं त्रिरन्वाह॥२१॥

सोऽन्वाह। (हो) उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नु शत आवह पितॄन्हविषेऽअत्तवऽइत्यथाग्निमावह सोममावह

---

होता सामिधेनीं त्रिरन्वाह। सकृदु ह्येव पराञ्चः पितरः। तस्मादेकां होता सामिधेनीं त्रिरन्वाह॥२१॥

**सोऽन्वाह–'उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषे अत्तवे'–इति (वा.सं. १९.७०)। अथ–'अग्निमावह,**

---

सन् 'एकामेव' 'सामिधेनीं' 'त्रिः' ब्रूयात्। न तु प्रकृतिवत् 'प्र वो वाजाः' इत्याद्याः सामिधेन्यः पञ्चदश (ऋ.सं. ३.२७.१-१५) तत्र सामिधेन्येकत्वे कारणमाह—**सकृदु ह्येवेति**॥२१॥

अनुवक्तव्यां तामेकां सामिधेनीं दर्शयति—**सोऽन्वाहेति**। 'सः' होता 'उशन्तस्त्वा–' 'इति' एतां सामिधेनीं त्रिः अनुब्रूयात्। अस्यायमर्थः—हे अग्ने! 'उशन्तः' कामयमानाः वयं त्वां 'निधीमहि' वेद्यां स्थापयामः। तथा 'उशन्तः' त्वत्साध्यं यागं कामयमाना एव सन्तः 'समिधीमहि' त्वां समिद्धं करवामहै। अग्ने! त्वमपि अस्मदुक्तमर्थम् 'उशन्' कामयमानः सन् 'उशतः' अस्मदीयं यज्ञं कामयमानान् 'पितॄन्' 'आवह' आगमय, किमर्थम् 'हविषे अत्तवे' अस्माभिर्दत्तं हविर्भोक्तुम् 'क्रियाग्रहणमपि कर्त्तव्यम्'–(पा.सू. १.४.३२ सू.वा. १) इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। 'अद भक्षणे'–(धा.पा.अदा.प. १) इति अस्मात् 'तुमर्थे सेसेन्'–(पा.सू. ३.४.९) इति तवेन् प्रत्ययः।

**अथाग्निमाहवेत्यादि**। सामिधेन्यनुवचनानन्तरम् 'अग्निमावह'—इत्याद्यावाहननिगदं ब्रूयात्। तत्राग्नीषोमावाज्यभागदेवते, पितरः सोमवन्त इत्याद्याः

---

पढ़ता है। (यतः) पितर लोग एक ही बार परलोक प्रस्थित होते हैं, इसलिये एक ही सामिधेनी ऋचा को तीन बार होता पढ़ता है॥२१॥

होता इस सामिधेनी मंत्र को पढ़ता है—'उशन्तस्त्वा नि धीमहि उशन्तः समिधीमहि। उशन्नुशत ऽआ वह पितॄन् हविषेऽअत्तवे' (यजु. १९.७०)। (अर्थ–) हे अग्निदेव! 'हम आपको वेदी पर प्रेम से रखते हैं। आदरपूर्वक आपको प्रज्वलित करते हैं। हे अग्ने, आप हमारे द्वारा प्रार्थित पितरों को हविर्ग्रहणार्थ सादर इस यज्ञ में लाइये। अब सामिधेनी मंत्रपाठ के बाद होता प्रत्येक देवता के आवाहनार्थ वाक्य (निगद) को इस प्रकार बोलता है—'अग्नि को लाइये, सोम को लाइये, सोमवन्त

पितॄन्त्सो̱मवत आ̱वह पितॄन्ब॒र्हिषद आ̱वह पितॄनग्निष्वात्ताना̱वह दे॒वा ३ँ ऽआज्यपां ऽआ̱वहाग्नि॒ꣳ होत्राया̱वह स्वं महि̱मानमा̱वहेत्यावाह्योपविशति॥२२॥

(त्य॒) अ̱थाश्राव्य न हो̱तारं प्र̱वृणीते। पितृयज्ञो वा̱ अयं नेद्धोतारं पितृ̱षु द॒धानी̱ति त̱स्मान्न हो̱तारं प्रवृणीते सी̱द

---

सोममावह, पितॄन् सोमवत आवह, पितॄन् बर्हिषद आवह, पितॄनग्निष्वात्तानावह, देवा३न् आज्यपा३न् आवह, अग्निं होत्रायावह, स्वं महिमानमावह–इत्यावाह्योपविशति॥२२॥

अथाश्राव्य न होतारं प्रवृणीते। पितृयज्ञो वा अयम्, नेद्धोतरिं पितृषु दधानीति। तस्मान्न होतारं प्रवृणीते। 'सीद होतः'–इत्येवाह। उपविशति

---

प्रधानदेवताः, 'देवा आज्यपाः' प्रयाजानुयाजदेवताः। तेषां सर्वेषामावाहनं कर्त्तुमग्निः प्रेष्यते–**'अग्निं होत्राय'**–इत्यादिना। शेषेण स्विष्टकृद्देवताया आवाहनप्रतिपादनम्। 'होत्राय' होमाय होतृकर्मणे वा 'अग्निम् आवह' अग्निष्वात्तनाम्नस्तव स्वभूतो महिमा, तम्, तद्रूपस्वीकारिणमग्निमावहेत्यर्थः।[1] **इत्यावाह्येति**। अनेन निगदेनावाह्य तत्रोपविशेदित्यर्थः॥२२॥

प्रकृतिवन् प्राप्तं होतृवरणं निषेधति—**अथाश्राव्य न होतारमिति**[2]। आवाहनानन्तरमाश्रावणप्रत्याश्रावणे कृत्वा, 'सीद होतः!' इत्येवाध्वर्युर्ब्रूयात्; न तु 'अग्निर्देवो दैव्यो होता'–इति निगदेन होतारं प्रवृणीतेत्यर्थः। एतदुपपादयति—**पितृयज्ञो वा अयमिति**। यतोऽयं पितृयज्ञः, अतोऽत्र पितरः सन्निहिताः; तत्र यदि होतुर्वरणं कुर्यात्, तदा 'न' 'होतारं' तेषु पितृषु 'दधाति' स्थापयति, न चैतद्

---

पितरों को लाइये, बर्हिषद् पितरों को लाइये, अग्निष्वात्ता पितरों को लाइये, आज्यपा (=घृतपायी) देवों को लाइये, होतृ-कर्म के लिये अग्नि को आवाहित कीजिये; अपनी महिमा को आवाहित कीजिये'। इस प्रकार समस्त देवों का आवाहन कर मानुष होता स्वस्थान पर बैठ जाता है॥२२॥

अब आश्रावण-प्रत्याश्रावण के अनन्तर अध्वर्यु होता से—'सीद होतः' (होतपीठ पर विराजित होइये) कहता है। पितृयज्ञ में निगद (वाक्य) द्वारा होता का वरण नहीं किया जाता। (यतः) यह पितृयज्ञ है; अतः मानुष-होता पितरों की श्रेणी में न हो जाय इसलिये पितृयज्ञ में होता का वरण नहीं किया जाता। केवल

---

१. 'तद्रूपं [illegible]'–इति पा.। २. आश्राव्य सीद होतरित्येव ब्रूयात् (का.श्रौ.सू. ५.२.२२)।

**होतरित्येवाहोपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादुपबर्हिषश्चतुरः प्रयाजान्यजत्यथाज्यभागाभ्यां चरन्त्याज्यभागाभ्यां चरित्वा॥२३॥**

---

**होता होतृषदने। उपविश्य प्रसौति। प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामति। अतिक्रम्याश्राव्याह–'समिधो यज' इति। सोऽपबर्हिषश्चतुरः प्रयाजान्यजति। प्रजा वै बर्हिः, नेत्प्रजाः पितृषु दधानीति। तस्मादपबर्हिषश्चतुरः प्रयाजान् यजति। अथाज्यभागाभ्यां चरन्ति। आज्यभागाभ्यां चरित्वा॥२३॥**

---

युक्तम्, 'इति' अनेनाभिप्रायेण होतारं 'न' प्रवृणीयात्। किन्तर्हि आश्रावणानन्तरं ब्रूयात् इति, तदाह—**सीदेति**। हे 'होतः!' त्वं 'सीद' उपविश 'इति' एतद्वाक्यम् अध्वर्युर्ब्रूयात्; न होतुर्वरणम्। 'होता' चैवं कृत्वा 'होतृषदने' 'उपविशति' उपविशेत्।

स्रुगादाननिगदेनाध्वर्युः 'प्रसौति' अनुजानाति। 'षु प्रसवैश्वर्ययोः'–(धा.पा.अदा.प. ३१) इति धातुः स च 'प्रसूतः' होत्रा प्रेरितः 'अध्वर्युः' 'स्रुचौ' जुहूपभृतौ 'आदाय' 'प्रत्यङ्' मुखः अतिक्रामति। 'अतिक्रम्य' वेदेः पश्चिमभागे स्थित्वा, आश्रावणप्रभृति 'अपबर्हिषः' बर्हिश्चतुर्थः प्रयाजः।[1] तद्वर्जं 'चतुरः प्रयाजान्' यजेत। बर्हिर्वर्जनस्याभिप्रायमाह—**प्रजा वा इति**। शिष्टं निगदसिद्धम्॥२३॥

---

यह कहा जाता है कि—'हे, होता बैठ जाइये', एतदनन्तर होता बैठ जाता है। होतृ-आसन पर बैठकर होता (अध्वर्यु को) प्रेष देता है। प्रेरित होकर अध्वर्यु दो स्रुचियों (जुहू व उपभृत्) को लेता है और वेदी का अतिक्रमण कर पश्चिम की ओर जाता है तथा 'आश्रावण' देकर कहता है—'समिधो यज' ('समित्' नामक प्रथम प्रयाज के निमित्त मंत्र पाठ कीजिये)। इसप्रकार बर्हि को छोड़कर शेष चार प्रयाजों को यजन करता है। यतः बर्हि-संज्ञक प्रयाज प्रजा के निमित्त होता है अतः ऐसा न हो कि प्रजा पितरों के हवाले हो जाय; इसलिये बर्हि-संज्ञक द्वितीय प्रयाज को छोड़कर चार प्रयाजों का यजन करता है। अब दो आहुतियाँ आज्यभाक् देवताओं को दी जाती हैं और उनको देकर–॥२३॥

---

१. अपबर्हिषः प्रयाजा अनुजायाश्च (का.श्रौ.सू. ५.२.२३)।

**ते सर्व्वऽएव प्राचीनावीतिनो भूत्वा। (त्वै) एतैर्वै[1] हविर्भिः प्रचरिष्यन्त इत्थाद्यजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्तदुताश्रावयन्त्योइँऽ स्वधेत्यस्तु स्वधेति प्रत्याश्रावणꣳस्वधा नम इति व्वषट्कारः॥२४॥**

---

**तें सर्व एव प्राचीनावीतिनो भूत्वा, एतैर्वै हविर्भिः प्रचरिष्यन्तः–इत्थाद् यजमानश्च ब्रह्मा च पुरस्तात्परीतः। पश्चादग्नीत्। तदुताश्रावयन्ति। 'ॐ ३ स्वधा'–इति। 'अस्तु स्वधा'–इति प्रत्याश्रावणम्। 'स्वधा नमः'–इति वषट्कारः॥२४॥**

---

हविर्भिः प्रचरणार्थं प्राचीनावीतित्वं पुनर्विधत्ते—**ते सर्व एवेति**। 'ते' ऋत्विग्यजमानाः 'सर्व एव' 'प्राचीनावीतिनः' भवेयुः। ब्रह्मयजमानाग्नीध्राणां पूर्वं परिक्रान्तानां प्रधानयागार्थमन्यथा परिक्रमणं विधत्ते—**इत्थादिति**। 'इत्थात्' अनेन प्रकारेण ब्रह्मयजमानौ चतुःस्रक्तेर्वेदेः 'पुरस्तात्' प्रतिगच्छतः, आग्नीध्रः 'पश्चात्' प्रतिगच्छेत्। प्रधानहविषो याज्यानामाश्रावणवषट्कारानाचष्टे—**तदिति**। 'तत्' तत्र पित्र्येषु प्रधानहविष्षु 'ॐ स्वधा'–इति अध्वर्युराश्रावयेत्, 'अस्तु स्वधा' इति आग्नीध्रः प्रत्याश्रावणं कुर्यात्, होता 'स्वधा नमः'–इति वषट्कुर्यात्। अस्यायमर्थः—'ॐ श्रावय'–'अस्तु श्रौषट्' 'वौषट्' शब्दानां स्थाने एते प्रयोक्तव्या इत्यर्थः।

तत्राध्वर्युप्रैषस्यायमर्थः—ॐकारोऽङ्गीकारार्थः, स्वधेति पित्र्यं हविर्नाम। हे अग्नीत्! पितृभ्यो दीयमानमिदं हविः तवाभिमतं किमिति। तत्तथाऽस्त्विवति अग्नीत्प्रैषस्यार्थः। नमःशब्दस्त्यागार्थः। पितृनुद्दिश्यदीयमानैषा 'स्वधा' तदीयं हविः 'नमः' त्यक्तमस्तु, इति वषट्कारप्रतिनिधिभूतस्य वाक्यस्यार्थः॥२४॥

---

यज्ञस्थ सभी ऋत्विग्-यजमान अपसव्य अर्थात् जनेऊ को दाहिने कन्धे पर कर पितृयज्ञ की इन हवियों को देते हैं। पितृयज्ञ में प्रधानयाग हेतु यजमान और ब्रह्मा इस प्रकार करके (पश्चिम से) पूर्व की ओर जाते हैं और आग्नीध्र (पूर्व से) पश्चिम की ओर। पितृयज्ञीय प्रधानहवियों में (अध्वर्यु) ओश्रावय के स्थान पर कहते हैं—'ओ३म्! स्वधा'। प्रत्याश्रावण में आग्नीध्र उत्तर देता है—'अस्तु स्वधा' और वषट्कार के स्थान पर होता कहेगा—'स्वधा नमः'॥२४॥

---

१. 'एतैर्हविर्भिः'– इति नाशिकस्थवैदिकपाठपुस्तकस्थः पाठः। २. हविर्भिश्चरिष्यंतः प्रतिविपर्येति (का.श्रौ.सू. ५.२.२६)। ३. ॐ ३ स्वधेत्यस्तु स्वधेति वाऽऽश्रुत प्रत्याश्रुतेः स्वधा नम इति वषट्कार (का.श्रौ.सू. ५.२.३३)।

**(स्तु) तदु होवाचासुरिः। (रा) आश्रावयेयुरेव प्रत्याश्रावयेयुर्वषट्कुर्युर्नेद्यज्ञस्य विधाया अयामेति॥२५॥**

**(त्यु) अथाह पितृभ्यः सोमवद्भ्योऽनुब्रूहीति। सोमाय वा पितृमते स द्वे पुरोऽनुवाक्ये ऽअन्वाहैकया वै देवान्प्रच्याव्यन्ति द्वाभ्यां पितॄन्त्सकृदु ह्येव पराञ्चः पितरस्तस्माद्द्वे पुरोऽनुवाक्ये ऽअन्वाह॥२६॥**

---

**तदु होवाचासुरिः। आश्रावयेयुरेव, प्रत्याश्रावयेयुः, वषट् कुर्युः-नेद्यज्ञस्य विधाया अयामेति॥२५॥**

**अथाह-'पितृभ्यः सोमवद्भ्योऽनुब्रूहि' इति। 'सोमाय वा पितृमते'। स द्वे पुरोऽनुवाक्ये अन्वाह। एकया वै देवान् प्रच्यावयन्ति, द्वाभ्यां पितॄन्। सकृदु ह्येव पराञ्चः पितरः। तस्माद् द्वे पुरोऽनुवाक्ये अन्वाह॥२६॥**

---

प्रकृतिवदेवाश्रावणादिकं कर्त्तव्यमिति पक्षान्तरमाह—**तदु होवाचेति।** 'आश्रावयेयुः'-इत्यादिना आश्रावणादिकर्तॄणामध्वर्य्वादीनामेकत्वेऽपि पूजार्थं बहुवचनम्। 'यज्ञस्य' प्रकृतिभूतस्य दर्शपूर्णमासयागस्य 'विधायाः' विधा प्रकारः संस्थानम्, तस्मात् 'न' एव 'अयाम' प्रच्यवामहै 'इति' प्रागुदीरितस्यापेक्षा; अन्यथा हि आश्रावणादीनां प्रकृतिवदप्रयोगात् यज्ञविधायाः प्रच्युतिः स्यादित्यभिप्रायः। अत एव सूत्रकृत् स्वधाकरणयज्ञस्य विकल्पमाह स्म—'ॐस्वधेत्यस्तु स्वधेति वाऽऽश्रुतप्रत्याश्रुते'-इति (का.श्रौ.सू. ५.२.३३)॥२५॥

अनुवाक्यार्थं प्रैषवचनं प्रथमयागस्य विधत्ते—**अथाहेति।** पितृप्रधानसोमप्रधानयोरुभयोरपि युक्तत्वात् तदपेक्षया पितरः सोमवन्तः पितृमन्तो वेति विकल्पः प्रागुपन्यस्तः; तदभिप्रायेणात्रापि सम्प्रैषस्य द्वैविध्यम्। होतुरनुवाक्यावचने प्रकृतितो विशेषमाह—**स द्वे इति।** अनुवाक्याद्वित्वमुपपादयति—**एकया वा इत्यादि।** 'एकया' एव अनुवाक्यया 'देवान्' स्वस्थानात् 'प्रच्यावयन्ति' देवयजन-

---

इस पर आसुरि का कथन है कि—'दर्शपौर्णमासेष्टिवत् पितृयज्ञ' में भी आश्रावण के लिये—'ओम् श्रावय' कहे और प्रत्याश्रावण में आग्नीध्र 'अस्तु श्रौषट्' कहे और हविः प्रदानार्थ होता को 'वौषट्' ही बोलना चाहिये। पूर्वप्रतिपादित पक्ष के आश्रयण से कहीं ऐसा न हो कि यज्ञ की विधि से ही हम च्युत हो जाँय॥२५॥

तत्पश्चात् (अध्वर्यु) अनुवाक्या प्रैष देते हुए कहता है—'सोमवन्त पितरों के यजनार्थ मंत्रपाठ कीजिये' अथवा 'सोम-पितृमान्' के यजनार्थ मंत्रपाठ कीजिये। सोमवन्त पितरों के लिये (होता) दो अनुवाक्या बोलता है, तथा देवों के लिये

स उ॒पस्तृ॒णीत ऽआ॒ज्यम्। ( मु ) अ॒थास्य॒ पुरोड॒ाशस्या॒वद्यति स ते॒नैव॒ सह धाना॒नां ते॒न सह॒ मन्थ॒स्य त॒त्सकृदु॒वदधात्यु॒थो-पु॒रिष्टाद्द्विरा॒ज्यस्याभि॒घारयति, प्र॒त्यनक्त्यवदु॒ानानि ना॒तिक्रामतीत॒ एवोपोत्थु॒ायाश्रा॒व्याह पितॄन्त्सो॒मवतो यजे॒ति व्वु॒षट्कृते जुहोति॥ २७॥

---

**स उपस्तृणीत आज्यम्। अथास्य पुरोडाशस्यावद्यति। स तेनैव सह धानानाम्। तेन सह मन्थस्य। सकृदवदधाति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। प्रत्यनक्त्यवदानानि। नातिक्रामति। इत एवोपोत्थाय, आश्राव्याह–'पितृन् सोमवतो यज' इति। वषट्कृते जुहोति॥२७॥**

---

देशमागन्तुम् पितरस्तु परागमनादपुनरावृत्तिङ्गताः, अतो न ते एकया पुरोनुवाक्यया प्रच्यावयितुं शक्याः; ततः प्रयत्नविशेषे कर्त्तव्ये 'द्वाभ्यां' पुरोनुवाक्याभ्यां होता तान् 'पितृन्' आगमयतीत्यर्थः॥२६॥

प्रधानयागप्रचरणे हि त्रीणि हवींषि समवदाय एकैका देवता यष्टव्या, तत्र पितृणां सोमवतां यजनप्रकारमाह—**स उपस्तृणीत आज्यमिति। द्विराज्यस्येति।** आज्येनोपस्तरणमेकमवदानम्, पुरोडाशादिहविस्त्रयात् सकृत्सकृदवदानम्, तत् सकृदिति यदवदानं सम्पद्यते, एतेन सकृदवदधातीति वाक्यमुक्तार्थं भवति। (का.श्रौ.सू. ५.२.२७) यदि अभिघारणमुपस्तरणं च सकृदेव स्यात्, तदा चतुरवत्तसम्पत्तिर्न स्यात्; चतुरवत्तं हि यागयोग्यं द्रव्यम्, तस्माद् द्विरभिघारणं कर्त्तव्यमित्यर्थः। **प्रत्यनक्त्यवदानानीति।** अवद्यत्यस्मादित्यवदानम्, अवत्तशिष्टं हविः। 'कृत्यल्युटो बहुलम्'–(पा.सू. ३.३.११३) इति अपादाने ल्युट्। अवत्तशिष्टानि हवींषि प्रत्यज्यादित्यर्थः। प्रकृतिवत् प्राप्तमतिक्रमणं निषेधति—**नातिक्रामतीति।** कथं तर्हि कर्त्तव्यमिति तत्राह—**इत एवेति।**यत्रोपविश्यावद्यति, 'इत एव' स्थानात् 'उपोत्थाय' तत्रैव तिष्ठन्नाश्रावणादिकं कुर्यादित्यर्थः॥२७॥

---

एक अनुवाक्या बोली जाती है। (यतः) पितृगण दूरस्थ स्वलोक से सामान्यतया नहीं आते अतः एक बार के आह्वान मंत्र से उनका यज्ञ में आना संभव नहीं, इसलिये पितरों के लिये दो बार अनुवाक्या मंत्र होता द्वारा पढ़े जाते हैं॥२६॥

अब अध्वर्यु जुहू में आज्य की कुछ बूँदे डालता है तथा पुरोडाश में से टुकड़ा काटता है और साथ ही धाना और मन्थ हवियों का अंश भी रखता है। यह सब एक ही साथ (जुहू में) रख देता है फिर उन पर दो बार घी छोड़ता है तदनन्तर अवत्तशिष्ट हवियों को चुपड़ता है। जुहू में हवि लेकर अध्वर्यु दक्षिण को नहीं जाता अर्थात् वेदी का

---

१. द्विरभिघारणमनतिक्रमणं च (का.श्रौ.सू. ५.२.२८)।

(त्य्) अथाहु पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीति। स उपस्तृणीतऽआज्यमथासां धानानामवद्यति स तेनैव सहु मन्थस्य तेन सहु पुरोडाशस्य तत्सकृदुवदधात्यथोपरिष्टाद्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितॄन्बर्हिषदो यजेति व्वषट्कृते जुहोति॥२८॥

(त्य्) अथाह पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहीति। स ऽउपस्तृणीतऽआज्यमथास्य मन्थस्यावद्यति स तेनैव सहु पुरोडाशस्य तेन

---

अथाह–'पितृभ्यो बर्हिषद्भ्योऽनुब्रूहि' इति। स उपस्तृणीत आज्यम्। अथासां धानानामवद्यति। स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत् सकृदवदधाति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। प्रत्यनक्त्यवदानानि। नातिक्रामति। इत एवोपोत्थाय, आश्राव्याह–'पितॄन् बर्हिषदो यज' इति। वषट्कृते जुहोति॥२८॥

अथाह–'पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि' इति। स उपस्तृणीत आज्यम्। अथास्य मन्थस्यावद्यति स तेनैव सह पुरोडाशस्य तेन सह धानानाम्। तत्

---

द्वितीयतृतीययागयोरेवमेवानुप्राणनप्रकारं दर्शयति—**अथाहेति**। अत्रापि पूर्ववदेव पुरोऽनुवाक्याद्वित्वमनुक्रम्यावगन्तव्यम्। **उपस्तृणीत** इत्यादि, पूर्ववत्; एतावांस्तु विशेषः—द्वितीययागस्य हविरादाने धानानां प्राथम्यम्, तृतीयस्य

---

अतिक्रमण नहीं करता अपितु जहाँ बैठकर हवियाँ ली उसी स्थान पर खड़ा होकर 'आश्रावण' प्रैषादि देकर कहता है—'पितृन् सोमवतो यज'। होता द्वारा मंत्रपाठानन्तर वषट्कार उच्चारण के साथ आहुति दे देता है॥२७॥

तत्पश्चात् अध्वर्यु होता को प्रैष देता है—'बर्हिषद् पितरों के निमित्त मंत्रपाठ कीजिये'। तत्पश्चात् जुहू में घी को डालता है और सर्वप्रथम धाना हवि में से एक अंश लेकर तदनन्तर मन्थ में से तथा पुरोडाश में से लेकर एक साथ ही (जुहू में) रख देता है। फिर जुहू स्थित हवियों पर दो बार घी छोड़ता है और अवत्तशिष्ट हवियों को घृताक्त करता है। अध्वर्यु ने जहाँ बैठकर हवि पर ली उसी स्थान पर खड़ा होकर 'आश्रावण' प्रैष देकर होता से कहता है—'बर्हिषद् पितरों के यजनार्थ मंत्रपाठ कीजिये'। होता द्वारा वषट्कार उच्चारण के पश्चात् आहुति दे देता है॥२८॥

अब तृतीय हवि के लिये अध्वर्यु होता को प्रैष देता है—'अग्निष्वात्ता पितरों के निमित्त मंत्रपाठ कीजिये'। तत्पश्चात् पूर्ववत् जुहू में किञ्चित् घृत डालता है। फिर सर्वप्रथम मन्थ में से एक अंश लेता है और पुरोडाश और धाना एक ही बार साथ में

सह धानानां तत्सकृदवदधात्युथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत ऽएवोपोत्थायाश्राव्याह पितृनग्निष्वात्तान्यजेति व्वषट्कृते जुहोति॥२९॥

(त्य) अथाहाग्नये कव्यवाहनायानुब्रूहीति। तत्स्विष्टकृते हव्यवाहनो वै देवानां कव्यवाहनः पितॄणां तस्मादाहाग्नये कव्यवाहनायानुब्रूहीति॥३०॥

---

सकृदवदधाति। अथोपरिष्टाद्-द्विराज्यस्याभिघारयति। प्रत्यनक्त्यवदानानि। नातिक्रामति इत एवोपोत्थाय, आश्राव्याह-'पितृनग्निष्वात्तान् यज' इति। वषट्कृते जुहोति॥२९॥

अथाह-'अग्नये कव्यवाहनायानुब्रूहि' इति। तत् स्विष्टकृते। हव्यवाहनो वै देवानाम्, कव्यवाहनः पितॄणाम्। तस्मादाह-'अग्नये कव्यवाहनायानु-ब्रूहि' इति॥३०॥

---

हविरादाने मन्थस्य प्राथम्यम्। अस्मादेव प्राथम्यात्सोमवदादियागत्रयस्य हविषां त्रयस्य धारणेऽपि निर्वापकाले सपितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाशमित्यादिना विशेषाभिधानम्॥२८॥२९॥

इत्थं प्रधानयागं कृत्वा स्विष्टकृत्स्थानेऽग्निः कव्यवाहनो यष्टव्य इत्यभिप्रेत्य तदनुवाक्याप्रैषस्य वचनं विधत्ते—**अथाहाग्नय इति**। **तत् स्विष्टकृत इति**। यदेतत् 'अग्नये कव्यवाहनायानुब्रूहि'-इति सम्प्रैषवचनम्, 'तत्' 'स्विष्टकृते' स्विष्टकृद्यागार्थम्। पितॄणां कव्यवाहनसम्बन्धप्रतिपादनेनैवैतदुपपादयति—**कव्यवाहनो वा इति**। देवेभ्यो दीयमानं हविः 'हव्यम्', पितृभ्यस्तु दीयमानं तत् 'कव्यम्' तदुभयं वहतीति हव्यवाहनकव्यवाहननामानौ द्वावेवाग्नी क्रमेण

---

लेकर (जुहू में) रख लेता है। तत्पश्चात् जुहू स्थित हवियों पर दो बार ऊपर से घी छोड़ता है—फिर अवत्तशिष्ट हवियों पर घृत डालता है। वह वेदी का अतिक्रमण नहीं करता अपितु जहाँ बैठकर हवियाँ ली थीं उसी स्थान पर खड़ा होकर 'आश्रावण' प्रैष देकर होता से कहता है—'अग्निष्वात्ता पितरों के निमित्त मंत्रपाठ कीजिये'। मंत्रपाठानन्तर होता द्वारा 'वौषट्' शब्दोच्चारण के साथ आहुति दे देता है॥२९॥

अब प्रधानयागानन्तर स्विष्टकृत् याग के लिये प्रैष देता है—'कव्यवाहन अग्नि के निमित्त मंत्रपाठ कीजिये'। यह प्रैष स्विष्टकृत याग के लिये है। अग्नि, देवों

---

१. सोमाय वा पितृमत इति। एवं बर्हिषद्भ्यो उत्तरतो धानामंथपुरोडाशानाम्। अग्निष्वात्तेभ्यो दक्षिणतो मंथपुरोडाशधानानाम् (का० श्रौ० सू० ५. १३१. १३०-१३४)।

**स उ॒पस्तृ॒णीत॒ ऽआ॒ज्य॒म्। ( म॒ ) अ॒थास्य॑ पुरो॒डा॒शस्या॒वद्यति स ते॒नैव॒ सह॒ धाना॒नां ते॒न सह॒ मन्थ॒स्य त॒त्सकृदु॒वद॒धात्य॒थोपु॒रिष्टाद्द्वि॒राज्य॒स्याभि॒घारयति न प्र॒त्यनक्त्यवदा॒नानि ना॒तिक्रामतीत॒ एवोपोत्था॒याश्रा॒व्याहाग्निं॒ कव्यवा॒हनं यजे॒ति व्व॒षट्कृते जुहोति॥३१॥**

---

**स उपस्तृणीत आज्यम्। अथास्य पुरोडाशस्यावद्यति। स तेनैव सह धानानाम्, तेन सह मन्थस्य। तत् सकृदवदधाति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। न प्रत्यनक्त्यवदानानि। नातिक्रामति। इत एवोपोत्थाय, आश्राव्याह–'अग्निं कव्यवाहनं यज' इति। वषट्कृते जुहोति॥३१॥**

---

देवपितृसम्बन्धिनौ। 'कव्यपुरीषपुरीष्येषुञ्युट्'–'हव्येऽनन्तःपादम्'–(पा.सू. ३.२.६५-६६) इति सूत्राभ्यां वहतेर्ञ्युट्। एष चाग्नेरवान्तरभेदः प्रागप्याम्नातः; तैत्तिरीयकेऽप्याम्नायते—'त्रयो वा अग्नयः; हव्यवाहनः देवानाम्, कव्यवाहनः पितॄणाम्, सहरक्षाः असुराणाम्'–(तै.सं. २.५.८.११) इति। यस्मादेवं कव्यवाहनः पितॄणां सम्बन्धी, तस्मात् 'अग्नये कव्यवाहनाय'–इत्येव वक्तव्यमिति निगमयति—**तस्मा[1]दाहेति**॥३०॥

तस्य स्विष्टकृत्स्थानीयस्य कव्यवाहनयागस्य पूर्ववदुपस्तरणादि-होमान्तानुष्ठानप्रकारमाह—**स उपस्तृणीत** इत्यादिना। स्विष्टकृद्यागस्य शेषद्रव्यसाध्यत्वाद्धविरुत्पत्तिक्रमेणैवात्रावदानमित्यभिप्रेत्याह—**अथास्य पुरोडाशस्येति**। **न प्रत्यनक्तीति**। हविः प्रत्यभिघारणस्य स्विष्टकृदर्थत्वात् तस्य च हविषो ग्रहणात् पुनः प्रत्यभिघारणं न कर्त्तव्यमित्यर्थः। अन्यदुक्तार्थम्॥३१॥

---

के लिये हव्यवाहन है और पितरों के लिये कव्यवाहन; यतः यह पितृयज्ञ है इसलिये 'कव्यवाहन अग्नि के लिये मंत्रपाठ कीजिये' ऐसा कहा जाता है॥३०॥

अब वह स्विष्टकृद्याग के निमित्त जुहू में किञ्चित् घी डालता है। तदनन्तर पुरोडाश गें से टुकड़ा काटता है और धाना तथा मन्थ हवियों के अंश के साथ (जुहू में) रख देता है। तत्पश्चात् जुहू स्थित हवियों पर दो बार घी छोड़ता है और अवत्तशिष्ट हवियों पर आज्य नहीं छोड़ता। वेदी का अतिक्रमण न कर अध्वर्यु ने जहाँ बैठकर हवियाँ ली है उसी स्थान पर खड़ा होकर 'आश्रावण' प्रैष देकर होता से कहता है—'कव्यवाहन अग्नि के यजनार्थ मंत्रपाठ कीजिये'। मंत्रपाठानन्तर होता द्वारा 'वौषट्' शब्दोच्चारण के साथ आहुति दे देता है॥३१॥

---

१. पुरस्तादग्नये कव्यवाहनाय यथापूर्वं स स्विष्टकृत (का.श्रौ.सू. ५.२.३२)।

स यन्नातिक्रामति। (ती) इत एवोपोत्थाय जुहोति सकृदु ह्येव पराञ्चः पितरोऽथ यत्सकृत्सकृत्सर्वेषाᳬं हविषाᳬं समवद्यति सकृदु ह्येव पराञ्चः पितरोऽथ यद् व्यतिषङ्गमवदानान्यवद्यत्यृतवो वै पितर ऋतूनेवैतद् व्यतिषजत्यृतून्त्सन्दधाति तस्माद् व्यतिषङ्गमवदानान्यवद्यति॥३२॥

तद्धैके।(कऽ) एतमेव होत्रे मन्थमादधति तᳬं होतोपहूयावैव

---

स यन्नातिक्रामति। इत एवोपोत्थाय जुहोति। सकृदु ह्येव पराञ्चः पितरः। अथ यत् सकृत् सकृत् सर्वेषां हविषां समवद्यति। सकृदु ह्येव पराञ्चः पितरः। अथ यद् व्यतिषङ्गमवदानान्यवद्यति। ऋतवो वै पितरः–ऋतूनेवैतद् व्यतिषजति, ऋतून्त्सन्दधाति। तस्माद् व्यतिषङ्गमवदानान्यवद्यति॥३२॥

तद्धैके एतमेव होत्रे मन्थमादधति। तं होतोपहूयावैव जिघ्रति तं ब्रह्मणे

---

स्विष्टकृच्चतुर्थेषूक्तेषु यागेषु नातिक्रामतीति योऽतिक्रमनिषेध उक्तः, तमनूद्य स्तौति—**स यन्नातिक्रामतीति**। सकृदवदानं प्रशंसति—**अथ यदिति**। सोमवदादियागत्रयेऽपि यद्धविषो व्यतिषञ्जनमुक्तम् 'अथास्य पुरोडाशस्यावद्यती' त्यादिना, तदनूद्य स्तौति—**अथ यद् व्यतिषङ्गमिति**। व्यतिषङ्गमिति क्रियाविशेषणम्; परस्परं संसृष्टं यथा भवति तथेत्यर्थः। **ऋतवो वै पितर इति**। पितृणामृतुरूपत्वं प्रागेव दर्शितम् 'त उ ते यात् पुनः समैरयत' इति। तथा च 'एतत्' एतेन, पितृदेवत्यहविषा व्यतिषञ्जनेन 'ऋतूनेव व्यतिषजति' परस्परं संसर्जयति, तेन व्यतिषञ्जनेन तान् 'ऋतूत्' 'सन्दधाति' परस्परमविनाभूतान् करोति॥३२॥

अथेडाप्रत्याम्नायत्वेन मन्थस्याधानमेकीयमतेनोपन्यस्यति—**तद्धैक इति**।

---

पितृयज्ञ में अध्वर्यु वेदी का अतिक्रमण नहीं करता अपितु जहाँ बैठकर जुहू में हवियाँ लेता है उसी स्थान पर खड़ा होकर आहुति क्यों दे देता है? इसका कारण यह है कि पितर लोग एक बार ही परलोक जाकर अपुनरावृत्त होते हैं। प्रत्येक हवियों में से एक-एक ही टुकड़ा क्यों लिया जाता है? इसलिये कि पितर् एक बार परलोक जाकर अपुनरावृत्त होते हैं। प्रत्येक हवि से टुकड़ों को काटकर एक साथ क्यों रखते है? इसलिये कि ऋतुयें ही पितर हैं। इसप्रकार वह ऋतुओं को परस्पर मिलाकर रखता है। ऋतुओं को संधित करता है। अतएव इन हवियों के टुकड़ों को एक साथ रखता है॥३२॥

कुछ शाखा के लोग हवि-शेष मन्थ को होता को दे देते हैं। वेदसमीप में

जिघ्रति तुं ब्रह्मणे प्रयच्छति तुं ब्रह्मावैवु जिघ्रति तुमग्नीधे प्रयच्छति तमग्नीदुवैवु जिघ्रत्येतुन्न्वेवोतु कुर्व्वन्ति युथा त्वेवेतरस्य युज्ञस्येडाप्राशित्रुॅ समवद्युन्त्येवुमेवैतस्यापि समुवद्येयुस्तामुपहूयावैवु जिघ्रन्ति न प्राश्नन्ति प्राशितुव्यं त्वेवु वयं मन्यामहऽइुति ह स्माहासुरिर्युस्य कुस्य चाग्नौ जुह्वतीति॥३३॥

---

प्रयच्छति। तं ब्रह्मावैव जिघ्रति। तमग्नीधे प्रयच्छति। तमग्नीदवैव जिघ्रति। एतन्न्वेवैतत् कुर्वन्ति। यथा त्वेवेतरस्य यज्ञस्येडाप्राशित्रं समवद्यन्ति-एवमेवैतस्यापि समवद्येयुः। तामुपहूयावैव जिघ्रन्ति न प्राश्नन्ति। प्राशितव्यं त्वेव वयं मन्यामहे-इति ह स्माहासुरिर्यस्य कस्य चाग्नौ जुह्वतीति॥३३॥

---

'तत्' तत्र खलु 'एके' शाखिन यागशिष्टम् 'एतमेव मन्थं होत्रे आदधति' होतुर्हस्ते प्रक्षिपन्तीत्यर्थः। एतस्मिन् पक्षे होतुः कर्तव्यमुपदिशति—तं होतेति। उपहूयेति। वेदिसमीपे इडानिगदेनोपहवं कृत्वा, तदनन्तरमवघ्राय अग्नीधे दद्यात्। सोमवज्जिघ्रत्येव न तु कस्यचिदप्यत्र भक्षणमस्तीत्येवकारार्थः। प्राशित्रेडावदान-पक्षमप्याह—एतन्न्वेवेति। 'नु' इति प्रसिद्धौ, 'एव' कारोऽवधारणार्थः, 'उत' शब्दोऽप्यर्थः। अपि खल्वेतद् वक्ष्यमाणमेकं पक्षं केचिदनुतिष्ठन्ति। तदेव दर्शयति—यथा त्वेवेति। 'तु'-शब्द एकीयमतव्यावृत्त्यर्थः। 'इतरस्य' दर्शपौर्णमासादेः 'यज्ञस्य' 'यथा' इडां प्राशित्रं च 'समवद्यन्ति' सर्वेभ्यो हविर्भ्यः सम्भूयावद्यन्ति, 'एवमेव' 'एतस्यापि' पितृयज्ञस्य समवद्येयुः। अवैव जिघ्रन्तीति। अस्मिन्नपि पक्षे इडाप्राशित्रयोरवघ्राणमेव कर्त्तव्यम्, न तु प्राशनमित्यर्थः। प्राशनपक्षमप्याह—प्राशितव्यं त्वेवेति। इडावदानं प्राशित्रावदानं च यज्ञान्तरवदत्रापि 'प्राशितव्यमेव' 'वयं मन्यामहे' 'इति' 'आसुरिः' महर्षिः प्रतिपादयतीत्यर्थः। एवं प्रतिपादयत आसुरेरभिप्रायमाह—यस्य कस्येति। इडां प्राश्नन्तः ऋत्विजः 'यस्यकस्यचित्' आत्मनः सम्बन्धिनि 'अग्नौ' वैश्वानरे तद्धविः 'जुह्वति' अतः प्राशने न दोष इत्यनेनाभिप्रायणेत्यर्थः॥३३॥

---

बैठकर होता इडा-निगद से उसका आवाहन करके सूँघता है और ब्रह्मा को दे देता है। तत्पश्चात् उसे ब्रह्मा सूँघता है और आग्नीध्र को देता है। आग्नीध्र भी उसे सूँघता है (कोई भी भक्षण नहीं करता)। कुछ लोग आगे बताये जा रहे अनुसार करते हैं—जिसप्रकार इष्टियाग में सभी हवियों में से थोड़ा-थोड़ा भाग इडा एवं

---

१. 'शेषः'-इ.पा.। २. 'मंथमुपहूय होताऽध्वर्युर्ब्रह्माऽग्नीदवघ्राय निदधाति (का.श्रौ.सू. ५.२.३४)।
३. 'प्राशित्रमवदायेडां वा सर्वे प्राश्नन्ति वा (का.श्रौ.सू. ५.२.३५)।

(त्यु) अथ यतरो दास्यन्भवति। यद्यध्वर्युर्वा यजमानो वा स उदपात्रमादायापसलवि त्रिः परिषिञ्चन्पर्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽशिष्यतेऽभिषिञ्चेदेवं तत्॥३४॥

अथ यतरो दास्यन् भवति–यद्यध्वर्युर्वा, यजमानो, स उदपात्रमादाय अपसलवि त्रिः परिषिञ्चन्पर्येति। स यजमानस्य पितरमवनेजयति–'असाववनेनिक्ष्व' इति। 'असाववनेनिक्ष्व' इति पितामहम्। 'असाववनेनिक्ष्व'–इति प्रपितामहम्। तद् यथाऽशिष्यतेऽभिषिञ्चेद्–एवं तत्॥३४॥

यजमानपितॄनुद्दिश्य पिण्डप्रदानमध्वर्युयजमानयोरन्यतरस्य कर्त्तव्यत्वं सिद्धवदनुवदंस्तत्प्राच्याङ्गमवनेजनं विधत्ते—**अथ यतर इति।** अध्वर्यु-यजमानयोर्मध्ये यतर इत्यर्थः। 'किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्' (पा.सू. ५.३.९२) इति डतरजन्तः। 'यदि अध्वर्युर्वा यजमानो वा' 'दास्यन्' पिण्डदाता 'भवति', 'सः' स्वयं यजमानः अध्वर्युर्वा 'उदपात्रम्' उदकपूर्णं पात्रम् 'आदाय' 'अपसलवि' अप्रदक्षिणं 'त्रिः परिषिञ्चन्' पित्र्यां वेदिम्[1] 'पर्येति'। **स यजमानस्येति।** 'सः' अध्वर्युः 'यजमानस्य पितरम् 'असाववनेनिक्ष्व'–(श.प.कां. २ प्र. ४.२.२३) इति मन्त्रेण 'अव-नेनिक्ष्वेति' अवनेजति। यजमानस्तु यदि स्वयं पिंडदाता भवति, तदा स्वकीयमेव पितरमवनेजयेत् 'असाववनेनिक्ष्व'–इत्यादिकं पिण्डपितृयज्ञप्रकरणे व्याख्यातम्॥३४॥

प्राशित्र में निकालते है तथैव यहाँ पितृयज्ञ में भी करते हैं। तत्पश्चात् (इडा का) आवाहन करके मात्र सूँघते हैं, उसका भक्षण नहीं करते। परन्तु महर्षि आसुरि कहते है कि—'हमारा विचार है कि जो कुछ अग्नि में डाला जाय उसका कुछ शेष-भाग भक्षण भी करना चाहिये'॥३३॥

अब जो पितरों को पिण्ड देने वाला हो—चाहे अध्वर्यु, या यजमान, वह जलपात्र लेकर तीन बार (अपसलवि = अप्रदक्षिण) दाहिनी से बाई ओर को पितरों की वेदी पर पानी छिड़कता है। तत्पश्चात् वह यजमान के (पितरों) के लिये नामग्रहणपूर्वक 'असौ अवनेनिक्ष्व' (आप धोवें) इस प्रकार दो बार कहकर जल डालता है फिर 'असौ अवनेनिक्ष्व', 'असौ अवनेनिक्ष्व' कहकर यजमान के पितामह के लिये दक्षिण पश्चिमी कोने में); फिर यजमान के प्रपितामह के लिये 'असौ अवनेनिक्ष्व', 'असौ अवनेनिक्ष्व' कहकर दक्षिण पूर्वी कोने में (जल डालता है) जैसे अतिथि-सत्कार के लिये जल देते हैं उसी प्रकार यहाँ भी (पितरों को जल दिया जाता है)॥३४॥

१. 'वेदिं 'त्रिः परिषिंचत्युदपात्रेणाध्वर्युर्यजमानो वा' (का.श्रौ.सू. ४.१.२६)

(द) अ॒थास्य॒ पुरोडा॒शस्याव॒दाय सव्ये॒ पाणौ॒ कुरुते। धाना॒नाम॒वदा॒य सव्ये॒ पाणौ॒ कुरुते मन्थ॒स्याव॒दाय सव्ये॒ पाणौ॒ कुरुते॥३५॥

स॒ येमा॒मवान्तरदि॒शम॒नुस्रक्तिः। (स्त॒) त॒स्यां य॒जमानस्य पित्रे॒ ददात्य॒सावेत॒त्तऽइत्य॒थ॒ येमा॒मवान्तरदि॒शम॒नुस्रक्तिस्त॒स्यां य॒जमानस्य पितामहा॒य ददात्य॒सावेत॒त्तऽइत्य॒थ॒ येमा॒मवान्तर-

अथास्य पुरोडाशस्यावदाय सव्ये पाणौ कुरुते धानानामवदाय सव्ये पाणौ कुरुते। मन्थस्यावदाय सव्ये पाणौ कुरुते॥३५॥

स येमामवान्तरदिशमनुस्रक्तिः-तस्यां यजमानस्य पित्रे ददाति-असावेतत्ते-इति। अथ येमामवान्तरदिशमनुस्रक्तिः-तस्यां यजमानस्य पितामहाय ददाति-असावेतत्ते-इति। अथ येमामवान्तरदिशमनुस्रक्तिः-तस्यां

अथास्य पुरोडाशस्येत्यादि। पुरोडाशादिहविःशेषान् 'सव्ये पाणौ' 'अवदाय' आलोड्य, त्रीन् पिण्डान् कृत्वा, तस्मिन्नेव हस्ते धारयेत् (का.श्रौ.सू. ५.२३८)॥३५॥

स येमामवान्तरदिशमिति। 'इदं'-शब्देनोत्तरापरां दिशमभिनयेन निर्द्दिशति[१]। 'अनुर्लक्षणे'-(पा.सू. १.४.८४) इति लक्षणे अनुशब्दस्य कर्मप्रवचनीयत्वम्। उत्तरापरस्यां दिशि येयं वेदेः स्रक्तिः, 'तस्यां' 'यजमानस्य पित्रे' 'असावेतत् ते'-(श.प.कां २ प्र. ४, ब्रा. २ कं. १९) इति मन्त्रेण पिण्डं दद्यात्। पितामहस्य पिण्डदानं विधत्ते—**अथ येमामिति।** 'इदं' शब्देन दक्षिणापरा अवान्तरा दिग् गम्यते। अन्यत् समानं पूर्वेण। प्रपितामहस्य पिण्डदानं विधत्ते—**अथ येमामिति।** अथेमा दक्षिणपूर्वा दिगभिनयेन निर्दिश्यते। अत्र या वेदेः स्रक्तिः, तस्यां

तदनन्तर पुरोडाश में से एक टुकड़ा काटकर बायें हाथ में लेता है। धाना-हवि में से भी एक भाग लेकर बायें हाथ में लेता है और मन्थ-हवि में से भी एक अंश लेकर बाँयें हाथ में लेता है (इसप्रकार तीन पिण्ड बनाकर हाथ में रखता है)॥३५॥

अब वह पितृयज्ञ की चतुरस्र वेदी का जो कोना अवान्तर दिशा के सामने (उत्तर-पश्चिम की ओर) है, वहाँ यजमान के पिता के लिये नामग्रहणपूर्वक एक पिण्ड देता है, यह कहकर कि 'यह आपके लिये देता हूँ।' तदनन्तर इस अवान्तर दिशा के सामने (दक्षिण-पश्चिम की ओर वेदी-कोण में) यजमान के पितामह के

१. दर्शयति इति वर्न.पा.

**दिशमनुस्त्रक्तिस्तस्यां यजमानस्य प्रपितामहाय ददात्यसावेतत्त ऽइत्यथ येमामवान्तरदिशमनुस्त्रक्तिस्तस्यां निमृष्टेऽत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति यथाभागमश्नीतेत्येवैतदाह तद्यदेवं पितृभ्यो ददाति तेनो स्वान्पितॄनेतस्माद्यज्ञान्नान्तरेति॥ ३६॥**

---

**यजमानस्य प्रपितामहाय ददाति–असावेतत्ते–इति। अथ येमामवान्तर-दिशमनुस्त्रक्तिः–तस्यां निमृष्टे–'अत्र पितरो मादयध्वं, यथाभागमा-वृषायध्वम्'–इति (वा.सं. २.३१) यथाभागमश्नीतेत्येवैतदाह। तद्यदेवं पितृभ्यो ददाति–तेनो स्वान्पितॄनेतस्माद्यज्ञान्नान्तरेति॥ ३६॥**

---

प्रपितामहार्थं पिण्डं दद्यात्[1]। अथ तिसृषु स्रक्तिषु पिण्डदानं विधाय, अवशिष्टायां स्रक्तौ समन्त्रके लेपमार्जने विधत्ते—**अथ येमामवान्तरदिशमिति।** इमामुत्तरपूर्वामवान्तरदिशमनु या वेदेः स्रक्तिः, तस्याम् 'अत्र पितरः'–'इति' मन्त्रेण हस्तगतं लेपं 'निमृष्टे' निमृजीत। तथा चोक्तं सूत्रकृता—'उत्तरापरस्यां प्रथमम्, सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति, उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति'–(का.श्रौ.सू. ५.२३७-२३९) इति। 'असावेतत्ते'–इत्यादिमन्त्रार्थः पिण्डपितृयज्ञे एव वर्णितः (श.प.कां. २.४.२.१९) विहितपिण्डदानमनूद्य तस्य प्रयोजनमाविष्करोति—**तद्यदेवँ पितृभ्य इति।** पितृपितामहप्रपितामहादिभ्यः उक्तरीत्या पिण्डान् ददातीत्यर्थः। 'तेनो' तथा चैवं सति 'स्वान्' स्वकीयान् 'पितॄन्' 'एतस्मात्' पितृयज्ञात् 'नान्तरेति' अन्तरितान् न करोति, अपि तु भागिनः कृतवान् भवति॥ ३६॥

---

लिये, यह कहकर पिण्ड देता है कि—'यह (अमुक) आपके लिये प्रदान करता हूँ।' तत्पश्चात् इस अवान्तर दिशा के सामने (दक्षिण-पूर्व की ओर वेदी-कोण में) यजमान के प्रपितामह के लिये यह कहकर पिण्ड देता है कि—'यह (अमुक) आपके लिये प्रदान करता हूँ।' और इस अवान्तर दिशा के सामने (उत्तर-पूर्व की ओर वेदी-कोण में) इस मन्त्र से (हाथ) धोता है—'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' (यजु. २.३१)। (मन्त्रार्थ—) 'हे पितरो! आप इन बिछी हुई कुशाओं पर प्रसन्नचित्त बैठिये तथा अपने-अपने भाग को भक्षण कर तृप्त होइये'। इसका तात्पर्य यह है कि—'पितृगण अपना-अपना भाग तृप्तिपूर्वक भक्षण करें'। अध्वर्यु इस प्रकार पितरों को जो पिण्ड देता है, वह इसलिये कि यजमान के अपने पितृगण यज्ञ से वंचित न होंवें॥ ३६॥

---

१. स्रक्तिषु पित्रवनेजनं परिषिच्य परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् (का.श्रौ.सू. ५.२३७)

ते स॒र्व्व ऽए॒व य॒ज्ञोपवीति॒नो भू॒त्वा। (त्वो॒) उ॒दञ्च उपनिष्क्रम्याहवनीयमु॒पतिष्ठन्ते देवान्वा॒ ऽए॒ष उपा॒वर्त्तते य आ॒हिताग्निर्भ॒वति यो॒ दर्शपूर्णमासा॒भ्यां य॒जते॒ऽथैत॒त्पितृ-यज्ञेनेवाचारिषुस्त॒दु देवे॒भ्यो नि॒ह्नुवते॥३७॥

(त॒ऽ) ऐन्द्री॒भ्यामाहवनी॒यमु॒पतिष्ठन्ते। (न्त॒ऽ) इ॒न्द्रो ह्याहवनीयो॒ऽक्षन्नमीमदन्त ह्यव प्रिया॒ अधूषत। अ॒स्तोषत

ते सर्व एव यज्ञोपवीतिनो भूत्वा, उदञ्च उपनिष्क्रम्य, आहवनीयमुपतिष्ठन्ते। देवान्वा एष उपावर्त्तते–य आहिताग्निर्भवति, यो दर्शपूर्णमासाभ्यां यजते। अथैतत् पितृयज्ञेनेवाचारिषुः–तदु देवेभ्यो निह्नुवते॥३७॥

ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते। इन्द्रो ह्याहवनीयः। 'अक्षन्नमीमदन्त ह्यव

आहवनीयोपस्थानं विधत्ते—**ते सर्व एवेति**। **उदञ्च उपनिष्क्रम्येति**। उदङ्मुखा सन्तः परिवृतात् पिण्डपितृयज्ञस्थानात् निर्गत्येत्यर्थः। **देवान् वा इत्यादि**। 'यः' खलु 'आहिताग्निर्भवति' 'दर्शपूर्णमासाभ्यां' च 'यो यजते' 'एषः' 'देवान्' 'उपावर्त्तते' उपगतो भवति, देवसम्बन्धगतस्य यजमानस्य देवान् परित्यज्य यत् पितृयज्ञाचरणम्, तेन देवानां मनसि क्रोधोऽभूत्; पुनरावृत्याहवनीयोपस्थानेनातीवोदासीनताजनितमपराधं 'देवेभ्यः' 'निह्नुवते' शमयन्ति॥३७॥

**ऐन्द्रीभ्यामिति**, मन्त्रविधिः। ऐन्द्र्या ऋचः कथमग्न्युपस्थाने सङ्गतिः, लिङ्गविरोधात्? इत्यत आह—**इन्द्रोहीति**। परं 'हि' योगादाहवनीय एवेन्द्रः, अतस्तदीयोपस्थाने ऐन्द्र्याः करणत्वं न विरुद्ध्यत इत्यर्थः। त एवैन्द्र्यौ पठति—**अक्षन्नमीमदन्तेति**। 'अक्षन्' अस्माभिर्दत्तं हविः पितरः अक्षन् अभुक्षत। अदेर्लुङि

अब ऋत्विग्यजमान सभी सव्ययज्ञोपवीत धारण कर उत्तर की ओर जाकर तत्पश्चात् आहवनीय का उपस्थान (= समंत्रक स्तुति) खड़े होकर करते हैं। जो आहिताग्नि होकर दर्श-पूर्णमासादि यज्ञ करता है वह देवों का निकटवर्ती हो जाता है। परन्तु अभी यह पितृ-यज्ञ कर रहे थे; इसलिये देवों के मन में अन्यथाभाव न आये अतः अब आहवनीयोपस्थान द्वारा देवों को सन्तुष्ट करते हैं॥३७॥

वे इन्द्र सम्बन्धी इन दो मन्त्रों को पढ़कर आहवनीय अग्नि का उपस्थान (समंत्रक स्तुति) करते हैं—१. 'अक्षन्नमीमदन्तह्यव प्रियाऽअधूषत। अस्तोषतस्व

१. यज्ञोपवीतिनः सर्वे निष्क्रम्योदंचोऽक्षन्नमीमंदतेत्याहवनीयमुपतिष्ठन्ते द्वाभ्याम् (का.श्रौ.सू. ५.२.४०)।

**स्वभानवो व्विप्रानविष्ठया मती योजा न्विन्द्र ते हरी। सुसन्दृशं त्वा व्वयं मघवन्वन्दिषीमहि। प्रनूनं पूर्णबन्धुरः स्तुतो यासि व्वशाँ२ँ॥ अनु योजान्विन्द्र ते हरीऽइति॥३८॥**

---

**प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी॥१॥ सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि। प्रनूनं पूर्णबन्धुरः स्तुतो यासि वशा रँ॥ अनु योजान्विन्द्र ते हरी'॥२॥ इति (वा.सं. ३.५१.५२)॥३८॥**

---

'लुङ्सनोर्घस्लृ'—(पा.सू. २.४.३७) इति घस्लादेशे, 'मन्त्रे घसह्वरणश०'–(पा.सू. २.४.८०) इति च्लेर्लुकि, 'गमहन०'–(पा.सू. ६.४.९८) इति उपधालोपे, अक्षन्निति रूपम्। 'हि' यस्मात् एवम्, अतस्ते पितरो हविःस्वीकारेण 'अमीमदन्त' तृप्ता अभवन्। 'मद तृप्तियोगे'–(धा.पा.चु.आ. १७२) इत्यस्माण्ण्यन्ताल्लुङि चङि रूपम्। तृप्तिरपि कुतोऽवगम्यते इति तत्राह—**अवप्रिया इति**। 'प्रियाः' आत्मीयाः तनूः ते पितरः 'अव अधूषत' भुक्तस्य हविषो रसातिशयस्याभिव्यक्त्यर्थम् अवाकम्पयन्। 'धूञ् कम्पने'–(धा.पा.चु.उ. ३०१) इति धातुः। तदनन्तरं 'स्वभानवः' स्वायत्तदीप्तयः, 'विप्राः' मेधाविनः ते पितरः हविषः प्रदातारं यजमानं 'नविष्ठया' नवतरया 'मती' मत्या स्तुत्या 'अस्तोषत' उपभुक्तं हविः प्राशंसन्, सम्यगेतत् सञ्जातमिति। आहवनीयावस्थित हे इन्द्र! त्वमपि 'ते' स्वदीयौ 'हरी' अश्वौ गमनार्तं 'नु' क्षिप्रं 'योजान्' योजयेति प्रथमाया ऋचोऽर्थः।

**सुसन्दृशं त्वेति**। हे 'मघवन् धनवन्'! आहवनीयरूपेन्द्र! सुष्ठु-सम्यग्दर्शनीयं 'त्वा' त्वां 'वन्दिषीमहि' नुमः, अभिवादयामो वा। 'वदि अभिवादनस्तुत्योः'–(धा.पा.भ्वा.आ. ११) इति धातुः! अस्माभिर्वन्दितस्त्वं 'पूर्णबन्धुरः' दत्तैनं हविषा पूर्णेन रथनीडेन युक्तः, 'स्तुतः' च सन् अस्माभिः कृतं स्तोत्रं हविश्च स्वीकृत्य 'वशान् अनु' कामान् अनु यथाकामं यथेष्टं 'प्रयासि'। **योजानित्यादि**, पूर्ववत्॥३८॥

---

भानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी'॥ २. सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि। प्र नूनं पूर्ण बन्धुरस्तुतो यासि वशांऽअनु योजान्विन्द्र ते हरी'॥ (यजु. ३.५१,५२ या ऋ. १.८२.२,३)। (मन्त्रार्थ–) हमारी दी गई हवि को पितरों ने प्रसन्नतापूर्वक भक्षण किया और वे तृप्त हुए। संतृप्त पितरों ने प्रसन्नता से अपने शरीर को कम्पित किया तथा दीप्तिमान् मेधावी पितरों ने यजमान को प्रशंसित किया—'हे इन्द्र! यज्ञ में आगमनार्थ आप अपने दोनों अश्वों को रथ में युक्त

(त्यु) अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते। मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन। पितॄणां च मन्मभिः। आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे। पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहीति पितृयज्ञेनेव वा

---

अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते। 'मनो न्वाह्वामहे नाराशंसेन स्तोमेन। पितॄणां च मन्मभिः। आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक् च सूर्यं दृशे। पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातं सचेमहि'–इति (वा.सं. ४.५३-५५)। पितृयज्ञेनेव वा एतदचारिषुः–तदु

---

गार्हपत्योपस्थानं विधत्ते—अथ प्रतिपरेत्येति[1]। 'प्रति-परेत्य' आहवनीयसमीपात् प्रतिनिवृत्य इत्यर्थः। तस्मिन् गार्हपत्योपस्थाने 'मनो न्वाह्वामहे–' इत्याद्यास्त्रयो मन्त्राः पठिताः। तेषामयमर्थः—तत्र प्रथमा **मनोन्विति**। अस्मदीयं 'मनः' 'नु' क्षिप्रम् 'आह्वामहे'। केन साधनेन? 'नाराशंसेन स्तोमेन' नरैः शंसनीयेन स्तोत्रेण, 'पितॄणां' सम्बन्धिभिः 'मन्मभिः' मननैश्च।

**आ न एत्विति** द्वितीया। पितृयज्ञकरणादपक्रान्तमस्मदीयं 'मनः' 'पुनः' अस्मान् 'एव' आगच्छतु। किमर्थम्? 'क्रत्वे' क्रतुकर्मणे, 'दक्षाय' बलाय, 'जीवसे' जीवनाय, 'ज्योक्' चिरकालं सूर्यं 'दृशे' द्रष्टुम्। 'दृशे विख्ये च'–(पा.सू. ३.४.११) इति तुमर्थे निपात्यते'।

**पुनर्न इति** तृतीया। हे 'पितरः!' 'दैव्यः' देवसम्बन्धी 'जनः' 'नः' अस्मभ्यं 'मनः पुनः ददातु'। 'जीवं' जीवनवन्तं 'व्रातं' गणम् पुत्रपौत्रादिसमूहम् 'सचेमहि' प्राप्नुयामेति। अन्तिमपादे जीवशब्दप्रयोगस्याभिप्रायमाह—**पितृयज्ञेनेवेति**।

---

कीजिये'। (२) 'हे सुदर्शन इन्द्र! हम आपको नमन करते हैं'। हमारे द्वारा स्तुत आप, अपने रथ से हमारी इच्छा के अनुसार पधारें। 'हे इन्द्र! यज्ञ में आगमनार्थ अपने दोनों अश्वों को रथ में संयुक्त कराइये'॥३८॥

(उपस्थान के अनन्तर–) आहवनीय स्थान से वे गार्हपत्य स्थान पर लौटते हैं और खड़े होकर इन मन्त्रों से स्तुति करते हैं—(१) 'मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन। पितॄणां च मन्मभिः॥ (२) आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक् च सूर्यं दृशे॥ (३) पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳसचेमहि'॥ (यजु. ३.५३-५५ या ऋ. १०.५७.३-५)। (मन्त्रार्थ–) (१) हम नाराशंसी स्तोम के द्वारा मन का आवाहन करते हैं और पितरों का भी श्रद्धा से

---

१. मनो न्वाह्वामह इति गार्हपत्यं तिसृभिः (का.श्रौ.सू. ५.२.४१)।

एतुदचारिषुस्तुदु खुलु पुनर्जीवानुपिपद्यन्ते तुस्मादाह जीवं व्रातᳫँसचेमहीति॥३९॥

(त्यु) अुथ यतरो दुदाति। स पुनः प्राचीनावीतुी भूत्वाऽभिप्रपुद्य जपत्युमीमदन्त पितुरो यथाभागमुावृषायिषतेति यथाभागुमाशिषुरुित्येवैतुदाह॥४०॥

---

खलु पुनर्जीवानपिपद्यन्ते। तस्मादाह–जीवनं व्रातं सचेमहीति॥३९॥

अथ यतरो ददाति स पुनः प्राचीनावीती भूत्वा, अभिप्रपद्य जपति–'अमीमदन्त पितरो यथाभागमावृषायिषत'–इति (वा.सं. २.३१)। यथाभागमाशिषुरित्येवैतदाह॥४०॥

---

'पितृयज्ञेन' खलु 'एतत्' इदानीम् 'अचारिषुः', अतः पितृयज्ञस्य कर्त्तार ऋत्विग्यजमानाः पितृसम्भक्ताः सन्तः प्रजायुक्ता भवेयुः। 'तत्' तथा सति 'जीवं व्रातम्–' इति अनेन मन्त्रभागेन 'जीवान्' एव पुत्रपौत्रादीन् स्वयं जीवन्तः 'अपिपद्यन्ते' पुनरपि गच्छन्ति। **तस्मादिति**, उक्तार्थनिगमनम्॥३९॥

पिण्डदातृजपं विधत्ते—**अथ यतर इति**। 'अथ' उपस्थानानन्तरम्, अध्वर्युयजमानयोर्मध्ये 'यतरः' 'पिण्डं ददाति', 'स पुनः' 'प्राचीनावीती' 'भूत्वा', पित्र्यं देशम् 'अभिपद्य' प्रविश्य 'अमीमदन्त'–इति मन्त्रं जपेत्। स च मन्त्रः, तद् ब्राह्मणं च पिण्डपितृयज्ञे व्याख्यातम्॥४०॥

---

आवाहन (करते) हैं। (२) हमारे पास बुद्धि, शक्ति और जीवन के व्यवस्थित संचालनार्थ मनस् तत्त्व फिर आवे ताकि हम बहुत दिनों तक सूर्य के दर्शन करें'। (३) 'हे पितरों, दैव्य जन हमको फिर शिवसंकल्पयुक्त मन दें ताकि हम जीवित पीढ़ी के साथ आनन्द से रह सकें'। अब तक ऋत्विग्यजमानादि पितृ-यज्ञ कर रहे थे। अब वे फिर सांसारिक जीवन को लौटते हैं। इसीलिये कहा—'हम जीवित लोगों के साथ वास करें॥३९॥

अब जिसने (पिण्ड) दिया था वह फिर अपसव्य अर्थात् दाहिने कन्धे पर जनेऊ रखकर यह मन्त्र जपता है—'अमीमदन्त पितरो यथाभागमावृषायिषत' (यजु. २.३१)। (मन्त्रार्थ–) 'पितृगणों ने अत्यन्त हर्षित होकर तृप्तिपूर्वक अपने-अपने भागको ग्रहण किया'। इससे तात्पर्य यह है कि उन्होंने अपना-अपना भाग भक्षण किया॥४०॥

---

१. प्राचीनावीती प्रविश्यामीमदंतेति दाता जपति (का.श्रौ.सू. ४.१.४२)।

(ह्या) अथोदपात्रमादाय। पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तद्यत्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्येति प्रसलवि न इदं कर्मानु सन्तिष्ठाताऽइति तस्मात्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्येति॥४१॥

---

अथोदपात्रमादाय, पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति। स यजमानस्य पितरमवनेजयति–'असाववनेनिक्ष्व' इति। 'असाववनेनिक्ष्व' इति पितामहम्। 'असाववनेनिक्ष्व' इति प्रपितामहम्। तद् यथा जक्षुषेऽभिषिञ्चेद्–एवं तत्। तद्यद् पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति। 'प्रसलवि न इदं कर्मानुसन्तिष्ठातै' इति। तस्मात्–पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति॥४१॥

---

पिण्डदानस्योदीच्याङ्गमुदकावनेजनं पूर्ववद् विधत्ते—अथोदपात्रमिति। 'तद्यथा जक्षुषे' इति, अवनेजनस्य प्रयोजनकथनम्। एतत् सर्वं पिण्डपितृयज्ञ एव व्याख्यातम् (श.प.कां. २.४.२.२३)। विहितं परिषेचनं पुनः श्रुतम्, तस्य यत् प्रादक्षिण्यम्, तत् स्तौति–यत् पुनरित्यादिना। प्रसलवि न इति। अपसलमप्रादक्षिण्यम् तद्विपरीतं प्रसलं प्रादक्षिण्यम्; मत्वर्थीयो विनिः। प्रादक्षिण्यवतो मम 'इदं' पित्र्यमपि 'कर्म' 'अनुसन्तिष्ठातै' संस्थितं भवेत्। 'इति' अनेनाभिप्रायेण अवसाने 'प्रसलवि' अपसव्येन परिषेचनं क्रियत इत्यर्थः॥४१॥

---

अब वह जल पात्र को लेता है और प्रदक्षिण-क्रम से फिर तीन बार बाई ओर से दाहिनी ओर को जल-सेचन करते हुए लौटता है और नामग्रहणपूर्वक 'असाववनेनिक्ष्व' यह कहकर यजमान के पिता के लिये अवनेजन करता (जल छोड़ता) है। तदनन्तर 'असाववनेनिक्ष्व' यह कहकर यजमान के पितामह के लिये; तत्पश्चात् असाववनेनिक्ष्व' यह कहकर यजमान के प्रपितामह के लिये अवनेजन देता है। जैसे अतिथि के सत्कार में भोजन एवं जल दिया जाता है वैसे ही यहाँ भी पितरों के निमित्त किया जाता है। जो तीन बार बाई ओर से दाहिनी ओर (प्रदक्षिण-क्रम से) जल-सेचन करते हुये चलता है वह इसलिये कि यह पितृयज्ञ भी देव कार्यवत् संस्थित हो जाय'। अतएव वह अन्त में प्रदक्षिण-क्रम से तीन बार जल-सेचन करता है॥४१॥

(त्यु) अथ नीविमुद्वृह्य नमस्करोति। पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वाऽऋतव ऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति गृहान्नः पितरो दत्तेति गृहाणाᳬँ ह पितर ईशत ऽएषो ऽएतस्याशीः कर्मणः॥४२॥

(स्ते) ते सर्व्वऽएव यज्ञोपवीतिनो भूत्वा। (त्वाऽनु)

---

अथ नीविमुद्वृह्य नमस्करोति। पितृदेवत्या वै नीविः। तस्मान्नीविमुद्वृह्य नमस्करोति। यज्ञो वै नमः। यज्ञियानेवैनानेतत् करोति। षट्कृत्वो नमस्करोति। षड्वा ऋतवः। ऋतवः पितरः–तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति। तस्मात् षट्कृत्वो नमस्करोति। 'गृहान्नः पितरो दत्त'–इति। गृहाणां ह पितर ईशते। एषो एतस्याशीः कर्मणः॥४२॥

ते सर्व एव यज्ञोपवीतिनो भूत्वा, अनुयाजाभ्यां प्रचरिष्यन्तः

---

अथ नीविमित्यादि। पिण्डपितृयज्ञप्रकरणे व्याख्यातम् (श.प.का. २ प्र. ४, ब्रा. २ कं. २४)॥४२॥

चोदकप्राप्तमनुयाजाद्युदीच्याङ्गकलापं सविशेषमतः परमनुक्रामति—ते सर्व

---

अब नीवि अर्थात् कटिभाग की धोती में खोंसे गये कुश को निकालकर पितरों को नमस्कार करता है। नीवि पितृदैवत्य होती है। इसलिये उसे मुक्तकर नमस्कार करता है। नमस्कार यज्ञ है। इस प्रकार वह उनको यज्ञ से सम्बन्धित करता है। छः बार नमस्कार करता है; क्योंकि छः ऋतुयें होती हैं। ऋतुयें पितर् हैं। इस प्रकार ऋतुओं में ही इस यज्ञ की स्थापना करता है। अतएव छः बार नमस्कार करता है। अब आशीःर्थन करता है—'गृहान्नः पितरो दत्त'। (अर्थ–) 'हे पितृगण! हमें सुन्दर घर दीजिये'; क्योंकि पितर घर के प्रभु होते हैं अतः इस यज्ञ का यह आशीर्वाद वाक्य है॥४२॥

इसके पश्चात् वे सभी सव्ययज्ञोपवीत धारण करके (बायें कन्धे पर जनेऊ लाकर) अनुयाज-याग की तैयारी करते हैं। एतदर्थ यजमान और ब्रह्मा पश्चिम की

---

१. अवनेज्य पूर्ववत्प्रदक्षिणम्। नीवीं व्विस्नः स्य नमो व इत्यंजलिं करोति षड्वा नमस्कारान्। गृहान्नः पितरो दत्तेति च (का.श्रौ.सू. ५.२४३-२४५)॥

अनुयाजाभ्यां प्रचरिष्यन्त इत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने॥४३॥

(नेऽथा) अथाह ब्रह्मन् प्रस्थास्यामि। समिधमाधायाग्निमग्नीत्सम्मृड्ढीति स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह देवान्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादुपबर्हिषौ द्वावनुयाजौ यजति॥४४॥

---

इत्थाद्यजमानश्च ब्रह्मा च पश्चात् परीतः। पुरस्तादग्नीत्। उपविशति होता होतृषदने॥४३॥

अथाह–'ब्रह्मन् प्रस्थास्यामि' 'समिधमाधायाग्निमग्नीत् सम्मृड्ढि' इति। स्रुचावादाय प्रत्यङ्ङतिक्रामति। अतिक्रम्य आश्राव्याह–'देवान् यज' इति। सोऽपबर्हिषौ द्वावनुयाजौ यजति। प्रजा वै बर्हिः–नेत् प्रजाः पितृषु दधानीति। तस्मादपबर्हिषौ द्वावनुयाजौ यजति॥४४॥

---

एवेति। इत्थाद्यजमानश्चेति। प्रयाजाद्युदीच्याङ्गानुष्ठानसमये एव ब्रह्मयजमानाद्यास्तत्र तत्र स्थाने परीत्योपविशेयुः॥४३॥

अथाहेति। प्रत्यङ्ङतिक्रामतीति। प्राचो दक्षिणादिक्त्वस्य प्रागुपपादितत्वाद्दक्षिणातिक्रमणस्थाने प्रत्यङ्मुखोऽध्वर्युरतिक्रामेदित्यर्थः। 'अपबर्हिषौ' बर्हिः प्रथमोनुयाजः, तद्वर्जितौ 'द्वावनुयाजौ' यज यजेति। बर्हिर्वर्जने कारणमाह—प्रजा व इति॥४४॥

---

ओर आते हैं और अग्नीध्र पूर्व की ओर तथा होता होतृषदन पीठ पर बैठ जाता है॥४३॥

अब अध्वर्यु कहता है—'हे ब्रह्मा! मैं आगे चलूँगा'। अनुज्ञा प्राप्त कर वह समिधा अग्नि में डालता है तथा कहता है—'आग्नीध्र! अग्नि को प्रदीप्त बनाइये'। तत्पश्चात् दोनों स्रुचियों को लेकर पश्चिम की ओर जाता है। वहाँ जाकर 'आश्रावण' प्रैष देने के अनन्तर कहता है—'देवों के निमित्त यजनार्थ मंत्रपाठ कीजिये'। मंत्रपाठानन्तर वह दो अनुयाज की आहुति देता है—'बर्हि' अनुयाज छोड़कर। (क्योंकि—) वर्हि प्रजा है। बर्हि का अनुयाज छोड़कर दो अनुयाज ही करता है जिससे प्रजा पितृदैवत्य न हो जाय॥४४॥

---

१. ब्रह्मा मंत्रणादि प्राग्स्रुग्व्यूहनात् प्रयाजवत्। यज्ञोपवीतिविपर्ययम् (का.श्रौ.सू. ५.२४६,२४७)।

(त्यु) अथ सादयित्वा स्रुचौ व्यूहति। स्रुचौ व्युह्य परिधीन्त्समज्य परिधिमभिपद्याश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकꣳ होता प्रतिपद्यते नाध्वर्युः प्रस्तरꣳसमुल्लुम्पतीत्येवोपास्ते यदा होता सूक्तवाकमाह॥४५॥

(ह्वा) अथाग्नीदाहानुप्रहरेति। स न किञ्चनानुप्रहरति तूष्णीमेवात्मानमुपस्पृशति॥४६॥

---

अथ सादयित्वा स्रुचौ व्यूहति। स्रुचौ व्युह्य, परिधीन्त्समज्य, परिधिभभिपद्य आश्राव्याह–'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय'–इति। सूक्तवाकं होता प्रतिपद्यते। नाध्वर्युः। प्रस्तरं समुल्लुम्पति। इत्येवोपास्ते–यदा होता सूक्तवाकमाह॥४५॥

अथाग्नीदाह–'अनुप्रहर' इति। स न किञ्चनानुप्रहरति, तूष्णीमेवात्मानमुपस्पृशति॥४६॥

---

स्रुग्व्यूहनादिकं प्रकृतिवदेव कर्त्तव्यमित्यनुक्रामति—अथ सादयित्वेत्यादिना। सूक्तवाकानुवचनं प्रकृतिवत् प्राप्तम्। प्रस्तरप्रहरणं निषेधति—नाध्वर्युरिति। 'न समुल्लुम्पति' न गृह्णाति, न प्रहरेत् तूष्णीमेवोपासीत प्रस्तरमाप्रहरणम्[२]॥४५॥४६॥

---

अब दोनों स्रुचियों (जुहू-उपभृत्) को रखकर स्रुग्व्यूहन (अर्थात् जुहू को पूर्व की ओर तथा उपभृत् को पीछे (पश्चिम) की ओर अपसारण) करता है। स्रुग्व्यूहन के पश्चात् जुहूस्थ आज्य द्वारा परिधियों का घी से अञ्जनकर प्रथम परिधि को लेता है और 'आश्रावणादि-प्रैष' देकर कहता है—'भद्र कहने के लिये दिव्य होता (अग्नि की परिधियाँ) उद्यत हैं, स्तुति के लिये मनुष्य होता का आह्वान करता हूँ, वह सूक्तों का पाठ करे। तत्पश्चात होता सूक्तवाक या स्तुति कहता है। इस समय अध्वर्यु 'प्रस्तर' संज्ञक कुशों को नहां उठाता, केवल देखता रहता है जबकि होता स्तुति-मन्त्र (सूक्तवाक्) पढ़ता है॥४५॥

तदनन्तर आग्नीध्र कहता है—'प्रस्तर-कुश को अग्नि में छोड़िये'। (किन्तु) अध्वर्यु कुछ छोड़ता नहीं; अपितु केवल चुपचाप अपने हृद्देश का स्पर्श कर लेता है॥४६॥

---

१. 'न प्रस्तरमादत्ते' (का.श्रौ.सू. ५.२४८)। २. 'अनुप्रहरेत्युक्ते न किंचनानुप्रहरति। तूष्णीमात्मानꣳ संस्पृशति' (का.श्रौ.सू. ५.२४९,२५०)।

(त्य्) अथाह संवदस्वेति। (त्य्) अगानग्नीदुगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्बूहीत्युप-स्पृशत्येव परिधीन्नानुप्रहरत्यथैतद्बर्हिरनुसमस्यति परधींश्च॥४७॥

तद्धैके। हविरुच्छिष्टमनुसमस्यन्ति तदु तथा न

---

अथाह–'संवदस्व' इति। 'अगानग्नीत्'। 'अगन्'। 'श्रावय'। 'श्रौषट्'। 'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि' इति। उपस्पृशत्येव परिधीन्, नानुप्रहरति। अथैतद्बर्हिरनुसमस्यति, परिधींश्च॥४७॥

तद्धैके हविरुच्छिष्टमनुसमस्यन्ति। तदु तथा न कुर्यात्। हुतोच्छिष्टं वा

---

अग्नीत्प्रैषस्यानिवृत्तिमाह—अथाहेति। 'स्वगा दैव्या होतृभ्यः'–इति सम्प्रैषेऽध्वर्युणोक्ते होता शंयुवाकं ब्रूयात्; न च तदानीमध्वर्युः परिधीननुप्रहरेत्, केवलमुपस्पृशेदेव[1]। बर्हिषः परिधीनाञ्च तूष्णीमग्नौ प्रहरणं विधत्ते—अथैतदिति। 'एतत्' चतुःस्रक्त्यां वेद्यां स्तीर्णं 'बर्हिः' 'परिधींश्च' आदाय युगपदग्नौ 'अनुसमस्यति' प्रक्षिपति[2]॥४७॥

अथ हविःशेषस्याप्यग्नौ प्रक्षेपमेकीयमतेनोपन्यस्यति—तद्धैक इति। तदेतन्निषिध्योपपादयति—तदु तथेति। हुतशेषस्य पुनर्होमयोग्यत्वाभावान्नैष पक्षो

---

अब अग्नीध्र अध्वर्यु से कहता है—'संवाद करें'। (तब) अध्वर्यु पूछता है—'हे आग्नीध्र! वह गया? (अग्नीध्र उत्तर देता है–) हाँ, 'वह गया'। [शंयुवाक–] अध्वर्यु—हे अग्नीत्, होता को पुकारो। अग्नीत्—'श्रौषट्' (होता सुन रहे हैं)। अध्वर्यु—'स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि'। (अर्थात्—'दैव-होता विदा हों', 'मनुष्य-होता का कल्याण हो', 'यजमान सहित सभी लोगों के लिये कल्याण का आशंसन कीजिये')—यह कहकर वह परिधियों का केवल स्पर्श करता है; उन्हें अग्नि में नहीं डालता। एतदनन्तर पितृयज्ञ की चौकोर वेदी पर बिछी बर्हि और परिधियों को एक साथ अग्नि में छोड़ता है॥४७॥

कुछ शाखाध्येता लोग अवशिष्ट हवि को भी (अग्नि) में डाल देते हैं परन्तु ऐसा नहीं करना चाहिये; क्योंकि यह हुतशेष (यज्ञ का बचा हुआ भाग) है। इसलिये

---

१. 'उपस्पृश्य परिधीन्नानुप्रहरति' (का.श्रौ.सू. ५.२५१)। २. 'शंय्वंतं भवति। बर्हिः परिध्यग्नौ प्रास्यति' (का.श्रौ.सू. ५.२५२.२५३)।

कुर्याद्धुतोच्छिष्टं वा ऽएतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वैवाभ्यवहरेयुः प्राश्नीयुर्व्वा॥४८॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम्॥५॥२॥
इति षष्ठोऽध्यायः प्रथमं ब्राह्मणम्॥६॥१॥

---

एतत्–नेद्धुतोच्छिष्टमग्नौ जुहवामेति। तस्मादपो वैवाभ्यवहरेयुः–प्राश्नीयुर्वा॥४८॥

॥ इति साकमेधपर्वणि पितृयज्ञः ॥

---

युक्त इत्यर्थः। का तर्हि हविःशेषस्य प्रतिपत्तिरिति, तामाह—तस्मादिति। 'हुतोच्छिष्टम् अपोऽभ्यवहरेयुः'। अग्नौ प्रासनपक्षस्य व्युदासार्थ 'एव' कारः। ऋत्विजो 'वा प्राश्नीयुः' इति पक्षान्तरम्। सूत्रकारोऽप्येतत् सर्वमाह स्म–'न प्रस्तरमादत्ते' इत्यादिना[1]॥४८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य प्रथमं ब्राह्मणम्।।२।।६।।१।।

---

ऐसा नहीं होना चाहिए कि आहुति की झूठन अग्नि में छोड़ दी जाय। अतः उस हुतशेष को या तो जल में छोड़ना चाहिये अथवा ऋत्विग्जनों को भक्षण कर लेना चाहिये।।४८।।

❊

---

१. 'हविरुच्छिष्टं च'। 'अप्सु प्रास्यं वा' (का.श्रौ.सू. ५.२५४.२५५)।

महाहविषा ह वै देवा वृत्रं जघ्नुः। (स्ते) तेनो ऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्सङ्ग्राम ऽइषव आर्च्छंस्तानेतैरेव शल्यान्निरहरन्त तान् व्यवृहन्त यत्त्र्यम्बकैरयजन्त॥१॥

(न्ताथ) अथ यदेष ऽएतैर्यजते। तन्नाहु न्वेवैतस्य तथा कं

---

**अथ त्र्यम्बकहविर्यागः**

**महाहविषा ह वै देवा वृत्रं जघ्नुः। तेनो एव व्यजयन्त-येयमेषां विजितिः-ताम्। अथ यानैवैषां तस्मिन्त्सङ्ग्राम इषव आर्च्छंस्तान्-एतैरेव शल्यान्निरहरन्त। तान् व्यवृहन्त-यत् त्र्यम्बकैरयजन्त॥१॥**

**अथ यदेष एतैर्यजते। तन्नाह न्वेवैतस्य तथा कं च नेषुर्त्रृच्छतीति देवा**

---

अथ विधित्सितानां त्र्यम्बकहविषां[1] शल्यनिर्हरणहेतुत्वमितिहासेनोपपादयति—**महाहविषेति।** **अथ यानेवेत्यादि।** 'तस्मिन् सङ्ग्रामे' 'एषां' देवानां मध्ये 'यानेव' इन्द्रप्रभृतीन् 'इषवः' वृत्रमुक्ताः शराः 'आर्च्छन्' प्राप्नुवन्, 'तान्' देवान् 'एतैरेव' त्रैयम्बकैर्हविर्भिस्तस्मात् 'शल्यात्' 'निरहरन्त' वियोजितवन्तः। निर्हरणप्रकारमाह—**तान् व्यवृहन्तेति।** 'वृहू उद्यमने' (धा.पा.तु.प. ६६)। शल्यप्रोतांस्तानस्माच्छल्यादुद्धरन्त[2] इत्यर्थः। **एतैरेवेति।** प्रतिनिर्देशस्य सव्यपेक्षत्वात्तन्निर्दिशति—**यत् त्र्यम्बकैरिति।** अम्बिका नाम स्त्री अस्य स्वसा अतस्त्रयम्बको रुद्रः। देवतावाचिना लक्षणयाऽत्र हवींष्युच्यन्ते॥१॥

आख्यायिकया प्रतिपादितमर्थं प्रकृते योजयति—**अथ यदेष इति।** 'एषः' इदानीन्तनो यजमानः। **तन्नाहेति।** 'न, अह, नु, एव' इति चत्वारो निपाताः।

---

देवों ने महाहवि के प्रभाव से ही वृत्र को मारा था। उसी (महाहविर्याग) से उनको वह विजयश्री मिली जो उनको प्राप्त है। उस वृत्र-युद्ध में जिन इन्द्रादि देवों को बाण लगे थे उनको निकाला और उनके शल्यों (घावों) का उपचार त्र्यम्बकहविर्याग से किया॥१॥

जो मनुष्य यजमान इस त्र्यम्बकहविर्याग को करता है वह एक तो इसलिये करता है कि उससे सम्बन्धित लोगों को कोई तीर न लगे; दूसरे इसलिये कि

---

१. त्रैयम्बकहविषां इति त्रियंबकहविषां इति। च.पा.। इहोत्तरत्राप्येवमेव। २. उद्धृतवन्तः इति पा.।

च नेषुरर्च्छतीति देवा अकुर्व्वन्निति त्वेवैष ऽएतत्करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता ऽउभयी रुद्रियात्प्रमुञ्चति ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वा ऽएष ऽएतैर्यजते॥२॥

ते वै रौद्रा भवन्ति। रुद्रस्य हीषुस्तस्माद्रौद्रा भवन्त्येककपाला भवन्त्येकदेवत्या असन्निति तस्मादेककपाला भवन्ति॥३॥

---

अकुर्वन्। इति त्वेवैष एतत् करोति। याश्च त्वेवास्य प्रजा जाताः, याश्चाजाताः-उभयी रुद्रियात्प्रमुञ्चति। ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते। तस्माद्वा एष एतैर्यजते॥२॥

ते वै रौद्रा भवन्ति। रुद्रस्य हीषुः। तस्माद्रौद्रा भवन्ति। एककपाला भवन्ति। एकदेवत्या असन्निति। तस्मादेककपाला भवन्ति॥३॥

---

'तत्' तेन त्रैयम्बकहविर्यागेन अद्यापि 'एतस्य' यजमानस्य सम्बन्धिनमेव 'कञ्च' कमपि पुरुषम् 'इषुः' 'तथा' 'नैव' 'ऋच्छति' प्राप्नोति। देवानुकारित्वस्य हेतुमाह—**इति देवा इति। याश्च त्वेवास्येति।** 'अस्य' यजमानस्य सम्बन्धिनीः 'प्रजाः' 'जाताः', 'याश्च' 'अजाताः' प्रजनिष्यमाणाः, 'ताः' 'सर्वाः' 'उभयीः' उभयविधाः प्रजाः 'रुद्रियात्' रुद्रकृताद्धिंसनात् 'प्रमुञ्चति'। प्रतिपुरुषं सङ्ख्याय क्रियमाणैरेतैः त्रियम्बकैर्हविर्भिस्तस्य रुद्रस्य प्रीणितत्वात्। **ता अस्येत्यादि**, गतम्॥२॥

तेषां देवतां विधाय प्रशंसति—**ते वै रौद्रा भवन्तीति**। रुद्रो देवता एषाम्। 'सास्य देवता'-(पा.सू. ४.२.२४) इत्यण्। तत्र कारणमाह—**रुद्रस्येति**। 'हि' यस्माद्रुद्रसम्बन्धी 'इषुः' त्रिपुरविजयार्थं रुद्रस्यायुधत्वेन निर्मितः, तस्मात्। अत एवान्यत्र रुद्रस्य त्रिपुरविजयप्रस्तावे श्रूयते—'त इषुं' समस्कुर्वत'-(तै.सं. ६.२.३.१) इति। हविषामेककपालसंस्कार्यत्वं विधाय स्तौति—**एककपाला**

---

देवताओं ने इस यज्ञ को किया था। त्र्यम्बकहविर्याग द्वारा यजमान उत्पन्न हो चुकी सन्तानों को और उत्पत्स्यमान सन्तानों को रुद्र के क्रोध से मुक्त कर लेता है और उसकी सन्तान रोग-रहित और दोष-रहित उत्पन्न होती है। अतएव यह यज्ञ करता है॥२॥

(त्र्यम्बक-इष्टियाग) रुद्र के लिये किया जाता है। बाण रुद्र से सम्बन्धित आयुध हैं। इसलिये यहाँ रुद्र देवता के निमित्त हवियाँ होती हैं। रुद्र के निमित्त एक—कपाल (के पुरोडाश) होते हैं। एक देवता के लिये हों। सभी पुरोडाश हों

**ते वै॒ प्रतिपुरुषम्। या॒वन्तो गृ॒ह्याः स्युस्ता॒वन्त ए॒केना॒तिरिक्ता भवन्ति त॒त्प्रतिपुरुष॒मेवैतदे॒कैकेन या॒ अस्य प्रजा॒ जातास्ता॒ रुद्रि॒यात्प्र॒मुञ्चत्येके॒नाॅतिरिक्ता भवन्ति तद्या॒ एवास्य प्रजा अजातास्ता॒ रुद्रियात्प्रमुञ्चति त॒स्मादे॒केना॒तिरिक्ता भवन्ति॥४॥**

**स॒ जघ॒नेन गा॒र्हपत्यम्। यज्ञोपवीती॒ भूत्वो॒दङ्ङ्ासीन**

---

**ते वै प्रतिपुरुषं–यावन्तो गृह्याः स्युः–तावन्त एकेनातिरिक्ता भवन्ति। तत् प्रतिपुरुषमेवैतदेकैकेन–या अस्य प्रजा जातास्ता रुद्रियात् प्रमुञ्चति। एकेनातिरिक्ता भवन्ति–तद् या एवास्य प्रजाः अजाताः–ता रुद्रियात् प्रमुञ्चति। तस्मादेकेनातिरिक्ता भवन्ति॥४॥**

**स जघनेन गार्हपत्यं यज्ञोपवीती भूत्वोदङ्ङासीन एतान् गृह्णाति। स तत**

---

इति। 'एकदेवत्याः' एकदेवतार्थाः सर्व इमे पुरोडाशाः 'असन्' भवन्त्वित्यनेनाभिप्रायेण॥३॥

कियन्तस्ते त्र्यम्बकाः कार्या इति तत्परिमाणमाह—**ते वै प्रतिपुरुषमिति।** 'यावन्तः' यावत्परिमाणविशिष्टा यजमानस्य 'गृह्याः' गृहसम्बन्धिनो ज्ञातयो भवेयुः, तत्र प्रतिपुरुषमेकैकस्य पुरुषस्यैकैकः पुरोडाश इति गणयित्वा 'तावन्तः' ते पुरोडाशा एकेनाधिकाश्च कर्त्तव्याः। एतत्प्रशंसति—**तत्प्रतिपुरुषमिति।** पुरुषं पुरुषं प्रति प्रतिपुरुषम्, वीप्सायामव्ययीभावः। **एकैकेनेति।** 'एकं बहुव्रीहिवत्' (पा.सू. ८.१.९) इति वीप्सायां द्विर्वचनम्, बहुव्रीहिवद्भावात् सुपो लोपः। अन्यदुक्तार्थम्। एकातिरेकमनूद्य तस्य प्रयोजनमाह—**एकेनेति॥४॥**

यावदुक्तचोदना ह्येते पुराडाशाः अतस्तेषां संस्कारप्रकारमाह—**स जघनेनेति।**

---

इसलिये वे सभी एक कपाल संस्कृत पुरोडाश ही होते हैं॥३॥

प्रति पुरुष के लिये एक-एक पुरोडाश होगा। जितने यजमान के घर के लोग होंगे उनके लिये एक-एक पुरोडाश और तदतिरिक्त एक अधिक बनाया जायेगा। प्रत्येक सदस्य के लिये एक-एक पुरोडाश बनाने का तात्पर्य यह है कि इससे वह उत्पन्न हुई सन्तान को रुद्र की हिंसा से छुड़ा लेता है और जो एक अधिक पुरोडाश बना उसके माध्यम से जो सन्तान अभी उत्पन्न नहीं हुई उसको रूद्र के हिंसन से छुड़ाता है। अतएव यजमान के घर के सदस्यों की संख्या के अनुरूप पुरोडाश होते हैं और उससे एक अधिक बनाया जाता है॥४॥

तत्पश्चात् यजमान सव्य-यज्ञोपवीत धारण किये हुये उत्तराभिमुख गार्हपत्य के पीछे बैठकर (पुरोडाश के लिये चावलों को) निकालता है। तत्पश्चात् वहाँ से वह

**एतान्गृह्णाति स तत एवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्यौ दृषदुपले ऽउपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशꣳ सचन्त ऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशꣳ सचन्ते॥५॥**

**ते वा ऽअक्ताः स्युः। (२) अक्तꣳ हि हविस्त ऽउ वा**

---

**एव उपोत्थायोदङ्तिष्ठन्नवहन्ति। उदीच्यौ दृषदुपले उपदधाति। उत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति। तद् यदेव तामुत्तरां दिशं सचन्ते–एषा ह्येतस्य देवस्य दिक्। तस्मादेतामुत्तरां दिशं सचन्ते॥५॥**

**ते वा अक्ताः स्युः। अक्तं हि हविः। त उ वा अनक्ता एव स्युः।**

---

गार्हपत्यस्य पश्चात् 'यज्ञोपवीती भूत्वा', 'उदङ्मुख आसीनः' 'एतान्' 'पुरोडाशान् निर्वपेत्। अवषट्कारप्रदत्वेनैष्टिकधर्माणामप्राप्तेर्निर्वपणादिकं सर्वं तूष्णीमेव कर्तव्यम्। अत एवोक्तं सूत्रकृता—'त्रैयम्बकान्निर्वपन्ति' इति प्रक्रम्य, 'जुहोतयोऽवषट्काराः' इति। तत्र अवषट्कारा इति च्छेदः। हविरुत्पत्त्यन्यथानुपपत्त्याऽऽक्षिप्तानि तद्धर्म्मकान्यवहननादीनि। वैकृतं विशेषं वक्तुमनुक्रामति—**स तत एवेत्यादिना**। प्रागुदीच्यां रुद्राधिष्ठितत्वेनोत्तरदिशो रुद्रसम्वन्धात् तद्दिक्त्वाच्च रुद्रदैवताख्या, अतस्तत्कर्मस्ववहननादिषु सर्वत्रोदक्सम्बन्धः कर्तव्य इति। तत्र 'तद्यत्' यस्माद्रुद्रदेवत्या। तस्मात् 'ताम्' एताम् 'उत्तरां दिशं 'सचन्ते' सर्वेषु व्यापारेषु ऋत्विजः समवयन्ति॥५॥

एषां हविषामक्ततार्थमभिघारणपक्षमाह—**ते वा अक्ताः स्युरिति**। 'वै'

---

उठता है और उत्तराभिमुख खड़ा होकर धान को कूटता है। दृषद (सिल) और उपल (लोढ़ी) उत्तर की ओर रखता है। तदनन्तर गार्हपत्य कुण्ड के उत्तरार्द्ध में कपालों को रखता है। (दृषदुपलादि) उत्तर की ओर जो रखता है, वह इसलिये कि उत्तर दिशा रुद्र देवता की दिशा है। अतः त्र्यम्बकहविर्याग में अधिकतर उत्तर-दिशा का आश्रयण लेते हैं॥५॥

(कुछ शाखीयों के मत में) पुरोडाश पर घी डालना चाहिये (क्योंकि) हवियों

---

१. 'त्रैयंबकान्निर्वपति रौद्रानेककपालान् यावतो यजमानगृह्या एकाधिकान्। (का.श्रौ.सू. ५.२५६) उदङ्मुखः सर्वम्। (का.श्रौ.सू. ५.२५८)। देशांश्च। (का.श्रौ.सू. ५.२५९) आरवूत्करचतुष्पथस्थाणुवृक्षवंशादयो देशाः। जुहोतयोऽवषटकारान्। (का.श्रौ.सू. ५.२६०)। २. अक्तान् वा। पात्र्यांकृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः। सर्व्वेषामवदानं सकृत्सकृदतिरक्तवर्जम्। अक्तेषु मिश्रणम्। (का.श्रौ.सू. ५.२६१-२६४)।

ऽअनक्ता ऽएव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्य-दङ्ग्यात्तस्मादुनक्ता ऽएव स्युः॥६॥

(स्ता) तान्त्सार्द्धं पात्र्याᳬ समुद्वास्य। (स्यान्वा) अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक्पथि जुहोति पथा हि स देवश्चरति चतुष्पथे

---

**अभिमानुको ह रुद्रः पशून्त्स्याद् यदङ्ग्यात्। तस्मादनक्ता एव स्युः॥६॥**

**तान्त्सार्द्धं पात्र्यां समुद्वास्य, अन्वाहार्यपचनादुल्मुकमादाय–उदङ् परेत्य जुहोति। एषा ह्येतस्य देवस्य दिक्। पथि जुहोति। पथा हि स देवश्चरति।**

---

शब्दोऽवधारणे। खलु 'ते' पुरोडाशाः 'अक्ताः' अज्येनाभिघारिता एव 'स्युः'। तत्र हेतुमाह—**अक्तं हीति**। 'हि' यस्मात् 'अक्तम्' अभिघारितमेव हविर्भवति। तथा च तैत्तिरीयकम्—'प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतं हविरनभिघारितमभिघार्योद्वासयति (तै.सं. २.६.३.९) इति। अनभिघारित-पक्षमाह—**त उ वा इति**। तत्र कारणमाह—**अभिमानुक इति**। पशुप्रभवेनाज्येन यदि रौद्रान् पुरोडाशानङ्ग्यात् ततः स रुद्रः आज्य सम्वन्धद्वारा तत्कारणभूतान्, पशून् 'अभिमानुकः' अभिमन्तुं बाधितुं शक्तः स्यात्॥६॥

**तान् सार्द्धमित्यादि**। निगदसिद्धम्। उत्तरदिशि विशेषं विधत्ते—**पथीति**। उत्तरस्यां दिशि यः पन्था विद्यते, तत्रोल्मुकं विधाय, तस्मिन् पुरोडाशान् जुहुयात्। पथि होमे कारणमाह—**पथा हीति**। 'सः' खलु रुद्रो 'देवः' 'पथा' मार्गेण हि 'चरति' तत्रावतिष्ठत इत्यर्थः। पथ्यपि किञ्चिद् विशेषं विधत्ते **चतुष्पथ इति**। चतुर्णां पथां समाहारश्चतुष्पथः, चतसृभ्यो दिग्भ्य आगताश्चत्वारः पन्थानो

---

में में घृताभिधारण होता है; परन्तु घृत से न अञ्जित ही उचित है। यदि घृत अञ्जित कर दिया जाएगा तो रुद्र यजमान के पशुओं के पीछे पड़ेगा। इसलिये घृत से नहीं अञ्जित करना चाहिये॥६॥

एक पात्र में सब (पुरोडाशों) को रखके दक्षिणाग्नि से एक जलता अंगारा लेकर उत्तर की ओर जाकर (चतुष्पथ) मार्ग में आहुति देता है; क्योंकि उत्तर की दिशा इस रुद्र-देवता की है। मार्ग में आहुति देता है; क्योंकि वह देव (रुद्र) मार्ग में ही विचरण करता है। चतुष्पथ (चौराहे) पर ही (रुद्र के निमित्त) आहुति देता

जुहोत्येतद्ध वा ऽअस्य जान्धितं प्रज्ञातमवसानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति॥७॥

पलाशस्य पलाशेन मध्यमेन जुहोति। ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्व्वेषामेवावद्यत्येकस्यैव नावद्यति य एषोऽतिरिक्तो भवति॥८॥

---

चतुष्पथे जुहोति। एतद्ध वा अस्य जान्धितं प्रज्ञातमवसानं यच्चतुष्पथम्। तस्माच्चतुष्पथे जुहोति॥७॥

पलाशस्य पलाशेन मध्यमेन जुहोति। ब्रह्म वै पलाशस्य पलाशम्। ब्रह्मणैवैतज्जुहोति। स सर्वेषामेवावद्यति। एकस्यैव नावद्यति। य एषोऽतिरिक्तो भवति॥८॥

---

यत्र सङ्गच्छन्ते, तत्र जुहुयादित्यर्थः। एतदुपपादयति—**एतद्ध वा** इति। 'एतत्' खलु 'अस्य' रुद्रस्य 'जान्धितम्'। जनैः परिकल्पितम्, 'प्रज्ञातम्' प्रसिद्धम्, 'अवसानं' स्थानम्, यच्चतुष्पथाख्यम्। अत एवोक्तमभियुक्तैः—'वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः'—इति॥७॥

अथैतस्मिन् होमे साधनं विधत्ते–**पलाशस्य पलाशेनेति**। पलाशवृक्षस्य पर्णेनेत्यर्थः। **ब्रह्मावै पलाशस्य पलाशमिति**। पलाशवृक्षस्य ब्रह्म (त्व)श्रवणात्' तदीयं पर्णमपि ब्रह्मात्मकम्। ब्रह्मश्रवणञ्च तैत्तिरीयके समाम्नातम्—'देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत्'–(तै.सं. ३.५.७.३) इति। अवदाने विशेषमाह—**स सर्वेषामिति**। यावन्तः पुरोडाशाः कृताः तत्र एकमतिरिक्तं विहाय तेषां सर्वेषामेव सकाशात् तस्मिन् मध्यमपर्णेऽवद्येदित्यर्थः॥८॥

---

है क्योंकि चतुष्पथ ही (रुद्र का) लोकप्रसिद्ध स्थान है। इसलिये रुद्र के निमित्त त्र्यम्बकेष्टि में चतुष्पथ पर ही आहुति देता है॥७॥

पलाश पत्र के बीच के पत्ते से आहुति देता है। पलाश वृक्ष का पत्ता गुणादि की दृष्टि से परिपूर्ण (ब्रह्म) है। इसलिये ब्रह्म (=पलाशपर्ण) के द्वारा ही आहुति देता है। वह सभी (पुरोडाशों में से) एक-एक टुकड़ा लेता है, केवल अतिरिक्त पुरोडाश (जो एक अधिक बनाया गया है) में से नहीं लेता॥८॥

स जुहोति। (त्ये) एष ते रुद्र भागः सह स्वस्त्राऽम्बिकया तं जुषस्व स्वाहेत्यम्बिका ह वै नामास्य स्वसा तयाऽस्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्र्यम्बका नाम तद्या ऽअस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चति॥९॥

(त्यु) अथ य ऽएष ऽएकोऽतिरिक्तो भवति। तमाखूत्कर

---

स जुहोति–'एष ते रुद्र भागः सह स्वस्त्राऽम्बिकया तं जुषस्व–स्वाहा'–(वा.सं. ३.५७) इति। अम्बिका ह वै नामास्य स्वसा। तयाऽस्यैष सह भागः। तद् यदस्यैष स्त्रिया सह भागः–तस्मात् त्र्यम्बका नाम। तद् या अस्य प्रजा जाताः–ता रुद्रियात् प्रमुञ्चति॥९॥

अथ य एष एकोऽतिरिक्तो भवति–तमाखूत्कर उपकिरति। 'एष ते

---

इत्थं सर्वेभ्यः समवत्तस्य हविषः समन्त्रकं होमं विधत्ते—स जुहोतीति।[1] मन्त्रस्यायमर्थः—हे 'रुद्र!' 'ते' तव 'एष भागः'। कथम्भूतस्य? अम्बिकानामास्य स्वसा, तया सहितस्य। अतः 'तं' भागं 'जुषस्व' सेवस्व। इदं हविः 'स्वाहा' सुहुतमस्त्विति (वा.सं. ३.५७)। तत्र 'सह स्वस्त्राऽम्बिकया–' इति मन्त्रभागस्याभिप्रायमाविष्कुर्वन्नेतेषां हविषां त्र्यम्बकनाम निर्ब्रूते—**अम्बिका ह वा** इति। **तद्यदस्यैष** इति। 'तत्' तथा सति 'यद्' यस्मात् 'अस्य' रुद्रस्य तया 'स्त्रिया' 'सह' 'एष भागः' कल्पितः, 'तस्मात्' स्त्रीरूपाम्बिकासम्बन्धाद्रुद्रस्यैते पुरोडाशाः (आदिवर्णलोपेन) 'त्र्यम्बकाः'—इत्याख्यायन्ते। **तद्या** अस्येति, व्याख्यातम्॥९॥

अवदानकालपरिशेषितस्यातिरिक्तस्यैकस्य विनियोगमाह—**अथ य एष** इति। उत्किरति पांशूनित्युत्करः; आखुभिः कृते 'आखूत्करे' 'तम्' अतिरिक्तमेकं

---

अध्वर्यु इस मन्त्र को पढ़कर सभी पुरोडाशों से लिये गये भागों की आहुति देता है—'एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा (यजु. ३.५७)। (मन्त्रार्थ—) 'हे रुद्र यह आपका भाग है; अपनी भगिनी अम्बिका के साथ इसे प्रीतिपूर्वक ग्रहण करें; स्वाहा'॥ रुद्र देवता की बहिन का नाम अम्बिका है। उसके साथ मिला हुआ रुद्र का यह हविर्भाग है। यतः स्त्री उस भाग में सम्मिलित है अतः इन आहुतियों का नाम 'त्र्यम्बकाः' पड़ा। इन आहुतियों के द्वारा, यजमान के कुटुम्ब में उत्पन्न प्रजाओं को रुद्र के रोष से मुक्तकर देता है॥९॥

अब जो एक (पुरोडाश) अवशिष्ट है, उसको चूहे के बिल में डाल देते हैं

---

१. 'एवत इति जुहोति' (का.श्रौ.सू. [illegible])

ऽउपकिरत्येष ते रुद्र भाग ऽआखुस्ते पशुरिति तदस्मा ऽआखुमेव पशूनामनुदिशति तेनो ऽइतरान्पशून्न हिनस्ति तद्यदुपकिरति तिर ऽइव वै गर्भास्तिर ऽइवैतद्यदुपकीर्णं तस्माद्वा ऽउपकिरति तद्या ऽएवास्य प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति॥१०॥

(त्यु) अथ पुनरेत्य जपन्ति। (न्त्यु) अव रुद्रमदीमह्यव देवं

---

रुद्र भाग आखुस्ते पशुः'-(वा.सं. ३.५७) इति। तदस्मा आखुमेव पशूनामनुदिशति। तेनो इतरान् पशून् न हिनस्ति। तद्यदुपकिरति-तिर इव वै गर्भाः, तिर इवैतद्-यदुपकीर्णम्। तस्माद्वा उपकिरति। तद् या एवास्य प्रजा अजाताः-ता रुद्रियात् प्रमुञ्चति॥१०॥

अथ पुनरेत्य जपन्ति 'अव रुद्र मदीमहि, अव देवं त्र्यम्बकम्। यथा

---

पुरोडाशम् 'उपकिरति' उपक्षिपति। 'कॄ विक्षेपे'-(धा.पा.तु. १२८) इति धातुः। 'एष ते'-इति मन्त्रः (वा.सं. ३.५७)। तदर्थस्तु—हे 'रुद्र!' 'ते' तव 'एष' पुरोडाशो भागः, अस्मिन्नुत्करे स्थितो यः 'आखुः' असौ 'ते पशुः इति। एतन्मन्त्र पाठस्य प्रयोजनमाह—**तदस्मा इति**। 'तत्' तेन मन्त्रेण 'पशूनां' मध्ये 'आखुमेव' 'अस्मै' रुद्राय पशुत्वेन निर्द्दिशति। 'तेन' कारणेन 'इतरान्' नृगवाश्वादिपशून् स रुद्रो 'न हिनस्ति'। अतिरिक्तस्यैकस्य पुरोडाशस्य यदुपक्षेपणं विहितम्, तदुपपादयति—**तद् यदिति**। **तिर इवेति**। 'गर्भाः' तिरोहिता इव भक्तम् उपकीर्णञ्च द्रव्यं विगलितं सत् तिरोहितमेव भवति, अतो गर्भस्थानामजातानां प्रजानां रुद्रः कृतहिंसनविमोचनाय क्रियमाणस्योपकीर्णत्वं युक्तमिति भावः॥१०॥

जपं विधत्ते—**अथेति**। 'अथ' तदनन्तरम्, पुनश्चतुष्पथादग्निसमीपमेत्य 'अव

---

यह मन्त्र पढ़कर—'एष ते रुद्र भागऽआखुस्ते पशुः' (यजु. ३.५६)। (मन्त्रार्थ-) हे रुद्र! यह भी आपका भाग है (यतः) चूहा तेरा पशु है। इस प्रकार वह चूहे को ही (रुद्र का पशु) नियत कर देता है (फलतः) वह (रुद्र) किसी अन्य, पशु को नहीं सताता। बिल में क्यों डालता है? इसलिये की गर्भ अन्तर्हित होते हैं और जो बिल में डाला हुआ होता है वह भी गुप्त होता है। अतएव वह उस हवि को अन्तर्हित करता है। इसके द्वारा वह अपनी उस सन्तान को जो अभी उत्पन्न नहीं हुई अर्थात् गर्भावस्था में है उसे रुद्र के क्रोध से मुक्त करा देता है॥१०॥

तदनन्तर चतुष्पथ से यज्ञशाला में वापस आकर (भी) ये मन्त्र जपते हैं—

---

१. अतिरिक्त[illegible] उपकिरत्येष न इति, (का.श्रौ.सू. ५.२६६)।

**त्र्यम्बकम्। यथा नो व्वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात्। भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳ सुखं मेषाय मेष्या ऽइत्याशीरेवैषैतस्य कर्मणः॥११॥**

---

**नो वस्यसस्करत्, यथा नः श्रेयसस्करत्, यथा नो व्यवसाययात्। भेषजमसि भेषजम्, गवेऽश्वाय पुरुषाय भेषजं, सुखं मेषाय, मेष्यै'-इति। (वा.सं. ३.५८.५९) आशीरेवैतस्य कर्मणः॥११॥**

---

रुद्रम्' इत्यादिमन्त्रौ सर्वे जपेयुः। तयोः प्रथममन्त्रस्यायमर्थः—'रुद्रम्' 'अवादीमहि' अवदीयामहे, हविर्भागेन रुद्रमवयुज्य पृथक्कृत्य प्रजाः रक्षामहे। 'दीङ्रक्षणे'—इत्यस्मात्' लोटि, 'बहुलं छन्दसि' (पा.सू. २.३.६२) इति शब्लुकि 'घुमास्था'-(पा.सू. ६.४.६६) इतीत्वम्। तथा 'देवं' देवनशीलं 'त्र्यम्बकं स्त्रियाऽम्बिकाख्यया सहितम्, अवादीमहीत्यनुषङ्गः। अम्बिकासाहित्य-प्रतिपादनपरमेतद् द्वितीयं वाक्यम्। स च रुद्रो 'यथा' येन प्रकारेण 'नः' अस्मान् 'वस्यसः' वसीयसः वसुमत्तमान् 'करत्' कुर्यात्, 'न अस्मान् 'यथा' येन प्रकारेण च 'श्रेयसः' प्रशस्यतरान् 'करत्' कुर्यात् 'यथा' च 'नः' अस्मान् व्यवसाययात्' व्यवसयेत् व्यवसितार्थान् कुर्यात्ः तथा 'अवादीमहि' इति सम्बन्धः।

अय द्वितीयस्य—हे रुद्र! त्वं स्वरूपेणैव 'भेषजम्' औषधम् 'असि'; सर्वदुरितनिबर्हणहेतुत्वात्। अतस्त्वं 'सुखं (गं) सुप्राप्तं भेषजम् अस्मदीयेभ्यो गवाश्वादिभ्यः प्रदेहीति शेषः। **आशीरेवेति**। एतस्य त्र्यम्बकाख्यस्य 'कर्मणः' 'एषा' जप्यमन्त्रस्य 'आशीः' फलप्रार्थनम्, गवाश्वादीनामारोग्यमेतस्य कर्मणः फलमित्यर्थः॥११॥

---

(१) 'अव रुद्रमदीमह्यव देवं त्र्यम्बकम्। यथा नो वस्य सस्करद् यथा नः श्रेयसस्करद् यथा नो व्यवसाययात्। (२) 'भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै'॥ (यजु. ३.५८.५९)। (मन्त्रार्थ—) (१) 'हम त्र्यम्बक देव रुद्र को हवि प्रदान कर सन्तुष्ट करते हैं। वह हमको घर आदि से युक्त करे, हमको कल्याण दे, और हमको अध्यवसायी बनावे' (यजु. ३.५८)। (२) हे रुद्र! आप औषध के समान सर्वोपद्रवनिवारक हैं—अतः हमारे गाय, घोड़े, पुरुष आदि के लिये सर्वोपद्रवनिवारक औषध रूप बनें। हमारे भेड़ें और भेड़ी के लिये सुख प्रदान करें (अर्थात् सब प्राणियों के लिये सुख के दाता बनें।) इस यज्ञ में गौ-अश्व-अवि आदि के आरोग्य की फलप्रार्थन रूप यह आशीर्वाद है (यजु. ३.५९)॥११॥

(णोऽथा) अथापसलवि त्रिः पुरियन्ति। सव्यानूरुनुपाघ्ना- नास्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशीरेवैषैतस्य कर्मण आशिष- मेवैतदाशासते तदु ह्येव शमिव यो मृत्योर्मुच्यातै नामृतात्तस्मादाह मृत्योर्मुक्षीय मामृतादिति॥१२॥

अथापसलवि त्रिः परियन्ति सव्यानूरूनुपाघ्नानाः। 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्'–इति (वा.सं. ३.६०) आशीरेवैषैतस्य कर्मणः। आशिषमेवैतदाशासते। तदु ह्येव शमिव यो मृत्योर्मुच्यातै, नामृतात्। तस्मादाह–मृत्योर्मुक्षीय मामृता- दिति।।१२।।

अथाप्रदक्षिणं त्रिरग्नेः परिगमनं विधत्ते—**अथापसलवीति**। त्र्यम्बकस्य हविषः कर्त्तारः सर्वे चतुष्पथे अग्निमपसलवि अपसव्यं त्र्यम्बकमिति मन्त्रेण 'त्रिः परियन्ति' किं कुर्वन्तः? 'सव्यान्' वामान् 'ऊरूनू' 'उपाघ्नानाः'[१] हस्तेन वादयन्तः। मन्त्रस्य चायमर्थः—त्रीणि अम्बकानि नेत्राणि यस्य, यद्वा स्त्री अम्बिका स्वसा यस्य तथोक्तः। शोभनो गन्धो यस्यासौ सुगन्धिः। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः'—(पा.सू. ५.४.१३५) इति इकारादेशः। 'पुष्टिवर्द्धनम्' पुष्टेर्वर्द्धयितारम्। रुद्रं वयं 'यजामहे' पूजयामः। तत्प्रसादादहम् 'उर्वारुकं कर्कटीफलं पक्वं सत् यथा प्रसवबन्धनात् स्वयमेव मुच्यते, तथा 'मृत्योः' मरणात् 'मुक्षीय' मुक्तो भूयासम्; 'अमृतात्' अमरणात् 'मा' वियोगो भवत्विति। **आशीरेवेत्यादि**, सिद्धम्। अन्तिमपादस्य तात्पर्यमाह तदु ह्येवेति। 'यः' 'मृत्योः' मरणात् 'मुच्यातै' मुक्तो भवेत्, सः 'अमृतात्' अमरणात् 'न' मुक्तो भवति; एतदेव हि 'शमिव' प्राणिनां सुखं भवति॥१२॥

अब ऋत्विग्यजमानादि चतुष्पथ पर स्थापित अग्नि की तीन बार उल्टी परिक्रमा (बाँयी ओर से) करते हैं, बाँई जाङ्घो को थपथपाते हुये और यह मन्त्र जपते हुये–'त्र्यम्बकं यजामहे सुगन्धि पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय माऽमृतात् (यजु. ३.६०)। (मन्त्रार्थ—) 'सुगन्धयुक्त और धनधान्यादि पुष्टि को बढ़ाने वाले त्रिनेत्र रुद्रदेव (त्र्यम्वक) की हम पूजा-स्तुति करते हैं। रुद्र की कृपा से हम मृत्यु के बन्धन से उसी प्रकार मुक्त हो जाँय जैसे उर्वारुक (कर्कटीफल पक्व होने पर) अपने डंठल से मुक्त हो जाता है; परन्तु मोक्ष से या अमृतत्व से हम वियुक्त न होवें॥१२॥

१. 'अघ्नानाः' इति पा.।

तुदु हापि कुमार्यः परीयुः। (भ्रर्ं) भगस्य भजामहा ऽइति या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हापि कुमार्यः परीयुर्भगस्य भजामहा ऽइति॥१३॥

तासामुतासां मन्त्रोऽस्ति। त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुत इति सा

---

तदु हापि कुमार्यः परीयुः-'भगस्य भजामहै'-इति। या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्येष्टे। तस्मादु हापि कुमार्यः परीयुः-'भगस्य भजामहै'-इति॥१३॥

तासामुतासां मन्त्रोऽस्ति-'त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनात् इतो मुक्षीय माऽमुतः'-इति (वा.सं. ३.६०)। सा

---

अस्य परिगमनस्य भगप्रसिद्धिहेतुत्वमुपपादयति—**तदु हापीति**। 'तत्' तदा 'कुमार्यः' अपि तमग्निमुक्तप्रकारेण 'परीयुः', 'भगस्य' सौभाग्यस्य। कर्मणि षष्ठी। सौभाग्यम् 'भजामहै' प्राप्नुयामहै 'इति' अनेनाभिप्रायेण। **यो ह वा** इति। अम्बिका नाम 'या' खलु 'रुद्रस्य स्वसा', 'सा' 'भगस्य ईष्टे' सौभाग्यस्य स्वामिनी भवति। 'ईश ऐश्वर्ये'—इति धातुः (धा.पा.अ.आ. १०)। भगस्येति 'गर्थदयेशां कर्मणि'-(पा.सू. ४.३.५२) इति कर्मणि षष्ठी। 'तस्मात्' अम्बिकासहितस्य रुद्रस्य सम्बन्धिनि कर्मणि भगप्राप्तिकामाः कुमार्योऽपि परीयुरित्यर्थः॥१३॥

कुमारीणां परिगमनेऽन्योऽपि मन्त्रो विद्यत इत्याह—**तासामिति**। 'आसां' पूर्वोक्तानाम् 'तासां' कुमारीणामपि परिगमनेऽन्यो 'मन्त्रः' विद्यते। कः पुनरसाविति, तं पठति—**त्र्यम्बकमिति**। पतिर्विद्यते लभ्यते अनेन इति

---

यजमान के घर की कुंवारी कन्यायें भी अग्नि की पूर्वोक्त विधि से उल्टी परिक्रमा करें; इस कामना से कि उन्हें सौभाग्य की प्राप्ति हो। रुद्र की बहिन अम्बिका सौभाग्य की अधिष्ठात्री है। इसलिये कुमारियों को भी परिक्रमा देनी चाहिये, इस कामना से कि उनको सौभाग्य (=पति) प्राप्ति हो॥१३॥

कुमारियों की परिक्रमा हेतु यह मन्त्र है—'त्र्यम्बकं यजामहे सुगन्धि पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः' (यजु. ३.६०)। (मन्त्रार्थ—) 'हम सुयोग्य पति-प्राप्ति कराने वाले, दिव्यगन्ध से युक्त रुद्र देवता का अर्चन करती हैं। रुद्रदेव हमें पितृगृह से उसी प्रकार पृथक् कर पतिगृह में स्थापित करें जिस प्रकार पका हुआ कर्कटी फल अपने वृन्त से पृथक् होता है। रुद्र की कृपा से हम पतिगृह

---

१. कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा (का.श्रौ.सू. ५.२७१)।

यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति॥१४॥

(त्य) अथ पुनः प्रसलवि त्रिः परियन्ति। दक्षिणानूरूनुपाघ्नाना ऽएतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसन्तिष्ठाता ऽइति तस्मात्पुनः प्रसलवि त्रिः परियन्ति॥१५॥

---

**यदित इत्याह–ज्ञातिभ्यस्तदाह। मामुत इति–पतिभ्यस्तदाह। पतयो ह्येव स्त्रियै प्रतिष्ठा। तस्मादाह माऽमुत इति॥१४॥**

**अथ पुनः प्रसलवि त्रिः परियन्ति दक्षिणानूरूनुपाघ्नानाः–एतेनैव मन्त्रेण। तद् यत् पुनः प्रसलवि त्रिः परियन्ति। 'प्रसलवि न इदं कर्मानुसन्तिष्ठातै' इति। तस्मात् पुनः प्रसलवि त्रिः परियन्ति॥१५॥**

---

पतिवेदनो रुद्रः। अन्यदुक्तार्थम्। चतुर्थपादस्य तात्पर्यमाह—**सा यदित इति।** 'इदं' शब्देन पितृकुलं परामृश्यते। 'इतः' अस्मात् पितृकुलात् 'ज्ञातिभ्यः' सकाशादहं 'मुक्षीय' मुक्ता भूयासम्; 'अमुतः' अमुष्मात् कुलात् पतिसकाशात् 'मा मुक्षीय' विप्रयुक्ता न भवेयम् इति तात्पर्यार्थः। **पतयो ह्येवेति।** अग्निहोत्रादिधर्मेषु पत्या सहैव स्त्रिया अधिकारः नतु स्वातन्त्र्येण 'हि' यतः, अतः स्त्रीणां 'पतय एव' 'प्रतिष्ठा' आश्रयभूता इत्यर्थः॥१४॥

तेनैव मन्त्रेण पुनः प्रदक्षिणं त्रिः परिगमनं विधत्ते-**अथ पुनरिति।** 'प्रसलवि' प्रदक्षिणम्। **एतेनैवेति।** त्र्यम्बकमिति प्रागुक्तेनोभयविधेन मन्त्रेणेत्यर्थः। **तद्यत्पुनरित्यादिवाक्यशेषः** पितृयज्ञवद् व्याख्येयः॥१५॥

---

से कभी वियोजित न हों' (यजु. ३.६०)। मन्त्र में 'इस (स्थान) से' का तात्पर्य है 'अपने माता-पिता आदि से'। 'वहाँ से नहीं' (= मामुतः) का तात्पर्य है, 'पतिगृह से नहीं। (अर्थात्) कन्यायें अपने पितृगृह को छोड़कर सुयोग्य पति के घर में अवियुक्त रहने की मन्त्र में प्रार्थना करती हैं। पति ही स्त्री की प्रतिष्ठा है। अतएव प्रार्थना की जाती है कि—वहाँ से अर्थात् पति से हमारा विछोह न हो॥१४॥

तत्पश्चात् अब प्रदक्षिण-क्रम से अग्नि की परिक्रमा करते हैं, दाहिनी जाङ्घों को थपथपाते हुये और 'त्र्यम्बकम्' यह मन्त्र ही जपते हुये। यह जो पुनः सीधी (प्रदक्षिण-क्रम से) परिक्रमा तीन बार की जाती हैं वह इसलिये कि हमारा यह त्र्यम्बकेष्टि-कर्म दैवी पद्धति से संसिद्ध हो जाय। अतएव ऋत्विग्यजमानादि तीन बार प्रदक्षिण-क्रम से परिक्रमा देते हैं॥१५॥

(न्त्य) अथैतान्यजमानोऽञ्जलौ समोप्य। (प्यो) ऊर्ध्वानुदस्यति यथा गौर्नोदाप्नुयात्तदात्मभ्य एवैतच्छल्यान्निर्मिमते तान्विलिप्सन्त ऽउपस्पृशन्ति भेषजमेवैतत्कुर्व्वते तस्माद्विलिप्सन्त ऽउपस्पृशन्ति॥ १६॥

तान्द्वयोर्मूतकयोरुपनह्य। व्वेणुयष्ट्यां वा कुपे वोभयत

---

अथैतान्यजमानोऽञ्जलौ समोप्य, ऊर्ध्वानुदस्यति। यथा गौर्नोदाप्नुयात्। तदात्मभ्य एवैतच्छल्यान्निर्मिमते। तान्विलिप्सन्त उपस्पृशन्ति। भेषजमेवैतत् कुर्वते। तस्माद्विलिप्सन्त उपस्पृशन्ति॥ १६॥

तान् द्वयोर्मूतकयोरुपनह्य, वेणुयष्ट्यां वा, कुपे वा उभयत आबध्य,

---

हुतशिष्टानां पुरोडाशानां प्रतिपत्तिं विधत्ते—**अथैतानित्यादि।** 'एतान्' पुरोडाशान् यजमानस्याञ्जलावध्वर्युः संवपेत्। यजमानश्च तान् 'ऊर्ध्वान् उदस्यति' उत्क्षिपति। 'यथा गौः' पृथिवीनामैतत्, पृथिवी तान् पुरोडाशान् 'नोदाप्नुयात्' उत्क्षिप्ताः पुरोडाशाः यथा भूमौ न पतन्ति तथाऽन्तरिक्षे, पुनरञ्जलिना धारयेत्। तदुक्तं कात्यायनेन—'रौद्रान् यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम्, 'प्रतिगृह्णात्येनान्' (का.श्रौ.सू. ५.२७२.२७३) इति। **आत्मभ्य एवैतदिति।** 'एतत्' एतेनोदसनेन 'आत्मभ्यः' ऋत्विग्यजमानाः 'स्व-स्व शरीरेभ्यः' 'एव' 'शल्यान्' निर्मिमते। निर्हरन्ति तेषां पुनर्ग्रहणाशक्तौ स्पर्शनं विधत्ते—**तान् विलिप्सन्त इति।** लब्धुमिच्छन्तो लिप्सन्तस्तद्विपरीतो 'विलिप्सन्तः' लब्धुमशक्ताः सन्तः, भूमौ पतितान् 'तान्' पुरोडाशान् पश्चादुपस्पृशन्ति। उक्तं हि कात्यायनेन–'पततः प्रतिगृह्णात्येनानशक्यऽउपस्पर्शनम्'–(का.श्रौ.सू. ५.२७३) इति। **भेषजमेवैतदिति।** एतेन स्पर्शनेन निर्हृते शल्ये स्वशरीरदेशस्य पुनर्भेषजमेव कृतवन्तो भवन्ति॥ १६॥

**तान् द्वयोरित्यादि।** 'द्वयोर्मूतकयोः'। यत्र तृणमये आवपने धान्यं बध्यते

---

अब यजमान इन बचे हुये (=हुतशिष्ट) पुरोडाशों को अपनी अंजलि में लेकर ऊपर को इस प्रकार उछालता या फेंकता है कि वे पुरोडाश यथाशक्ति वापस भूमि पर न गिरें अपितु उन्हें बीच में ही हाथ से लोक लेता है। जो पकड़ में नहीं आते और गिर पड़ते हैं उनको केवल छू लेता है। इस प्रकार वह उनको औषध के समान बना लेता है। अतः यदि उन्हें लोक (Catch) नहीं सके तो छू लेता है॥ १६॥

तत्पश्चात् इनको दो टोकरियों (=मूतकों) में रखकर अथवा बाँस के दो सिरों

**आबध्योदङ्परेत्य यदि व्वृक्षं वा स्थाणुं वा व्वेणुं व्वा व्वल्मीकं वा व्विन्देत्तस्मिन्नासजत्येतत्ते रुद्रावसं तेन परो मूजवतोऽतीहीत्यवसेन वा ऽअध्वानं यन्ति तदेनꣳसावसमेवान्ववार्जति यत्र यत्रास्य चरणं तदन्वत्र ह वाऽअस्य परो मूजवद्भ्यश्चरणं**

**उदङ् परेत्य, यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्–तस्मिन्नासजति। 'एतत्ते रुद्रावसम्, तेन परो मूजवतोऽतीहि'–इति (वा.सं. ३.६१) अवसेन वा अध्वानं यन्ति। तदेनं सावसमेवान्ववार्जति यत्र-यत्रास्यचरणं तदनु। अत्र ह वा अस्य परो मूजवद्भ्यश्चरणम्। तस्मादाह–**

तन्मूतम्, मूतमेव मूतकम्। स्वार्थे क-प्रत्ययः। 'तान्' रौद्रान् पुरोडाशान् 'द्वयोर्मूतकयोः' 'उपनह्य' वेणुयष्ट्यां वेणुमय्यां यष्ट्याम् 'उभयतः आबध्य'; यद्वा 'कुपे' वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्यायः कुपः तस्मिन्; 'उभयतः' उभयपार्श्वयोः वैणवभाजनयोः 'तान्' रौद्रान् 'आबध्य' तेन सार्द्धम् 'उदङ् परेत्य' उदङ्मुखोऽदूरं गत्वा, वृक्षस्थाण्वादीनामन्यतमस्मिन्नुपलब्धे, वीवधम् 'आसजति' आलगयति। तस्मिन्नासजने मन्त्रमाह—**एतत्त इति**। तस्यायमर्थः। हे 'रुद्र!' 'ते' तव 'एतत्' तृप्तिकरम् 'अवसम्' पाथेयमन्नम्; तत् स्वीकृत्य 'तेन' साधनेन 'मूजवतः परः' मूजवान्नामोदीच्यः पर्वतः, तस्य 'परः' परस्ताद्भागम् 'अतीहि' अतिक्रम्य गच्छ; माऽस्मानधितिष्ठ इति भावः।

मन्त्रगतमवसशब्दं प्रशंसति—**अवसेन वा इति**। लोके 'अवसेन' अन्नेन पाथेयेन हि जनाः दूरम् 'अध्वानं' 'यन्ति', 'तत्' तथा सति 'एनं' रुद्रं 'सावसम्' अवससहितम् 'एव' अस्मात् स्थानात् 'अन्ववार्जति' अनुगमयति। अस्य रुद्रस्य गन्तव्यप्रदेशमाह—**यत्र-यत्रेति**। यस्मिन् यस्मिन् स्थाने 'अस्य' देवस्य 'चरणं' वर्त्तनं भवति, 'तत्' स्थानम् 'अनु' लक्ष्येत्यर्थः। 'परो मूजवतः'–इति मन्त्रभागस्याभिप्रायमाह—**अत्र ह वा इति**। 'अस्य' रुद्रस्य 'अत्र' अस्मिन्

से लटका कर या तराजू जैसे डंडी के दो सिरों पर बाँस की डलिया लटकाकर उसमें रखकर (उसे कन्धे पर लेकर) उत्तर की ओर चलता है। रास्ते में जहाँ उपयुक्त कोई वृक्ष, ठूँठ, बाँस या चिटोहर (वल्मीक) मिल जाय तो इस मन्त्र से उस पर रख या बाँध देता है—'एतत् ते रुद्रावसं तेन परो मूजवतोऽतीहि' (यजु. ३.६१)। (मन्त्रार्थ—) 'हे रुद्र, यह आपका पाथेय अन्न है। इसे ग्रहणकर आप उत्तर दिशा में स्थित मूजवान् पर्वत के उस पार जाइये'। तोशा (पाथेय अन्न) लेकर ही लोग

१. मूतयोः कृत्वा व्वेणुयष्ट्यां कुपे वाऽऽसज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपण-वदासजत्येतत् इति (का.श्रौ.सू. ५.२७४) कुपे यज्ञियवृक्षजे तुलादण्डे इति पद्धतिः।

**तुस्मादाह तेन परो मूजवतोऽतीहीत्युवततधन्वा पिनाकावस इत्युहिंꣳसन्नः शिवोऽतीहीत्येवैतुदाह कृत्तिवासा इति निष्वापयत्येवैनमेतत्स्वपन्नु हि न कंचन हिनुस्ति तुस्मादाह कृत्तिवासाऽइति॥१७॥**

**परो मूजवतोऽतीहीति। 'अवततधन्वा पिनाकावसः'–इति। 'अहिंसन् नः शिवोऽतीहि'–इत्येवैतदाह। 'कृत्तिवासाः'–इति। निष्वापयत्येवैनमेतत्। स्वपन्नु हि न कंचन हिनस्ति। तस्मादाह–कृत्तिवासा इति॥१७॥**

मूजवत्पर्वतसम्बन्धिनि 'परः' परस्ताद् भागे 'चरणं' वर्त्तनं भवति, 'तस्मात्' तेन 'परो मूजवतः'—इति मन्त्रभागस्य पठनं युक्तमित्यर्थः। द्वितीयभागमनूद्य व्याचष्टे—**अवततधन्वेति**। अवततमवरोपितज्यं धनुर्यस्य स तथोक्तः—**पिनाकावस** इति। पिनाक इति तस्यैव रुद्रधनुषो नामधेयम्। तस्य अवसः व्यापारो परमो यस्य स तथा। एतेन विशेषणद्वयेन फलितमर्थमाह—अहिंसन्निति। हे 'रुद्र!' 'नः' अस्माकं हिंसामकुर्वन् 'शिवः' सुखकरः सन् 'अतीहि' इति 'एतत्', अयं मन्त्रभागः प्रतिपादयतीत्यर्थः। अन्तिमं भागम् अनूद्य तात्पर्यमाह—**कृत्तीति**। कृत्तिः त्वग्वास आच्छादनं यस्य स तथोक्तः। अनेन च विशेषणेन 'एनं' नितरां स्वापयेत्। कृत्तेर्मृदुतरत्वेन सुखकरत्वात् रुद्रस्वापो भवत्येवेत्यनेनाभिप्रायेण विशेष्यते। स्वापोऽपि किमर्थ इत्यत आह—**स्वपन् न्विति**। 'नु' अत्र खलु लोके 'स्वपन्' निद्रालुः पुरुषः 'कञ्चन' कमपि 'न हिनस्ति' न पीडयति। अतो रुद्रकृतबाधविरहाय तस्य स्वापः प्रार्थ्यत इत्यर्थः॥१७॥

यात्रा को चलते है; इसलिये इस रुद्र देवता को भी पाथेय अन्न देकर गन्तव्य स्थान को विदा करते हैं। जहाँ-जहाँ इसका विचरण स्थान है वहाँ के लिये विदा करते हैं। रुद्र का विचरण स्थान यतः मूजवान् पर्वत के परली तरफ है अतः मन्त्र में कहा गया है कि—मूजवान् पर्वत के उधर (अपने प्रिय स्थान) जाइये। अब कहता है—'अवततधन्वा पिनाकावसः' (यजु. ३.६१)। (मन्त्रार्थ—) 'बिना खिचे हुये धनुष और वस्त्राच्छादित पिनाक-अस्त्र से युक्त'। इससे तात्पर्य है—'हमारे प्रति हिंसा न रखते हुये, तथा कल्याण करते हुये जाओ'। अब कहता है—'कृत्तिवासा' (यजु. ३.६१)। (अर्थ—) 'चर्माम्बर धारण किये हुये'। अत्यन्त मुलायम चर्मवस्त्र की याद दिलाकर उसे शयन हेतु प्रेरित कर देता है। सोता हुआ व्यक्ति जिसप्रकार किसी को हानि नहीं पहुँचा सकता तद्वत् आप हो जाँय; इसलिये कहा 'मृदु चर्माम्बर धारण किये हुये॥१७॥

१. कृत्तिवासा इति च (का.श्रौ.सू. ५.२७५)।

(त्यु) अथ दक्षिणान्बाहूनन्वावर्तन्ते। तेऽ प्रतीक्षं पुनरायन्ति पुनरेत्याप ऽउपस्पृशन्ति रुद्रियेणेव वाऽएतदचारिषुः शान्तिराप- स्तदद्भिः शान्त्या शमयन्ते॥१८॥

(न्तेऽ) अथ केशश्मश्रूप्त्वा। समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं

---

अथ दक्षिणान् बाहूनन्वावर्तन्ते। तेऽप्रतीक्षं पुनरायन्ति। पुनरेत्याप उपस्पृशन्ति। रुद्रियेणेव वा एतदचारिषुः। शान्तिरापः। तदद्भिः शान्त्या शमयन्ते॥१८॥

अथ केशश्मश्रूप्त्वा, समारोह्य, अग्नी उदवसायेव ह्येतेन यजते। न हि तदवकल्पते–यदुत्तरवेदावग्निहोत्रं जुहुयात्। तस्मादुदवस्यति। गृहानित्वा,

---

तेषां पुनरागमनं विधत्ते—**अथ दक्षिणानिति**। रौद्रपुरोडाशानां वृक्षादावासञ्जनानन्तर्य्यमथशब्दार्थः। रौद्रैर्हविर्भिः ये अचारिषु;, 'ते' सर्वे स्वं स्वं दक्षिणं बाहुम् 'अनु' लक्ष्य प्रादक्षिण्येनावर्त्तेरन्; आवृत्य च 'अप्रतीक्षं' रौद्रहविः प्रचरणस्थानमनवलोकयन्तः 'पुनः वेदिसमीपमागच्छेयुः; आगत्य च रुद्र- देवताकहविः—प्रचरणकृतौष्ण्यनिवारणाय 'अपः' उपस्पृशेयुः। **तदद्भिः शान्त्येति**। उष्णशमनहेतुभिः 'अद्भिः' तत् रौद्रहविःप्रचरणजनितं स्व-स्वात्मगत- मौष्ण्यं 'शमयन्ते' निवर्त्तयन्तीत्यर्थः॥१८॥

वरुणप्रघासान्त इव केशश्मश्रुवपनादिकं साकमेधान्तेऽपि कर्त्तव्य- मित्यनुक्रामति—**अथ केशश्मश्रूप्त्वेति**। केशश्मश्रूणि वापयित्वा 'अग्नी' गार्हपत्याहवनीयौ 'समारोह्य' समारोप्य, दक्षिणाग्नेरप्युपलक्षणम्। यदि सर्वे धार्या

---

एतदनन्तर त्र्यम्बकेष्टियाग में सम्मिलित सभी लोग दांयी ओर मुड़कर बिना पीछे देखते हुये लौटकर वेदी के समीप आते हैं, जल का स्पर्श करते हैं। अब तक रुद्र-यज्ञरूपी उग्र कर्म कर रहे थे। (यतः) जल शान्ति-प्रद है इसलिये शान्ति- प्रद जल द्वारा अपने को शान्त-पवित्र करते हैं॥१८॥

अब केश और दाढ़ी मुँड़वाता है, और (उत्तर वेदी की) गार्हपत्य-आहवनीय अग्नियों का अरणि में समारोप कर लेता है। स्नान के अनन्तर 'साकमेध'-याग की शेष विधि का अनुष्ठान करता है। किन्तु ध्यातव्य है कि—स्थान बदल कर

---

१. अप्रतीक्षमेत्योपस्पृशंत्यपः (का० श्रौ० सू० ५.१०.१९)

जुहुयात्तुस्मादुदुवस्यति गृहानित्वा निर्मुथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञऽइव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तुस्मादुदुवस्यति॥१९॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम्॥५॥३॥

इति षष्ठाध्याये द्वितीयं ब्राह्मणम्॥६॥२॥

---

निर्मथ्याग्नी, पौर्णमासेन यजते। उत्सन्नयज्ञ इव वा एषः-यच्चातुर्मास्यानि। अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम्। तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति। तस्मादुदवस्यति॥१९॥

।।इति साकमेधपर्वणि त्र्यम्बकयागः। इति साकमेधयागश्चातुर्मास्ये तृतीयं पर्व।।

---

भवेयुः। समारोपणेन गृहं गच्छतीति शेषः।

उदवसायेत्यादिना साकमेधस्यान्तकर्त्तव्यता अत्रापि प्रतिपाद्यते—**उदवसायेति**। स्नानानन्तरं खलु 'एतेन' साकमेधान्तेन 'यजते' तदङ्गत्वेन योत्तरवेदिर्निर्मिता, तस्यामग्निहोत्रहोमो न युक्त इति पुनः स्वस्थानगमनं कर्त्तव्यमित्यादि शेषं पूर्ववद् (श.प. २.५.३.४८)। (तै.सं. ९.८.६ तै.ब्रा. १.६.१०) व्याख्येयम्॥१९॥

।।इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य द्वितीयं ब्राह्मणम्।।(२।।६।।२।।

---

ही वह (पौर्णमास) यज्ञ करे। यह उचित नहीं होगा कि उत्तर वेदी पर अग्निहोत्र करे। इसलिये वह स्थान बदल लेता है। घर जाकर अरणि-मन्थन द्वारा अग्नि प्रकट करके वह पौर्णमास याग करता है। चातुर्मास्य यज्ञ अलग प्रकृति का नैमित्तिक याग है; परन्तु पौर्णमास याग नियत और प्रतिष्ठित याग है। इसीलिये वह उस नियत याग को करके अपने को प्रतिष्ठित करता है। अतएव स्थान-परिवर्तन करता है।।१९।।

※

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनो भवति। संव्वत्सरꣳ हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा व्विभज्य यजति त्रेधा व्विभज्य प्रजयति सर्व्वं वै संव्वत्सरः सर्व्वे वा

---

### अथ शुनासीरीयपर्व

**अक्षय्यं ह वै सुकृतं चातुर्मास्ययाजिनो भवति। संवत्सरं हि जयति। तेनास्याक्षय्यं भवति। तं वै त्रेधा विभज्य यजति। त्रेधा विभज्य प्रजयति।**

---

अथ[1] शुनासीरीयं विधित्सुस्तस्य शुनासीर्यस्य चतुर्थपर्वणः संवत्सरसल्लक्षणफलसाधनत्वं प्रतिपादयिष्यंस्तावदुपोद्घातत्वेन चातुर्मास्यानामक्षय्यफलसाधनत्वमाह—**अक्षय्यं ह वा इति।** चतुर्षु चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि प्रागुक्तानि वैश्वदेवादीनि, तैरिष्टवांश्चातुर्मास्ययाजी। 'करणे यजः'—(पा.सू. ३.२.८५) इति भूतकाले यजतेर्णिनिः। तस्य 'चातुर्मास्ययाजिनः' 'सुकृतं' यागजनितफलसाधनधर्मापरपर्यायमपूर्वम् 'अक्षय्यम्' क्षेतुमशक्यम्, न कदाचिदपि भोगेन क्षपयितुं शक्यते। 'क्षय्यजय्यौ शक्यार्थे'—(पा.सू. ६.१.८१) इति। 'क्षि क्षये'–(धा.पा.अ.प. २३६) इति अस्मान्निपातितः। अक्षय्यत्वमुपपादयति—**संवत्सरं हीति।** 'हि' यस्मादुदीरितैस्त्रिभिर्वैश्वदेवादिभिः पर्वभिः संवत्सरपरिमितकालं 'जयति' 'तेन' संवत्सरजयेन तदतिरिक्तस्य कालस्याभावात् 'अस्य' सार्वकालिकस्य चातुर्मास्ययाजिनः सुकृतमक्षय्यं भवतीत्यर्थः। 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति (आप.श्रौ.सू. ८.१.१)।

संवत्सरं कथमेतेन जयत इति तदाह—**तं वा इति।** 'तं' संवत्सरं त्रिधा 'विभज्य' चतुर्षु-चतुर्षु मासेषु वैश्वदेवादिभिः 'यजते', अतस्तं संवत्सरं त्रेधा

---

### ॥ शुनासीरीय पर्व ॥

जो चातुर्मास्य याग करता है उसका पुण्य कभी नष्ट नहीं होता। वह संवत्सर को जीत लेता है इसलिये उसका पुण्य अक्षय्य होता है। वह इसके तीन भाग करके यज्ञ करता है। (फलतः) वह इसको तीन भाग में जीतता है। 'संवत्सर' का अर्थ है 'सम्पूर्ण'। 'सम्पूर्ण' का नाश नहीं होता। इसलिये यजमान का सुकृत्

---



१. शुनासीरीयमतः (का.श्रौ.सू. ५.२७७, यदच्छेत्, का.श्रौ.सू. ५.२७८)।

ऽअक्षय्य्मेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यृतुरु हैवैतद्भूत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवास्याक्षय्यꣳ सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते॥१॥

(तेऽथ) अथ यस्माच्छुनासीर्येण यजेत। या वै देवानाꣳ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः

---

सर्वे वै सम्वत्सरः। सर्वं वा अक्षय्यम्। एतेनो हास्याक्षय्यं सुकृतं भवति। ऋतुरु हैवैतद् भूत्वा देवानप्येति। अक्षय्यमु वै देवानाम्। एतेनो हैवास्याक्षय्यं सुकृतं भवति। एतन्नु तद्-यस्माच्चातुर्मास्यैर्यजते॥१॥

अथ यस्माच्छुनासीर्येण यजेत। या वै देवानां श्रीरासीत्-साकमेधैरीजानानां विजिग्यानानाम्-तच्छुनम्। अथ यः संवत्सरस्य प्रजितस्य

---

'विभज्य' एव 'प्रजयति' प्रकर्षेण लभते। अस्तु संवत्सरस्य जयः, एतावता कथं फलस्याक्षय्यत्वसिद्धिरिति, तदाह—**सर्वं वा इति**। भूतवर्त्तमानभविष्यत्काल-त्रयावच्छिन्नं सर्वं वस्तु संवत्सरमध्य एवान्तर्भूतम्, संवत्सरस्तु कृत्स्नव्यापितया अनादिरनन्त इति तज्जय्यं फलमपि अक्षय्यं भवतीत्यर्थः। प्रकारान्तरेणाप्यक्षय्यत्वं प्रतिपादयति—**ऋतुरु हैवैतदिति**। 'एतत्' एतेन चातुर्मास्ययजनेन वसन्ताद्यृत्वात्मक एव 'भूत्वा' 'देवानप्येति' चातुर्मास्ययाजी अपि गच्छति, देवानाञ्च सुकृतमक्षय्यमेव भवति। अतः 'एतेन' देवत्वप्रापणेन 'अस्य' यजमानस्य 'सुकृतम्' अपि 'अक्षय्यम्' एव 'भवति'॥१॥

इत्थं वैश्वदेवादीनां त्रयाणां फलमुपपाद्य शुनासीर्य्ययागस्य श्र्यादिकं फलं दर्शयति—**अथ यस्मादिति**। 'यस्मात्' फलात् हेतोः यजमानः 'शुनासीर्येण' पर्वणा 'यजते', तस्मात् तत्फलमुच्यत इत्यर्थः। **या वै देवानामित्यादि**।

---

भी अक्षय रहता है। वह ऋतु रूप हो जाता है तथा देवों को प्राप्त होता है। देवों में तो 'क्षय' है ही नहीं अर्थात् उनका पुण्य अक्षय्य है। इसलिये देवत्व प्रापक चातुर्मास्ययाग द्वारा यजमान को अक्षय्य सुकृत प्राप्त होता है। यही प्रयोजन है कि वह चातुर्मास्ययाग करे॥१॥

अब शुनासीरीय यज्ञ क्यों करना चाहिये? (समाधान-) साकमेध अनुष्ठान करने वाले और (वृत्र पर) विजय पाने वाले देवों की जो 'श्री' थी वह है 'शुनम्'। तथा वैश्वदेवादि यागों द्वारा प्रजित 'संवत्सर' का जो सुखसारभूत रस था वह है—

संव्वत्सरस्य प्रजितस्य रस आसीत्तत्सीरᳪ सा या चैव देवानाᳪ श्रीरासीत्साकमेधैरीजानानां व्विजिग्यानानां य उ च संव्वत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माच्छुनासीर्येण यजते॥२॥

तस्यावृत्। (न्नो) नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न

---

रस आसीत्–तत्सीरम्। सा या चैव देवानां श्रीरासीत्–साकमेधैरीजानानां विजिग्यानानाम्, य उ च संवत्सरस्य प्रजितस्य रस आसीत्–तमेवैतदुभयं परिगृह्यात्मन् कुरुते। तस्माच्छुनासीर्येण यजते॥२॥

तस्यावृत्। नोपकिरन्त्युत्तरवेदिम्। न गृह्णन्ति पृषदाज्यम्। न

---

'साकमेधैः' प्रागुक्तैर्यागैः 'ईजानानाम्' इष्टवतां 'विजिग्यानानां' वृत्रासुरं जितवतां देवानां 'या' 'श्रीः' सम्पत् 'आसीत्', 'तत्' 'शुनम्' सुखनामैतत् (निघ. ३.६.११) सुखहेतुत्वात् शुनमित्युच्यत इत्यर्थः। 'अथ' वैश्वदेवादिभिस्त्रिभिस्त्रिभिश्चातुर्मास्यैः 'प्रजितस्य' संवत्सरस्य' 'यो रस आसीत्' सुखहेतुः सारभूतोंऽशोंऽभवत्, तत् 'सीरम्' इत्युच्यते। **या चैव देवानामित्यादिः**, उक्तार्थानुवादः। **तमेवैतदुभयमिति**। यदेतत्, शुनं सीरं चोक्तम्, 'एतदुभयम्' एतेन शुनासीर्य्ययागेन 'परिगृह्य' यजमानः 'आत्मन्' स्वात्मनि 'कुरुते' धारयति। इत्थं प्रवृत्तिहेतुफलमुपपाद्य तत्साधनभूतं यागं विधत्ते—**तस्मादिति**। उक्तलक्षणौ शुनासीरौ अधिदैववाय्वादिरूपेणावस्थितौ। साऽस्य देवतेत्यर्थे शुनासीरशब्दाद् यत्। तद्धवियोंगाद् वक्ष्यमाणं हविस्समुदायसाध्यं कृत्स्नं कर्मानेन व्यपदिश्यते। यस्मादुक्तफलसाधनत्वम्, तस्माच्छुनासीरीयाख्येनानेन चतुर्थेन पर्वणा यजेतेत्यर्थः॥२॥

प्रयोगक्रमं वक्तुं प्रतिजानीते—**तस्यावृदिति**। 'तस्य' शुनासीर्यस्य 'आवृत्'

---

'सीर'। साकमेध अनुष्ठान कर (वृत्र पर) विजय पाने वाले देवों की 'श्री' को और वैश्वदेवादि याग द्वारा प्रजित संवत्सर का जो सुख हेतुभूत 'रस' है इन दोनों को ग्रहण करके यजमान अपनी शक्तिमत्ता बना लेता है, इसलिये 'शुनासीरीय याग' करता है॥२॥

शुनासीरीय याग की विधि यह है—(यहाँ) उत्तर-वेदि नहीं बनाते। दधिमिश्रित

मन्थन्त्यग्निं पुञ्च प्रयाजा भुवन्ति त्रयोऽनुयाजाऽएकꣳ समिष्टयजुः॥३॥

(र्) अथैतान्येव पुञ्च हवीꣳषि भवन्ति। (न्त्ये) एतैर्व्वै हविर्भिः प्रजापतिः प्रजा ऽअसृजतैतैरुभयतो व्वरुणपाशात्प्रजाः प्रामुञ्चदेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैर्व्वेव व्यजयन्त येयमेषां व्विजितिस्तां तथो ऽएवैषऽएतैर्या चैव देवानाꣳ श्रीरासीत्सा-

---

मन्थन्त्यग्निम्। पञ्च प्रयाजा भवन्ति। त्रयोऽनुयाजाः। एकं समिष्टयजुः॥३॥

अथैतान्येव पञ्च हवींषि भवन्ति। एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजत। एतैरुभयतो वरुणपाशात् प्रजाः प्रामुञ्चत्। एतैर्वै देवा वृत्रमघ्नन्। एतैर्वेव व्यजयन्त-येयमेषां विजितिः-ताम्। तथो एवैष एतैः-या चैव देवानां

---

क्रिया उच्यत इति शेषः। पूर्वेषु पर्वस्विव प्रसक्तमुत्तरवेदिनिर्वपणादिकं निषेधति— **नोपकिरन्तीत्यादिना**। प्रयाजानुयाजादयोऽपि प्रकृतिवदेवेत्याह—**पञ्चेति**॥३॥

पञ्च हवींषि विधत्ते—**अथैतान्येवेति**। वैश्वदेवादिषु पर्वस्वनुष्ठितानि 'एतानि' आग्नेयादीनि पञ्च हवींष्यत्रापि कर्त्तव्यानि भवन्तीत्यर्थः। क्लृप्तफलत्वेनैतानि प्रशंसति—**एतैर्वा इति**। वैश्वदेवेष्वनुष्ठितैः 'एतैर्हविर्भिः खलु पुरा 'प्रजापतिः' 'प्रजाः' सृष्टवान्। वरुणप्रघासेष्वनुष्ठितैरेव ताः 'प्रजाः' 'उभयतो वरुणपाशात्' ऊर्ध्वाधःकायस्थितात् 'प्रामुञ्चत्' प्रमुक्तवान्। तथा साकमेधेष्वनुष्ठितैरेव पञ्चभिर्हविर्भिः 'देवाः' 'वृत्रम्' असुरम् 'अघ्नन्', हत्वा च 'एतैः' एव व्यजयन्त' विजयं प्राप्तवन्तः। यथैवैतानि कृत्स्नाभिलषितफलसाधनानि, 'तथो' तथैव खलु

---

आज्य (घृत) भी नहीं लेते। अरणि-मन्थन द्वारा अग्नि उत्पन्न नहीं करते। शुनासीरीययाग में पाँच प्रयाज होते हैं, तीन अनुयाज और एक समिष्टयजु॥३॥

इस याग में वैश्वदेव याग की पहली पाँच हवियाँ अनुष्ठित होती हैं। इन्हीं हवियों से प्रजापति ने प्रजायें उत्पन्न की थीं। इन्हीं के द्वारा (प्रजापति ने) वरुण के दोनों ओर के पाश से प्रजाओं को मुक्ति दिलायी थी। इन्हीं हवियों के सामर्थ्य से देवों ने वृत्र को मारा था। इन्हीं हवियों से देवों को वह विजय मिली जो उनको प्राप्त है; और इन्हीं हवियों के प्रभाव द्वारा 'साकमेध' याग करने वाले और (वृत्र

---

१. पौर्णमासधर्म्मा बर्हिर्वर्जम् (का.श्रौ.सू. ५.२७९)।

कमेधैरीजानानां व्विजिग्यानानां य उ च संव्वत्सरस्य प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माद्वा ऽएतानि पञ्च हवीꣳषि भवन्ति॥४॥

(न्त्यु) अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति। स बन्धुः शुनासीर्यस्य यं पूर्व्वमवोचाम॥५॥

---

श्रीरासीत्–साकमेधैरीजानानां विजिग्यानानाम्, य उ च संवत्सरस्य प्रजितस्य रस आसीत्–तमेवैतदुभयं परिगृह्यात्मन् कुरुते। तस्माद् वा एतानि पञ्च हवींषि भवन्ति॥४॥

अथ शुनासीर्यो द्वादशकपालः पुरोडाशो (१) भवति। स बन्धुः शुनासीर्यस्य यं पूर्वमवोचाम॥५॥

---

'एषः' यजमानः 'एतैः' शुनासीर्याख्ये चतुर्थे पर्वणि अनुष्ठीयमानैः, आग्नेयादिभिः पञ्चभिर्हविर्भिः शुनासीरीयं यदेतदनुक्रान्तम्, 'तदुभयं' फलम् 'आत्मन्' आत्मनि 'परिगृह्य' स्वाधीनं कुरुते'। तस्मादिति प्रतिपादितार्थ-निगमनम्॥४॥

षष्ठं हविर्विधत्ते—अथ शुनासीर्य इति। शुनासीरौ वाय्वादित्यौ देवते अस्य स शुनासीर्यः। 'शुनो वायुः' 'सीर आदित्यः'–इति हि—यास्कः। द्विवचनेन कात्यायनोऽपीममर्थमसूचयत्—'शुनासीराभ्यां द्वादशकपालः'[२] इति। उक्तं वाक्यशेषमत्राप्यतिदिशति—स बन्धुरिति। कृत्स्नस्य पर्वणः फलप्रतिपादनसमये "यं पूर्वं"..वाक्यशेषं 'या वै देवानाम्'—इत्यादिकम् 'अवोचाम' उक्तवन्तः, 'स एव अस्यापि 'शुनाशीर्यस्य' हविषः स्तावकः, उक्तविधयोरेव वाय्वादित्यरूपेणाव-स्थितत्वादिति भावः॥५॥

---

को) जीतने वाले देवों की जो श्री थी और जो प्राप्त हुये संवत्सर का सुख रूप रस था, उन दोनों को ग्रहण करके यजमान अपना बना लेता है। इसीलिये शुनासारीय-याग में प्रथमतः इन पाँच हवियों से यजन करता है॥४॥

तदनन्तर शुनासीरीय (शुनः = वायु + सीरः = आदित्यः) देव के लिये द्वादश कपाल संस्कृत पुरोडाश होता है। शुनासीर्य यज्ञगत हवियों की फल-प्रशंसा के विषय में पूर्व में कह ही दिया गया है॥५॥

---

१. 'शुनासीरौ-शुनो वायुः 'शु' इत्यन्तरिक्षे; सीर आदित्यः, सरणात्'–इति (निरु. ९.४.६)।
२. 'चिरेण्यापिके शुनासीराभ्यां द्वादशकपालः, (का.श्रौ.सू. ५.२८०)।

(मा) अथ व्वायव्व्यं पयो भवति पयो ह वै प्रजा जाता अभिसञ्ज्ञानते व्विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाभिसञ्ज्ञानन्ता ऽइति तस्मात्पयो भवति॥६॥

तद्यद्वायव्व्यं भवति। (त्य) अयं वै व्वायुर्योऽयं पवत ऽएष वा ऽइदꣳ सर्व्वं प्रप्यायति यदिदं किञ्च व्वर्षति व्वृष्टादोषधयो

---

अथ वायव्यं पयो (२) भवति। पयो ह वै प्रजा जाता अभिसञ्ज्ञानते। 'विजिग्यानं मा प्रजाःश्रियै' 'यशसे, अन्नाद्याय, अभिसञ्ज्ञानान्तै'–इति। तस्मात् पयो भवति॥६॥

तद् यद्वायव्यं भवति। अयं वै वायुः–योऽयं पवते। एष वा इदं सर्वं प्रप्यायति–यदिदं किञ्च वर्षति। वृष्टादोषधयो जायन्ते। ओषधीर्जग्ध्वाऽपः

---

सप्तमं हविर्विधत्ते—**अथ वायव्यमिति**। वायुर्देवता अस्य तद् 'वायव्यम्'। 'वाय्वृतुपित्रुषसो यत्'–(पा.सू. ४.२.३१) इति यत्। पयसस्तावदत्रानुकूल्यं दर्शयति—**पयो ह वा इति**। 'जाताः' सर्वाः 'प्रजाः' 'पयः' खलु 'अभि' लक्ष्य 'सञ्ज्ञानते' सञ्ज्ञानाना भवन्ति। अतः पयसः सम्पत्तिहेतुत्वाद् 'विजिग्यानं' साकमेधैर्विजितवन्तम् 'एनं' यजमानं 'श्रियै' सम्पदे, 'यशसे' कीर्त्यै 'अन्नाद्याय' अन्नादनसामर्थ्याय च सर्वाः 'प्रजाः' 'अभिसञ्ज्ञानान्तै' अभिसञ्ज्ञानीरन्, अनुमन्यन्तामिति; अनेनाभिप्रायेण पयसः करणमित्यर्थः॥६॥

तस्य वायुदेवत्यत्वमनूद्य स्तौति—**तद्यदिति। एष वा इत्यादि**। 'यदिदं किञ्च' भूम्यां स्थितं स्थावरादिकं 'वर्षति' पर्जन्यवृष्ट्या सिञ्चति, इदं सर्वम् 'एषः' खलु पवमानः 'प्रप्यायति' प्रवर्द्धयति रसभरितं करोति 'ओप्यायी वृद्धौ'—(धा.पा.भ्वा.आ. ४७९) इति धातुः। तस्माद् वृष्टात् पवमानेन प्रप्यायितात्

---

सप्तम हवि के रूप में वायु देवता के लिये दूध की आहुति होती है। प्रजायें उत्पन्न होते ही दूध पीती हैं। अतः साकमेध यागानुष्ठान से लब्ध विजयश्री यजमान को प्रजा प्राप्त हो, श्री, यश, अन्न, एवं भोज्य सुख प्राप्त हो—इस कामना से दूध की आहुति होती है॥६॥

वायु के लिये क्यों आहुति होती है? (इसलिये कि–) यह जो अहर्निश बहता है वह वायु ही तो है। यह वायु ही वर्षा का जनक है तथा वृष्टि द्वारा यह समस्त स्थावर (वृक्ष-लता-गुल्मादि) को न केवल सिञ्चित करता अपितु रसभरित कर

---

१. व्वायव्व्यं पय;। लौकिकं। प्रतिधुक्श्रुतेः। नाविरोधात्। प्रकृतिदर्शनाच्च। यवागूर्व्वा, (का.श्रौ.सू. ५.२८३-२८६)।

जायन्त ऽओषधीर्जुग्ध्वाऽपुः पीत्वा तुत एतुदद्भ्योऽधि पुयः सुम्भवत्येष हि वुा ऽएतुज्जनुयति तुस्माद्वायुव्यं भवति॥७॥

(त्यु) अुथ सौर्य एुककपालः पुरोडुाशो भवति। (त्ये) एष वै सूुर्यो यु एष तुपत्येष वुा ऽइदुँ सुर्व्वमभिुगोपायति साधुुना

---

पीत्वा तत एतदद्भ्योऽधि पयः सम्भवति। एष हि वा एतज्जनयति। तस्माद् वायव्यं भवति॥७॥

अथ सौर्य एककपालः पुरोडाशो (३) भवति। एष वै सूर्यो-य एष तपति। एष वा इदं सर्वमभिगोपायति-साधुना त्वत्, असाधुना त्वत्। एष

---

'ओषधयो जायन्ते', ताश्च 'ओषधीः' 'जग्ध्वा' भक्षयित्वा 'अदो जग्धिर्ल्यप्ति किति'—(पा.सू. २.४.३६) इत्यदेर्जग्ध्यादेशः। ओषधिभक्षणानन्तरम् 'अपः पीत्वा' पशवः पयो दुहन्ति। 'एतदद्भ्यः' सकाशात् 'पयः' 'सम्भवति' उत्पद्यते तस्मात् परम्परया 'एष हि' पवमानः 'एतत्' पयो 'जनयति' उत्पादयति। तस्मादस्य वायुर्देवतेत्येतद्युक्तमित्यर्थः॥७॥

अष्टमं हविर्विधत्ते—**अथ सौर्य इति**। अस्य हविषः सूर्योऽभिगोप्तेत्याह—**एष वै सूर्य इत्यादिना। साधुना त्वदित्यादि**। 'साधुना' शोभनेन कर्मणा 'त्वत्' एकं पुण्यकृतं जनम् 'एषः' सूर्यः 'अभिगोपायति' अभिरक्षति। तथा 'असाधुना' अशोभनेन कर्मणा 'त्वत्' एकं पापिजनम् 'अभिगोपायति'। न केवलं रक्षणमात्रं शोभनात्मकम्। 'इदं सर्वं' जगत्, एष एव सूर्यो 'विदधाति' करोति, विदधानः सः 'त्वत्' एकं 'साधौ' पुण्ये कर्मणि स्थापयति, 'त्वत्' एकम् अन्यत् 'असाधौ' पापकर्मणि स्थापयति। एषः खलु हिरण्यगर्भरूपः स परमात्मा। अस्य हि साध्वसाधुकर्मणः कारयितृत्वमन्यत्र चाम्नायते—'एष ह्येव साधुकर्म कारयति,

---

बढ़ाता है। वर्षा से ही औषधियाँ उत्पन्न होती हैं। इन औषधियों को खाकर और जल पीकर ही पशुगण दूध देते हैं; (फलतः) दुग्धोत्पत्ति में जल मूलकारणभूत होता है। निष्कर्षतः (मूलकारणभूत वायु से) ही दूध होता है, इसलिये वायु देवता के लिये पय-आहुति देता है॥७॥

तत्पश्चात् अष्टम हवि रूप में सूर्य देवता के लिये एक कपाल संस्कृत पुरोडाश होता है। यह सूर्य ही तो है जो तपता है। यही तो सबकी रक्षा करता है; पुण्यकर्मी जनों को उत्तम कार्यों में प्रेरित कर तथा पापीजनों को अशोभन कर्म से विरत

---

३. 'सौर्य एककपाल' (का.श्रौ.सू. ५.२.८७)।

त्वदसाधुना त्वदेष इदꣳ सर्व्वं व्विदधाति साधौ त्वदसाधौ त्वदेष मा व्विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य एककपालः पुरोडाशो भवति॥८॥

तस्याश्वः श्वेतो दक्षिणा। तदेतस्य रूपं क्रियते य एष तपति

---

इदं सर्वं विदधाति—साधौ त्वद् असाधौ त्वत्। एष मा विजिग्यानं प्रीतः—साधुना त्वदभिगोपायत्, साधौ त्वद्विदधद्—इति। तस्मात्सौर्य एककपालः पुरोडाशो भवति॥८॥

तस्याश्वः श्वेतो दक्षिणा। तदेतस्य रूपं क्रियते—य एष तपति। यद्यश्वं

---

तेषामेभ्यो लोकेभ्य उर्ध्वं निनीषते; एष ह्यसाधु कर्म कारयति, तेषामेभ्यो लोकेभ्योऽधोनिनीषते'—इति (कौ.ब्रा.उ. ३.९)।

**एष मेत्यादि।** योऽयमुक्तविधः सूर्यः 'एषः' अनेन हविषा 'प्रीतः' सन् 'विजिग्यानं' साकमेधैः विजितवन्तं 'मा' मां 'साधुना' कर्मणा 'अभिगोपायत्' अभिरक्षतु, तथा तस्मिन् 'साधौ' शोभने कर्मणि मां 'विदधात्' विदधातु, प्रेरयतु 'इति' अनेनाभिप्रायेण यजमानः सौर्य हविः कुर्यात्। 'त्वम्'—इति, एतदत्र क्रियाविशेषणत्वेन योज्यम्॥८॥

तस्यैककपालस्य दक्षिणां विधत्ते—**तस्याश्वः श्वेत इति।** 'तस्य' सौर्यस्य हविषः श्वेतोऽश्वविशेषो 'दक्षिणा' शुनासीर्यस्य तु षड्भिरनडुद्भिर्युक्तं सीरं दक्षिणा। तदुक्तं सूत्रकारेण—सीरं षड्योगं दक्षिणा ओष्टारौवा (का.श्रौ.सू. ५.२८८.२८९)

---

कर रक्षा करता है। यही सबको धारण करता है; साधु-पुरुषों को पुण्य-कर्म में स्थापित करता है तथा असाधु पुरुषों को पाप-कर्म में। यजन करनेवाला यह कामना करता है कि मुझ विजयी पर सूर्य देव प्रसन्न होकर 'साधु' (पुण्यकर्मों) द्वारा मेरी रक्षा करे तथा मुझे साधु (पुण्यपथ) पर स्थापित करे। इसलिये सूर्य देवता के निमित्त एक कपाल का पुरोडाश होता है॥८॥

सौर्य पुरोडाशयाग की दक्षिणा है—श्वेत अश्व। यतः सूर्य भास्वर तेजोमय है अतः सूर्य के रूप के अनुरूप श्वेतवर्ण अश्व की दक्षिणा होती है। यदि सफेद

---

१. 'श्वेतोऽश्वः सौर्यस्य। अभावे गौः' (का.श्रौ.सू. ५.२९०-२९१)।

यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति॥९॥

स यत्रैव साकमेधैर्यजते। तच्छुनासीर्येण यजेत यद्वै त्रिः संव्वत्सरस्य यजते तेनैव संव्वत्सरमाप्नोति तस्माद्यदेव कदा चैतेन यजेत॥१०॥

---

**श्वेतं न विन्देद् अपि गौरेव श्वेतः स्यात्। तदेतस्य रूपं क्रियते य एष तपति॥९॥**

**स यत्रैव साकमेधैर्यजते–तत् शुनासीर्येण यजेत। यद्वै त्रिः संवत्सरस्य यजते–तेनैव संवत्सरमाप्नोति। तस्माद्यदेव कदाचैतेन यजेत॥१०॥**

---

इति। **तदेतस्येत्यादि**। 'एतस्य' सूर्यस्य सितभास्वररूपत्वात् श्वेताश्वदान मेतदीयमुपकरणमित्यर्थः। तादृशाश्वालाभे तादृशो गौर्देय इत्याह—**यद्यश्वमित्यादि**॥९॥

अथ शुनासीर्ययागस्य कालं विधत्ते—**स यत्रैवेत्यादिना**। 'यत्र' यस्मिन् 'एव' काले 'साकमेधैर्यजते' 'तत्' तदानीम्, तदनन्तरकाले एव स यजमानः शुनासीर्येण 'यजेत'। न तु शुनासीर्यस्यापि चातुर्मस्यत्वान्मासचतुष्टयस्य व्यवधानमपेक्षितमित्यत आह—**यद्वा इति**। चतुर्षु चतुर्षु मासेषु संवत्सरस्य मध्ये वैश्वदेव—वरुणप्रघाससाकमेधभेदेन 'त्रिः' त्रिवारं 'यजते' इति यत्, 'तेनैव' संवत्सरमाप्नोति। वैश्वदेवादय प्रत्येकं चातुर्मास्ययुक्ता इति तदनुष्ठानेनैव तेषां द्वादशानामवाप्तत्वात् तत्समुदायरूपः संवत्सरोऽपि यजमानस्य स्वायत्तो जात इत्यर्थः। उक्तमर्थं निगमयति—**तस्मादिति**। यस्मात् चतुर्थपर्वणः शुनासीर्य्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति तस्माद् यदा कदाचिदेव साकमेधानन्तरं यजेतेत्यर्थः। एतदेवानन्तर्य्यं सूत्रकृताप्युक्तम्—'शुनासीर्यमतः'–(का.श्रौ.सू. ५.२७७)–इति॥१०॥

---

अश्व न मिले तो श्वेत गाय ही दक्षिणा में देवे। इस प्रकार वह तपने वाले सूर्य के रूपानुकूल दक्षिणा होती है॥९॥

चातुर्मास्ययाजी यजमान जब साकमेधयाग करे तदनन्तर शुनासीर याग भी अवश्य करे। यद्यपि चार-चार मास के अन्तराल पर 'वैश्वदेव' 'वरुणप्रघास' एवं 'साकमेध' यागानुष्ठान वर्ष में क्रमशः तीन बार हो जाने से संवत्सर की सम्पूर्णता मिल जाती है। चतुर्थ—'शुनासीरीय' पर्व-याग संवत्सरातिरिक्त होने से नियतकालिक नहीं है अतः साकमेधयाग के अनन्तर जब कभी इसका अनुष्ठान कर ले॥१०॥

**तद्धैके। रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यददः पुरस्तात्फाल्गुन्यै पौर्णमास्या ऽउद्दृष्टं तच्छुनासीर्येण यजेत॥११॥**

**(ता) अथ दीक्षेत। तं नानीजानं पुनः फाल्गुनी**

---

**तद्धैके रात्रीरापिपयिषन्ति। स यदि रात्रीरापिपयिषेद्-यददः पुरस्तात् फाल्गुन्यै पौर्णमास्या उद्दृष्टं-तच्छुनासीर्येण यजेत॥११॥**

**अथ दीक्षेत। तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्। पुनः**

---

सोमेन यक्ष्यमाणस्य पक्षान्तरमाह—**तद्धैक इति**। 'तत्' तत्र खलु शुनासीर्यानुष्ठाने 'एके शाखिनः' रात्रीः आपिपयिषन्ति अनेन च यागेन कतिचिद् रात्रीः आप्तुमिच्छन्ति। अत एवोक्तमापस्तम्बेन—'ततो द्व्यहे त्र्यहे चतुरहे ऽर्द्धमासे मासे चतुर्षु वा मासेषु शुनासीरीयेण यजते'-(आ.श्रौ.सू. ८.२.१) इति। तेषां मते सोमेन यक्ष्यमाणस्य शुनासीर्यकाल उच्यत इत्यर्थः। यदि हि 'रात्रीः' 'आपिपयिषेत्' आप्तुमिच्छेत्, तदा आगामिनीभ्यां फल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी; षष्ठ्यर्थे चतुर्थी; 'फाल्गुन्यै' फाल्गुन्याः पौर्णमास्याः 'पुरस्तात्' यत् 'अदः' विप्रकृष्टे, 'उत्' ऊर्ध्वं चन्द्रमाः अस्मिन् दृश्यते इति उद्दृष्टं शुक्लपक्षः, 'तत्' तत्र प्रतिपदाद्यन्यतमस्यां तिथौ शुनासीर्येण यजेत॥११॥

**अथ दीक्षेतेति**। 'अथ' अनन्तरमेव सोमयागार्थं 'दीक्षेत' कालविलम्बो न कार्य इत्यर्थः। दैवान्मानुषाद्वा विघ्नाद् विलम्बेऽपि तस्यावधिमाह—**तं नानीजानमिति**। इमामेव श्रुतिमभिप्रेत्यापस्तम्बोऽप्याह—'चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते, फाल्गुन्या उद्दृष्टे सोमाय दीक्षते, तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात्' (आप.श्रौ.सू. ८.२१.२.४) इति। तदत्यये दोषमाह—

---

कुछ शाखाध्येता लोग सोमयागाभिलषुक के लिये 'शुनासीर-याग' अनुष्ठान में कतिपय रात्रियों का अन्तराल रखना चाहते हैं। यदि वह कतिपय रात्रियों का अन्तराल लेना चाहे तो जब आगामी फाल्गुनी पूर्णमासी का चन्द्रमा आकाश में दिखाई पड़े उस समय शुक्लपक्ष की किसी तिथि में शुनासीर याग को अनुष्ठित करे॥११॥

(शुनासीरीय यागानुष्ठान के तत्काल बाद कालक्षेप न करते हुए) उसे सोमयाग

---

१. संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत पौर्णमास्याम्। (का.श्रौ.सू. ५.२९३)।

पौर्णमास्यभिपर्येयात्पुनःप्रयोगरूप इव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयादिति नूत्सृजमानस्य॥१२॥

(स्या) अथ पुनः प्रयुञ्जानस्य। पूर्व्वेद्युः फाल्गुन्यै

---

प्रयोगरूप इव ह सः—यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्। तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्। इति नूत्सृजमानस्य॥१२॥

अथ पुनः प्रयुञ्जानस्य। पूर्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्येण

---

**पुनरिति**। 'अनीजानम्' 'एनम्' यजमानम् 'पुनः' फाल्गुनी पौर्णमासी न अतिक्रामेद् इति यत्, स 'पुनः प्रयोगरूप इव ह' भवति चातुर्मास्यानां पुनः प्रयोगस्य एतस्मिन् काले कर्त्तव्यत्वात्, तस्य चानाचरितत्वात्, पुनः प्रयोगाङ्गभूतोऽयं कालो भवेदित्यर्थः। प्रतिपादितं प्रतिषेधं निगमयति—**तस्मादिति**। अयञ्च पक्षोऽधिकारिविशेषस्यैवेति निगमयति—**इति न्विति**। द्विविधौ हि चातुर्मास्ययाजिनौ सकृदनुष्ठायोत्सृजमानः पुनः प्रयुञ्जानश्च। तत्र 'उत्सृजमानस्य' खलु अयमुक्तः पक्ष इत्यर्थः॥१२॥

कस्तर्हि तानि पुनः प्रयुञ्जानस्य[१] पक्ष इति दर्शयति—**अथ पुनरिति** (आप.श्रौ.सू. ८.२१.६)। चातुर्मास्यानि सकृत् संयुज्य अनन्तरमेव यस्तानि पुनरारभते तस्य पुनरारभमाणस्य 'फाल्गुन्यै पौर्णमास्यै' षष्ठ्यर्थे चतुर्थी, तस्याः 'पूर्वेद्युः' पूर्वदिवसे चतुर्दश्यां शुनासीर्येण यजेत, 'अथ' अनन्तरमेव 'प्रातः' काले पौर्णमास्यां वैश्वदेवेन 'यजेत' तदनन्तरम् नित्येन पौर्णमासयागेनेत्ययं प्रयोगक्रमः।

---

की दीक्षा लेनी चाहिये, ताकि कहीं अग्रिम फाल्गुनी पूर्णमासी बिना यज्ञ के न व्यतीत हो जाय। क्योंकि यदि फाल्गुनी पूर्णमासी सोमयाग किये बिना गुजर जाएगी तो उसको फिर (चातुर्मास्य याग) प्रयोग करना पड़ेगा। इसलिये फाल्गुनी पूर्णमासी बिना सोमयाग के नहीं गुजरनी चाहिये। यह पक्ष उसके लिये है जो (चातुर्मास्य याग एकबार कर) छोड़ देता है॥१२॥

[विशेष—दो प्रकार के चातुर्मास्ययागयाजी होते हैं। एक बार अनुष्ठान करके छोड़ देने वाले (सकृदनुष्ठाय उत्सृजमानः) एक प्रकार के तथा पुनः अनुष्ठान करने वाले दूसरे प्रकार के।]

---

१. आप्रयुञ्जानस्य (का.श्रौ.सू. ५.२१.१)।

**पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्व्वैश्वदेवेनाथ पौर्णमासेनैतदु पुनः प्रयुञ्जानस्य॥१३॥**

**(स्या) अथातः। परिवर्तनस्यैव सर्व्वतोमुखो वाऽसावादित्य एष वा ऽइदꣳ सर्व्वं निर्द्धयति यदिदं किञ्च शुष्यति तेनैष सर्व्वतोमुखस्तेनान्नादः॥१४॥**

---

**यजेत–अथ प्रातर्वैश्वदेवेन–अथ पौर्णमासेन एतदु। पुनः प्रयुञ्जानस्य॥१३॥**

**अथातः परिवर्तनस्यैव। सर्वतोमुखो वा असावादित्यः। एष वा इदं सर्वं निर्द्धयति यदिदं किञ्च शुष्यति। तेनैष सर्वतोमुखः। तेनान्नादः॥१४॥**

---

तदुक्तं कात्यायनेन 'फाल्गुन्युपवसथे शुनासीरीयम्, प्रातर्वैश्वदेवम्'–(का.श्रौ.सू. ५.२९४)। **एतदु पुनरिति**। प्रतिज्ञातार्थनिगमनम्॥१३॥

चातुर्मास्याङ्गभूतं वपनं मीमांस्यते—**अथात इत्यादिना**। अत इति वक्ष्यमाणार्थपरामर्शः। 'अतः' अस्माद्वक्ष्यमाणाद्धेतोः परिवर्त्तनस्य परितः केशश्मश्र्वादीनां वर्त्तनस्य वपनस्य विचारोऽधिक्रियत इत्यर्थः। एतत् परिवर्तनं विधातुमन्नादत्वेनादित्यमग्निं च स्तौति—**सर्वतोमुखो वा असावादित्य इत्यादिना**। सर्वतः सर्वासु दिक्षु मुखं रसादानसामर्थ्यं यस्य स तथोक्तः। सर्वतोमुखत्वमुपपादयति—**एष वा इति**। 'निर्द्धयति' रसं निष्कृष्य पिबति। अत एतत् सर्वं घर्मकाले 'शुष्यति' शोषणं प्राप्नोति, सर्वं जगद्व्याप्य स्थितस्य सूर्यस्य स्वकिरणेनेत्यर्थः॥१४॥

---

जो (चातुर्मास्य याग) पुनः करना चाहता है, उसे फाल्गुनी पूर्णमासी के पहले दिन (अर्थात् चतुर्दशी को) शुनासीर-याग करना चाहिये। दूसरे दिन (पूर्णिमा को) वैश्वदेव पर्व याग, तदनन्तर नियत पौर्णमास याग। यह पक्ष उसके लिये है जो चातुर्मास्याग को पुनः शुरु करना चाहता है॥१३॥

(चातुर्मास्य यागाङ्गभूत वपन (क्षौरकर्म) के विषय में अब विचार प्रस्तुत किया जाता है–) यह दृश्यमान सूर्य सर्वतोमुख है (अपनी किरणों द्वारा चारों ओर से रसादान सामर्थ्य के कारण)। यह जो कुछ सूखता है उसे सूर्य ही तो पीता है। इसलिये यह सूर्य सर्वतोमुख एवं अन्नाद कहलाता है। (यह यजमान भी वपन कराने से) सर्वतोमुख और अन्नाद (अन्न पचाने वाला) हो जाता है॥१४॥

---

१. हृदयशूलांते व्यपनम्, (का.श्रौ.सू. ५.३०२)। हृदयशूलान्ते–हृदयशूलसमिदाधानान्ते इति याज्ञिकदेवः।

सर्व्वतो मुखोऽयमग्निः। (र्यः) यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्व्वतोमुखस्तेनान्नादः॥१५॥

(दोऽथा) अथायमन्यतोमुखः पुरुषः। स एतत्सर्व्वतोमुखो भवति यत्परिवर्तयते स एवमेवान्नादो भवति यथैतावेतद्य एवं विद्वान्परिवर्त्तयते तस्माद्वै परिवर्तयेत॥१६॥

---

सर्वतोमुखोऽयमग्निः यतो ह्येव कुतश्चाग्नावभ्यादधति–तत एव प्रदहति। तेनैष सर्वातोमुखः। तेनान्नादः॥१५॥

अथायमन्यतोमुखः पुरुषः। स एतत् सर्वतोमुखो भवति यत् परिवर्तयते। स एवमेवान्नादो भवति–यथैतावेतद्–य एवं विद्वान् परिवर्तयते। तस्माद्वै परिवर्तयेत॥१६॥

---

**सर्वतोमुखोऽयमग्निरिति**। अत्रापि तथैव योजना। **यतो ह्येवेति**। यतः कुतश्चिदपि दिग्भागादित्यग्नौ 'अभ्यादधति' अभिप्रक्षिपति। **तत एवेति**। तस्मिन्नपि दिग्भागे इत्यर्थः॥१५॥

एवमग्न्यादित्ययोः सर्वतोमुखत्वेन अन्नादत्वं प्रतिपाद्य पुरुषस्य स्वाभाविकं तद्वैपरीत्यमाह—**अथायमिति**। 'अथ'—शब्दस्त्वर्थे। 'अयं' तु 'पुरुषः' यजमानः 'अन्यतोमुखः'। अन्यशब्द एकशब्दपर्यायः। अन्यतः एकत्र स्थितमेव मुखं यस्य स तथोक्तः। तस्य सर्वतोमुखत्वसम्पत्तिमाह—**स एतदिति**। 'यद्' यस्मात् परितः शिरो वर्त्तयते, केशान् वापयति 'एतत्' एतेन अलोमकत्वसाम्यात् शिरसः प्रान्तदेशा अपि मुखमिव भवन्तीति स यजमानः सर्वतोमुखो भवति। इत्थं पुरुषस्य सर्वतोमुखत्वं प्रतिपाद्य प्रागुक्तं दृष्टान्तद्वयसिद्धमर्थं दार्ष्टान्तिके योजयति—**स एवमेवेति**। 'यथा' 'एतौ' आदित्योऽग्निश्च सर्वतोमुखत्वात् अन्नादौ 'एवमेव' यजमानोऽपि 'अन्नादः' सर्वतोदिक्तः समत्तुं समर्थो भवति। **तस्मादिति**, उपपादितस्य परिवर्त्तनस्य विधानम्॥१६॥

---

यह अग्नि भी सर्वतोमुख है; क्योंकि जो कुछ अग्नि में जिस किधर से भी डाला जाय, भस्म हो जाता है। इसलिये यह अग्नि सर्वतोमुख एवं अन्नाद कहा जाता है। (यह यजमान भी वपन कराने से) सर्वतोमुख और अन्न पचाने वाला हो जाता है॥१५॥

यह पुरुष (मानव) तो एक ही ओर मुख रखता है; परन्तु जो वपन कराता है वह सर्वतोमुख हो जाता है। जो इस रहस्य को समझकर वपन (क्षौरकर्म) कराता

तुदु होवाचासुरिः। किन्नु तुत्र मुखस्य यदुपि सुर्व्वाण्येव लोमानि व्वुपेत यद्वै त्रिः संव्वत्सरुस्य युजते तुनैव सर्व्वुतोमुखस्तुनान्नादस्तुस्मान्नाद्रियेत पुरिवर्तयितुमिुति॥१७॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम्॥५॥४॥

इति षष्ठाध्याये तृतीयं ब्राह्मणम्॥६॥३॥

---

तदु होवाचासुरिः। किन्नु तत्र मुखस्य। यदपि सर्वाण्येव लोमानि वपेत। यद्वै-त्रिः संवत्सरस्य यजते। तेनैव सर्वतोमुखः, तेनान्नादः। तस्मान्नाद्रियेत परिवर्तयितुमिति॥१७॥

।।इति शुनासीरीययागश्चातुर्मास्ये चतुर्थं पर्व।।

---

प्रकारान्तरेण सर्वतोमुखत्वं प्रतिपादयन् परिवर्त्तनं न कर्तव्यमिति पक्षान्तरमाह—**तदु होवाचेति**। 'तत्' तत्र, तस्मिन् परिवर्त्तनविषये' 'आसुरिः' नाम महर्षिः आह स्म। 'यदपि' यदि नाम 'सर्वाण्येव लोमानि' परितो 'वपेत्', तथापि तत्तन्मुण्डिते देशे 'मुखस्य' सम्बन्धि किं नामावयवजातं निष्पन्नं भवति? न ह्यलोमत्वमात्रेण मुखमिति व्यवहर्तुं शक्यते; किन्तु बहुश्रोत्राद्यवयवमत्तयैव; अतो नैतेन परिवर्त्तनेन सर्वतोमुखत्वं लभ्यत इत्यर्थः। कथं तर्हि सर्वतोमुखत्वं पुरुषस्य? तत्राह—**त्रिः संवत्सरस्येति**। 'संवत्सरस्य' मध्ये वैश्वदेवादिभेदेन 'त्रिः यजते', 'तेनैव' अयं यजमानः 'सर्वतोमुखः', कृत्स्नस्य संवत्सरस्य यागेन प्राप्तत्वात्। तेनैवेति। अन्नादहेतुभूतं प्रकारान्तरेणैव सिध्यति। **तस्मादिति**। 'तस्मात्' परिवर्त्तनं 'न आद्रियेत' इत्यासुरेर्मतस्य निगमनम्॥१७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य तृतीयं ब्राह्मणम्।।३।।

---

है वह दोनों (अग्नि और सूर्य) के समान अन्न पचाने वाला होता है। इसलिये यज्ञकर्ता को अवश्य वपन कराना चाहिये॥१६॥

इस विषय में आसुरि का मत है कि—चाहे सब लोम मुँड़ा लिये जाँय तो भी इससे और मुख से क्या सम्बन्ध? वर्ष में तीन बार याग (वैश्वदेव, वरुणप्रघास और साकमेध) करने से ही मनुष्य सर्वतोमुख और अन्नाद (अन्न पचाने वाला) होता है। इसलिये वपन (क्षौरकर्म) कराने की कोई आवश्यकता नहीं॥१७॥

तद्यदाहुः। साकमेधैर्व्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तामिति सर्व्वैर्हु त्वेव देवाश्चातुर्मास्यैर्व्वृत्र-मघ्नन्त्सर्व्वैर्वेव व्यजयन्त येयमेषां विजितिस्ताम्॥१॥

(न्ते) ते होचुः। केन राज्ञा केनानीकेन योत्स्याम इति स हाग्निरुवाच मया राज्ञा मयाऽनीकेनेति तेऽग्निना राज्ञाऽग्नि-

---

**अथ सर्वशेषः**

तद्यदाहुः। साकमेधैर्वै देवा वृत्रमघ्नन्, तैर्वेव व्यजयन्त येयमेषां विजितिः-ताम्-इति। सर्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्। सर्वैर्वेव व्यजयन्त-येयमेषां विजितिः-ताम्॥१॥

ते होचुः 'केन राज्ञा केनानीकेन योत्स्यामः' इति। स हाग्निरुवाच-मया राज्ञा, मयाऽनीकेन इति। तेऽग्निना राज्ञा, अग्निनाऽनीकेन चतुरो

---

वैश्वदेवादिषु सर्वेषु परिवर्त्तनं सेतिकर्त्तव्यताकं विधित्सुस्तेषां सर्वेषां वृत्रवधहेतुत्वं विजयहेतुत्वं च समानमिति प्रतिपादयति—**तद्यदाहुरिति**। 'तत्' तत्र उक्तविषये साकमेधानामेव वृत्रवधहेतुत्वं जयहेतुत्वञ्चेति 'यद्' 'आहुः' कथयन्ति, तत्र, तथा 'सर्वैरेव' हि 'चातुर्मास्यैः' चतुर्षु-चतुर्षु मासेषु प्रयुज्यमानैर्वैश्वदेवादिभिर्वृत्रहननं विजयञ्च प्राप्तवन्तो 'देवाः' इत्यर्थः॥१॥

तत्र वैश्वदेवेन जितमर्थमाख्यायिकया दर्शयति—**ते होचुरिति**। ते देवाः खलु प्रजापतिं पितरमभिलक्ष्य परस्परं वाचम् 'ऊचुः'। **केनानीकेनेति**। अनीकं

---

यह जो कहा गया है कि—देवों ने साकमेधयाग के द्वारा वृत्र को मारा और उस महान् विजय को पा लिया जो उनको प्राप्त है; यह चातुर्मास्य याग के चारों पर्वों के अनुष्ठान द्वारा ही सम्भव हुआ कि देवों ने वृत्र को मारा और सफलता प्राप्त की जो कि विजय के रूप में उनको प्राप्त है॥१॥

उन्होंने परस्पर विचार किया कि—'किस राजा के नेतृत्व और किस सैन्य प्रमुख की सहायता से हम युद्ध लड़ेंगे। तब अग्नि ने कहा था—'मुझ राजा और मुझ सेनानी की सहायता से'। तब अग्नि राजा की अगुवाई और अग्नि सेनानी की सहायता से उन्होंने चारों महीनों को जीता; तथा वह और तीन [illegible] के

नाऽनीकेन चतुरो मासः प्राजयँस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन्॥२॥

(ह्रंस्ते) ते होचुः। केनैव राज्ञा केनानीकेन योत्स्याम इति स ह वरुण उवाच मया राज्ञा मयाऽनीकेनेति ते वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन्॥३॥

---

मासः प्राजयन्। तान् ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन्॥२॥

ते होचुः–'केनैव राज्ञा केनानीकेन योत्स्यामः' इति। स ह वरुण उवाच–मया राज्ञा, मयाऽनीकेन' इति। वे वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयन्। तान् ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन्॥३॥

---

सेनामुखम्, अत्र सेनान्यां वर्तते। तेन सेनान्येत्यर्थः **चतुरो मास इति**। 'पद्दन्.' (पा.सू. ६.१.६३) इत्यादिना मासशब्दस्य मास्—इत्ययमादेशः। **तान् ब्रह्मणा चेति**। 'तान्' विजितान् मासान् 'ब्रह्मणा' 'अग्निर्हि ब्रह्म'—इत्यग्रे विवरिष्यते। अतो ब्रह्मणा अग्निना, 'त्रय्या' वेदत्रयरूपया 'विद्यया च' देवा 'पर्यगृह्णन्' परितोऽधारयन्॥२॥

एवं वैश्वदेवस्याग्निप्रमुखत्वमुक्त्वा वरुणप्रघासेषु वरुणस्य प्रामुख्यमेतैर्विजितत्वञ्चाह—**ते होचुरिति**। **अपरांश्चतुर इति**। आषाढादीनित्यर्थः। अन्यंत्

---

प्रभाव से संवस्तर के उन (महीनों) को घेरा। (इस प्रकार देवों ने अग्नि के नेतृत्व में संवत्सर के प्रथम चार मासों को 'वैश्वदेव-पर्व' यागानुष्ठान द्वारा जीता)॥२॥

तत्पश्चात् पुनः देवों ने विचार किया कि—'किस राजा के नेतृत्व और किस सेनानी की सहायता से हम लड़ेंगे। तब वरुण ने कहा—'मुझ राजा के नेतृत्व और मुझ सेनानी की सहायता से'। तब देवों ने वरुण राजा की अगुवाई और वरुण सेनानी की सहायता से संवत्सर के दूसरे चार महीनों को जीता; और उस कालावधि को ब्रह्म तथा तीन विद्याओं की सहायता से धारण किया। (इसप्रकार देवों ने संवत्सर के द्वितीय चार मासों को 'वरुणप्रघास' यागानुष्ठान द्वारा वरुण के नेतृत्व में जीता)॥३॥

---

१. 'सामान्यं पूर्वेण'–इ.पा.।

(ह्वंस्ते) ते होचुः। केनैव राज्ञा केनानीकेन योत्स्याम इति स हेन्द्र उवाच मया राज्ञा मयाऽनीकेनेति त ऽइन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन्॥४॥

(न्स) स यद्वैश्वदेवेन यजते। (तेऽग्नि) अग्निनैवै-तद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्रजयति तत्त्येनी शलली

---

ते होचुः—'केनैव राज्ञा केनानीकेन योत्स्याम' इति। स हेन्द्र उवाच—'मया राज्ञा मयाऽनीकेन' इति। त इन्द्रेणैव राज्ञा, इन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयन्। तान् ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन्॥४॥

स यद्वैश्वदेवेन यजते—अग्निनैवतद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः

---

पूर्ववत्। अथ साकमेधेष्विन्द्रस्य प्राधान्यं तैर्विजितत्वं चाह—**ते होचुरिति**। **अपरांश्चतुर इति**। 'अपरान्' कार्त्तिकादीनित्यर्थः। अन्यत्पूर्ववत्॥३॥४॥

इत्थं प्रतिकृत्युपन्यासेन वैश्वदेवादिषु त्रिषु पर्वसु प्रतिपादितमर्थं यजमानेऽपि क्रमेण योजयति—**स यद् वैश्वदेवेनेत्यादिना**। 'ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन्'—इति यदुक्तम्, तस्य प्रतिकृतिमाह—**त्र्येनीति**। त्रिषु स्थानेषु 'एतः' श्वेतवर्णो यस्याः सा त्र्येनी। 'वर्णादनुदात्तात्'—(पा.सू. ४.१.३९) इति एतशब्दात् ङीप्, तकारस्य नकारादेशश्च। श्वाविन्नामकस्य मृगस्य लोम 'शलली'। उक्तलक्षणा

---

पुनः उन्होंने विचार किया कि—'किस राजा के नेतृत्व और किस सेनानी की सहायता से हम लड़ेंगे। तब इन्द्र ने कहा—'मुझ राजा के नेतृत्व और मुझ सेनानी की सहायता से'। तदनन्तर इन्द्र राजा के नेतृत्व और इन्द्र सेनानी की सहायता से उन्होंने संवत्सर के शेष चार महीनों का जीता; और उस कालावधि को ब्रह्म तथा तीन विद्याओं की सहायता से धारण किया। (इसप्रकार देवों ने संवत्सर के शेष चार मासों को इन्द्र के नेतृत्व में 'साकमेध-पर्व' के यागानुष्ठान द्वारा जीता)॥४॥

जब वह (यजमान) वैश्वदेवयाग करता है तो इसी अग्नि राजा के नेतृत्व और अग्नि सेनानी की सहायता से संवत्सर के प्रथम चारों महीनों को जीतता है। (वपन (क्षौरकर्म) में प्रयुक्त उपकरणों के विषय में कथन है कि–) 'त्र्येनी शलली (साही

---

१. 'शल्य[illegible] सूत्र शलली' इति आप.श्रौ.सू. १८.५.१) [illegible]

भवति लोहुः क्षुरः सा युा त्र्येनी शलली सुा त्रय्यैु व्विद्यायै रूपं लोहुः क्षुरो ब्रुह्मणो रूपुमग्निर्हि ब्रुह्म लुोहित इवु ह्यग्निस्तुस्माल्लोहुः क्षुरुो भवति तुेन पुरिवर्तयते तद् ब्रह्मणा चुैवैनमेतुत्त्रय्युा च व्विद्युया पुरिगृह्णाति॥५॥

(त्युु) अथु युद्वरुणप्रघासैर्युजते। व्वुरुणेनुैवैतद्राज्ञा

---

प्रजयति। तत् त्र्येन शलली भवति। लोहः क्षुरः। सा या त्र्येनी शलली–सा त्रय्यै विद्यायै रूपम्। लोहः क्षुरो ब्रह्मणे रूपा अग्नि हिं ब्रह्म। लोहित इव ह्यग्निः। तस्माल्लोहः क्षुरो भवति। तेन परिवर्तयते। तद् ब्रह्मणा चैवेनमेतत् त्रय्या च विद्यया परिगृह्णाति॥५॥

अथ यद्वरुणप्रघवासैर्यजते। वरुणेनैवैतद्राज्ञा वरुणेनानीकेनापरांश्चतुरो

---

सा वक्ष्यमाणपरिवर्त्तनहेतुत्वेन स्वीकार्या। तत्र शलल्यास्त्रयीप्रतिरूपत्वमाह—**सा येति**। 'सा' पूर्वोक्ता 'या' 'त्र्येनी शलली', सा त्रित्वसङ्ख्याविशिष्टगुणोपेतत्वात् त्रय्या विद्यायाः स्वरूपम्। योऽयं 'लोहः' लोहितवर्णस्ताम्रमयः 'क्षुरः', स 'ब्रह्मणो रूपम्'। कथं ब्रह्मणो लोहितवर्णत्वमिति तदाह—**अग्निर्हीति**। स च ब्रह्मशब्दवाच्योऽग्निर्लोहितवर्णः 'इव' हि भवति, 'तस्मात्' लोहितवर्णः 'क्षुरः' ब्रह्मणः प्रतिरूपमित्यर्थः। **तेनेत्यादि**। 'तेन' क्षुरेण, तया शलल्या च 'परिवर्तयते' शलल्या केशान् विभज्य क्षुरेण परितो वापयेदित्यर्थः। **ब्रह्मणा चैवेति**। 'एनं' यजमानम् 'एतत्' एतेन शललीलोहक्षुरकृतेन परिवर्त्तनेन, अग्निरूपेण तेन 'ब्रह्मणा' क्षुरनिदानभूतेन, 'त्रय्या' वेदत्रयरूपया 'विद्यया' च सर्वतोमुखत्व-सम्पादनद्वारा अनया 'परिगृह्णाति' परितः सर्वासु दिक्षु धारयतीत्यर्थः॥५॥

वरुणप्रघासयागस्य वरुणप्रधानकत्वात्तेन जेतव्यं फलमनुक्रामति—**अथ यद्**

---

का काँटा जिसमें तीन श्वेत धब्बे हों) को ग्रहण किया जाता है; और लोहित वर्ण तांबे का 'क्षुरा' होता है। 'त्र्येनी शलली' त्रयी विद्या (ऋग्यजुःसाम) का रूप है और लोहितवर्ण ताम्र का 'क्षुरा' ब्रह्म का रूप है। 'अग्नि' ब्रह्म है, अग्नि लोहितवर्ण (लाल) है, इसीलिये ताँबे का क्षुरा प्रयुक्त होता है। उस छुरे से वपन करवाता है। इस प्रकार वह यजमान को ब्रह्म (=अग्नि)>लोहितवर्ण क्षुर) और त्रयी विद्या (=त्र्येनी शलली) से सर्वतोमुख बनाकर धारण कराता है॥५॥

जब वह 'वरुणप्रघास' याग करता है तो वरुण राजा के नेतृत्व और वरुण

व्वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च व्विद्यया परिगृह्णाति॥६॥

(त्यु) अथ यत्साकमेधैर्यजते। (तऽ) इन्द्रेणैवै-तद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति तत्त्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद् ब्रह्मणा चैवैनमेतत्त्रय्या च व्विद्यया परिगृह्णाति॥७॥

---

मासः प्रजयति। तत् त्र्येनी शलली भवति। लोहः क्षुरः। तेन परिवर्तयते। तद् ब्रह्मणा चैवेनमेतत् त्रय्या च विद्यया परिगृह्णाति॥६॥

अथ यत्साकमेधैर्यजते। इन्द्रेणैवैतद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति। तत् त्र्येनी शलली भवति। लोहः क्षुरः। तेन परिवर्तयते। तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति॥७॥

---

वरुणप्रघासैरिति। त्र्येनी शललीत्यादि उक्तार्थम्[१]॥६॥

साकमेधयागस्येन्द्रप्रधानकत्वात् तेन जेतव्यं फलमनुक्रामति—**अथ यत् साकमेधैरिति**[२]॥७॥

---

के सैनापत्य में अगले चार महीनों को जीतता है। इस याग में भी वपन (क्षौरकर्म) हेतु त्र्येनी शलली (साही का कांटा) और तांबे का क्षुरा प्रयोग में आता है। उसी से सिर मुड़ाता है। इस प्रकार ब्रह्म (= वरुण > लोहित क्षुर) एवं त्रयी विद्या (= त्र्येनी शलली) से सर्वतोमुख बनाकर उसको घेरता (सुरक्षित करता) है॥६॥

जब वह (यजमान) 'साकमेध याग' करता है तो इन्द्र राजा के नेतृत्व और इन्द्र के सैनापत्य में संवत्सर के शेष चार मासों को जीतता है। इस याग में भी वपन (क्षौरकर्म) हेतु त्र्येनी शलली और तांबे के क्षुरे से मुंडन होता है और ब्रह्म (= इन्द्र > लोहितक्षुर) तथा तीन विद्याओं (> त्र्येनी शलली) की सहायता से उसको घेरता (सुरक्षित करता) है॥७॥

---

१. 'द्वितीयस्य वरुणप्रघासपर्वणः फलम्, तै.ब्रा. १.४.१०.६.७ द्रष्टव्यम्। २. 'तृतीयस्य साकमेधपर्वणः फलम्, तै.ब्रा. १.४.१.४.१०.८ द्रष्टव्यम्।

स यद्वैश्वदेवेन यजते। (तेऽग्नि) अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यँ सलोकतां जयत्यथ यद्वरुणप्रघासैर्यजते व्वरुण एव तर्हि भवति व्वरुणस्यैव सायुज्यँ सलोकतां जयत्यथ यत्साकमेधैर्यजत ऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यँ सलोकतां जयति॥८॥

स यस्मिन्हर्तावमुं लोकमेति। स एनमृतुः परस्मा ऽऋतवे

---

स यद्वैश्वदेवेन यजते–अग्निरेव तर्हि भवति। अग्नेरेव सायुज्यं सलोकतां जयति। अथ यद् वरुणप्रघासैर्यजते–वरुण एव तर्हि भवति। वरुणस्यैव सायुज्यं सलोकतां जयति। अथ यत्साकमेधैर्यजते–इन्द्र एव तर्हि भवति। इन्द्रस्यैव सायुज्यं सलोकतां जयति॥८॥

स यस्मिन् ह ऋतावमुं लोकमेति। स एनमृतुः परस्मा ऋतवे

---

इत्थं वैश्वदेवादिभिस्त्रिभिः पर्वभिर्द्वादशमासात्मकसंवत्सरस्वरूपावाप्ति फलत्वेन प्रतिपाद्य, अग्न्यादिदेवतासायुज्यमपि तेषां फलत्वेन क्रमेणाचष्टे—**स यदिति। अग्निरेव तर्हीति।** 'तर्हि' तस्मिन् वैश्वदेवे यागेऽनुष्ठिते 'सः' यजमानः 'अग्निः' अग्न्यात्मक 'एव भवति'। 'अग्नेरेव सायुज्यम्'—इति, अस्यैव विवरणम्। प्रथममग्नेः सालोक्यं जयति, पश्चात् सायुज्यमिति योजनाक्रमः। 'वरुण एव तर्हि'—इत्यादावप्येवं योज्यम्॥८॥

अथ म्रियमाणस्य चातुर्मास्ययाजिनो मार्गं ब्रुवन् ब्रह्मलोकप्राप्तिपर्यन्तं फलमाह—**स यस्मिन्निति।** 'सः खलु चातुर्मास्ययाजी 'यस्मिन् ऋतौ' 'अमुं'

---

जब वह (यजमान) वैश्वदेवयाग करता है तो (एक प्रकार से) अग्नि (रूप) ही हो जाता है और अग्नि के सालोक्य और सायुज्य को प्राप्त कर लेता है। जब वह (यजमान) वरुणप्रघास याग करता है तो (एक प्रकार से) वरुण (रूप) हो जाता है और वरुण के सालोक्य और सायुज्य को प्राप्त करता है। जब वह साकमेधयाग करता है तो (एक प्रकार से) इन्द्र (रूप) हो जाता है और इन्द्र के ही सालोक्य और सायुज्य को प्राप्त करता है॥८॥

चातुर्मास्ययाजी यजमान जिस ऋतु में देहत्याग कर परलोक को जाता है वह

---

१. चतुर्थस्य शुनासीरीयपर्वणः फलमपि (तै.ब्रा. १.४.१०.३) अवलोकनीयम्।

प्रयच्छति पुर उ पुरस्मा ऽऋतुवे प्रयच्छति सु परममेव स्थानं परमां गुतिं गच्छति चातुर्मास्ययाजी तुदाहुर्नु चातुर्मास्ययाजिन-मनुविन्दन्ति परमुᳫं ह्येव खुलु स स्थानं परमां गुतिं गुच्छतीति॥९॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम्॥५॥४॥

इति षष्ठाऽध्याये चतुर्थं ब्राह्मणम्॥६॥४॥

कण्डिका॥१४०॥

---

प्रयच्छति। पर उ परस्मा ऋतवे प्रयच्छति। स परममेव स्थानं, परमां गतिं गच्छति–चातुर्मास्ययाजी। तदाहुः–न चातुर्मास्ययाजिनमनुविन्दन्ति–परमं ह्येव खलु स स्थानं परमां गतिं गच्छतीति॥९॥

।।इति चातुर्मास्ययागाधिकारः।।

---

विप्रकृष्टं परं 'लोकम्' 'एति' म्रियते, 'सः' ऋतुः 'एनं' यजमानं स्वस्मात् 'परस्मै ऋतवे' 'प्रयच्छति' इत्यनेन क्रमेण कृत्स्नं संवत्सरं तदात्मकस्य प्रजापतेः सम्बन्धि परममुत्कृष्टं स्थानमवाप्नोति। प्राप्य च परमामुत्कृष्टां पुनरावृत्तिरहितां गतिं गच्छति। उक्तेऽर्थे विद्वत्प्रसिद्धिं संवादयति—तदाहुरिति। यस्माच्चातुर्मास्ययाजी परमां गतिं प्राप्तवान् 'तत्' तस्मात् अभिज्ञाः 'आहुः' कथयन्ति। किमिति, तदुच्यते—'चातुर्मास्ययाजिनम्' चातुर्मास्येनेष्टवन्तं यजमानम् अन्विष्यन्तो जनाः ब्रह्मलोकादर्वाचीनेषु लोकेषु 'न विन्दन्ति' न लभन्ते। 'परमं ह्येव' इति, तत्र कारणाभिधानम्।।९।।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य चतुर्थं ब्राह्मणम्।।२।।६।।४।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः।।१।।

---

ऋतु उससे दूसरी ऋतु के समर्पित कर देती है; और वह अपने से आगे वाली ऋतु को समर्पित कर देती है। जो चातुर्मास्य याग करता है वह परम धाम और परम गति (जननमरण की पुनरावृत्ति रहित गति) को प्राप्त होता है, इसीलिये कहा

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च।।२।।

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः।।३।।

**इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायः समाप्तः।।२।।६।।**

**अत्रादितः पञ्चदशाध्यायसंमितः काण्डद्वयात्मको हविर्यज्ञ (ऐष्टिकप्रकरण) प्रतिपादकः शतपथब्राह्मणान्तर्गतः पंचदशपथसंज्ञको ब्राह्मणभागः समाप्तः।**

**इत्येकपादिकानाम द्वितीयं काण्डं समाप्तम्।।२।।**

---

है कि चातुर्मास्य याग करने वाले मनुष्य को कोई नहीं पाते क्योंकि वह परम धाम और परम गति को प्राप्त हो जाता है।।९।।

## परिशिष्टम्-१

# विशिष्ट-पद-कोषः

**अग्निष्वात्ताः पितरः**— आधानसंस्काराभावेन त्रेताग्न्यभावात् केवलमौपासनाग्निनैवास्वाद्यमानाः पितरोऽग्निष्वात्ताः।

**अस्तम्** — अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन्निति गृहम्।

**अवभृथः** — सोमलिप्तानि पात्राणि अवाचीनान्यस्मिन् ध्रियन्त इत्यवभृथः जलाशयः।

**अनूचीनाहम्** — अनूचीनं नैरन्तर्येण वर्तमानमहः अनूचीनाहम्।

**अनीकम्** — प्रमुखम्।

**अनिरशिता कुम्भी** — निःशेषेण अशिता निरशिता तद्विपरीता अनिरशिता कुम्भी (ओदनशेषसहिता इत्यर्थः)।

**अपसलवि** — अप्रदक्षिणम्।

**अवदानम्** — अवद्यत्यस्मादित्यवदानम्; अवत्तशिष्टं हविः।

**अभिमानुकः** — बाधने उद्यतः ('रुद्र' विशेषणमिदम्)।

**अवसानम्** — स्थानम्।

**अवसम्** — देशान्तरं गच्छतो मार्गमध्ये तटाकादिसमीपे भोक्तव्यमन्नविशेषः। पाथेयमन्नम्।

**अनुयाजाः** — प्रधानयागात् अनुपश्चादिज्यन्त इति अनुयाजाः।

**अन्ववार्जति** — अनुगमयति, एकस्मात् स्थानात् देशान्तरं प्रति प्रेषयति।

**असमदम्** — कलहराहित्यम्।

**अग्रपाकः** — अग्रपाकशब्देन शरद्वसन्तौ लक्ष्येते इति कर्कः।

**अवततधन्वा** — अवततमवरोपितज्यं धनुर्यस्य सः (रुद्रः)।

**अप्रतीक्षम्** — पृष्ठ-भागे अनवलोकयन्।

अर्जुनी — फाल्गुनीनक्षत्रम्।

अर्जुनः — इन्द्रः।

अन्वाहार्यः — ओदनः।

अवगधाः — अवन्ति मनुष्यादीन्रक्षन्ति तैर्गृध्यन्तेऽभिकांक्ष्यन्त इति व्रीहियवाद्या ओषधयोऽवगधाः।

अनश्नत् सांगमनः — सभ्याग्निः। अनशित्वेन प्रातः सभ्यैः संगमयत इति व्युत्पत्तिः।

असन्पांशवः — आवसथ्याग्निः।

— भस्मोद्वापः।

अद्धा — प्रत्यक्षम्।

अनद्धा — परोक्षम्।

अभ्याधानम् — स्विष्टकृद्भाजनम्।

अनूचानाः — अनुगतानुष्ठानपराः।

अनूचीनाहम् — अनूचीनं नैरन्तर्येण वर्तमानमहः।

अररुः — असुरविशेषः।

अर्वावसुः — देवानां होता।

अर्कम् — अर्चनीयम् (अग्निम्)।

अयनम् — अनुष्ठानस्य मार्गः।

आखुकरीषम् — आखुभिः (मूषकैः) खननेन बिलात् बहिर्नीता पांसव आखुकरीषम्।

आरोहणम् — आरुह्यतेऽनेनेत्यारोहणम् प्रवेशद्वारम्।

आवृत् — क्रिया-प्रयोगक्रमः।

आखूत्करः — उत्किरति पांशूनित्युत्करः। आखुभिः कृत उत्करः आखूत्करः।

| | | |
|---|---|---|
| **आवृत्** | — | क्रिया, विधिः, आवृत् शब्दः प्रकारवाची। |
| **आदित्यः** | — | इन्द्रः। |
| **आतमितोः** | — | निरुद्धश्वासगतेरात्मनो यावत् तमनं ग्लानिः भवति, तावद् आसीत इति। |
| **आजिम्** | — | आजि-धावनम्। आजिर्नाम गन्तव्यावधिभूतः पदार्थः। |
| **आकुलिः** | — | असुरपुरोहितः। |
| **इरपादाः** | — | इरपादा-उरः पादाः सर्पाः भूविलवासिनः। |
| **उल्लेखनम्** | — | भूमौ रेखाकरणम्। |
| **उत्करः** | — | उत्किरति पांशूनित्युत्करः। |
| **उदानः** | — | कण्ठदेशस्थो वायुः। |
| **उपवसथः** | — | सुत्यादिवसात् पूर्वमहरुपवसथः (सोमयागे)। |
| **उपस्तब्धाः** | — | प्रतिबद्धगतयो विनाशरहिताः (अविच्छिन्नप्रवाहाः प्रजाः)। |
| **उपपल्ययय्य** | — | (पिण्ड) समीपं परिप्राप्य। |
| **ऊषा** | — | मृद्विशेषः। |
| **ऊर्क्** | — | बलम्। |
| **ऋक्षाः** | — | इह ऋक्षशब्देन सप्तर्षयोऽभिधीयन्ते। |
| **एडकः** | — | मेषः। |
| **औपोदितेयः** | — | वैयाघ्रपद्यः। |
| **कहोडः** | — | कौषीतकी ऋषिः। |
| **कः** | — | ब्रह्मा। |
| **किलातः** | — | असुरपुरोहितः। |

**कुरुः पाञ्चालः** — देशविशेषः।

**कव्यम्** — पित्र्यं हविः। पितृभ्यो दीयमानं हविः कव्यम्।

**करीराणि** — मधुराः फलविशेषाः करीराणि।

**करम्भपात्राणि** — भृष्टयवचूर्णाः करम्भाः तन्मयानि पात्राणि।

— दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि करम्भपात्राणि।

**करम्भः** — दध्ना संयुताः सक्तवः करम्भः, तन्मयानि पात्राणि करम्भपात्राणि।

**कुपः** — वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्यायः कुपः। यज्ञियवृक्षजे तुलादण्डे इति देवयाज्ञिकः।

**कुरवः** — देशविशेषाः।

**कृत्तिका** — षट्संख्याधिष्ठाननक्षत्रम्।

**कृत्तिवासा** — कृत्ति त्वग्वास आच्छादनं यस्य सः। मृदुतरचर्माम्बरधारकः रुद्रः।

**चातुष्प्राश्यम्** — चतुर्भिरध्वर्युब्रह्मादिभिर्ऋत्विग्भिः प्राशितव्यम् ओदनम्। ब्रह्मोदनमित्यपि नामान्तरम्।

**चरुः** — पयसि तण्डुलान् प्रक्षिप्य श्रपणे सति क्षीरेण संस्कृत ओदनश्चरुः।

**चतुस्रक्तिः (वेदिः)** — चतस्रः कोणा यस्याः सा।

**चतुष्पथः** — चतुर्णां पथां समाहारश्चतुष्पथः। चतसृभ्यो दिग्भ्य आगताश्चत्वारः पन्थानो यत्र सङ्गच्छते स चतुष्पथः।

**जान्धितम् (स्थानम्)** — जनैः परिकल्पितं प्रज्ञातं प्रसिद्धम् (स्थानम्)।

**जक्षुषे** — भुक्तवते इत्यर्थः।

**त्वत्** — एकशब्द पर्यायः।

| | | |
|---|---|---|
| तमः | — | परेषां दृष्ट्याच्छादकं तमः। |
| त्र्यम्बकः | — | अम्बिका नाम स्त्री अस्य स्वसा अतस्त्र्यम्बको रुद्रः। |
| | — | त्रीणि अम्बकानि नेत्राणि यस्य। |
| त्र्येनी | — | त्रिषु स्थानेषु 'एतः' श्वेतवर्णो यस्याः सा त्र्येनी। |
| दानवः | — | वृत्रासुरः। |
| दिनानि | — | खण्डितानि (बर्हिमूलानि)। |
| नडो नैषधः | — | दक्षिणाग्निविशेषः। |
| निहारम् | — | नियमेन हि ह्रियत इति निहारो मूल्यद्रव्यम्। |
| निपुरः | — | नि = निकृष्टाः अल्पाः पुरः शरीराणि येषां ते निपुरः, अल्पकाया असुराः। |
| निवपनम् | — | स्थापनम्। |
| निर्णेनिजति | — | प्रक्षालयति। |
| निरवत्तबलिः | — | निष्कृष्याक्तो बलिर्देवभागो यस्मात् तन्निरवत्त-बलिः। |
| नौमण्डे | — | नौकायाः उभे पार्श्वे भित्ती इत्यर्थः। |
| नावाजः | — | नावमजति क्षिपति प्रेरयतीति नावाजः (कर्णधारः)। |
| निवान्या (गौः) | — | स्वयं नष्टवत्सा अन्यदीयेन वत्सेन गौर्दुह्यते सा निवान्या। |
| नक्षत्राणि | — | न विद्यते क्षत्रं तेजः एषामिति नक्षत्राणि। |
| नीविः | — | परिधानीयस्य वाससो दशा। |
| पाङ्क्तः | — | यज्ञः–धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या इति पञ्चहविष्कत्वात्। |
| | | पशुः–त्वक्, मांसम्, स्नायुः, अस्थिः, मज्जा चेति पञ्चधातुष्कत्वात्। |

**परिदीर्णः** — विदारितसर्वावयवः।

**परापुरः** — पराः प्रभूताः पुरः शरीराणि येषां ते परापुरः महाकाया असुरा इत्यर्थः।

**पूर्ववाट्** — पूर्ववयस्कः अश्वः (पूर्वे वयसि वहतीति 'पूर्ववाट्')।

**प्रयाजाः** — प्रधानयागात्प्रथममिज्यन्त इति प्रयाजाः।

**पुनराधेयम्** — प्रथममाहितस्याग्नेः विधानान्तरेण पुनस्तेष्वायतनेषु स्थापनं, पुनराधेयम्।

**प्रतिवेशः** — प्रतिनिधित्वेन निवेशनस्थानं प्रतिवेशः।

**परिचक्षा** — निन्दा।

**परिदाम्** — परिदानम्–रक्षणम्।

**प्रस्वः** — पुष्पिताः कुशाः। प्रसुवते फलानि इति प्रस्वः पुष्पिताकुशः।

**पिशीलः** — शरावः।

**पीविष्ठाः** — अतिशयेन पीवानो मांसलाः ते।

**पुरीष्यः** — यः खलु 'श्रियं' सम्पदं गच्छति तं 'पुरीष्य' इति लोका वर्णयन्ति।

**प्रसलवि** — प्रदक्षिणम्।

**परिवृतम्** — परिवेष्टितं स्थानम्।

**पयस्या (आमिक्षा)** — गव्यं पयस्तप्तं कृत्वा तापविशिष्टे एव पयसि दधि प्रक्षिप्तं चेत् तद् द्विधा भवति, द्रवीभूतं घनीभूतं च। तत्र यो घनीभूतोंऽशः स पयस्या आमिक्षेति च पदैर्व्यवह्रियते।

**पिनाकः** — रुद्रधनुर्नाम।

**परिवर्तयते** — वपनं (क्षौरकर्म) कारयति।

**प्राणः** — हृद्देशस्थो वायुः।

| | | |
|---|---|---|
| **पुनर्वसुः** | — | नक्षत्रम्। नष्टस्य वसुनः पुनः प्राप्तिहेतुत्वात् पुनर्वस्वाख्यम्। |
| **प्रावृताः** | — | उत्तरवाससा संवृताः, कण्ठलम्बितवाससः। |
| **प्रजाः** | — | प्रजायन्त इति 'प्रजाः' पुत्रपौत्रादिरूपाः। |
| **पेत्वः** | — | विगतपुंस्को मेषः। |
| **बर्हिषदः पितरः** | — | बर्हिषि सीदन्तीति बर्हिषदोऽकृतसोमयागाः केवलहविर्यज्ञयाजिनः पितरः। |
| **भाल्लवेयः** | — | इन्द्रद्युम्नो राजा। |
| **भवः** | — | रुद्रः-अग्निः। |
| **भृगुः** | — | अङ्गिराः। |
| **भार्या** | — | भर्तव्याः प्रजाः। |
| **भूतानि** | — | भवन्ति सद्भावं प्रतिपद्यन्त इति भूतानि। |
| **मुहूर्तम्** | — | द्वादशक्षणात्मकः कालः। |
| **मनावी** | — | मनुपत्नी। |
| **माया** | — | अघटनघटनशक्तिर्माया। |
| **मेक्षणम्** | — | चरुं आलोड्य येन काष्ठेन गृहीत्वा हूयते तत् मेक्षणम्। |
| **मेधः** | — | सारभूतः, बलकरः सारांशः। |
| **मूतम् (मूतकम्)** | — | व्रीहियवादीन् बद्ध्वा वहनार्थं तृणवंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते। यत्र तृणमये आवपने धान्यं धा = बध्यते तन्मूतम्। |
| **मेद्यति** | — | स्निह्यति (उत वा पुष्यति)। ञिमिदा स्नेहने धातुः। |
| **मन्थः** | — | निवान्याः पयसि प्रक्षिप्तो मथितो धानाचूर्णः एकयैव शलाकया एकवारं आलोडितो हविः मन्थो भवति। |

— मृतवत्सायाः परकीयवत्सेन दुह्यमानाया गौर्दुग्धे सक्तुं प्रक्षिप्य यत्सम्पाद्यते द्रव्यं, स मन्थः।

रयिः — पुष्टिहेतुभूतं धनम्।

व्याघारणम् — दीर्घधारयाऽग्नौ प्राच्यादिदिक्षु घृतपातनम्।

वत्सान् समवार्जन्ति — गोभिः सह वत्सान् संसृष्टा न कुर्युरित्यर्थः।

वङ्गा — वनगता वृक्षाः।

विहूर्च्छति — अधः पतति। 'हुर्च्छा कौटिल्ये' इति धातुः।

विश्वकर्मा — विश्वं सर्वं जगत् कर्म कार्यं यस्य स विश्वकर्मा देवता।

वैश्वदेवं पर्व — विश्वे देवा अपश्यन् यत्पर्व तद् वैश्वदेवं पर्व।

वरुणप्रघासाः — प्रकृष्टो घासो भक्ष्यविशेषो येषु हविर्विशेषेषु ते प्रघासाः। वरुणमुद्दिश्य प्रघासाः, वरुणस्य पाशरूपं कर्म घ्नन्तीति वा वरुणप्रघासाः।

विमथ्नीरन् — अपहरेयुः। मन्थ विलोडने–धातुः।

व्यतिषङ्गम् — परस्परं संसृष्टं यथा भवति तथा करणम्।

व्यानः — सर्वशरीरगो वायुः।

वास्तु — चैतन्य–शून्यस्थानम्।

वास्तव्यः — रुद्रः।

वाजिनम् — गव्यं पयस्तप्तं कृत्वा तापविशिष्टे एव पयसि, दधि प्रक्षिप्तं चेत् तद् द्विधा भवति, द्रवीभूतं घनीभूतं च। तत्र यो द्रवीभूतोंऽशः तद् वाजिनमिति।

विवचनम् — विशिष्टवचनम्, पक्षपातवचनमित्यर्थः।

शर्क्कराः — मृन्मिश्रिताः सूक्ष्मपाषाणाः शर्कराः। 'बालू' इति लोके प्रसिद्धम्।

| | | |
|---|---|---|
| **शुश्रुवांसः** | — | बहुश्रुतार्थाः। |
| **शुनासीरः** | — | शुनं विजयहेतुकं सुखम्, सुखसारांशः सीरम्। |
| | — | शुनो वायुः, सीर आदित्यः, तौ देवते अस्येति शुनासीरं पर्व। |
| **शलली** | — | श्वाविन्नामकस्य मृगस्य लोम 'शलली'। शल्यकमृगस्याङ्गारुहा सूचिः शललीति आप.श्रौ.सू. व्याख्यायां रुद्रदत्तः। |
| **शंयुः शम्युर्वा** | — | बृहस्पतेः पुत्रः। |
| **शर्वः** | — | रुद्रः। |
| **सम्भारः** | — | यज्ञोपयुक्तपदार्थानामेकत्रीकरणम्। सम्भरति-समूहीकरोति। सम्भ्रियते इति सम्भाराः। |
| **सर्पिः** | — | घृतम्, सर्पणशीलमाज्यम्। |
| **सर्पिरासेचनम्** | — | घृतधारणार्थमोदन-निम्नकरणम् (गर्तकरणम्)। आसिच्यते आनीयते सर्पिराज्यमस्मिन्निति सर्पिरासेचनम् आज्यपूरणार्थावटः ओदने। |
| **सनिः** | — | दानम्। |
| **सन्नहनम् (रज्जुः)** | — | सन्नह्यतेऽनेनेति सन्नहनं रज्जुः। |
| **सायम्प्रातराशी** | — | सायम्प्रातरशितुं शीलमस्येति। |
| **समदः** | — | कलहः। |
| **समानः** | — | नाभिसंस्थितो वायुः। |
| **सहरक्षाः** | — | असुराणामग्निः, दूतो वा। |
| **स्वतवसः** | — | 'तवः' इति बलनाम। स्वायत्तं तवो बलं येषां ते स्वतवसः मरुद्गणाः। |
| **साकमेधः** | — | साकमेधन्ते वर्द्धन्ते देवता एभिर्हविर्विशेषैरिति साकमेधाः। |
| **सोमवन्तः पितरः** | — | सोमेनेष्टवन्तः पंचत्वं प्राप्ताः पितरः सोमवन्तः। |

**हरितः** — दिशो हि हरिच्छब्दवाच्याः। दिशो वै हरितः।

**होतृषदनम्** — होता सीदत्यस्मिन्निति होतृषदनम्।

**हव्यम्** — देवेभ्यो दीयमानं हविः हव्यम्।

**हिरण्यस्तूपः** — आङ्गिरसः।

**क्षामकर्षमिश्रम्** — क्षामोऽतिपाकेन दग्धः पात्रे संसक्तः कृष्यते विलिख्यते इति कर्षः। क्षामश्चासौ कर्षश्चेति क्षामकर्षः, तेन मिश्रं हविः।

●

## परिशिष्टम्- २

।। श्रीगणेशाम्बिकाभ्यां नमः ।।

# ।। श्रीश्रौतोल्लासः।।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो।
बौद्धा बुद्ध इति प्रमाणपटवस्तर्केति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः।
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ।।१।।
नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ।।२।।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।
तं त्रोटकं वार्त्तिककारमन्यानस्मद्गुरून्सन्ततमानतोऽस्मि ।।३।।
ध्यात्वा तं करुणार्णवं जलधरश्यामं प्रभुं मानसे।
नत्वा सौम्यगुरुं मुदा स्वशिरसा श्रीमत्कृपाशङ्करम्।
विप्राणामुपयोगकार्यसुलभां श्रीपर्शुरामात्मजो।
श्रौतोल्लासकपद्धतिं प्रथयते विप्रो जगन्नाथकः ।।४।।

।। श्रीगणेशाय नमः ।।

श्रीविघ्नराजं पितरं गुरुं च सरस्वतीं चैव तपोधनं च।
प्रणम्य सूत्रश्रुतिशास्त्रसम्मतान् ग्रन्थाननेकान् प्रसमीक्ष्य यत्नतः।।
येरंडवल्लीनगरे निवासं करोति पद्मालयसन्निधौ तु।
शिवप्रसादाख्यद्विजेन तेन उल्लासश्रौतो विहितो हिताय।।

।। इति मङ्गलाचरणम् ।।

## ।। अथाग्निहोत्रस्य स्मृत्युक्तमहिमा ।।

तत्र प्रजापतिः—

अग्निहोत्रफलावेदाः सषडङ्गपदक्रमाः।
अग्निहोत्रसमो धर्मो न भूतो न भविष्यति।।१।।

**हारीतोऽपि—**

नाग्निहोत्रात्परो धर्मो नाग्निहोत्रात्परं तपः।
नाग्निहोत्रात्परं दानं नाग्निहोत्रात्परो दमः॥२॥

नाग्निहोत्रात् परं श्रेयो नाग्निहोत्रात्परं यशः।
नाग्निहोत्रात्परासिद्धिर्नाग्निहोत्रात्परागतिः॥३॥

नाग्निहोत्रात्परं स्नानं नाग्निहोत्रात्परो जपः।
निर्बद्धानिर्नमस्कारा यमुपायं मनीषिणः॥४॥

सोऽयं सूक्ष्मोऽग्निहोत्रेषु गूढोग्निरिव दारुषु।
शुक्रियेषु रहस्येषु नियत्सूपनिषत्सु च॥५॥

यं पठन्ति महात्मानः सोऽग्निहोत्रे प्रकाशते।
सुहुतान्यग्निहोत्राणि ते यान्ति परमां गतिम्॥६॥

अत्र स्वर्गश्च मोक्षश्च यो यथा गन्तुमिच्छति।
आद्या व्याहृतयस्तिस्रः स्वधा स्वाहा नमो वषट्।
यस्यैते वेश्मनि सदा ब्रह्मलोकस्थ एव सः॥७॥

**अङ्गिरा अपि—**

यो दद्यात्काञ्चनं मेरुं पृथिवीं च ससागराम्।
तत्सायं प्रातर्होमस्य तुल्यं भवति वा न वा॥८॥

यावतोऽपि शिलोञ्छाभ्यामहन्यहनि यत्फलम्।
तद्दर्शपौर्णमासाभ्यां सम्यगाप्नोति वै द्विजः॥९॥

**वायुपुराणेऽपि—**

दर्शं च पौर्णमासं च ये यजन्ति द्विजातयः।
न तेषां पुनरावृत्तिर्ब्रह्मलोकात्कदाचन॥१०॥

**पैठीनसिरपि—**

हुताग्निहोत्रस्य कृताग्निकस्य
समाप्तजप्यस्य पथि स्थितस्य।
यद्ब्राह्मणस्यात्मनि ब्रह्मवीर्यं
[illegible] वै [illegible] समस्ता॥११॥

**हारीतोऽपि—**

नास्त्ययज्ञस्य लोको वै नायज्ञो विदन्ते शुभम्।
अनित्यमृचयज्ञोनामात्रस्याच्छिन्नपर्णवत्।।१२।।

यज्ञेन लोका विमला विभान्ति यज्ञेन देवा ह्यमृतत्वमाप्नुवन्।
यज्ञेन पापैर्बहुभिर्विमुक्तः प्राप्नोति लोकान् परमस्य विष्णोः।।१३।।

नन्दन्ति पितरः सर्वे नृत्यन्ति च पितामहाः।
प्रपितामहाश्च गायन्ति श्रोत्रियो गृहमागतः।।१४।।

अग्निहोत्रिणि विप्रे यः सहायत्वं प्रयच्छति।
त्रिसप्तकुलसंयुक्तो मामैवेति न संशयः। इति।

## ।। अथाग्निहोत्रस्य श्रुत्युक्तमहिमा ।।

**भवसागरतारणार्थं नौकामाह**—'नौर्हवा एषा स्वर्ग्या यदग्निहोत्रं तस्या एतस्यै नावः स्वर्ग्यायाऽआहवनीयश्चैव नौमण्डे अथैष एव नावाजोयत्क्षीर-होता'।।१।।

**ततो होमार्थश्रुतिः। तदाहुः**—'पदेपदेऽश्वस्य मेधस्याहुतिर्जुह्वतीति स यत्सायं प्रातरग्निहोत्रं जुहोति, द्वे सायमाहुतीर्जुहोति द्वे प्रातस्ताश्चतस्र आहुतयश्चतुष्पादा अश्वस्तदास्य पदे पदऽएवाहुतिर्हुता भवति'।।२।।

'तं वा एतमासिमास्यश्वमेधमालभन्तो। स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शे पौर्णमास्यां च यजते मासि मासि हैवास्याश्वमेधेनेष्टं भवत्येतदुहास्याग्निहोत्रं च दर्शपौर्णमासौ चाश्वमेधमभिसम्पद्यते'।३।।

'यत्पयो न स्यात्तत्केन जुहुयादिति, व्रीहियवाभ्यामिति। यद् व्रीहियवौ न स्यातां केन जुहुयादिति, या अन्या औषधय इति। यदारण्या ओषधयो न स्युः, केन जुहुयादिति वानस्पत्येनेति। यद् वानस्पत्यः न स्यात्केन जुहुयादिति अद्भिरिति। यदापो न स्युः केन जुहुयादिति'।।४।।

'स होवाच न वा चेत्तर्हि किञ्चनासीदथैतदहूयतैव सत्यं श्रद्धायामिति वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशतं ददामीति होवाच'।।५।।

अथ देवताया आदिशति सर्वा ह वै देवा अध्वर्युं हविर्ग्रहीष्यन्तमुपतिष्ठन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति ताभ्य एवैतत्सह सतीभ्योऽसमदं करोति। इति।

## ।। अथाग्निहोत्रस्याकरणे दोषः ।।

द्विर्नग्न इति [१]श्राद्धसूत्रे उक्तम्।

**तस्य लक्षणमाह सुमन्तुः—**

यस्य वेदश्च वेदिश्च विच्छिद्येते त्रिपूरुषम्।
द्विर्नग्नः स तु विज्ञेयः श्राद्धकर्मणि निन्दितः।।

**सङ्ग्रहे—**

यस्य त्रिपुरुषादासीदुभयोर्गोत्रयोरपि।
वेदस्याग्नेश्च विच्छेदः सर्वकर्मसु निन्दितः।। इति।

---

१. (परिशिष्ट भागः) ॐ श्रौतकर्मानन्तरं स्मार्त्तान्यावसथ्यादीन्यनुविहितानि। तत्र श्राद्धमनुक्तं तद् वक्तव्यमित्यत आह—अपरपक्षे श्राद्धं कुर्वीत। सूत्रे श्राद्धमिति कर्मणो नामधेयं द्रव्यगुणादावप्रसिद्धेः।। तच्च समुदायस्य सन्निधानाविशेषाद्राजसूयवत्। स्मृतेश्च श्राद्धमनेन उक्तमिति पिण्डदानप्राधान्ये हि भुज्यार्थानुपपत्तिः। कार्यत्वाविशेषाच्च तस्मात्समुदायस्य नामधेयमिति। **एवं प्राप्तमुच्यते**। पिण्डदानस्य वा श्राद्धमिति नामधेयम्। **प्रवृत्तेस्तादर्थ्यात्।** तत्कुतः स्मृतेरपि नः स्वकुले जातो यो नो दद्यात्त्रयोदशी। पायसं मधुसंयुक्तं वर्षासु च मघासु चेति। पितॄणां प्रार्थना पिण्डदानविषयैः श्राद्धं तत्र हि तेषां देवतात्वमसावेतत्तेनमिति मन्त्रवर्णात्। पिण्डपितृयज्ञवदुपचार इति वचनात्। तत्प्राप्तेः न च भोजनस्य तदर्थता साक्षात् ब्राह्मणाभिसम्बन्धात्। पित्रर्थत्वे च प्रमाणाभावात्। **स्मृत्यन्तराच्च**। सह पिण्डक्रियायां तु कृता यामस्य धर्मतः। अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैरिति। पिण्डनिर्वपणस्य कर्तव्यता दर्शयति न च ब्राह्मणभोजनादेः। **तथा च स्मृत्यन्तरेप्युक्तम्।** स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय चेति सूत्रकारप्रस्थानाच्च मासि मासि वोशनमिति श्रुतेः। अन्वर्थसंज्ञाकरणाच्चैकोद्दिष्टमिति। **सर्वप्राधान्ये हि नैकोदिश्यते**। आभ्युदयिके च दर्शनात्। पितॄणां रूपमास्थाय देवा अन्नमदन्ति तदिति। न च पितॄणामदनं सम्भवति। तस्मादनेन प्रकारेण पितृरूपेण देवानां देवतात्वमुच्यते। तच्च पिण्डदानकाले सम्भवति। न भोजन इत्युक्तस्तथा अनुष्ट्वा तु पितृश्राद्धेन कुर्यात् वैदिककर्म इति दर्शयति च तथा कथञ्चिद् ब्राह्मणभोजनं यद्येकं भोजयेत् श्राद्धे इति। एक एव यदा विप्र इति। **ब्राह्मणभोजनाभावेपि गयादौ** पिण्डदानमात्रदर्शनात्। द्वैपायनोऽपि दर्शयति पिण्डदानकाले पितॄणां हस्तोत्थानम्। पितृशब्देनाभिधीयते कुर्वीतेति विधायकवचनम्। तच्चाग्निमानग्निमानश्चकभीष्मस्य दत्तपिण्डान् हस्तोत्थानं तु शन्तनोरिति। यत्पुनरुक्तं सन्निधानाविशेषादिति तनैवं विशेषावगमात्। **अवगम्यते हि विशेषः**। प्राक्प्रतिपादितवाक्येभ्यः सकाशात् तस्मात् पिण्डदानस्य प्राधान्यं तदङ्गमितरत् यच्चोक्तं श्राद्धमनेकभुक्तमिति तदप्युपचारवृत्या श्राद्धार्थान्ने भुञ्जिवर्त्तते यदप्युक्तं कार्यत्वाविशेषादिति तन्मतं तत्रापि करोति, अविद्धःप्रधानं कार्यमङ्गानि चेति यदप्युच्यते पिण्डपितृयज्ञवदुपचारः पित्र्य इति तदपि पितृनिमित्तया गुणवृत्त्या ब्राह्मणाव्यपदिश्यन्ते। तस्मादसमुदायत्वं चिन्तायाः

## ।। अथाग्न्याधानकालः ।।

**कात्यायनसूत्रे**—'अमावास्यायामग्न्याधेयम्। अत्र सर्वसाधारणतया सर्वमासानाममायां यद्यपि प्राप्तं तथापि शास्त्रान्तरादुक्तमासानाममायां शुभदं ज्ञेयम्'।

**श्रुतौ तु**—'योऽसौ वैशाखस्यामावास्यायामादधीत सा रोहिण्यामिति। वैशाखस्यामायां यदुक्तं तत्तु रोहिणीयोगेन स्तावकपरं स्तुतिविशेषः। अत्रामावास्याशब्देन गौण्यावृत्त्या प्रतिपदुच्यते'।

**कुतः। श्रुतौ दर्शनात्**—'यदहरेवैष न पुरस्तान्न पश्चात् दृश्येत तदह-रुपवसेत्तर्हि एष इमं लोकमागच्छति तस्मिन्निह वसति'।।१।।

---

प्रयोजनं पिण्डदानाकरणेभ्यावृत्तिः अपरपक्ष इति कृष्णपक्ष इत्युच्यते। समाचारात् समाचरन्ति कृष्णपक्षे श्राद्धमिति लिङ्गाच्च यो पक्षायते स पितर इति।।१।।
पितृसम्बन्धि कर्मार्हत्वादपरपक्ष उपचारवृत्त्या एति प्रसिद्धेः। स्मृत्यन्तराभिप्रायाच्च अग्न्याभावे विप्रस्य पाणावेवोपपादयेत्। योह्यग्निः सद्विजो विप्रैर्मंत्रयीभिरुध्यत इति अग्निमत एव वा सर्वाङ्गोपसंहारसामर्थ्यात्। कथमितरस्य होमासम्भवात्। सर्वाङ्गोपसंहारसामर्थ्यां कुत एवमिति चेत् स्मृत्यन्तरात्। न पैतृकयज्ञिको होमो लौकिकेग्नौ विधीयत इति सपिण्डपितृयज्ञवत्। हुत्वेत्यनेनाभिधीयते। अपि च दारसङ्ग्रहपूर्वक-मावसथ्याधानं तत्पूर्विका च कर्मान्तरेषु प्रवृत्तिरिति। अग्नावपि तानग्निमतोऽधिकारः। यत्तूक्तमन्यभावे तु विप्रस्येति। तदकृतावासथ्याभ्युदयिकविषयम् यचप्रद्विरुक्ता सावत्यसवद पर्यालोचितप्रसिद्धिरिति। पितृभ्यो ददातीति वचनात् **जीवितो पिण्डदानासम्भवात् प्रेतपितृकस्य** श्राद्धे अधिकारः। जीवत्पितृकस्याप्येको पदे तदाह—

ध्रीयमाणे तु पितरि पूर्वेषामेव निवर्तयेत्।
विप्रवद्वा पितृश्राद्धे स्वकं पितरमाशयेदिति।।

विप्रदर्शनपक्षे द्वयोः पिण्डदानम्। **पितरि प्रेते पितामहे जीवति पित्रे प्रपितामहाय च पिण्डदानम्।** पितामहमपि**वार्षिकवद्** भोजयेत्।

**तथा चाह**—

पिता यस्य तु वृत्तस्य जीवेच्चापि पितामहः।
पितुः स नाम सङ्कीर्त्य कीर्त्तयेत् प्रपितामहम्।
पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यब्रवीन्मनुः।
कामं वा समनुज्ञातः स्वयमेव समाचरेत्। इति ऊर्ध्वं चतुर्थ्याः सूत्रम्।।२।।

अपरपक्षे प्रतिपत् प्रभृति चतुर्थ्युत्तरकालं वा यदहः सम्पद्येत् तदहः ब्राह्मणानामन्त्र्य पूर्वेद्युर्वासूत्रम्।।३।।

निगदितव्याख्यातं अपरे वर्णयति न्यायात्पदहरामन्त्रः प्राप्नोति प्रधानकालत्वादङ्गानि मैथुनप्रतिषेधान्यथानुपपत्या पूर्वेद्युरेवेत्यवगम्यते। तस्मात्पूर्वेद्युरेवेत्यवधार्यते। स्नातकानेके यतीन् गृहस्थान् साधून् वा श्रोत्रियान् वृद्धान् अवद्यान् स्वकर्मस्थानभावेपि शिष्यान्

'सर्वे देवा वसन्ति सर्वाणि भूतानि सर्वा देवताः। सर्वे ऋतवः सर्वे स्तोमाः सर्वाणि पुष्टानि सर्वाणि छन्दांसि'॥२॥

'सर्वेषु ह वा अस्य देवस्य सर्वेषु भूतेषु सर्वासु देवतासु सर्वेषु व्रतेषु सर्वेषु स्तोमेषु सर्वेषु आपृष्टेषु छन्दांस्वग्नी आहितौ भवतौ यो वामावास्यायामाधत्ते तस्मादमावास्यायामेवाग्नी आदधीत'॥३॥

मुख्यामावास्यायामुपवासं दर्शयति। अत्रोपवासशब्देन यमनियम-युक्तावस्तानमुच्यते। यदहरस्य श्वोग्न्याधेयं स्याद्दिवैवाश्नीयादिति दिवाश्नाति रात्रौ वा दिवा रात्रौ वेति ऋत्विगुपरोधादिच्छाअमायां यमनियमो भवेत्। तस्मान्मुख्याममावास्यायामग्न्यागारादि ब्रह्मोदनान्तमुपक्रम्य प्रतिपद्यामाधानं कार्यमिति। मानवेश्वाग्निनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममावास्यां नक्षत्रं चेति आपस्तम्बः। पौर्णमास्यां तु पूर्वेस्मिन्पर्वणि सेष्टिसान्वारम्भणीयमपवृज्य श्वोभूते पौर्णमासेन यजत इति।

**कारके च**। आधानं चेत्पौर्णमास्यां पूर्वं तनुदेवताभ्य उपवसेदुत्तरामन्वा-रम्भणीया वै पर्वणि चेति।

**लौगाक्षिः। पौर्णमास्यामाधानः**। पूर्वामुपोष्याधायाग्न्याधेयेष्टिभिरिष्ट्वा जुह्वदग्निहोत्रमुपतिष्ठमानो वसन्ति श्वोरम्भणीयामुपौर्णमासं चेति अतश्चामावास्यायामाधाने अमावास्यायापक्रमः। पौर्णमास्यां मन्थनादिद्विष्ट्यन्तं तदह्व्यहपक्षे तस्मिन्नेव दिनेन्वारम्भणीया पौर्णमासार्थमग्न्यन्वाधानाद्युपक्रमश्च प्रतिपदि पौर्णमासयागः। सद्यश्चेत्पौर्णमासं तदा प्रतिपद्येन्वारम्भणीया पौर्णमासं चेति। नक्षत्राधानपक्षेपि पूर्वेद्युरुपक्रमः। नक्षत्रदिने मन्थनादि त्रिरात्रषड्रात्रादि अग्निधारणमध्ये चेत्पौर्णमासेष्ट्यारम्भस्तदा तेषु नित्यधृतेष्ट्वेवाग्निष्ट्वन्वारम्भणीया पौर्णमासेष्टिश्च कार्या न पृथगुद्धरणमिति। वसन्ततौ ब्राह्मणस्य निष्कामस्य।

---

स्वाचारान् द्विर्नग्नशुक्लविक्लवधरश्यावदन्तविद्धप्रजननव्याधितांगव्यंगचित्तिकुष्टिकुनखिवर्जे सूत्रम्॥४॥

स्नातकानेक इत्येवमादिकुनखिवर्जमित्येवमतं निगदितव्याख्यातं द्विर्नग्नौ दुश्चर्मा स तु जन्मान्तरे गुरुतल्पगो कृतः। शुक्लो मण्डलकुष्टितैजसापहारिमण्डिति वचनात्। अग्नित्यागी वा विक्लीबः। अतिगौर इत्येते पूतिगन्ध इत्यपरे औदुम्बरकुष्टिवाश्च भार्यागमनात्तयाभूतः श्यावदन्तताम्बूलालयघातादिना श्यावदं दृश्यते। **दन्तच्छविजन्मान्तरे मद्यपानस्य चिह्नम्। प्रजननं यस्य छेदितमस्ति स विद्धप्रजननः। प्रजननः शिश्नः। वृद्धप्रजननः** दाक्षिणात्यानां प्रसिद्धः। मृतपत्न्योर्वाश्वित्रिश्वेतकुष्टि कुनखिश्च तौनवूनापद्यतानिदना अनिन्द्येनामन्त्रितोना प्रकामेत सूत्रं समाप्तम्॥४॥ इति।

**ब्रह्मवर्चसकामस्यापि**। ग्रीष्मो क्षत्रियस्य श्रीकामानां सर्वेषामपि सर्वासु प्रजाकामस्य पशुकामस्य च त्रैवर्णिकस्य। वैश्यस्य निष्कामस्यापि ह्यर्थकामस्य वा इति। एकदिने सर्व ऋतवार्थे श्रुतिः। आदित्यस्ते च सर्व ऋतवो सदैवोदेत्यथ वसन्तो यदा सङ्गवोथ ग्रीष्मो यदा मध्यन्दिनोथ वर्षा यदापराह्णोथ शरद् यदैवास्तमेत्यथ हेमन्तस्तस्मादुक्तं मध्यं दिने एवादधीत तर्हिह्यपोस्थेनः दिष्टं भवति तं नेदिष्टादेवैनमेतन्मध्यां निर्मितेति तदा सङ्गवे आधानं कुर्यादिति सिन्धवः।। इति।

## ।। अथ मुहूर्त्तविचारः ।।

तत्रादौ ज्योतिःशास्त्रानुसारेण मासनक्षत्राण्याह।
माघादिपञ्चमासेषु श्रावणे चाश्विने तथा।
कुर्यान्मृगोत्तमाङ्गे वा ह्याधानं शुक्लपक्षके।।१।।

**मृगोत्तमाङ्गे वा मार्गशीर्षः**।

हस्तद्वये विशाखासु कृत्तिकादित्रये तथा।
पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च।।
भौमार्किवर्जिते वारे नाधिमासे क्षये तथा।
चन्द्रेऽनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते।
आदिपदाज्जलचरलग्नगुरुभृग्वस्तादिज्ञेयम्।।

**मुहूर्त्तमुक्तावल्याम्—**

श्रेष्ठं फाल्गुनमाधवोत्तरदलं चाषाढमासत्रयं
पौषे चोर्ज्जयुते ज्ञजीवभृगुजे वह्निद्वयेक्षिप्रगे।
आदित्यध्रुवशाक्रभे मृदुचरे नन्दासु भद्राजया-
योगेस्मिन् द्विजवर्यपुण्यनिधये कुर्यात्त्विधानं शुभम्।।२।।

श्लोकद्वयानुसम्मतेर्द्वादशमासा ग्राह्याः। नक्षत्राणि भरणी आर्द्रा अश्लेषा मघा मूल एतान्पञ्चनक्षत्रवर्ज्यानि। **अन्ये सर्वनक्षत्रग्राह्याणि**। अथवा यदैव श्रद्धोत्पद्यते तदैवाधानं कार्यम्।

तथा च कात्यायनश्रुतिः। यदहरेवैनं श्रद्धोपन्नयेतदादधीतेति। नात्र कालस्य नियमः। किं तर्हि अथाग्नी आदधीत न श्वः श्वमुपासीत को हि मनुष्यस्य श्वो वेद इति श्रुतेः। विस्तारेणाग्रे स्मार्त्तोल्लासेऽवगन्तव्यमिति।

## ।। अथाग्निहोत्रपात्रलक्षणम् ।।

चतुर्विंशाङ्गुलं प्रोक्तं अथवा द्वादशाङ्गुलम्।
वेणूनां च नडानां च दृष्टिकानां च वा पुनः।।१।।

अग्निहोत्रं हवनीं च बाहुमात्रा प्रचक्षते।
खातं च पाणिमात्रं स्यान्मूले दण्डो भविष्यति।।२।।

हंसमुखेभवं नालमग्नेः कुर्यात्सदा बुधैः।
अरत्निमात्रं स्फ्यं कुर्यादाकृतिर्वज्र एव हि।।३।।

कपालं द्व्यङ्गुलं वा स्यादङ्गुष्ठं पर्वसंमितैः।
शम्या प्रादेशमात्रं स्यादथवा शम्ययाकृतिः।।४।।

कृष्णाजिनं सशीर्षं च तस्मात्पृष्टिसमन्वितम्।
उलूखले मुसले च चतुर्विंशाङ्गुलैः स्मृतैः।।५।।

अथवा द्वादशाङ्गुलैः कुर्याच्चैव प्रयत्नतः।
दृषद्येवं विजानीयाद्विस्तृतं षोडशङ्गुलम्।।६।।

अथवाष्टाङ्गुलो ज्ञेयमुपलं विस्तृतस्तथा।
पात्रीरत्नीमिता प्रोक्ता उत्सृधे च षडङ्गुला।।७।।

अष्टाङ्गुला तु विस्तीर्णा खातं स्याच्चतुरङ्गुलम्।
उच्छ्रेधेऽष्टाङ्गुला प्रोक्ता तादृशी उपसर्जनी।।८।।

कुशमुष्टिं च वेदार्थे वेदो वेण्याकृतिः स्मृतः।
अयन्वाहार्यपात्रं च उच्छ्रेये षोडशाङ्गुलम्।।९।।

अष्टाङ्गुलं परिणाहें वेद्यर्थं तृणमेव च।
बाहुमात्रं प्रकर्तव्यं अभ्रीस्याद्रत्निसम्मिता।।१०।।

अग्रे तीक्ष्णा प्रकर्त्तव्या प्रोक्तं यामप्रमाणकम्।
त्रिवृत्तं मुञ्जावद् ज्ञेयं गोत्रप्रवरसम्मितम्।।११।।

अन्ते पाशौ च कर्त्तव्यौ वारुणेन समन्वितौ।
स्रुचौ रत्निप्रमाणस्तु पुष्करङ्गुष्ठवृत्तकः।।१२।।

जुहूमभ्रध्रुवा ज्ञेया अग्निहोत्रहवण्यवत्।
ध्रूवाग्रं न तु कुर्याद्वै अग्निहोत्रहवण्यवत्।।१३।।

पुठावभासं कुर्याद् वै मुखं न तु प्रकल्पयेत्।
मूलेन पीठिका कार्या दण्डो नालाकृतिस्मृतः।।१४।।

कुशमुष्टिस्तु कुर्याद्वै आच्छादनार्थमेव च।
परिधीन् बाहुमात्रांश्च त्रयो ग्राह्या विचक्षणैः॥१५॥

विधृत्यौ द्वेस्तृणे स्थाये षोडशाङ्गुलमात्रके।
आज्यं कर्मानुसारं च पात्र्यौ चाष्टाङ्गुलो मिता॥१६॥

पाणिमात्रौ तु कर्त्तव्यो मध्ये तु वर्त्तुलाकृतिः।
षोडशाङ्गुलदीर्घं च विस्तारं द्वादशाङ्गुलम्॥१७॥

होत्रार्थं पीठमेवं हि चोदितं याज्ञिकैर्जनैः।
प्रादेशमात्रं विज्ञेयं श्रृतावदानसंज्ञिकम्॥१८॥

अङ्गुष्ठमात्रं स्थूलं वै अग्रं च खुरवत् स्मृतम्।
द्व्यङ्गुलं वाग्रदेशं वै अवदानार्थमुत्तमम्॥१९॥

औषधं श्लक्ष्णमेवं हि देवानां च प्रमाणतः।
प्राशित्रहरणे द्वौ च चतुरङ्गुलमानके॥२०॥

मध्ये तु वर्तुलाकीर्णे अष्टागुष्ठप्रमाणके।
अन्वाहार्यार्थव्रीहीन् वै तण्डुलानावपेद् बुधः॥२१॥

सकृत्प्रक्षालितांस्तान्वै पला द्वादशसंख्यया।
कटो वितस्तिमात्रस्तु पूर्णचन्द्राकृतिः शुभम्॥२२॥

तृतीयभागं भिद्याद्वै कटत्वं प्राप्यते तदा।
अष्टाङ्गुलं पूर्णपात्रं चमसाकृत्तिमुत्तम्॥२३॥

समित्प्रादेशमात्रास्तु साग्रा श्लक्ष्णा प्रकीर्त्तिता।
इध्मात्वेकादशेवैहि अरत्नीसम्प्रमाणकौ॥२४॥

बर्हिणीदर्भमूलं तु श्रपणे उपकल्पयेत्।
द्वादशाङ्गुलदीर्घं तु खड्गवत्तं प्रचक्षते॥२५॥

अर्धाङ्गुलो भवेदोष्टो मध्ये करतलाकृतिः।
प्रादेशमात्राः समिधो युनानि पञ्चविंशतिः॥२६॥

समं विभज्य यत्नेन त्रिधा कृत्वा प्रयत्नतः।
भागैकेपात्रमेकं तु अधिकं कारयेद् बुधः॥२७॥

सव्यवृत्तानुरज्जुस्याद्यूनमित्यभिधीयते।
[illegible] पात्र्यां च खड्गवत्तकं॥२८॥

एतेषां बुध्नदेशं च कल्पयेदासनेषु च।
कूर्मं स्याद्बाहुमात्रं वै कूर्मस्याकृतिनं शुभम्॥२९॥

अष्टाङ्गुलं तु विस्तारे अग्रे तीक्ष्णं प्रकल्पयेत्।
प्रादेशमात्रं कुर्याद्वै मेक्षणं यज्ञकाष्ठकम्॥३०॥

अग्रे तीक्ष्णं प्रकत्तर्व्यं अवदानार्थमेव च।
सम्भारयज्ञरूपार्थं याज्ञिका प्रवदन्ति हि॥३१॥

यस्मिन्पात्रे स्थितो वह्निः प्रणीता सा प्रकीर्त्तिता।
अपरा प्रोक्षणी ज्ञेया वह्नेरुत्तरतो न्यसेत्॥३२॥

प्रणीतावारुणं काष्ठं चतुष्कोणे समाखनेत्।
विंशत्यङ्गुलदीर्घं च मूलदण्डं चतुरङ्गुलम्॥३३॥

अष्टाङ्गुलं तु विस्तारे रेखा चैव तदर्धकम्।
एवं लक्षणसंयुक्ता प्रणीता कारयेत्सुधिः॥३४॥

अष्टाङ्गुलप्रमन्थः स्याच्चात्रस्याद्द्वादशाङ्गुलम्।
वोबलीद्वादशाङ्गुल्या एतन्मन्थनयंत्रकम्॥३५॥

विधेतु मूर्ध्नि चात्रस्य कीलकं तु विनिर्मितम्।
वोबलीचात्रयोरन्यदद्यार्थं चैव लोहजम्॥३६॥

**यज्ञपार्श्वे—**

अश्वत्थवृक्षस्य कार्या अरणी गर्भसंश्रिता।
अग्रन्थिनीमशुष्कायां प्रागुदग्वा निवापयेत्॥३७॥

अलाभे त्वशमीगर्भाद्गर्भस्थापि हरेद्द्रुतम्।
भवेद्या प्राङ्मुखी शाखा उदङ्मुख्यथवापि च॥३८॥

चतुर्विंशाङ्गुलादीर्घा विस्तारेण षड्ङ्गुला।
चतुरङ्गुलमृत्सेधा अरणी याज्ञिकैः स्मृता॥३९॥

वैकङ्कतस्य स्नुक्स्नुवः। वैकङ्कती ध्रुवा। पालाशी जुहू। आश्वत्थी उपभृत्। खादिरः स्नुवः। . उपवेशरत्निमात्रः। प्रादेशमात्रो वा हस्ताकृतिः। खादिरः पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलवृत्तखातवती। अरत्नीमात्राणि ब्रह्मयजमानपत्नी होतृषदनानि। पालाशवैकङ्तकङ्काश्मर्यबैल्वखादिरवारुणानि पात्राणि। उक्तनामसम्भवे यथासम्भवयज्ञियवृक्षजातिपरिधिवृक्षाणामिध्मः। पलाशादियज्ञियवृक्षः। परिधिरिध्मप्रमाणमुच्यते।

समित्पवित्रं वेदश्च त्रयः प्रादेशसम्मिता।
इध्मस्तु द्विगुणा कार्या त्रिगुणः परिधिः स्मृतः।।
प्रादेशाहि प्रमाणमादित्यपुराणे।
अङ्गुष्ठस्य प्रादेशिन्या व्यासःप्रादेश उच्यते।।
तालस्मृतौ मध्यमाया गोकर्णश्चाप्यनामया।
कनिष्ठया वितस्तिस्तु द्वादशाङ्गुलमानकः।।
रत्निस्त्वङ्गुलपर्वाणि विज्ञेयस्त्वेकविंशतिः।
चत्वारिविंशतिश्चैव हस्तस्यादङ्गुलानि तु।।
किष्कु स्मृतोद्यरत्निस्तु द्विचत्वारिंशदङ्गुलः।
अत्र विंशतिशताङ्गुलः पुरुष इतित्वात्।।

ऊर्ध्वबाहोः पुरुषस्य विंशत्युत्तरशतांशोगुलं ज्ञेयम्। तथा च कात्यायनसूत्रे च येन प्रकारेण पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलपदमिति पदं पञ्चदशाङ्गुल्यः प्रक्रमैरष्टभिर्भवेदिति सूत्रान्तरात्।

।।इति श्रौतोल्लासे कात्यायनोक्तपात्रलक्षणम्।।

## ।। अथ श्रौतकुण्डवेदीनिर्माणकारिका ।।

ब्राह्मीमवीभ्रंशवतीं परीक्ष्य संशोध्य भूमिं सुसमां समुच्चाम्।
प्रगृह्य तस्यामनुलिप्य शालां कृत्वाऽभिहन्याद्दृढमाद्यशङ्कुम्।।१।।
प्राचीं ततः पूर्ववदुक्तयुक्त्या संसाध्य देशे परितः प्रशस्ते।
नर्यस्य विश्वाब्धिगुणाङ्गुलादिव्यासार्धमित्या विलिखेत्प्रवृत्तम्।।२।।
तन्मध्यचिह्नाद्वसुविक्रमेषु वैकादशद्वादशसु स्वमत्या।
वा शङ्कमध्यं परिकल्प्य कुर्यात्कुण्डं चतुष्कोणमरत्निमात्रम्।।३।।
मध्यं च नर्याहवनीययोस्तु विभज्य षोढाप्यथ सप्तधावा।
लब्धांशकङ्गं तु समं त्रिधात् त्र्यंसं च हित्वा परदक्षिणेऽग्निः।।४।।
अग्नेरुदक् सार्धनवाङ्गुलेऽस्मिन् यूकेषुभिर्वर्धितभूस्थशङ्कौ।
एकोनविंशाङ्गुलिभिर्यवैकयूकाद्वय व्यासदलेन वृत्तम्।।५।।
विलिख्य पूर्वापरसंस्थजीवां कृत्वा च हित्वोत्तरकार्मुकं हि।
याम्यां भवेत्कुण्डमथर्वसंज्ञकं सभ्यं सभायां चतुरस्रमुक्तम्।।६।।

औपासनं चैवमथो ग्रहान्तः कुण्डद्वयं नर्यमिवोक्तवद्वा।
उपर्युपर्युर्पितमेखलाभिस्त्रिभिस्त्रिभिः सर्वखरेषु भीतिः॥७॥
वेदाङ्गुलोच्चाभिरथो विदध्याद्भुवश्चतास्त्र्यङ्गुलविस्तृताभिः।
रज्जुं द्विपाशां षडरत्निदीर्घां विचिह्नितां पञ्चसु मध्यभागे॥८॥
हस्तद्वयेप्यङ्गुलषट्कचिह्ने ह्यष्टादशेषु त्रिषु लक्षितां च।
प्राचीभवादाहवनीयशङ्कोः पश्चात्रिरत्न्यां प्रतिमुच्चशङ्कुम्॥९॥
पाशद्वयं सम्प्रतिमुच्य शङ्कोर्विकर्षयेदङ्गुलषट्कचिह्नम्।
पश्चात्तु हस्तद्वयरज्जुचिह्ने शङ्कू च याम्योत्तरगौ निखेयौ॥१०॥
तच्छ्रोणियुग्मं त्वथ पूर्वपाशादृष्टादशांकेन विलिख्य रज्जुम्।
अग्नीशयोरंशयुगं तदास्याच्छङ्कुद्वयं सार्धकरस्य चिह्ने॥११॥
सूत्रार्पणात्कोणचतुष्टयेषु क्षेत्रं भवेत्तद्विषं हि वेद्याः।
पूर्वार्द्धशङ्कोरथ चापरार्धं यावच्च कोणौ परिवेष्ट्य . रज्वा॥१२॥
अर्धीकृतान्तामनुवेष्ट्य शङ्कू याम्योत्तरौ मध्यगतौ निखेयौ।
तुरीयभागेन दलीकृताया रज्वोः पृथुत्वादथवा विशङ्कौ॥१३॥
वृत्तार्धमानेन च सङ्ग्रहौ द्वौ कृत्वा खनेत्र्यङ्गुलवेदिमध्यम्।
वितानपूर्वापरसौम्यदिक्षु द्वारैर्युतं शंस्यगृहं पुरस्तात्॥१४॥
याम्येन्द्रदिग्द्वारगृहद्वयोस्तु सम्यस्य भस्मोद्धरणाय कार्यम्।
एवं हविर्यज्ञविधौ वितानं कुण्डानि साध्यानि सदैव सद्भिः॥१५॥

॥ इत्येकप्रकारः॥

## ॥ अथ द्वितीयः प्रकारः ॥

नत्वा देवं विठ्ठलं रुक्मिणीशं शालावेद्याद्यग्निहोत्रस्य वक्ष्ये।
शाला कार्या पङ्क्ति १० हस्ता समन्तात्तुल्या श्रेष्ठा वेदकोणा समाना॥१॥
मध्ये शालात्वङ्कहस्ताष्ट ॥८॥ हस्तहीना प्रोक्ता चातिहीना न कार्या।
प्राचीसूत्रं तत्र दत्वाथ शाला पश्चात्त्यक्ताद्व्ये २ क १ हस्तोन्मितां ताम्॥२॥
कार्यो मध्यो गार्हपत्यस्य तस्माद्रुदा ११ ष्ट ८ र्का १२ प्रक्रमा प्राक्प्रमेयाः।
तेषामन्ते शंस्यमध्यादधस्तु शङ्कू देयौ चोभयोर्मध्यगौ॥३॥

शङ्क्वन्तरेण प्रमिता च रज्जुः कार्या स्वषड्भाग ६ युताथवेयम्।
स्वाक्यंश ७ युक्ता त्रिविभागचिह्ना कृतद्विपाशाथ तदीयपाशौ॥४॥

मध्यस्य शङ्कोः प्रविमुक्त चिह्नमाकर्ष-यत्पश्चिमदक्षिणेत्र।
स्यादेशमध्यः खलु दक्षिणाग्नेर्व्यत्या सतः प्रागुदगुत्करस्थ॥५॥

यदुच्छ्रितस्योर्ध्वकरस्य कर्तुः शरांस ५ कोरत्निरयं प्रदिष्टः।
जिनांश २४ कस्तस्य तदङ्गुलं स्याद्यवादिकास्तत्रदिभांश ८ काः स्युः॥६॥

पादौ न यूका त्रययुक्तसार्धं विश्वां १२ ४ २६ गुलव्यासदलेन वृत्तम्।
नर्यस्य तन्मध्यगचिह्नकं स्यात्स्मार्तस्य सभ्यस्य तथैव वृत्ते॥७॥

दिशां चतुष्काद्यदरत्निखण्डं १२ कृतैश्चतुर्भिश्च विदिक्स्थपुच्छैः।
शंसस्य मध्या प्रमुखैः समन्तात्सूत्रं प्रबद्धैस्तिमिभिर्युगास्त्रम्॥८॥

मध्ये नेयो दक्षिणाग्नेरुदक् च नन्दाम्भोधि ४ प्राण ५ सङ्ख्याङ्गुलाद्यैः।
तस्माच्चिह्नात्तैर्द्विनिघ्नैरवाङ्स्थवृत्तार्धसज्यौत्तरं स्यात्तदस्य॥९॥

रसारत्निसूत्र द्विपाशे नितम्बो द्विहस्ते चकर्षोङ्गुलानां च षट्के।
द्विकषेङ्गुलानां च षट्त्रिंश ३६ दुत्थात्सकाष्टादशा १८ भवेद्वेदिकार्या॥१०॥

शंसस्य मध्यात्पुरतश्च शङ्कुमरत्निकार्धे १२ विनिवेश्य तस्मात्।
पश्चाद् द्वितीयं त्रिकरान्तरेण तयोर्हि पाशौ हि तथा निवेश्यौ॥११॥

यथा पुरोसौ परतौ नितम्बकौ स्यातां चकर्षेण विकृतेश्च चिह्नम्।
कुर्यादवाङ्गं सन्तिम्बलक्ष्मणीव्यत्यासतोह्युत्तरतो परे तथा॥१२॥

अंसाङ्काभ्यां श्रोणिचिह्नोपयाते सूत्रे दत्वाऽर्थांसकाधस्तथार्धे।
चिह्ने सार्द्धद्वयब्धि ४२ ॥४॥ तुल्याङ्गुलेषु कुर्याच्चाथो तद्वशात्सङ्ग्रहौ द्वौ॥१३॥

एकोनविंशति १९ शराङ्गुल ५ कादिनावा
सार्द्धैकविंशतिमितेन ॥२१॥४॥ च वेदिमध्ये।
व्यासार्द्धके नृरचयेदथ तौ विहाय
वेदिं खनेत्रि ३ चतुरङ्गुलकामधस्तात्॥१४॥

अर्काङ्गुलौ १२ न्नतयुगां ४ गुलविस्तृताद्या
नन्दाऽङ्गुलोन्नतभुजांलविस्तृतान्या।
सन्मेखलाद्वयमिदं त्वथवादिमेक
कुण्डाकृतिर्निगदिता खलु खातवर्जम्॥१५॥

स्मार्त्ताख्यं सभ्यशिखिनोश्च यथावकाशमीशान वायुककुर्मोर्भवतश्च कुण्डे।
इत्यापदेवविहिता खलु कारिकाया संसाधयन्तु सुजनाग्रजमान्यपादाः॥१६॥
शुल्वसूत्रभाष्यकृद्रामवाजपेयिनां वीक्ष्य संमतं मया कारिका कृता इमाः॥१७॥

॥ इति कुण्डानां द्वितीयप्रकारः॥

## ॥ अथ तृतीयप्रकारः ॥

द्वादशैरङ्गुलैर्वृत्तं नर्यं तु विलिखेत्ततः।
षोडशैरङ्गुलैरर्धं दक्षिणाग्नौ तु मण्डलम्॥१॥
विंशत्यङ्गुलमानेन कुर्यादाहवनीयकम्।
रथमात्री भवेद्वेदी सूक्ष्ममानं सुखाय च॥२॥
यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत्।
आगमार्धे भवेच्छङ्कू तदर्धेन निरञ्छनम्॥३॥

॥इति चतुरस्रसाधनोपायः॥

आयामं पञ्चधा कृत्वा षोढा वा गन्तुषष्ठकम्।
सप्तमं वा समं त्रेधा दक्षिणाग्निपरत्रिके॥४॥
पूर्वत्रिकेषु सदनं ब्रह्मणः कथ्यते बुधैः।
एवमुत्तरतो होतुः सदनं पश्चिमत्रिके॥५॥
तथा पूर्वत्रिके तु स्यादुत्करः शुल्वमान इति।
पाकशालान्तरे नर्यवत्स्मार्त्तकुण्डं कुर्यात्॥६॥

**सभ्यस्य तदुक्तं—**

यत्रोपविश्याध्ययनं च कुर्यात्तत्रैव सभ्यस्य खरं च कुर्यात्।
अध्यापनं वा खलु शास्त्रवक्ता संशस्य वागारउदन्नदेशे॥७॥
मेखलाद्वितीयं कार्यं रेखालग्नं तु बाह्यतः।
बाह्यात्षडङ्गुलोच्छ्रधामन्तरा द्वादशाङ्गुला॥८॥
बाह्याद्व्यङ्गुलविस्ताराभ्यन्तरा चतुरङ्गुला।
श्रौतमौपासनं वापि खातयोनिविवर्जितम्॥९॥

वेदिसाधनोपायमाह—

आनीय वेद्याः पश्चात् पूर्वार्धं यावदेव तु।
ऋजुं पूर्वात्पश्चार्धात् यावदेव तु।
द्विगुणीकृत्यतां रज्जु ततः शङ्कून् खातयेत्।
(वा पृथक्त्व तुरीयेण)
तत्पृथगुत्तरीयेण मध्येनां लेख्य सङ्ग्रहः॥१०॥
अथवा श्रोण्यंसस्पर्शिनी पूर्वा परशङ्कु स्पशिनो धृत्वा।
तावती द्विगुणी कृत्वा द्वे चिह्नयित्वा पुनस्तथैव॥
श्रोण्यंसशंकू स्पृष्टा धृत्वा यत्रार्धचिह्नं तत्र शङ्कुः उत्तरस्यां दिशि।
एवं दक्षिणस्यां दिशि शङ्कुरपरो निखनीयः॥
तयोः शङ्क्वनोरन्तरालभूमिं तया चतुः कृतया
रज्वा शङ्कोः परितः परिलेखनमण्डलं कृत्वा सङ्ग्रहः साध्यः॥

॥ इति तृतीयः प्रकारः॥

## ॥ अथ क्षेत्रफलानयनप्रकारः ॥

अत्र तुल्यचतुर्भुजे च तथायते तद्भुजकोटि घातः। क्षेत्रफलषष्टंसप्तत्यधिकपञ्चशती ॥५७६॥ एतावदेव गार्हपत्यदक्षिणाग्निकुण्डेषु क्षेत्रफलं सम्पद्यते।

लीलावत्याम्—

व्यासस्य वर्गे भनवाग्निनिघ्ने ३९२७ सूक्ष्मं फलं पञ्चसहस्र ५००० भक्ते।
रुद्रा ११ हते शक्र १४ हतेथवा स्यात्स्थूलं फलं संव्यवहारयोग्यम्।

अथ व्यासः ॥२९॥०॥५।४। व्यासवर्ग ७३३ ।४। भनवाग्निनिघ्रः ३९२७२८८०२०९ पञ्चसहस्रेण भक्तः। तत्क्षेत्रऽफलं ॥५७६९॥ एवं दक्षिणाग्नौ अनया रीत्या वृत्तक्षेत्रफलमानीय तदर्द्धिकृतफलं जातम् ॥५७६॥ सभ्यावसथ्यागार्हपत्यवत्। वृत्तानयनप्रकारमाह। अयुतगुणादिष्टफला ५७६००० यतुः पञ्चाष्टसप्ततिः ॥७८५४॥ तल्लब्धं ७३३ तस्य मूलं २७ ।०।५।२ अर्धचन्द्रे त्वयमेव भाजकमर्द्धीकृत्य ॥३९२८॥ अनेन भक्तेन लब्धं १४६६ अस्य मूलं ३८।२।३। अथवा गणितानभिज्ञानां सुगममाह। आहवनीय समचतुरस्त्रं कृत्वा चतुरस्त्रे कर्णानयनसूत्रम्। तत्कृत्योर्योगपदं कर्णः इति ज्ञात्वा तदुक्तम्।

मध्यात्कोट्यामपायम्य पार्श्वतः परिकृष्य तत्।
अतिरिक्ततृतीयेन सह मण्डलमालिखेत्॥२॥

अनया रीत्या गार्हपत्यमण्डलकरणम्।

दक्षिणाग्निस्तु—

आयाममक्ष्णयायम्य मध्यास्यतु विशिष्यते।
तृतीयेन सह द्वेधा मध्ये चिह्नं तु कारयेत्।।२।।

शङ्कोरुत्तरतो रज्जुं कृत्वा चिह्नं तु लक्षयेत्।
आलिख्य मण्डले तस्मिन्नुत्तरार्द्धे परित्यजेत्।।३।।

आयाममक्ष्णयायम्य पार्श्वतःपरिकृष्य तत्।
अतिरिक्ततृतीयेन सह मण्डलमालिखेत्।।४।।

।। इति कुण्डवेदीकरणप्रकारः ।।

## ।। अथागारकरणप्रयोगः ।।

देशकालौ सङ्कीर्त्य करिष्यमाण श्रौताधानार्थं विहारनिर्माणकर्तुं गणपतिपूजनं कृत्वा विश्वकर्मणे रज्जोः शङ्कोः पृथ्वीपूजनं करिष्ये। यथामिलितोपचारैः पूजनं कृत्वा पूर्वोक्तप्रकारेण वितानं साधयित्वा। अत्र प्रक्रमशब्देन यजमानपद-हस्ताङ्गुलप्रमाणेन कृत्वा। तदुक्तं कात्यायनसूत्रे दानत्वान्वचारम्भणेवर-वर्णवृतप्रमाणेन यजमानं प्रतीयात्। **अथात्र विकल्पोच्यते**। ऋतु नक्षत्र संभार सामवपन चातुष्प्राश्य जागरेणेध्म पूर्वार्धान्वारम्भ सार्पराज्ञीर्नर्वा कुर्यादिति सूत्रे। ऋतु नक्षत्रानादरं न प्रदर्शितम्। आधानारणिमन्थनाज्जातं वा वैश्यस्य कुलाम्बरीषमहानसाद्वा अग्नेराहरणम्। यजमानपत्न्याश्च दिवा वा रात्रौ भोजनम् गोमयपिण्डे ह्यग्निधारणं काष्ठैर्वा। उषः काले तच्छमनं तद्धारणं वा। उपरि हिरण्यं धारयिष्ये अधस्ताद्वा। अष्टासु विक्रमेष्वाहवनीयाधानम्। एकादश द्वादश मत्यासु वा। उदिते मन्थनमनुदिते वा। **जाते वरदानम्**। वरशब्देन येभ्यो दीयते तदभिलषितं वस्तु एवं सर्वत्र वरदानम्। **अश्वपरिक्रमणाम्**। अश्वाभावेऽनड्वान् गावो दक्षिणाभूयसीं वा त्रिरात्रमग्निधारणम्। षड्रात्रं द्वादशरात्रं वा। पूर्णाहुत्यन्तमाधानमिष्ट्यन्तं वा आधानादिनात्मानादिवरदानान्तं ब्रह्मौदनं संवत्सरं वा पुरस्तात् कुर्यात्। ततः सर्वानादधीत। ततः रात्रौतमरात्र्या एवाशनाजबन्धनं जागरणं वाग्यमनं संवत्सर एवं संस्कृताग्नेःसकाशात् सर्वान् गार्हपत्याहवनीयदक्षिणाग्नी सभ्यानादधीत। अस्मिन् पक्षे आरण्यभावः। तत्राधानोत्तरं गार्हपत्यनुज्ञाते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा तत्प्राशनम्। **चतुर्णां विहरेत्**। होमार्थं निहृतं परित्यज्य पुनः स्वयोन्याहरणम्। व्युत्थाय[illegible]म्य

स्थापिताग्निदक्षिणावासं हरेदन्वाहार्यपचनं चेत्। दक्षिणाग्निमिमं कर्तृमिष्टश्चेदस्मिन् पक्षे दक्षिणाग्निमादधीतेह्यस्मिन्कालेऽयमेव तत्र स्थाप्य:। सदा धार्यश्च स: चातुष्प्राश्यं न वा।। इति।

## ।। अथ चातुष्प्राश्यपचनविधि: ।।

तत: अरणीप्रदानानन्तरं अस्तमिते सायं सन्ध्यां विधाय स्वकीयं परकीयं वाऽजं, गार्हपत्यागारे बध्नाति। यदि स्वकीयो भवति तदा प्रात: कर्मणि संस्थिते तदजमग्नीध्रे दद्यात्। स्वकीयाभावे दानाभाव:। तत: आरक्तानडुहे चर्मणि प्राग्ग्रीवे चत्वारो हविष्यपात्राणि वृष्टतित्रयं पूर्णानि पात्राणि मिमींते प्रक्षिपति। ततस्तान् तण्डुलानोप्य त्रि: प्रक्षाल्य गार्हपत्यस्थापिताग्नौ अधिश्रित्य चातुष्प्राश्यसंज्ञमोदनं पचति पचेत् पक्व इति ज्ञात्वा तत: उद्वास्यौदनमध्ये गर्त्तं कृत्वा। गर्त्तमध्ये घृतमासिञ्च्य तेन घृतेनाक्ता आश्वत्थीस्तिस्र: समिध: प्रादेशमात्री हस्ते कृत्वा ताभ्य एकामादायोत्थाय तस्मिन्नग्नौ समिधाग्निं दुवस्यतेति मन्त्रेणादधाति। तत: अध्वर्युरुपविश्य हस्तस्वरेण सुसमिद्धायेति जपति। तत: उत्थाय द्वितीयां तन्त्वा समिद्धिरितिमन्त्रेणादधाति। उपत्वेति तृतीयामत्र समिद्वतीभिर्घृतवतीति श्रुते:। ततो यजमानश्चतुर्णामृत्विजां ब्रह्मादिक्रमेण पादौ प्रक्षाल्योपविश्येतान् गन्ध-माल्यादिभिरभ्यर्च्यान्नं सङ्कल्प्य भोजयेत्। इदमर्चनं छन्दोभ्य: स्वाहा। तत्र छन्दांसि एतद्व: पाद्यम्। छन्दोभ्य इदमासनं पूजनम्। इदमन्नं परिवेष्यं परिवेश्यमानं चातृप्त्यै छन्दोभ्य: स्वाहा छन्दांसि प्रीयन्ताम्। छन्दांस्यनेन प्रीणीम इति श्रुते:। ततस्ते ब्रह्मादयश्चत्वार ऋत्विजस्तमोदनं प्राश्नन्ति। ततोऽशनानन्तरं शुद्धो भूत्वाऽध्वर्यु: स्फ्यं गृहीत्वा राद्धस्ते ब्रह्मोदन इत्याह। ततो यजमानो वरं ददाति। अस्य चातुष्प्राश्यपचनकर्मसमृध्यर्थं यथाशक्तिसुवर्णद्रव्यादिवरं ब्रह्मादिभ्यो ऋत्विग्भ्योऽहं सम्प्रददे। ततस्तैर्विभज्य समं ग्राह्यम्। ततो यजमानपत्न्याश्च भोजनम्। अस्मिन्पक्षे चातुष्प्राश्यपचनाभावस्तस्मिन् काले उक्तविधिना अग्निस्थापनान्तं कृत्वा पुनरुपसंस्थापितमग्निं स्वस्वप्रयत्नोपविशमेत्।। इति।

## ।। अथाधानप्रयोग: ।।

तत: पूर्वमेवं यजमानेन देहशुद्ध्यर्थं प्रायश्चित्तं कृत्वा उक्तदिन आरम्भणीयं तदुक्तं कृतावस्थस्य गतेथ वत्सरे केनापि कार्येण तदाधिकारिण:। श्रौतं तदाधानम् कुर्वीत सन्कृच्छ्रत्रयं चात्मविशुद्धये स्मृतम्।।१।। ततो यजमान: सुस्नात: पत्नी च देवतार्चनादि निर्णेजनान्तं वैश्वदेवं कृत्वा ब्राह्मणान् नमस्कृत्य कुशास्तृते पीठासने प्राङ्मुख उपविश्य पत्नी तद्दक्षिणात् उपविश्य कुशोपग्रहो बद्धशिखी

सोत्तरीय आचम्य प्राणानायम्य गणेशकुलदेवतादीन्नमस्कृत्य साक्षतहस्तैः सुमुखश्चैकदन्तश्चेत्यादि स्मरणपूर्वकं देशकालौ स्मृत्वा तत्सत् परमेश्वरप्रीतये नित्यनैमित्तिककाम्यकर्मानुष्ठानसिद्धयर्थं श्रौताधानं सायं प्रातरग्निहोत्रहोमं कर्तुं गणेशपूजनं स्वस्तिवाचनं मातृकापूजनं वसोर्द्धारापूजनपूर्वकं नान्दीश्राद्धमहं करिष्ये। श्राद्धं समाप्य। पुनर्देशकालौ सङ्कीर्त्य परमेश्वरप्रीत्यै सायं प्रातरग्निहोत्रहोममहं करिष्ये। पुनर्देशकालौ स्मृत्वा दर्शपौर्णमासादियागानुष्ठानार्थमग्न्याधेयमहं करिष्ये, पुन: श्रौताग्निनाधातुं ऋत्विजो वृणे, इति सङ्कल्प्य अथवा देशकालकीर्तनान्ते श्रौतानग्नीनाधातुं गणेशपूजनादि० श्राद्धान्यहं करिष्ये। आधानं सर्वं समाप्य होमकालप्राप्तौ। देशकालौ सङ्कीर्त्य सायं प्रातरग्निहोत्रहोमं कर्तुं गणेशपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं करिष्ये। इति सङ्कल्प्य युगपत् पृथक् वा कुर्यात्। ततः ऋत्विग्वरणम्। उत्तरतोपचारो यज्ञ:। सर्वकर्मविहारस्योत्तरत: कार्यम्। प्राच्युदग् वा सर्वाणि कर्माणि प्राक्संस्थानि उदक्संस्थानि कुर्वतीति परिभाषासूत्रात् ततः ब्रह्मादिक्रमेण प्राङ्मुखोदङ्मुखोपविश्य ऋत्विजो दक्षिणजान्वालभ्य अमुकगोत्रोमुकप्रवरोऽमुकशर्मा नित्यनैमित्तककाम्यानुष्ठानसिद्धयर्थं परमेश्वरप्रीतये श्रौताग्निनाधास्ये तत्रामुकगोत्रामुकशर्मन् मे त्वं ब्रह्मा भव। एवमेव होताध्वर्युरग्नीत्। अथवा अमुकगोत्रामुकप्रवरान्वितामुकशर्माणं यजमानोऽहं ब्राह्मणं श्रौताधानाख्ये कर्मणि ब्रह्मत्वेन त्वामहं वृणे। वृतोस्मीति प्रतिवचनम्। एवमेव श्रौता० होतृत्वेन त्वा० अध्वर्युत्वेन त्वा० आग्नीध्रत्वेन० ते मधुपर्कादिना पूजनीया:०। यजमानस्यापि अहतवस्त्रं समन्त्रकं धार्यम्। गन्धादिमाङ्गल्यं सम्पादयेत्। आशीश्च दद्यात्। आशीर्वादमन्त्रा:। अग्ने गृहपते सु० वर्त्तें। स उपतिष्ठतेऽ० ग्ने गृहपते सुगृहपतिस्त्वयाग्नेहं गृहपतिना भूयासं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया इति नात्र तिरोहितामिवास्त्यस्थूरि णौ गार्हपत्यानि सन्त्वित्यनार्तानि नौ गार्हपत्यानि सन्त्वित्येवै तदाह शतं हिमा इति शतं वर्षाणि जीव्यासमित्येवै तदाह तदप्ये तद्ब्रुवन् नाद्रियेता हि भूयांसि शताद् वर्षेभ्य पुरुषो जीवति।।१।। ततो यजमानः वैकल्पिकस्मरणम्। स्वशक्त्या यथासम्भवं कार्यं तत्र वसन्तेऽग्न्याधानम्। ग्रीष्मादीनामनुस्मरणम्। कृत्तिकादिस्वग्नी आधास्ये। महानसाग्नेराहरणम्। यजमानपत्न्याश्च रात्रौ भोजनम्। गोमयपिण्डैरग्नेर्धारणम्। उष:काले तच्छमनम्। सम्भारात् सम्भरिष्ये। उपरि हिरण्यं धारयिष्ये अष्टासु विक्रमेच्चाहवनीयाधानम्। उदिते मन्थनम्। जाते वरदानमश्वपरिक्रमणं अश्वाभावे अनड्वान्। अश्वाभावे प्रैषाभाव:। इध्माग्रमालभ्य द्यौरिवेति जप:। सार्पराज्ञीरुपस्थानम्। गावो दक्षिणा त्रिरात्रमग्निधारणम् पूर्णाहुत्यन्तमाधानमिष्ट्यन्तं वा। एतान् वैकल्पिकपदार्थास्ते

अध्वर्यु प्रत्ययेनावधारिता। ततो वपनपक्षे श्रौताग्न्याधेयाङ्गं वपनं करिष्ये। इति सङ्कल्प्य वपनं स्नानं तदङ्गं च कृत्वा अहते वाससी परिधाय पत्नीं च ततः अध्वर्युः, ऋत्विग्यजमानैः सह महानसात्समृद्धमग्निं मृत्पात्रे गृहीत्वा, ऋचं वाचं शान्तिमन्त्रं मङ्गलगीतवाद्यपुरःसरं यजमानपत्न्यान्वारब्धान्तमग्निं गार्हपत्यसमीपमानीय तत्र खरे पञ्चभूसंस्कारान् कृत्वा आत्माभिमुखं स्थापयेत्। ततः सूर्यास्तसमये आहवनीयपूर्वस्यां दिशि यजमानः प्राङ्मुखोदङ्मुखो वा उपविश्य सोयं ग्रहः इमं मन्त्रं जपेत्। ॐ देवाः पितरः पितरो देवा योहमस्मि स सन्यजे। यस्याहमस्मि नतमन्तरयामि स्वंमन्तरयामि स्वमं इष्टं स्यं श्रोत्रं स्वं हुतमस्तु। अनेन देवान् पितृश्चौपह्वयतीत्यर्थः। ततो यजमानः पूर्वेणाहवनीयागारे प्रविशति। गार्हपत्यस्य दक्षिणद्वारेण पत्न्योपविशति। अत्रागारप्रकरणपक्षाभावे द्वारप्रवेशाभावः। केवलाग्निशालाप्रवेशः। ततोऽध्वर्युः पूर्वोक्तलक्षणेन अरणी समीपमानीय कुशास्तृतायां भूमौ यजमानपत्न्योः पुरस्तात्प्रागग्रे स्थाप्य अहतवस्त्रद्वयेन परितो वेष्ट्य आरणीयजमानं ध्यानं च कुर्यात्। अरणीमूलभागादारभ्याग्रपर्यन्तं दक्षिणसव्यहस्ताङ्गुष्ठाभ्यां मानं कार्यम्। प्रथमादि चतुर्विंशति अङ्गुलैर्दीर्घ्यमानम्।।२४।। एवमुत्तरारण्ये मानम्। प्रथमादिषडङ्गुल ६ विस्तारमानम्। प्रथमादिचतुरङ्गुलमुच्छ्रायमानम्। उत्तानाधरारणी प्राक्शिरामूलादारभ्य दक्षिणसव्यहस्ताङ्गुष्ठापर्वणाप्राक्संस्थमुदक्संस्थं क्रमेण कार्यम्। ततः अधरारण्या अग्रान् मूलपर्यन्तं अवयवकल्पनम्। ततोंऽगुलमेकं शिरः। ततोंऽगुलमेकं नेत्रम्। ततोंऽगुलमेकं मुखम्। एकाङ्गुला ग्रीवा। द्वयमङ्गुलं वक्षः। ततोंऽगुलमेकं हृदयम्। अङ्गुलत्रयं हृदयं ततोङ्गुलत्रयमुदरं एकाङ्गुला कटी। द्वयमङ्गुलं बस्ती। द्वे अङ्गुले योनिः। अङ्गुलचतुष्टयमूरू। त्रयमङ्गुलं जङ्घे। एकमङ्गुलं पादौ। इति सावयवमरणीरूपं ध्यात्वा निर्दिशेत्। श्रौते कर्मसाधनभूतस्याग्ने इमे अरणीयोनिरूपे तत्रेयमधरा इयमुत्तरा हस्तेन निर्दिशेत्। गन्धादिभिः सम्पूज्य देशकालौ सङ्कीर्त्य मम यजुर्वेदस्य माध्यन्दिनी वाजसनेयिशाखाध्यायिनः अमुकशर्मणः श्रौताग्न्याधानीयफलप्राप्तये अरण्योः पूजनमहं करिष्ये। अं अग्नेर्योनिरूपाभ्यामरणीभ्यां नमः पाद्यमर्घ्यमाचमनं मधुपर्कं पुनराचमनं वस्त्रादिकं च समर्पयेत्। ततो नमस्कारः। अध्वर्युः यजमानाय अरणीद्वयं प्रयच्छति। अध्वर्युहस्ताभ्यां धृत्वा श्रौतकर्मसाधनभूतस्याग्नेः योनिरूपे इमे अरणी तत्रेयमधरा इयमुत्तरा गृह्यतामिति तद्धस्ते प्रयच्छेत्। इमानि यज्ञपात्राणि गृह्यतां परिगृह्यते। पत्नी तद्धस्तादधरारणिं गृहीत्वाङ्के निदधाति। यजमानोप्यङ्के निधाय पुनः कुङ्कुमपुष्पैः सम्पूज्य ततो यजमानाभ्यां गन्धादिमाङ्गल्यं विधाय आशिर्दद्यात्। तत्र मन्त्रः ध्रुवासि ध्रुवोऽयं जाया। अथैनमग्निमध्ये वाचयति।

ध्रुवासि ध्रुवोयं यजमानोस्मिन्नायतने प्रजया पशुभिर्भूयादिति वै वयं कामं कामयते सोस्मै कामः समृद्ध्यते। ततो अरणीद्वयं नमस्य पीठे स्थापयेत्। इत्यरणीप्रदानम्। ततः चातुष्प्राश्यपचनपक्षे पूर्वोक्तविधिना कृत्वा अथवा संवत्सरपर्यन्तं कृत्वा अथवा न कुर्यादिति पक्षत्रयं सूत्रे उक्तत्वात्। नक्षत्राद्यनादरेपि अग्निस्थापना भवत्येव। सूत्रे उक्तत्वात्। ततः परिश्रमनाशार्थं रात्रौ किञ्चित् निद्रां विधाय पुनरुषसि स्नानं सर्वैः कृत्वा यजमानो दीक्षावस्त्रं परिधत्ते पत्नी च। ततः अध्वर्युः व्युष्टायामरुणोदयवेलायां स्थापितमग्निं स्वप्रयत्नोपशमेत्। ततः अध्वर्युः वाचं यच्छ यजमानं प्रेषयति। ततो यजमानः पूर्णाहुतिहोमपर्यन्तं वाग्यतो भवति। ततः अध्वर्युः गार्हपत्यखरे (कुण्डे) पञ्चभूसंस्कारान् कृत्वा पुनर्वज्रेण त्रिरुल्लिख्य यजमानेनान्वारब्धे पुनः खरः कार्यः। ततः अस्वूत्कराणां मध्ये निवापं कृत्वा वृत्तं सम्पादनीयम्। खरस्य परितः पञ्चाशतशर्करासंलग्ना निदधाति।।५०।। तत आहवनीये पञ्चभूसंस्कारादिशर्करान्तं, अत्र शर्कराणां त्रिसप्ततिः।७३।। उषादिसम्भारैश्चतुरस्रमाहवनीयं कुर्यात्। ततो दक्षिणाग्निखरे एवम्। तथैवात्र द्वाविंशतिशर्करा। अर्द्धचन्द्राकारं दक्षिणाग्निखरम्। गार्हपत्यवत्सभ्यकरणं तत्रापि पञ्चाशत्शर्करास्ततो अध्वर्युराग्नीध्रं प्रेषयति। अश्वमानीय पुरस्तात् प्रत्यङ्मुखं स्थापयति। ततः उदिते मन्थनम्। ततो गार्हपत्यस्य पश्चात् दर्भास्तृतायां भूमौ अधरारणीमुत्तरायां निधायोत्तरारणेरीशानादिक्स्थमष्टाङ्गुलं प्रथमं छित्वा चात्र बुध्ना गर्तमध्ये प्रवपति। ततो अधरारणेः मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा चतुरङ्गुलमन्तराले भवति। तन्मध्ये अग्निमन्थनार्थं कृत्वा प्राच्यामग्निनिःसरणाय वाहिनीं कृत्वा। ततो यजमानः प्राङ्मुखं यन्त्रं धृत्वा प्रत्यङ्मुखं पत्नी वाध्वर्युर्मन्थयति। अग्नौ जाते यजमानः अध्वर्यवे वरं ददाति। अध्वर्योर्वरं तुभ्यमहं सम्प्रददे। ततस्तमग्निं शुष्कगोमयचूर्णावकीर्णखर्परे निधाय तं जातमग्निमभिलक्षीकृत्य यजमानो मुखेन श्वासं प्रेरयति फूत्कारं करोति। प्राणममृतेदधेतिमन्त्रेण। ततोऽग्निं यज्ञकाष्ठैर्ज्वलन्तं कृत्वा गार्हपत्यखरे स्थापयति।

तत्र मन्त्रः। ॐ भूर्भुवः आङ्गिरसानां त्वा देवानाम् इति स्थापनमन्त्रः। येषां च भृगुप्रवरस्तेषां भृगूणान्त्वा देवानि। भृग्वाङ्गिरोव्यतिरिक्तानामादित्यानां त्वा देवानामित्येव भवति। ततो द्वाविंशतिइध्मकाष्ठ त्रियूनं बध्वा गार्हपत्ये मूलभागे अधिश्रयेत्। ततोबृहत्खर्परे गृहीत्वा आहवनीयं प्रति नयेत्। अश्वस्य पुरस्तादग्नेतो नीयते। यजमानो धूमं गृह्णन्ननुगच्छति पत्न्या सह अध्वर्युरत्र पक्षे वामदेव्यं गायति। कया नश्चित्र इत्यूचे। ततो अध्वर्युरिध्माग्निना अश्वस्य पदं द्विवारमुपस्पृश्य दक्षिणपादेन सम्भारानधिष्ठाप्य तृतीयेनोपस्पर्शनानिस्थापनम्।



ॐ भूर्भुवः स्वः आदित्यानां त्वा देवानां व्रतपते व्रतेनादधे इति। पक्षे ब्रह्मणो

बृहत्सामगानम्। मूर्द्धानन्दिव इति। ततो यजमानः अग्नेः पुरस्तात्परिक्रम्योपविश्य इध्मस्य पूर्वार्धं गृहीत्वा द्यौरिवेति जपः। ॐ द्यौरिव० दधे। तत उत्थाय आयं गौरित्याद्याभिस्तिसृभिः सार्पराज्ञिभिरुपतिष्ठते। ततो अध्वर्युःगार्हपत्यात्खर्परे अग्निमादाय ज्वलन्तं दक्षिणाग्निखरे स्थापयति। ॐ भूर्भुवः आदित्यानां त्वेति देवयाज्ञिके। तूष्णीं स्थापयति इत्येके। ततः सभ्यस्य मन्थनं मथित्वा खर्परे निष्कास्य ततो यजमानः गान्दीव्यध्वमिति ऋत्विजः प्रेरयति। ततो ब्रह्मादयो ऋत्विजो विहारस्योत्तरतः आनडुहचर्म आस्तीर्य तस्योपरि अधोमुखं कांस्यपात्रं निधाय पञ्चकपर्दिकान् हस्ते गृहीत्वा गोपनीकृत्य समेन जयामि विषमेन जीयसे इत्युक्त्वा कांस्यपात्रस्योपरि चतुर्वारं प्रक्षिपति। तदलाभे शकलादिभिर्द्युतं कुर्वन्ति न यजमानः। ततस्ते गाञ्च दद्यात्। गांपर्णीकृत्य साङ्गतासिद्ध्यर्थं ब्रह्मादयः ऋत्विजः इयं वो गौः प्रतिगृह्यतां द्यौस्त्वेति प्रतिगृह्णामि। ततो दारुभिर्ज्वलन्तं सभ्याग्निं सभ्यखरे स्थापयति। ॐ भूर्भुवः आदित्यानां त्वेति। अतः प्रभृति सभ्यस्य धारणमुपस्थानं च सदा कार्यम्।

अत्राग्निनामानि—

ब्रह्मा वै गार्हपत्यस्य दक्षिणाग्निस्तु ईश्वरः।
विष्णुराहवनीयस्यादग्निहोत्रे त्रयोऽग्नयः।।

ततः अध्वर्युः पक्षे श्यैतवारवतीयज्ञा यज्ञियानि गायति प्रेष्यति। ब्रह्मा गायति वा। ततः सर्वानग्नीन् प्रदक्षिणं परीत्याश्वमुदगुत्सृजति। ततोऽध्वर्युः पूर्णाहुतिं जुहोति। गार्हपत्योत्तरत आंज्यस्थाल्यामाज्यनिर्वापः गार्हपत्येधिश्रित्य पर्यग्निकरणम्। दर्भैः खादिरं स्रुवं वैकङ्कतीं स्रुचं सम्मृज्य उद्वास्य साग्राभ्यां कुशाभ्यामुत्पूय अवेक्ष्य स्रुवेण द्वादशचतुरो वा गृहीत्वा स्रुचं सम्पूर्णयास्कन्दयन्नुपरि समिधं धारयन्नाहवनीयङ्गत्वा समिधमाधाय उपविश्य दक्षिणं जान्वाच्य यजमानान्वारब्धः स्वाहेति मन्त्रेण जुहोति। इदमग्नयेति त्यागः।

देवयाज्ञिके विशेषः—

आहवनीयस्योत्तरत उपविश्याहवनीयं परिस्तीर्य उत्थाय समिधमाधायोपविश्य जुहुयात्। अस्याः पूर्णाहुतेः समृद्ध्यर्थं दक्षिणां ब्रह्मणे अध्वर्यवे चाहं सम्प्रददे। यजमानस्य वाग्विसर्गः। ततोऽध्वर्युः पूर्णाहुत्यन्ते तूष्णीमग्निहोत्रहोमः। अत्रैकस्मिन्नेव काले सायं प्रातर्वितितस्य प्रयोगद्वयविधानात्कालभेदा अवादगानि-परिस्तरणपर्युक्षणादिनी सकृदेव कर्त्तव्यानि। प्रधानाहुतयश्च भेदेन। तत्रैव कर्त्तव्यम्। प्रातर्होमकालसन्निकर्षात्तत्र प्रातर्होमधर्माः। होमाश्चाध्वर्युकर्तृकाः। तत्रायं क्रमः। देशकालौ सङ्कीर्त्य आधानाङ्गभूतं समस्तहोममहं करिष्ये। ततो

यजमानपत्न्याश्चान्तरेणापराग्निं गत्वा प्रदक्षिणमाहवनीयं परीत्योपविशति तूष्णीमेवाचमनम्। पत्न्याप्येवमागत्य स्वस्थाने उपविश्याचामति। वाचं यच्छति च अध्वर्यु:। अपरेणाहवनीयं कूर्चं निदधाति कुशान् वा। तत: आहवनीयादीनां त्रयाणां परिस्तरणम्। तत: प्रथमं गार्हपत्यं पर्युक्ष्य दक्षिणाग्निं पर्युक्ष्य गार्हपत्याहवनीयपर्यन्ता तोयधारा। आहवनीयं पर्युक्ष्य पूर्वेणाहवनीय-होमद्रव्याहरणम्। गार्हपत्ये अधिश्रित्य तृणेनावज्योत्य आसिञ्च्य पुनरवज्योत्य त्रिरुद्वास्य स्रुक्स्रुवौ प्रतप्य पाणिना सम्मार्ज्य पुन: प्रतप्य उन्नयति यजमानस्तिष्ठन्। ॐ उन्नप हस्तं प्रदर्शयेत्। चतुर: स्रुवान्नुनयति। पञ्चावर्तिन: पञ्चस्रुवान्नुनयति तदुक्तं—

जामदग्न्यावत्सविदा आर्ष्टिषेणास्तथैव च।
भार्गवाश्च्यवना और्वा पञ्चावर्तिन ईरित:।।

एवमाज्यादि चतुर्ग्रहणमुक्तम्। तत्र पञ्चस्रुवग्रहणम्। सर्वत्र पुरोडाशेऽपि पञ्चावदानरणम्। मध्यात्पूर्वार्द्धात्पश्चादुत्तरतो द्वे। स्रुग्दण्डोपरि अङ्गुल्यन्तरितां समिधां धारयेत्। मुखमात्रे धारयन् गच्छति। मध्ये निगृह्य उद्गृह्यावहनीयं गत्वोत्तरत उपविश्य सव्यहस्ते स्रुचं गृहीत्वा तूष्णीं समिधमाधाय दक्षिणं जान्वाच्य स्वल्पं जुहोति। अग्निं ध्यात्वा पूर्णाहुतिहोम:। इदमग्नये न ममेति यजमानत्याग:। शेषस्य पात्रान्तरे कृत्वा तत्रैव स्थापनम्।

पुनर्गार्हपत्यं गत्वा चतुर्वारं गृहीत्वा समिधं धृत्वा तथैवागत्य समिधं हुत्वा सूर्यं ध्यात्वा होम:। सूर्याय न ममेति त्याग:। उभयशेषं समासिञ्च्य कूर्चे निधाय गार्हपत्यमवेक्षते प्रजापतिं ध्यात्वा तन्त्रेणोत्तराहुति:। प्रजापतये न मम। द्विप्रकङ्प्य कूर्चे निदधाति। स्रुवं परिमृज्य कूर्चे निर्माजनम्। सक्मुखप्रणालिका-द्रव्यलिप्तामुन्मृज्य लिप्तहस्तं कूर्चे निमृज्यादित्यर्थ:। पुनस्तथैव स्रुचं प्रमृज्य कूर्चाद्दक्षिणभागे भूमौ उत्तानहस्तं निदधाति। अपां स्पर्श:। ततो गार्हपत्ये स्रुवद्वयं गृहीत्वा पात्रान्तरेण जुहोति। इदमग्नये गृहपतये रयिमते पुष्टिपतये न मम। तन्त्रेणोत्तराहुति:। इदं प्रजापतये न मम। एवं दक्षिणाग्नौ इदमग्नये नादायान्नपतये॰ तन्त्रेणोत्तराहुति:। इदं प्रजापतये॰। स्रुक्स्थितं शेषं बहिर्निष्काश्य अनामिकया प्राश्याचम्य पुनरनामिकया प्राश्याचम्य स्रुक्स्थितं शेषं पात्रान्तरे हस्ते वा कृत्वा प्राश्यपात्रं हस्तं सकृन्निर्लेढ्याचम्याहवनीयस्य पश्चादुपविश्य स्रुचमद्भि: सम्पूर्याहवनीयस्योत्तरत उत्सिञ्चति। द्वितीयां सम्पूर्योत्सिञ्चति। तृतीयां सम्पूर्य ईशान्यामुदीक्षति उच्चै:। चतुर्थीं सम्पूर्य कूर्चस्थाने त्रिंनिसिञ्चति। प्राक्संस्थं स्रुक्स्रुवमाहवनीये प्रतप्य वेदीमध्ये निधाय। ततो गार्हपत्यदक्षिणाग्न्याहवनीयेषु

क्रमेण समिधमादधाति। पुनः पर्युक्षणं पूर्ववत्। नाग्नेरुपस्थानं होममात्रोपदेशात्। ततः पत्नीयजमानवाचं विसृजति। आचम्याहवनीयं प्रदक्षिणं परीत्य गार्हपत्यदक्षिणाग्नि अन्तरेण यथाप्रविष्टं निष्क्रामतः। पूर्णाहुतेरन्ते एवं विधिस्तूष्णीमग्निहोत्रविधिः।

।। इति पूर्णाहुत्यन्तमाधानम् ।।

## ।। अथ इष्ट्यन्तमपि भवति ।।

तथा च सूत्रं द्वादशाहान्ते तनूहवींषि निर्वपति मासे द्वितीये तृतीये षण्मासे संवत्सरे सद्यो वा न वा इष्ट्यन्तपक्षे ब्रह्मवरणाभावः। जातत्वात् चतुरासनम्। ब्रह्मासनमन्त्रेकमहँदैधिषव्य इत्यादिना संस्कृत्योपविशति। भूतपतेत्यादि-मन्त्रस्याभावः। नाग्न्युद्धरणं तनुहवींषि देवतापदमात्र उपांशु त्रिस्विष्टिषु अन्वाधानं त्रिष्वेव। षड्द्वादशचतुर्विंशतिर्वा भूयसींश्च गावो दक्षिणा त्रिष्विष्टिसु एतान्वै विशेषः इति।

## ।। अथ पवमानेष्टिः ।।

ततो देशकालौ सङ्कीर्त्य आधानाङ्गभूतमग्नये पवमानैकदैवत्येतया प्रथमया तनूहविष्येष्ट्याहं यक्ष्ये। अग्नेरन्वाधानम्।।३।। षट्समिधो गृहीत्वा, अग्निं पवमानमष्टाकपालेन पुरोडाशेन सद्योहं यक्षे। तत्र पञ्चदशो वज्रः। व्रीहिभिर्यागः। गावो दक्षिणा ममाग्नेपक्षः। उत्तमे काले व्रतोपायनम्। एते वैकल्पिकपदार्थास्ते मया ऋत्विक् प्रत्ययेनावधारिताः। ब्रह्मवरणाभावः। प्रणीताप्रणयनादिकर्मापवर्गान्तं प्राकृतम्। ग्रहणे। अग्नये पवमानाय जुष्टं गृ०। प्रोक्षणे। अग्नये पवमानाय त्वा जुष्टं प्रोक्ष्य०। प्राणदाने अग्निं पवमानम् गच्छ। आवाहने उपांशुः। अग्निं पवमानमुच्चैः आवाहनं पञ्चदश वज्रेणेत्यवबाधनम्। उत्तमे प्रयाजे अग्निं पवमानं स्वाहा। अग्नये पवमानाय देवेभ्यः स्वाहा। वार्त्रघ्नवाज्यभागौ पौर्णमासवत्।

प्रधानयागे—अग्नये पवमानायानुब्रूहि अग्न आयूषि पवस० छुनो० अग्निं पवमानं यज। ये यजामहे अग्ने पवस्व स्वपाऽ अस्मे वर्च्चः सुवीर्यम्। दधद्रयिम्मयिपोषां वौषट्। इदमग्नये पवमानाय०। गायत्र्या विकितवत्यौ संयाज्ये। अग्नये स्विष्टकृतेनु०। अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्। ये यजा०। पवमानस्य प्रिया० देवा० हविरिमोतं त्वामज्मेषु वाजिनं तन्वाना अग्ने अध्वरम्। वह्निं होतारमीडितां वौ०। अत्र चतुर्द्धाकरणं, एकत्वान्निर्देशाभावः। दक्षिणालम्भने गौः। अग्नेः पवमानस्योज्जु०। अग्निः पवमानस्तमपनुदन्तु। सूक्तवाके अग्निः पवमानमजुषता० कृत। शेषं प्रकृतिवत् कर्मापवर्गान्तं समानम्। इति।

## ।। अथ द्वितीया पावकेष्टिः ।।

देशकालौ॰ द्वितीयया अग्निपावकमग्निशुचिं द्विदैवत्ययादिहविषा तनुहविषेष्ट्याहं यक्षे। अग्निपावकमष्टाकपालेन पु॰। अग्निं शुचिमष्टाकपालेन पु॰। शेषं पूर्ववत्। ग्रहणे अग्नये पावकाय जुष्टं गृ॰। अग्नये शुचये जुष्टं गृ॰। प्रोक्षणे अग्नये पावकाय त्वां जुष्टं प्रो॰। अग्नये शुचये प्राणदाने। अग्नेः पावकं गच्छ। अग्निं शुचिं गच्छ। आवाहने अग्निं पावकमावह। अग्निं शुचिमावह। पञ्चमे प्रयाजे ये यजामहे। स्वाहाग्निं पावकं स्वाहाग्निं शुचि स्वाहा॰। अग्नये पावकायाग्नये शुचये देवेभ्यः अ॰। वृधन्वतावाज्यभागौ दर्शवत्। प्रधानयागः। अग्नये पावकायानुब्रूहि। अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान्वक्षियक्षिचों।।३।। अग्निं पावकं यज ये यजा॰ स नः पावक दीदिवोग्ने देवाँ २।।ऽ इहा वह। उप यज्ञं हविश्च नां वौ३षट्। इदमग्नये पावकाय न॰। अग्नये शुचयेनुब्रूहि॰ अग्निः शुचिर्वृततमः शुचिर्विप्रः शुचिः कविः शुचि रोचत आहुतोम् ॐ अग्निं शुचिं यज ये यजामहे॰ उदग्ने शुचयस्तव। शुक्राभ्राजन्त ईरते। तव ज्योतींष्वर्चपावौ। इदमग्नये शुचये॰ अग्निवत्यौ संयाज्ये। अग्नये स्विष्टकृतेनुब्रूहि। अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वस्योयेऽग्नेः पावकस्य प्रि॰ अग्ने शुचेः प्रिया॰ हविस्त्वं ह्यग्ने अग्निना विप्रो विप्रेण संछता सखा सख्या समिध्यसावौ॰ इदमग्नये स्विष्टकृतये॰ अत्र चतुर्द्धाकरणम्। गौर्दक्षिणा व्यूहने। अग्नेः पावकस्याग्नेः शुचेरुज्जिति॰। अग्निः पावकाग्निः शुचिस्तमपनुदता॰। सूक्तवाके। अग्निः पावक इद॰ जुष॰ कृत। अग्नि शुचिरिदं ह॰ जुष कृत। शेषं प्राकृतम्। इति।

## ।। अथ तृतीया अदितीष्टिः ।।

देशकालौ सङ्कीर्त्य श्रौताग्न्याधानप्रतिष्ठासिद्ध्यर्थं तदङ्गतया विहितया तृतीयादित्येष्ट्याहं यक्षे। अग्न्यन्वाधानम्। अदितिं चरुणा सद्योहं यक्ष्ये। सप्तदशो वज्रः शेषं पूर्ववत्। पात्रासादने कपालोपवेष उद्धरणपात्री शृतावदानवर्जम्। कुक्कुटो हननार्थंदृषदुपल्पंसादनं ग्रहणे। आदित्ये जुष्टं गृह्णाति। प्रोक्षणे त्वाधिकः। एकत्वान्निर्देशो नास्ति। सर्वत्र चरोपेषणसंयवननिर्देशप्रथननाद्भिरभिमर्शनाभिं वासनानां पात्र्यङ्गुलिप्रक्षालनापिष्टं लेपननयनोप्यभावः। प्राणदाने अदितिं गच्छ आवाहने अदितिमावह। शोचिष्केशस्तमीमहों। पृथुयाज अमर्त्यों घृतनिर्णिक्त्वा हतः। अग्निर्यज्ञस्य हव्यवों। तं सवाधोयत स्रुच इत्था धिया प्राज्ञवतः। आचक्रुर ग्निमूर्तयो। अग्निधो अग्न इत्यादि॰। उत्तमे प्रयाजे ये॰ महे स्वाहाग्नि॰ सो॰ स्वाहाग्नि॰ आदिति स्वाहा दे॰ अदित्यै देवेभ्य॰ वितन्वती आज्यभागौ अग्नये नु॰

स्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वतो याज्यापूर्वैवा सोमायानु०। सोमयास्ते मयोभुव ऊतयः सन्ति दाशुषे ताभिर्नोविता भुवों पूर्वैव याज्यः प्रधानयागे। अदित्यानुब्रूहि सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्। दैवीन्नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये। अदितिं यज ये यजामहे अदितिं महीषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम। तुविक्षत्रामजरन्तीमुरुचीं सुशर्माणमदितिं सुप्रणीतिम् वौ० इदमदित्यै न मम। विराजौ संयाजे। अग्नये स्विष्टकृते०। प्रेद्धो अग्ने० वाजों ये हेग्निं स्वि० प्रि० अदितेः प्रि० तुवै० धेनुर्दक्षिणा। चतुर्द्धाकरणं व्यूहने। अदित्या रुज्जिर्त तेम अदितिस्तमपनुद० सूक्तवाके। अदितिरिदं हकृतशेषं प्राकृतम्। इति इष्ट्यन्तमाधानम्। अस्य श्रौताधारसाङ्गतासिद्ध्यर्थं शतं ब्राह्मणभोजनम्। अथवा आदित्येष्टिः प्राक् आग्नेयः पुरोडाशः श्राव्यस्तन उपांश्वादित्येष्टिरितीष्टिद्वयमेव। तत्र आग्नयेष्ट्याहं यक्ष्ये। तत्राग्निमष्टाकपालेन पुरोडाशेनाहं यक्ष्ये। प्रधाने। अग्नये नु० त्वामग्ने पुष्करादध्य० तों। इति पुरोनुवाक्या अयमग्निः सहस्रिणो० णां वौ। इति याज्या। स्विष्टकृत० अग्नि दूतं पुरो० दिहो। ये यजा०। अग्निं स्वि० प्री० सो० प्रि० देवा० हविरग्निं स्तोमन बोधय० दधां वौ० शेषं प्राकृतम्। अत्र गावस्तु दक्षिणा सप्त वा त्रयोदश वा पञ्चविंशतिर्वाभूतस्योपात्रैव। पूर्णाहुत्यन्तमाधानपक्षे नैव देयः। इष्ट्यन्ताग्न्याधाने आलस्यादज्ञानानाद्वा पुनराधाने इष्टित्यागं कुर्वन्ति। तेषामयथार्थमाधानं भवति तस्मात्पूर्णाहुत्यन्तं सम्यक् दोषाभावात्। केचिन्मते न पुनराधाने तनुहविषामकरणम्। संस्कारस्य प्राप्तत्वात्। पूर्णाहुत्यनन्तरं तूष्णीमग्निहोमस्तु आधानाङ्गमिति। अत्र केचिन्निर्णयः।

अर्वाक् पूर्णपदानाच्चेदाधाने स्त्री रजस्वला।
तच्छुद्धौ पुनराधानं मातृपूजादिपूर्वकम्॥

प्रसूतायामप्येवम्। सूतकाया इष्ट्यन्तं भवत्येव। शुद्धो सायंप्रातर्होमप्रारम्भपूर्णप्रदानं नाम पूर्णाहुतिहोमः। इति।

## ।। अथाग्निशान्ते प्रायश्चित्तम् ।।

अत्राधाने केचिन्निमित्तेन विनष्टेषु वह्निषु विनष्टानग्नीनुत्सृत्य पुनराधानं कुर्यात्। पत्नीयजमानयार्वा ससामध्वर्यवे दानम्। यजमानस्य तिलकादिमाङ्गल्यं विधाय आशीर्दद्यात्। अथ त्रिरात्रनियमः। त्रिरात्रमनृतं न वदिष्ये। त्रिरात्रमतिथीन् कालप्राप्तान्न निराकरिष्ये। अहमाहितेष्वग्निषु अशुचिकाष्टं दुर्गन्धिघुणकादि प्रदुष्टं त्रिरात्रं न धास्ये। क्षितिमध्ये पक्वंतिदुश्च तथान्यदपि अभक्ष्यं त्रिरात्रमहं न भक्ष्ये। त्रिरात्रमहमुदकं विहारे कृते कस्मै चिन्नादास्ये। त्रिरात्रं ब्रह्मचर्यं चरिष्ये। तस्मिन्विहारे त्रिरात्रमहमग्निं न धारयिष्ये। त्रिरात्रमहं [illegible] पयसा होष्ये।

आधानहिताग्निसमीपे त्रिरात्रमधः शयिष्ये। एते नियमाः। यजमानेन पत्न्या च नियमेन कार्याः। एतेषां त्रिरात्रनियमानां मध्ये यजमानः पत्नी वा कुतश्चिद्विघ्नप्रमादाद्वा एकं नियमं विस्मरति (न करोति) तदानादिष्टप्रायश्चितं होतव्यम्। अध्वर्यव दक्षिणाग्नौ। इति।

## ।। अथ त्रिरात्रमध्येऽग्निशान्ते प्रायश्चित्तम् ।।

त्रिरात्रमध्ये गार्हपत्यः शान्तो भवति तदा पञ्चभूसंस्कारं समित्पूर्वकं गार्हपत्यं निर्मन्थ्य स्थापयति। गार्हपत्ये आज्यसंस्कारं समित्पूर्वकं दक्षिणाग्नौ भुवः स्वाहेति इदं वायवे ततः सकृद्गृहीतेन स्रुचा त्वन्नो अग्न इत्यादि पञ्चभिः पञ्चवारुणकैर्मन्त्रैः पृथक् पञ्चाहुतीर्जुहोति। यथादैवतं त्यागः। इति गार्हपत्यशान्तनिमित्तं प्रायश्चित्तम्। एवमाहवनीयशान्ते गार्हपत्ये आज्यसंस्कारं कृत्वा चतुर्गृहीत्वा समित्पूर्वकं दक्षिणाग्नौ भुवः स्वाहेति पूर्ववत्। यदाहवनीये भूसंस्कारपूर्वकं गार्हपत्यादाहवनीयमुद्धरति। त्रिरात्रमध्ये दक्षिणाग्नौ शान्ते भूसंस्कारपूर्वकं उद्धरणं पूर्ववत्। आज्यसंस्कारपूर्वकं भुवः स्वाहेति दक्षिणाग्नौ पूर्ववज्जुहोति। अथ युगपदग्निहोत्रत्रये शान्ते तर्हि अनादिष्टप्रायश्चित्तं तदा भूसंस्कारं कृत्वा निर्मथ्य गार्हपत्यं स्थापयति। ततः आहवनीये दक्षिणाग्निखरे भूशुद्धिपूर्वकं क्रमेणोद्धरणम्। पूर्ववदाज्यं संस्कृत्य चतुर्गृहीत्वा समित्पूर्वकं दक्षिणाग्नौ भुवः स्वाहेति जुहोति। आहवनीये पञ्चवारुणं च त्रिरात्रमध्येऽग्नित्रये शान्तेऽपि एकमेव अनादिष्टं होतव्यम्। इत्यग्निशान्तप्रायश्चित्तानि। अत्राग्न्याधेये कर्मोपपात्तनिमित्तं प्रायश्चित्तं विशेषविधानाभावात्। सर्वत्रानादिष्टप्रायश्चित्तम्। अत्र यजमानः कर्मोपपात्तनिमित्तं अनादिष्टप्रायश्चित्तं करिष्ये। इति सङ्कल्पः। ब्रह्मा प्रायश्चित्तं जुहोति। यथा निरुप्याज्यं गार्हपत्यंधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्येत्युपविश्य। चतुर्गृहीत्वा ऋग्वेदिककर्मणो भ्रंषे गार्हपत्ये परिस्तीर्य समिधमाधाय भूः स्वाहेति जुहोति। यजमानः इदमग्नये न मम। तत आहवनीये परिस्तीर्य समिधमाधाय जुह्वां सकृद्गृहीतं त्वन्नः॰ स त्वन्नः॰ अयाश्चाग्ने॰ ये ते शतं॰ उदुत्तमम्॰ इति सर्वप्रायश्चित्तं जुहोति। यजुर्वेदिककर्मभ्रंषे च चतुर्गृहीतं दक्षिणाग्नौ परिस्तरणसमिदाधानपूर्वकं भुवः स्वाहा जुहोति। इदं वायवे न मम पूर्ववदाहवनीये। त्वन्न इत्यादिपञ्चभिः सामवेदिककर्मभ्रंषे। पूर्ववत्संस्कृतमाज्यं चतुर्गृहीतं परिस्तरणसमिदाधानं पूर्वकमाहवनीये स्वः स्वाहेति जुहोति इदं सूर्याय न मम त्वन्न इत्यादि पञ्चापि तत्रैव एषां त्यागः प्रसिद्ध एव। ऋग्वेदकर्मभ्रंषे होतृकं यजुर्वेदककर्मभ्रंषे अध्वर्यवं सामवेदकर्मभ्रंषे हिं हिं इत्यादि जातम्। ततो अग्न्याधेयप्रयोगे यत्र धर्मनाशस्तत्र धर्मिण एवावृत्तिः। यत्र धर्ममात्रनष्टं तत्र

धर्ममात्रस्यावृत्तिः कर्तव्या। तत्र याज्ञिकं सम्प्रदायोपनिबद्धं पदार्थापरमानं लिख्यते। अग्न्याहरणादिस्थापनान्तः॥१॥ परिसमूहनादि पदान्तो द्वितीयः। उद्वासनादि-जपान्तस्तृतीयः। भोजनादिवरदानान्तश्चतुर्थः। धारणमुपवासः पञ्चमः। परिसमूहनादि शर्करान्तः षष्ठः। एवमितरयोरपि सप्तमाष्टमौ। अश्वाननायदि-वरदान्तो नवमः। अभिच्छासोश्वासौ दशमः। दारुभिर्ज्वलनादिरथन्तरगाथान्त एकादशः। इध्मधारणादि वामदेव्यङ्गानान्तो द्वादशः।

।। इत्याचार्ययुगलकिशोरमिश्रसम्पादिते श्रौतोल्लासे मुहूर्तादि अग्न्याधानप्रयोगः।।

## ।। अथान्वारम्भणीयेष्टिः ।।

तत्र प्रथमप्रयोगे कृताग्न्याधेय उदगयन मलमास गुरुशुक्रमोढ्यबाल्यवार्धिक सर्वसूतकादिरहितायां प्रथमपौर्णमास्यां तत्पूर्वदिने प्रतिपद्यां वा प्रातरग्निहोत्रं हुत्वा दर्शपौर्णमासारभ्यमानो यावज्जीवं यक्ष्ये, इति सङ्कल्प्य द्व्यहपक्षे सद्यः पौर्णमासानुष्ठानं चेत् प्रारम्भाङ्गनिमित्तं अन्वारम्भयेष्ट्याहं यक्ष्ये। तदङ्गभूतं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूर्वकं नान्दीश्राद्धं करिष्ये। तत्कृत्वा उद्धरणम्। अग्न्यन्वाधानं यजमानः षट् समिधो गृहीत्वा। अग्नाविष्णू एकादशकपालेन पुरोडाशेन। सरस्वतीं चरुणा सरस्वतं द्वादशकपालेन पुरोडाशेन सद्योहं यक्ष्ये।

तत्र पञ्चदशो वज्रः व्रीहीभिर्यागः। पष्ठौही दक्षिणा मिथुनौ वा। तल्लक्षणं बालगर्भिणीमैथुनार्होवा स्त्रीपुमांसौगावा। ममाग्नेपक्षः उत्तमे काले व्रतोपायनम्। एते वैकल्पिकपदार्थास्तेमया ऋत्विक् प्रत्ययेनावधारिताः। पात्रासादने त्रयोविंशति-कपालानि चरुप्रेक्षणयोरुपकल्पनम्। अग्निविष्णुभ्यां जुष्टं गृ॰ सरस्वत्यै जुष्टं प्रोक्षणेत्वाधिकः। निर्देशः इदमग्नाविष्णोः। इदं सरस्वत्याः। इदं सरस्वतश्च। एकादशकपालान्युपधाय मध्ये चरुस्थानं कृत्वा। तदुत्तरतो दशकपालान्युपदध्यात्। प्राणदाने। भूत्वाग्नाविष्णुं गच्छ। सरस्वतीं गच्छ सरस्वतं गच्छ। आवाहने अग्नाविष्णू आ वह सरस्वतीमा वह सरस्वतमा वह। उत्तमे प्रयाजे। स्वाहाग्नाविष्णुस्वाहा सरस्वती स्वाहा सरस्वतं स्वाहा। इदमग्नये सोमायाग्नाविष्णुभ्यां सरस्वत्यै सरस्वते देवेभ्यः। वार्त्रघ्नावाज्यभागौ पौर्णमासवत्। प्रधानयागे। अग्नाविष्णुभ्यामनुब्रूहि। अग्नाविष्णुसजोषसेमा वर्द्धन्तु वां गिरः धूम्रैर्वाजेभिरागतों। अग्नाविष्णुं यज। ये यजामहे अग्नाविष्णुमहि। धाम प्रियं वांतीथोघृतस्य गुह्याजुषाणा। दमेदमे सुष्टुतिर्वामियाना प्रति जिह्वा घृतमुच्चरणादौ॰ इदमग्नाविष्णुभ्यां॰ सरस्वत्या अनु॰ पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसी सरस्वती यज ये यजामहे सरस्वती पावीरवी कन्या चित्रायुः

सरस्वतीं वीरपत्नीधियंधात्। ग्राभिरच्छिद्रं शरण्यं सजोषा दुराधर्षां गृणते शर्मयंसा वौ०। इदं सरस्वत्यै०। सरस्वतोनुब्रूहि। पीपिवां सदं सरस्वतं दिव्यं सुपर्णं वयसं बृहन्तमपां गर्भं दर्शतमोषधीनाम्। अभि यतो वृष्टिभिस्तपर्यन्तं सरस्वन्तमवसे जोहविमीं वौ०। इदं सरस्वते न मम। स्विष्टकृतपौर्णमासवत्। अग्नाविष्णोः प्रिया० सरस्वत्याः प्रि० सरस्वतः प्रि० देंवाना० अग्ना० वैष्णवस्य चतुर्धाकरणाभावः। इतरोस्तु कर्त्तव्यम्। द्विदैवत्ये बहुदैवत्यश्चतुर्धाकरणाभावः। सर्वत्र दक्षिणापष्ठौहिपक्षे गौरसीति मिथुनौ चेत्। इमौ गावौ प्रतिगृह्यताम्। व्यूहने। अग्नाविष्णोः सरस्वत्याः सरस्वतरुज्जि०। अग्नाविष्णू सरस्वती सरस्वातम्मपनु०। सूक्तवाके। अग्नाविष्णुई० जुषेता० क्रान्तां सरस्वतीदं हविर्जुषता० कृत। सरस्वानिदं हवि० कृत। शेषं पौर्णमासवत्।

।। इत्यन्वारम्भणीयेष्टिः ।।

## ।। अथ सायंप्रातरग्निहोत्रहोमप्रयोगः ।।

प्रथमप्रयोगे देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं सायंप्रातरग्निहोत्रहोममहं करिष्ये। तत्र सद्यः सायमग्निहोत्रहोमं करिष्ये। अनस्तमितानुदितयोरध्वर्युं प्रति यजमानः उद्धर इति ब्रूयात्। स्वयं होमपक्षे प्रैषाभावः। पञ्चभूसंस्कारपूर्वकं गार्हपत्यादाहवनीयस्योद्धरणं प्राङ्मुखो निदध्यात्। एवमेव दक्षिणाग्निम्। अथ सन्ध्योत्तरं अन्तरेणापराग्निं गत्वा अप्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः। स्वस्थाने आप आचामति। पत्न्यपि यजमानवदेव सञ्चरेण प्रविश्य गार्हपत्यस्य दक्षिणत ईशानाभिमुखी उपविश्य तूष्णीमेवाप आचम्य वाचं यच्छति। उपवेशनव्यतिरिक्तं पत्नी किमपि न करोति सम्प्रदायः। तच्च साधुतरम्। ऋत्विगादिहोमपक्षे सञ्चरप्रवेशव्यतिरिक्तं सर्वं करोति। ॐ वृष्टिरसि वृश्चमे पाप्मानं सत्येन व्रतमुपैम्यापः सत्यमयी व्रतं इत्यनेनाचमनम्। अध्वर्युः अपरेणाहवनीयम्। कूर्चं निधाय। परिस्तरणं वा सर्वेषां आहवनीयगार्हपत्यदक्षिणाग्नीनाम्। आहवनीयं पर्युक्ष्य उदकधारान्त्रिनयत्यागार्हपत्यात् गार्हपत्यं पर्युक्ष्य। ततो दक्षिणाग्निं पर्युक्ष्य पूर्वोत्तरं निरुहणं तत आहरणं होमद्रव्यं पूर्वेणाहवनीयमाहृत्य गार्हपत्येधिश्रयत्युत्तरतो निरुह्यङ्गारात् तृणेनावज्योत्य। आसिञ्च्यापः पुनरवज्योत्य निधाय त्रिरुद्वासयत्युदक्। एवमन्यत्रापि। होमार्थस्याहरणं दक्षिणेन वोषधं हृत्य गार्हपत्योदक्निदधाति। दध्नस्तण्डुलानां च नाधिश्रयनाद्युद्वासनान्तं यवान्वानोदकासेकः अस्तमिते जुहोति स्वयं प्रातरनुदिते च वैकङ्कतं स्रुक्स्रुवं प्रतप्य पाणिना सम्मार्ष्टि। पुनः प्रतप्य। उन्नेष्यामीत्याह। यजमानस्तिष्ठन् ॐ उन्नय इति प्रत्याह चतरस्रुवानुन्नयति। पञ्चावित्तीनां पञ्चस्रुक्दण्डपर्यङ्गुल्यतीरतं समिधं धारयन् वार्क्षीमध्यधिगार्हपत्याहनीयं

हरतिमुखमात्रे धारयन् मध्ये निगृह्य उद्गृह्याहवनीयं गत्वा। तत्समीपे वायव्यां प्राङ्मुख उपविश्य दक्षिणं जान्वाच्य समिधमादधाति। ॐ अग्निर्ज्योतिषं त्वा वायुमतीं प्राणवतीं स्वर्गायोपदधामि भास्वतीम्। प्रदीप्तायामभिजुहोति।

ॐ सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या।
जुषाणोऽअग्निर्वेतु स्वाहा।

इदमग्नये न मम कूर्चे निधाय। गार्हपत्यमवेक्षते। होष्यन्तस्मिन्। तूष्णीमुत्तरां भूयसीम्। ॐ प्रजापतये स्वाहा। इदं प्रजापतये॰ द्विः स्रुक् प्रकम्प्य कूर्चे निदधाति। न्युब्जेन पाणिना स्रुक्प्रणालिकां प्रत्यगुपमृज्य। कूर्चोत्तरभागे नमो देवेभ्य इति मन्त्रेण निर्माष्टि उत्तानेनैव हस्तेनाङ्गुल्यधोभागेनैव पुनः स्रुक्प्रणालिकां प्रत्यगुपमृज्य कूर्चस्य दक्षिणतो भूमावधोत्तानं पाणिं निधाय स्वधा पितृभ्य इति मन्त्रेण कूर्चं दक्षिणतो निर्माष्टि। अप उपस्पृश्य। गार्हपत्यं तिष्ठत्समिधमाधायोत्तर उपविश्य दक्षिणं जान्वाच्य स्थाल्याः स्रुवेण।

ॐ रदपुष्टिं पुष्टिपतिर्दधात्विहं प्रजां रमयतु प्रजापतिः अग्नये गृहपतये रयिमते पुष्टिपतये रक्ष स्वाहा।

इदमग्नये गृहपतये रयिमते पुष्टिपतये न मम। ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम। दक्षिणाग्नेरुदक्तिष्ठन्। समिधमाधाय। प्रागुदगुपविश्य दक्षिणं जान्वाच्य। स्थाल्याः स्रुवेणैव। ॐ अग्नयेन्नादायान्नपतये स्वाहा इदमग्नयेन्नादायान्नपतये न मम। ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ततः स्रुचमादाय। शालायां बहिर्निष्क्रम्योपविष्टः। स्रुक्स्तहुतशेषमनामिकया प्राश्याचम्य पुनरनामिकया प्राश्याचम्य शेषं स्रुक्स्थपात्रान्तरे हस्ते वा कृत्वा। प्राश्य पात्रं हस्तं वा सकृज्जिह्वया निर्लेढ्य हस्तं प्रक्षाल्याचम्याहवनीयस्य पश्चादुपविश्य। स्रुचमद्भिः सम्पूर्य देवाञ्जिन्व इत्याहवनीयस्योत्तरत उत्सिञ्चति। दक्षिणतो द्वितीयं वारिसम्पूर्य पितृन् जिन्व इत्युत्सिञ्चति। तृतीयां सम्पूर्य सप्तऋषीन् जिन्व इतीशान्यामुदीक्षयति उच्चैः। चतुर्थीं सम्पूर्य कूर्चस्थाने त्रिर्निषिञ्चति। प्राक् संस्थम्। अं अग्नये पृथिवीपते स्वाहा ॐ पृथिव्याः अमृते जुहोमि स्वाहा। ॐ अमृते अमृतं जुहोमि स्वाहा। स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति। समिधमादधाति सर्वेषु यथा पर्युक्षितम्। ॐ समिदसि समिद्धोमे अग्ने दीदिहि समिद्धाते अग्नेदाद्यासम्। ततो यजमानः सायं प्रातराहवनीयोपस्थाने। ॐ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः। अथवा तूष्णीमुपस्थानम्। ॐ भूर्भुवः स्वः इत्युपस्थानम्। प्रातर्नभवत्येव तूष्णीमुपस्थानं कर्त्तव्यम्। ॐ महेन्द्रयाहवनीयाय नमः ॐ सम्यासतगार्हपत्ये। ॐ ययासराज्ञे गार्हपत्याय नमः। ततोऽध्वर्युः हुते

धारावर्जे पर्युक्षणम्। यजमानो वाचं विसृज्य पुनराचामति। पत्न्यपि तूष्णीमाचामति।

ॐ विद्युदसि विद्यमे पाप्मानं जह्यवोवभृथमम्युपैमि मयि सत्यं गोष्ठमेव्रतम्। ततो यजमानः पत्नीश्च सञ्चरविमोकः यथा प्रविष्टं निष्क्रामति। अतीत्य निष्क्रामतो दक्षिणाग्न्युपस्थानम्। ॐ नडाय नैषधाय अन्वाहार्यपचनाय दक्षिणाग्नये नमः। ॐ अनश्नत्सायसोङ्गमागमनाय सभ्याय नमः भस्मोद्धृतमुपेयात्। अस्तेते पांसवाय नमः भस्मोद्वापाय। स्वयं वा जुहुयात्। ऋत्विगादिहोमपक्षे तीर्थप्रवेशव्यतिरिक्तं सर्वं कुर्यात्। अस्मिन्नवसरे स्मार्त्ताग्नौ होमः ततः प्रातर्होमे विशेषः। देशकालौ॰ प्रातरग्निहोत्रहोममहं करिष्ये। प्राक्संस्थं समित्पर्युक्षणं धारां च। उन्नयामीति प्रातः। ॐ सूर्यो ज्योतिषं त्वा॰ स्वति।

ॐ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या।
जुषाणः सूर्यो वेतु स्वाहा।
इदं सूर्याय नमः।
शेषं पूर्ववत्।

ॐ नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये।
नम आहवनीयाय महावेद्यै नमो नमः॥१॥

नमः सभ्यावसथ्याभ्यां नमस्ते परमात्मने।
एभिर्भवति पञ्चाग्निविधिवत्स उपासते॥२॥

चतुर्भिश्च॰॥३॥

अश्वत्थोपशमीगर्भ तस्य गर्भस्य यो रिपुः।
रिपुगर्भस्य यो गर्भ तस्मै यज्ञात्मने नमः॥४॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥५॥

यस्य स्मृत्या॰॥६॥

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः॥७॥

कायेन वाचा॰॥८॥

अनेन सायं प्रातरग्निहोत्रहोमाख्येन कर्मणा श्री भगवान् यज्ञरूपी परमेश्वरः जगदात्मा प्रीयताम्। **इति सायं प्रातरग्निहोत्रहोमप्रयोगः।**

## ।। अथ प्रादुष्करणहोमकालः ।।

तदुक्तम् कात्यायनेन—

सूर्ये नु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः।
प्रादुष्करणमग्नीनां प्रातर्भा सामदर्शने।।१।।

प्रादुष्करणमग्नीनां प्रकाशनं करोति।
यावत्सम्यक् न भाव्यन्ते नभस्यृक्षणि सर्वतः।
न च लोहितमो वैति तावत्सायं च हूयते।

अत्र विस्तरभयात्काम्योपयोगी प्रयोगो नोच्यते। अत्र सर्वदा यजमानः स्वयमग्निहोत्रं जुहुयात्। स्वयं होमपक्षे उन्नयने उद्धरणं प्रैषाभावः। अन्यत्समानम्। अमावास्यायां पौर्णमास्यां च स्वयमेव होमः कर्त्तव्यः।

सन्ध्याकर्मावसाने तु स्वयं होमं समाचरेत्।
स्वयं होमफलं यस्मात्तदन्येषु न जायते।।१।।

वितर्ह्यन्यैव हुते फलमित्यपक्षिते स एवाही होमे यत्फलमुद्दिष्टं जुह्वतः। स्वयमेव हूयमानेन तदन्येषु फलमर्द्धं प्रपद्यतमिति। सर्वेषु काम्येषु नित्येषु वा येन होत्रा द्रव्येण च सायं हुतं तेनैव प्रातर्होतव्यम्। तदुक्तं यज्ञपार्श्वे—

सायं होमेषु यद्द्रव्यं प्रातर्होमेषु तद्भवेत्।
भिन्नद्रव्यं हुतं यत्तु अहुतं तस्य तद्भवेत्।।१।।

होमकर्तृनियमाः।

अन्यैः शतहुताद्धोमादेकशिष्यहुतो वरम्।
शिष्यैः शतहुताद्धोमादेकपुत्रहुतं वरम्।।२।।

पुत्रैः शतहुताद्धोमादेकस्वस्माद्धुतं वरम्।।इति।।

ततः नैव कन्या न युवतिरल्पविद्यो न बालिशः।
होता स्यादग्निहोत्रस्य नार्तो न संस्कृतस्तथा।।३।।

नरके हि पतन्त्येते जुह्वतः स च यस्य तत्।
तस्माद्धोता च कुशलो होता स्याद्वेदपारगः।।४।।

दक्षः—

ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोथ विट्पतिः।
एतैरपि हुतं तस्य तद्धुतं स्वयमेव च।।५।।

स्मृत्यर्थसारे—

यजमानः प्रधानं स्यात्पत्नी पुत्रश्च कन्यका।
पत्नी कन्या च जुहुयाद्विना पर्युक्षणक्रियामिति।।६।।
प्रोषितोऽप्यथवाऽशक्तो स्वामिन्यनधिकारिणि।
पुत्रो भ्राताथवा पत्नी शिष्यो वा जुहुयादिति।।७।।

एतैर्दम्पत्योरन्यतरासन्निधाने होतव्यम्।

तदा कात्यायनः—

असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम्।। इति।

'होमद्रव्याणि स्मृत्यर्थसारे'—

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः।
सोमो मांसं तैलमापो दशैतान्यग्निहोत्रके।।१।।
स्यादग्निहोत्रं नृगृहे संस्कारो मन्त्रवर्जितः।
यद्वा त्रिः प्रोक्षणं तेषां मासमौपासनेन च।।२।।
शाली श्यामाकनीवारा व्रीहिगो धूमयावकाः।
एतेषां तण्डुला होम्या यावन्नालाः प्रियङ्गवः।।३।।
प्रियङ्गवः शालयश्च गोधूमा व्रीहयो यवाः।
स्वरूपेणापि हौमाः स्युः स्वरूपे वै तिलाः।।४।।

एवं च सूतकादौ शुष्केन यवाग्वादिना होमादि स्वयं न कर्त्तव्यं तण्डुलादिना स्वयं कर्त्तव्यम्।

तथा च कात्यायनः—

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते।
होमे श्रौते तु कर्त्तव्यं शुष्कान्नेनापि वा फलैरिति।।१।।

ब्रह्मपुराणे—

पर्वहोमेषु पक्षादौ यागकाले उपस्थिते।
शुष्कान्नेन फलैर्वापि यजतां च यथाक्रममित्याशौचाभाव उक्तः।।

पञ्चमहायज्ञास्तु शुष्कान्नेनापि न कर्त्तव्याः।

पञ्चयज्ञविधानं न कुर्यात् मृत्यु जन्मनोरिति जातूकर्ण्योक्तिः॥

श्रोते कर्मणि तत्कालं स्नानशुद्धिमवाप्नुयात्।

वैतानोपासनः कार्यः क्रियाश्च श्रुतिचोदनादिति वचनात्सूतके मृतके च तत्कालं स्नात्वा श्रौतस्मार्त्तहोमः स्वयं शुष्कफलादिना कर्त्तव्यः।

सन्ध्या पञ्चमहायज्ञा नैत्यकं स्मृतिकर्म च।<br>
तन्मध्ये हापयेदेव आशौचान्ते तु न क्रियेति जाबालोक्तेश्च॥

सन्ध्यायां तु विशेषो भारद्वाजेनोक्तः।<br>
सूतके मृतके कुर्यात्प्राणायामं समन्त्रकम्।<br>
तथा मार्जनमन्त्राश्च मनसोच्चार्य मार्जयेत्॥

आश्वलायनः—

आपन्नाद्या शुचिः काले तिष्ठन्नपि जपेद्दश।

गायत्रीशेषः।

अग्निस्मृतावप्यर्घस्यावश्यकतोक्ता।<br>
जलाभावे महामार्गे बन्धने त्वशुचावपि॥

उभयोः सन्ध्ययोः काले रजसा वार्धमुत्सृजेदिति।<br>
होमेषु गौणकालमाह बौधायनः॥

असायं कर्मणः।

आहुतिनाति पद्येत पार्वणं पार्वणान्तरादिति।

तथा च।

अकृतो वैश्वदेवश्च ह्यस्तमेति गभस्तिमान्।<br>
वैश्वदेवं ततः कृत्वा सायं होमं समाचरेत्॥१॥

कालातीतेषु सर्वेषु प्राप्तेतरेषु च।<br>
कालातीतानि कृत्वैव विदध्यादुत्तराणि च॥२॥

अत्र त्रिकाण्डमण्डनः—

मुख्यकाले यथावश्यं कर्म कर्तुं न शक्यते।<br>
गौणकालेपि कर्त्तव्यं गौणोप्यत्र सुशोभनः॥३॥

असायमाहुतेः कालात्कालः स्यात्प्रातराहुतेः।
पौर्णमासस्य कालोस्ति पुरादर्शस्य कालतः॥४॥

पौर्णमासस्य कालात्प्राक् दर्शकालो विपद्यते।
वैश्वदेवस्य कालोस्ति प्राक्प्रघासविधातुतः॥५॥

प्रघासानां च कालःस्यात्साकमेधीयकालतः।
स्यात्साककालोप्याशुनासीरीयकालतः॥६॥

शुनासीरीयकालोप्यावैश्वदेविककालतः।
श्यामाकैर्व्रीहिभिश्चैव यवैरन्योन्यकालतः॥७॥

प्रातुष्टं यज्यतेवश्यं न त्वत्राग्रयणात्ययः।
दक्षिणायनकाले वा पश्चिजायोत्तरायणे॥८॥

अन्योन्यकालतः पूर्वं यष्टं युक्ते उभे अपि।
एवमागामिये यागमुख्यकालादधस्तनः।
यद्वागामिक्रियामुख्यकालस्याप्यन्तरालवत्॥९॥

गौणकालत्वमिच्छन्ति कीचिष्णोक्तनकर्मणि।
गौणप्येतेषु कालेषु कर्मचोदितमाचरेत्॥१०॥

प्रायश्चित्तप्रकारेण प्रोक्तां निष्कृतिमाचरेत्।
प्रायश्चित्तमकृत्वा या गौणकाले समाचरेत्॥११॥

नित्येष्टिमग्निहोत्रं च भारद्वाजीयभाष्यतः।
मुख्यकाले हि मुख्यं चेत्साधनं नैव लभ्यते॥१२॥

तत्कालद्रव्ययोः कस्य गौणत्वं मुख्यतापि वा।
मुख्यकालमुपाश्रित्य गौणमप्यस्तु साधनम्॥१३॥

न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणमिति॥१४॥

होमे विशेषस्तत्रैव—

एकपक्षगतो यावान् होमसङ्घानिपद्यते।
पक्षहोमविधानां तु हुत्वा तन्तुमतिं यजेत्॥१५॥

लुप्तहोमत्रयो तद्वत्पौर्णमासादिषु त्रिषु।
तथा चाग्रयणे लुप्ते हुत्वा तन्तुमतिं यजेत्॥१६॥

स्वकालोत्कर्षतः कश्चिद्गौणकाल निरूपितः।
अपकर्षादथान्योपि गौणकालो निरूप्यते॥१७॥

आमयव्यार्त्तिमाना यद्गतोवाध्वगतोपि वा।
राष्ट्रभ्रंशे धनाभावे गुरुगेहे वसन्नपि॥१८॥

अन्येष्वेवं प्रकारेषु निमित्तेष्वागतेषु च।
समाप्तमग्निहोत्राणां यथासम्भवमाचरेत्॥१९॥

अनातुरो प्रवासी च निश्चिन्तो निरूपद्रवः।
पक्षहोमं तु यः कुर्यात् स चरेत्पतितव्रतम्॥२०॥

निमित्तानामिहैतेषां निर्दिश्यैकं यदुच्यते।
तत्सर्वेषु निमित्तेषु जानीयात्प्रतिपादितम्॥२१॥

पक्षहोमानशेषान् वा शेषहोमान्यथापि वा।
समस्तजुहुयात्तत्र प्रयोगोऽयं निरूप्यते॥२२॥

प्रतिपद्युन्नयेत्सायमापद्वा यत्र वा दिने।
यावन्त्यौपवस्थाहात्प्राग्दिनानि भवन्ति हि॥२३॥

तावन्ति परिगृह्णीयाच्चतुरुन्नयनानि च।
पात्रान्तरं सहायां वा नित्यायां प्राकृतः शुचिः॥२४॥

स्थूलं स्रुङ्गतरन्धापि कृत्वा तत्र समुन्नयेत्।
एका समित्सकृध्येम सकृदेव निमार्जकम्॥२५॥

उपस्थानं सकृत्कार्यं शेषा प्रकृतिरिष्यते।
एवमेवोत्तरत्राह्निप्रातर्होमासमस्यतु॥२६॥

जुहुत्यौपवसस्थाहः प्रातर्होमावधिं सकृत्।
समारोप्य विधानेन समारोपयतेऽनलान्॥२७॥

ते धार्यन्तेऽथवाधार्यारत्येवतु पूर्ववत्।
एवं प्रतिपदोन्यत्र यत्रापदुपजायते॥२८॥

यथैवोपवसेत्थ्याहात्प्राग्यत्राप द्विनश्यति।
तृतीयायां चतुर्थ्यां वा पञ्चम्यान्वारभत्र च॥२९॥

सदा दीनान्तरन्तानां होमानां स्यान्समासताम्।
अपदेवावचिर्होम समासस्याम्युपेयते।।३०।।
तस्मात्कदाचिदारभ्य यावतस्तावतोऽपि वा।
आपत्कालसमान्होमान्समस्येदेकपक्षगान्।।३१।।
अतएवं द्विरात्राय त्रिरात्रायाधिकाय च।
समस्यजुहुयाद्धोमान्नित्येवं पठ्यते कटैः।।३२।।
प्रवासिनोऽग्निहोत्रस्य पञ्चाहं सप्त वा पुनः।
सायं प्रातः प्रथद्धोम एकस्मिन्नहमीषुते च।।३३।।
एवमेकत्र पक्षे ये होमास्तेषामशेषतः।
न्यूनानां च समासस्यात्र पक्षान्तरवर्त्तिभिः।।३४।।
सर्वथौपवसथ्याहे सायंहोमः पृथक् भवेत्।
तथैव प्रयजनींहे प्रातर्होमपृथक् भवेत्।।३५।।
पर्वोपवासशून्यं चेत् प्राप्तं केनापि हेतुना।
तदेतत्सायं होमोपि पूर्वैः सह समस्यते।।३६।।
तावतो नापद्गच्छेच्चेदाप्रत्यक्षान्तरेपि च।
पुनस्तत्रापि कर्तव्यः समायः पृथगेवहि।।३७।।
न तु पक्षान्तरस्थानां समासश्चोद्यते मिथः।
एवमापद्गतः पक्षे पक्षे चैव समाचरेत्।।३८।।
तृतीयेऽनन्तरे पक्षे समासं न समाचरेत्।
तावतावानपद्गच्छेद्वेदात्पक्षे तृतीयके।।३९।।
कृच्छ्रेणापि निवर्त्तेत तत्र होमो दिने दिने।
पक्षान्तरे पुनः कर्म पक्षहोमादिमाचरेत्।।४०।।
कटैः पक्षद्वयेत्येष पक्षहोमो नियम्यते।
आपच्चेदनुवर्त्तेत दीर्घकालकथञ्चन।।४१।।
यावज्जीवमविच्छिन्नात्पक्षहोमान् समाचरेत्।
आपदेवावधिस्तत्र न पक्षगणतावधिः।।४२।।

अथापरः समासस्य प्रकारः प्रतिपद्यते।
सायंप्रातस्तनौ होमावुभौ सायं समुख्यत्वात्तदीयं तन्त्रमिष्यते।
पक्षहोमाधिकाः पूर्वमापत्कल्पा निरूपिताः।।४३।।

सायं प्रातः कालभेदाः सम्पाद्याः सर्व एव ते।
आपद्गुरुत्वारमालोक्य कदाचित्सायमेव ते।।४४।।

उभयेऽपि समस्यन्ते सायं प्रातस्तना अपि।
प्रातर्होमाधिका यद्वा प्राप्तश्चेदापदाङ्गताः।।४५।।

तथापूर्वापराह्णादौ निमित्ते सति चेष्यते।
दीर्घकालापदं मत्वा पक्षहोमे हुते सति।।४६।।

तत्रान्तराले यद्यावत्कदाचिदपगच्छति।
काले काले पुनर्होमान् जुहुयात्प्राग्घुतानपि।।४७।।

कष्टेष्वेवं विदुः केचिन्नेच्छन्त्यन्ये पुनर्हुतमिति कात्यायनः।
पौर्णमासान्त्यये हैम्यं होता वा यदहर्भवेत्।
तदहर्जुहुयादेवममावास्यान्त्ययेऽपि च।।४८।।

आहूयमानेन श्रमश्चेन्नयेत् कालं समाहितः।
सम्पन्ने तु तथा तत्र हूयते यदि होच्यते।।४९।।

आहूताः परिसङ्ख्यायुपात्रे कृत्वाहुती सकृत्।
मन्त्रेण विधिवद्धुत्वैवयमेवापरा अपि।।५०।।

पिण्डपितृयज्ञस्य गौणकालाभावस्तदक्रमे वैश्वानरेष्टिः। प्रायश्चित्तमेवेति वक्ष्यते। इति गौणकालः।

## ।। अथ समस्यहोमप्रयोगः ।।

तत्रापत्सम्भावनायां प्रतिपदि सायं देशकालौ सङ्कीर्त्तनान्ते अद्याद्यांगामिपर्वपूर्वदिनसायं होमान्तसायं होमान् समस्याहं करिष्ये। इति सङ्कल्पः। प्रतिपदादिपर्वपूर्वदिनागम्यया पात्रान्तरसहायामग्निहोत्रहवण्यामन्यस्यां वा स्थूलायां स्रुचि चतुरुन्नयनादिगृहीत्वैकां समिधं धारयत्पूर्ववत्सायं होमः कर्तव्यः। एवं द्वितीयायां प्रातर्होमान्तरर्होमान्समस्याहं करिष्ये। इति सङ्कल्पः। द्वितीयादि-पर्वदिनान्तं गणनया पूर्ववच्चतुरुन्नयनादीनि गृहीत्वा त्वैकासमिधं धारयत्पूर्ववत्प्रातर्होमः कर्त्तव्यः। प्रातर्होमासम्भावनायां तु प्रतिपदि सायमेव। देशकालौ सङ्कीर्त्य अद्याद्यागामिपर्वप्रातर्होमान्तसायंप्रातर्होमान् समस्याहं करिष्ये।

इति सङ्कल्पः। प्रतिपत्सायमादि पर्वप्रातरंसायं कालगणनया चतुरुन्नयनानि गृहीत्वैकां समिधं द्वयं वा धारयन्। पूर्ववत्सायन्तनाहुतिं हुत्वा। शेषं पात्रान्तरे निक्षिप्य। एवमेव द्वितीययादिपर्वप्रातरन्तः प्रातःकालगणनया चतुरुन्नयनादि गृहीत्वा प्रातराहुतिं हुत्वापात्रान्तरस्थस्रुचि गृहीत्वा तन्त्रेणोत्तराहुतिः। अथ प्रातरेवापदागमश्चेद् द्वितीयायां प्रातरेवाद्याद्यागामिपर्वप्रातरन्तः सायंकालगणनया चतुरुन्नयनादि गृहीत्वैकां समिधं समिधद्वयं वोपरि धारयन् पूर्ववत्प्रातस्तनस्तन्त्रेण होमः कर्तव्यः। तन्त्राप्यादौ पूर्ववदादौ प्रातराहुतिः। पश्चात्सायमाहुतिः। तन्त्रेणैवोत्तरा। एवं यदैवापदागमः पूर्वाह्णापराह्णादौ तदैवापन्ननिर्गमान्तर सायंप्रातर्होमाः कर्त्तव्याः। अथ कश्चित्सायमेवाद्यश्वः प्रातर्होमेन समस्य सायं होमं करिष्ये। इति संकल्पः। पूर्ववत्सायन्तनं तन्त्रेण होमः कर्त्तव्यः। तत्र चतुरुन्नयनद्वयं समिदेकां समिधद्वयं वा। कदाचिदापद्गुरुतरत्वपर्वणि व्रताद्यसम्भावना तदा पर्वसायं होमः समस्य कर्त्तव्यः। एवमेवातिक्रान्तहोमेष्वपि देशकालकीर्त्तनान्ते अतिक्रान्ते यद्दिनाद्यावधि सायंप्रातर्होमान् करिष्ये इति सङ्कल्प्य। अतिक्रान्तसायं प्रातर्होमगणनया चतुरुन्नयनानि पृथक् गृहीत्वा पूर्ववज्जुहुयात् एवमाहवनीये होमं विधाय गार्हपत्यदक्षिणाग्नौ ह्यपि पात्रान्तरे आगामिनामतिक्रान्तानां होमानां गणनया स्रुवेण होमद्रव्यं गृहीत्वा समिदाधानपूर्वकं पूर्वाहुतिं हुत्वा पुनस्तथैवादायोत्तरां जुहुयात्। एवं पूर्णमासातिक्रान्तोदर्शात्प्राक् कर्तव्यः। दर्शयागातिक्रान्तश्चेत्पौर्णमासात्प्राक् कर्तव्यः। व्रीह्याग्रयणं यवाग्रयणकालात्प्राक् कर्तव्यः। यवाग्रयणं च व्रीह्याग्रयणात् प्राक् कर्तव्यः। एवं चातुर्मास्येष्वपि पूर्वं पूर्वं पूर्वोत्तरस्य पर्वकालात्प्राक् कर्तव्यम्। अत्र दर्शपौर्णमासाग्रयणचातुर्मास्येष्टीनां कालातिक्रमे अग्नये पथिकृतेऽष्टाकपालः पुरोडाशः प्रायश्चित्तं प्रज्ञातेष्वतिपत्तौ चेति सूत्रेणैवोक्तम्।

।।इति श्रौतोल्लासे होमविधिः।।

## ।। अथ पर्वयागकालनिर्णयः ।।

तत्र पर्वप्रतिपद्योः सम्पूर्णत्वे सन्देह एव नास्ति। खण्डत्वे तु तत्रोपवासयाग कालोच्यते। पौर्णमास्यां तु द्वेधा विभागः। तदुक्तं स्कन्दपुराणे—

आवर्त्तनात्पूर्वाह्णो ह्यपराह्णस्ततः परः।
मध्याह्नस्तु तयोः सन्धि यदावर्त्तनमुच्यते।।९।।

अयं द्वेधा विभागः।

गोभिले—

आवर्त्तने यथासन्धिपर्वः प्रतिपदो भवेत्।
तदहर्यागइष्टिःस्यात्तत्परतश्चेत्परेऽहनि।।

कात्यायनः—

सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्ह्यार्योवर्त्तनाद्रवेः।
सा पौर्णमासी विज्ञेया सद्यः कालनिधौ तिथिः।।३।।

अत्र पूर्वपेक्षया वतीतीप्रतिपदो वृद्धिः क्षयो वा तदर्द्धपर्वणि प्रक्षिप्य सन्धिनिर्णयः।

तदाह कात्यायनः—

परेह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च या।
तदर्धं कृत्वा पूर्वस्मिन् ह्रासवृद्धिः प्रकल्पयेत्।।४।।

साधारणदिनमानं तु त्रिंशत् ३० घटिमितम्। तत्रोदाहरणम्। पर्वचतुर्दश १४ घटिमितम् प्रतिपदष्टादशघटिमितं तदा प्रतिपद् वृद्धेरर्धं घटिद्वयं पर्वान्ते प्रक्षिपति तदा मध्याह्नात्परसन्धिर्जातस्तदा उत्तरदिने यागः। अथ ह्रासोदाहरणम्। एवं पर्वसप्तदशघटिप्रतिपत्त्रयोदशघटिका तदा प्रतिपद्ग्रासार्द्धं घटिद्वयं पूर्वाह्नान्न्यूनयति। तदा मध्याह्नात्पूर्वसन्धिजातः। तदा पूर्वदिने यागः। तच्च यागकालः कात्यायनः—

पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः।
कालः पर्वणयागस्य अन्यथा तु न विद्यते।।

अत्र प्रतिपच्चतुर्थांशे यागनिषेधस्तदुक्तं वृद्धशातातपः—

सन्धिर्यद्यपराह्ने स्याद्यागः प्रातः परेऽहनि।
कुर्वाणा प्रतिपद्भागे चतुर्थेपि न दुष्यति।।

।।इति पौर्णमासः।।

## ।। अथ अमायां विशेषः ।।

वाजसनेयिनां तु अमासन्धिनिर्णयेयः। पिण्डपितृयज्ञकालं विधायकशुद्धा त्रेधा विभागो वक्ष्यते।

**अत्र दिवसस्य त्रेधा विभागः**। स वा अपरान्हे ददातीति श्रुतेः। अपराह्नशब्दस्तु द्वितीयभागपरः।

कात्यायनोपि—

पिण्डान्वाहार्यकंश्राद्धं क्षीणे शशिनि शस्यते।
वासरस्य तृतीयेंशे नातिसन्ध्यासमीपतः।।

चतुर्दश्यष्टमे भागे क्षीणो भवति चन्द्रमा।
अमावास्याष्टमे भागे पुनः किल भवेद्यनु॥२॥
वर्धमानाममावास्यां लभेच्चेदपरेहनि।
यामाँस्त्रीनधिकस्यापि पितृयज्ञस्ततो भवेत्॥३॥

कर्मप्रदीपे—

यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाना तदेव श्राद्धमिष्यते॥४॥

श्राद्धशब्देन पिण्डपितृयज्ञः पार्वणं चेति। अत्रामाविषये ह्रासवृद्धिसूक्ष्मविचारो गङ्गाधरकृतपर्वनिर्णये तथा च मयूखे प्रोक्तम्। तत्र वृद्ध्युदाहरणम्। यत्र चतुर्दशी २५। (पर्वविंशति २०)। प्रतिपद् १६। अत्र पर्वणो घट्यादिमानं ५५ अत्र वृद्धिरेका १ घटी ज्ञेया तदर्धे पर्वणि योजिते जातं पर्वसार्द्धविंशतिघटिमितं २० दिनमानं ३० त्रिंशन्मितं तदा अपराह्ने सन्धि जायते तेनोत्तरदिने यागः। क्षयोदाहरणम्। यथा यत्र चतुर्दशी १५ पर्व एकविंशति २१ प्रतिपत्पञ्चविंशति २५ अत्र पर्वषट्षष्टि ६६ घटि प्रतिपद् चतुःषष्ठि ६४ घटिमितं तदा प्रतिपदक्षयो द्विघटिमितः। तदर्धे पर्वणि वियोजिते जाते पर्वविंशति २० घटिमितं तदां मध्याह्न सन्धिर्जायते **अनेन तस्मिन् दिने यागः**। पूर्वदिने अन्वाधानम् इत्यादि सुधिभिः। अत्र चन्द्रदर्शने **निषिद्धयागः**। एवमुक्तमेतद्विषयवाक्यानि, अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादिभिर्निषेधात्। यस्मिन् देशे अष्टादशघटिमितं दिनमानं बदरीचम्पाकाश्मीरकामरुपादौ श्रौतस्मार्तकर्मानुष्ठानयोग्ये देशे सम्भवति चतुर्दश्यां पिण्डपितृयज्ञः। अमादियागः। इत्थं च त्रयोविंशत्यधिकदिनमाने देशे इदं न सम्भवतीति **नियमः**।

कात्यायनश्च—

यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डद्यादि द्विजायते॥१॥
शेषपर्वणीष्टौ विंशो माधवीये गार्ग्यः।
प्रतिपद्यप्रविष्टामायदिनेष्टिससमाप्यते।
पुनः प्रणीय कृच्छ्रेष्टिः कर्तव्या यागवित्तमैः॥२॥

एतच्च पञ्चदशशाखायान्तर्गतबौधायनवाजसनेयीविषयम्। न माध्यन्दिनीवाजसनेयीविषयम्। तदापराह्णेऽपि पिण्डपितृदिनान्त्यदिने यागः

कार्य:। पूर्वेद्यु: पितृभ्यो निष्क्रिय प्रातर्देवेभ्य: प्राङ्मुखत इति। पूर्वो वा गत्वा पिण्डपितृयज्ञ इति सूत्राच्च तत्रैव स्यादिष्टीस्तपरेहनि निर्दिष्टपिण्डे पितृयज्ञोत्रकालो वाजसनेयीनां नेष्टिस्तत्सूत्रतोत्येपि त्वाशेति परोदिनि। यद्यपि चन्द्रदर्शने यागनिषेध: स्मर्यते।

द्वितीया त्रिमुहूर्त्ता चेत्प्रतिपद्यापराह्निकी।
अन्वाधानं चतुर्दश्यां परत: सोमदर्शनात्।। इत्यादिना।

तथा युक्तं न्यायेन। वाजसनेयीनां पिण्डपितृयज्ञपरदिन एव चन्द्रदर्शनवत्यपि यागानुष्ठानस्योचितत्वात् वाजसनेयीव्यतिरिक्तविषयत्वे चापूर्वाह्णमध्याह्नसन्धि-विषयत्वे वा निषिद्धो वेदितव्य:। न चान्यदशाङ्गत्वादनाहिताग्नेरेव न भवन्तीति वाच्यम् अनाहिताग्निरष्ट्येष इत्युक्तत्वात्। अयं च मृतपितृकस्यैव भवतीति।।इति।।

## ।। अथ क्षौरनिर्णय: ।।

पर्वणि केशश्मश्रु वापयत इति। वपनस्य पुरुषसंस्कारत्वाद्दर्श-पूर्णमासाभ्यामेका पूर्वतासिद्धे तद्योज्यता पौर्णमासादौ सकृत्कृतेनैव सिद्धेति चोभयत्र वपनम् अत एवाप्यत्र लोमाऽतीव पावन इति पर्ववपनम्। वाजसनेयीनां मतेन विकल्पोपदिष्टम्। केशश्मश्रुवपनौ वाशिखाम्॰ इति सूत्रे उक्तम्। तदा **अशिखवपनं देवयाज्ञिकादिभिर्व्याख्यातम्**। भर्तृयज्ञमते **नियमेन वपनम्**। वैद्यनाथभाष्ये एव शब्दो निश्चयार्थे कृत्वा कर्मान्ते वपतेन वा वपतेति विकल्प: **न वा वपते विकल्प:** पूर्वपक्षो बहुसम्मत:। शिष्टाचारोऽप्येवम्।

श्रीधरपद्धतौ—

दर्शपौर्णमासं विना चैव सदाचारी तु साग्निक:।
नान्तरा वपनं कुर्यान्मातापित्रोर्मृतं विना।।१।।

उत्सन्नाग्निस्तथैव स्याद्वपनं नैव विद्यते।
अनग्निद्विजवद्धर्मो वैश्वदेवं विना यत:।।२।।

पर्वणि **दर्शपूर्णमासाकरणेऽपि कार्यम्**। पथिकृन्मुखायां प्रकृतौ विकृतिषु च। अपर्वकालेषु नेष्य इति वपनं स्वीकृतं प्राक्कर्मापर्वात्। पर्वणि सूतके वपनवर्जम्।

तदुक्तं संग्रहे—

आहिताग्नेर्विशेषेण प्रतिपर्वणि वापनम्।
विना सूतकमित्याहुर्गृह्य: शौनकादय:।।१।।

**वपनाभावे अपरार्के बौधायनः—**

आहिताग्नेर्द्वयं पर्व पञ्चमी च प्रशस्यते।
द्वादश्यामथवाष्टम्यां पर्वणो यदि सम्भवः॥१॥

**अथ वपनप्रकारः—**

यजमानो वाग्यतः प्राङ्मुख उपविष्टः दक्षिणकर्णादारभ्य वामकर्णपर्यन्तं उपकक्षावग्रे वपेत्। ततो दक्षिणत आरभ्य श्मश्रूणी। ततो वामकर्णादारभ्य प्राग्-दक्षिणेन दक्षकर्णपर्यन्तं केशान् ततो नखादीनि मानविशेषः। केशश्मश्रु यजमानो वापयेत्तद्दक्षिणोपक्रमान्केशान् सव्योपक्रमान्नखानध्यात्मम्। कनिष्ठिकान्तः कारयेत्तेन कक्षोपत्नी नखांश्च कारयेत्। **इति देववपनम्।**

**अथ मनुष्यवपनम्।** श्मश्रूणामग्रे वपनम्। अथापरे कक्षौ अथ केशान्।

॥इति मनुष्यवपनविधिः॥

अपराह्ने पत्नीयजमानौ माषमांसलवणप्रातर्होष्यमाणद्रव्यव्यतिरिक्तं घृतसंयुक्तमल्पमश्नीते न तृप्तिपर्यन्तं परिशिष्टे।

शाकं मांसं मसूरं च चणकं कोद्रवास्तथा।
माषान्मधु परान्नं च वर्जयेदौषवास्तके॥

तथा च—

लवणं मधु मांसं च क्षारान्नं येन हूयते।
उपवासेन भुञ्जीत नोरुरात्रौ न किञ्चनेति॥

तथा तिलमुद्गदत्तेशढ्यसस्ये गोधूमकौद्रवौ।
चणकं देवधान्यं च सर्वशाकन्तथैक्षव॥

सक्षीरं यवक्षारं रङ्कणक्षारमेव च।
व्रतस्थो वर्जयेन्नित्यं सामुद्रलवणं तथेति॥

**अत एव सामुद्रविशेषात्सैन्धवमानसादेरसामुद्रस्य** न निषेध इति केचिदाहु दविष्टममितस्योक्तं स्मृतौ मुन्यन्नानि पयः सौमांसयच्चातुपरस्मृतम्। अक्षारलवणं सैन्धवमिति सर्वे निबन्धकाराः **व्याख्यातवन्तः** तथा—

सैन्धवं लवणं यच्च यश्च मानससम्भवम्।
पवित्रं परमं ह्येतत्प्रत्यक्षमपि सर्व इति॥

मानसादिसाभरीति प्रसिद्धः। अतः प्रभृतिक्रियमाणो कर्माङ्गभूतो यजमानस्य सत्यवदननियमः। रात्रौ तस्मिन्नेव विहारे स्वयमेवाग्निहोत्रहोमः।

तत्सायमशनेच्छायां सत्यां होमानन्तरमारण्यौषधीनां नीवारश्यामाककङ्ग्वादीनामन्नं वा आरण्यवृक्षाणा माम्रराजादन्नादीनां फलानि वाश्नीयात्। नाश्नीयात्। रात्रावाहवनीयागारे गार्हपत्यागारे वा पत्नीयजमानाभ्यां स्वस्थाग्न्यपेक्षया अधोचीनं शयनं कर्त्तव्यम्। आस्तरणस्य न निषेधः। व्रतग्रहणे कृते अयमारण्याशनशय्यानियमोनोपरेयति हरिस्वामिनः। आपस्तम्बोपि। अमावास्यायां जागर्त्यपि वासु यथा। दुपत्वे वचशयितापिवोपरि शयीत ब्रह्मचारित्वेव स्यादुभयत्र जपारणमेकेसामन्ततीति। प्रातरपि तस्मिन्नेव विहारे स्वमेवाग्निहोत्रहोमः। ततः उदिते सूर्ये ब्रह्मवरणाद्युपक्रमः। इति।

## ।। अथ पिण्डपितृयज्ञप्रयोगः ।

यस्य यजमानस्याध्वर्युः कर्त्ता। स च त्रिधाविभक्तदिनतृतीयांशे भवतीति कर्कः। द्विधा विभक्तस्यैव द्वितीयभागे इत्यपरे। ततो अमावास्यायां पञ्चभूसंस्कार-पूर्वकं पूर्वाह्ने एवाग्न्युद्धरणम्। ततोग्न्यन्वाधानम्। ततो मांसमैथुनवर्जनसङ्कल्पः पूर्वोक्तवपनम्। ततो **निर्णेजनान्तं वैश्वदेवः**। अपराह्णे **पिण्डपितृयज्ञः। ततो दर्शश्राद्धम्।**

तदुक्तं—

**पक्षान्तं कर्म निर्वृत्य वैश्वदेवं च साग्निकः।**
**पिण्डयज्ञं प्रकुर्वीत ततोन्वाहार्यकं बुधैः।।१।।**

पक्षान्तं कर्माग्न्यन्वाधानम्। अन्वाहार्यं दर्शश्राद्धम्। तत्र **पूर्वं नीवीकरणम्। कात्यायनः—**

दशा सङ्गोपनं नीविः सचाग्रे मानुषि स्मृता।
पितॄणां दक्षिणे पार्श्वे विपरीता च दैविके।।१।।

**वृद्धयाज्ञवल्क्योऽपि—**

दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयम्।
तर्जयन्तीह दैत्यानां यथा तृणमयस्तथा।।२।।

**श्राद्धकारिकायाम्—**

नीविः कार्या दशा गुप्तिर्वामकुक्षौ कुशैः सदा।
पितृकर्मणि नैवोक्ता वेदवेदाङ्गवेदिभिः।।३।।

वामे तद्वृद्धिश्राद्धविषये। दक्षिणस्य वेदीश्रोणौ सन्नहनावच्छादनं वाक्यशेषो दक्षिणत इव इयं नीविरिति श्रुतेः। वामे दक्षिणे इत्याचाराद्व्यवस्थिति

मदनपारिजाते। ततोऽग्नेरुत्तरतो दक्षिणाभिमुखो भूत्वा प्राचीनावीती नीविबन्धनम्। कुशतिलसंयुक्तानां वस्त्रदशानां दक्षिणभागे प्ररिहितवस्त्रेण संवेष्ट्यावगूहनम्। ततः सव्यम्। आचम्य देशकालौ स्मृत्वापसव्यं गोत्राणामस्मत्पितृपितामह-प्रपितामहानाममुकशर्मणां वसुरुद्रादित्यस्वरूपाणां श्रीपितृतृप्तिद्वारा परमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञेनाहं यक्षे। अध्वर्युकर्तृके यजमानपितरमित्यादि प्रयोगः। ततो वैकल्पिकस्मरणम्। तत्राग्निमपरेण पात्रासादनं, उत्तरेण वा। अपरेण लेखाकरणम्। एतन्निमित्तं पिण्डदानम्। सूत्राण्याच्छादनानि एतान्वैकल्पिकपदार्थानहं करिष्ये। अथ ऋष्यादिस्मरणम्। पिण्डपितृमन्त्राणां प्रजापतिर्ऋषिः अग्निकव्यवाहनः सोमः पितृमान् देवते अपहता इति यजुः आधत्तेति गायत्री पञ्चानां पितरो देवता ऊर्ज्जमिति विराट् आपो॰ पिण्डपितृयज्ञहोमे लेखाकरणे उल्मुकनिधाने जपे अञ्जलिकरणे सूत्रदाने मध्यमपिण्डप्राशने अपां निषेकोऽवघ्राणे विनियोगः। अथ देवताभिधानम्। अग्निं कव्यवाहं सोमं पितृमन्तं चरुणा गोत्रं पितरं पितामहं प्रपितामहं चरुशेषपिण्डैरहं यक्षे। दक्षिणाग्निमाग्नेयकोणादारभ्य अप्रदक्षिणाग्रैर्दर्भैः परिस्तरणम्। पात्रासादानमेकैकशः। अग्निमपरेण दक्षिणाग्राणि दक्षिणप्राग्विलालि प्राक्संस्थानि उत्तरेण चेत्प्रागग्राणि दक्षिणबिलानि दक्षिणसंस्थानि। कृष्णाजिनं, उलूखलं, मूसलं, शूर्पं, चरुपात्रं, जलं, आज्यं, मेक्षणं, वज्रं, उदपात्रं, सकृदाच्छिन्नानि तण्डुलाः सूत्राणि चासादयेत्। ततो गार्हपत्यमपरेण स्थाल्या तूष्णीं तण्डुलान् गृहीत्वा ततः कृष्णाजिनादानम्। दक्षिणाग्निरुत्तरेणास्तरणम्। उत्तरग्रीवम्। उत्तरेणोत्तरस्यां दिशीत्यर्थः। दक्षिणाभिमुखः सव्याशून्ये उलूखलनिधानम्। पितृतीर्थेन तण्डुलप्रक्षेपः। मुसलादानम्। मुसलयोजनम्। तिष्ठन् त्रिः कण्डनं। शूर्पादानम्। निष्पवन्तं। विवेकीकरणम्। पुनः उलूखले निधानम्। सकृत्फलीकरणम्। चरुस्थाल्यां प्रक्षेपः। आसादितोदकेन सकृत्प्रक्षालनम्। अधिश्रयणम्। शृतस्य अभिघारणम्। दक्षिणत उद्वास्य। अप्रादक्षिण्येनानयनम्। सव्यजानुनिपातः मेक्षणेन होमः। ॐ अग्नये कव्यवाहनाय स्वाहा। इदमग्नये कव्यवाहनाय न मम। तस्या दक्षिणतः ॐ सोमाय पितृमते स्वाहा। इदं सोमाय पितृमते। तत्पुरस्ताद् दक्षिणाग्रं मेक्षणप्रक्षेपः। अध्वर्युहोमपक्षे यजमानस्त्यागमात्रं ब्रूयात्। ततो दक्षिणाभिमुखो भूत्वा दक्षिणाग्नेर्दक्षिणतः दक्षिणस्यां दिशि। अथवा अपरेण गार्हत्यदक्षिणाग्निसंस्थाने रेखाल्लिखेत्। ॐ अपहता असुरा रक्षांसि वेदिषदः। अप उपस्पृश्य। दक्षिणाग्नेरुल्मुकमादाय असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतित्रीन्, यजमानस्येति ग्रहणात्पिण्ड-पितृयज्ञेप्यध्वर्युकर्तृकत्वम्। अमुकगोत्र यजमानपितः अमुकशर्मन्नवनेनिक्ष्वेति पितृतीर्थेन रेखामध्येऽवनेजयति। एवं पितामहप्रपितामहयोः रेखामध्ये रेखान्ते

दक्षिणसंस्थत्रयाणां अवनेजनं कृत्वा। सकृदाच्छिन्नानि लेखायां कृत्वा यथावनेनिक्तं पिण्डान् ददाति त्रीन् चरुँस्त्रेधा विभज्य पिण्डान् कृत्वैकमादाय। अमुकगोत्र यजमानपितरमुकशर्मन् एतत्तेऽन्नं स्वधा इति ब्रूयात्। यजमानः अमुकगोत्राय अस्मत्पित्रे अमुकशर्मणे न मम। पुनरध्वर्युर्द्वितीयमादाय अमुकशब्दस्थाने अमुकगोत्रोच्चार इत्यन्ये। एवं पितामहप्रपितामहाभ्यां दद्यात्। अथवा ये च त्वामन्वितिमन्त्रशेषं च केचिद् दद्यात्। आर्द्रामलकमात्रप्रथमः। तदपेक्षया द्वितीयः स्थूलः। तृतीयः स्थूलतरः। एवं मूलमध्यान्तदेशेषु दक्षिणसंस्थान् त्रीन् पिण्डान् दत्त्वा। अत्र पितर इत्यनुमन्त्रं पिण्डाभिमुखः स्वरेण जपेत्। ततो हस्तं प्रक्षाल्य प्रदक्षिणमुदक् पर्यावृत्यान्तर्मना ह्यास्ते। पुनरप्रदक्षिणं पर्यावर्त्य पिण्डाभिमुखोमीमदन्तेति स्वरेण जपति। ततः पूर्ववत् पिण्डानामुपरि अवनेज्य नीविं विसृज्य नमो व इति षडञ्जलिं करोति। नमस्कारार्थत्वाच्च पुनरञ्जलयः। नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः॥६॥ **इति ग्रहाभः** पितरो दत्त सतो वः पितरो देष्मैतद्वः इति जपति एतद्वः पितरो वासः इति त्रीणि त्रीणि सूत्राणि प्रतिपिण्डं दद्यात्। ततः स्मृत्यन्तरात्पिण्डपूजनम्। (ऊर्णांशुकं वा पूर्वो वयस्युत्तर आयुषि स्वकायलोमर्चेति हृदयलोमानि। ततः ऊर्ज्जं वहन्तीति उदपात्रस्थमवनेजना-वशिष्टमुदकं पिण्डानामुपर्येव निषिञ्चति। ततः पिण्डस्थाने प्रत्यवदधात्यध्वर्युः। ततो यजमानः। तान् पिण्डानवजिघ्रति। अध्वर्युः सकृदाच्छिन्नान्यग्नौ प्रहृत्योल्मुकं च सव्येनापः स्पृशेत्। पत्नी पुत्रकामा चेत् तस्यै यजमानोऽनवघ्रातं मध्यमपिण्डं प्रयच्छेत्। सा च पार्वणमध्यमपिण्डेन सह आधत्तेति मन्त्रेण प्राश्नाति। यजमान-प्रोषिते सति गृहे ऋत्विगादि करोति तदपि तावघ्रानं जीवत्पितृकस्य **पिण्डपितृयज्ञाभावः**। पिण्डपितृयज्ञदेशाङ्गमिति कर्कादयः सर्वे भाष्यकाराः। नेति सम्प्रदायः। ततो दर्शश्राद्धं नित्यश्राद्धं वा ब्रह्मयज्ञः हन्तकारः देवता नैवेद्यं बलिदानं ब्राह्मणभोजनम्॥इति॥

## ।। अथ स्वकाले स्थालिपाकपिण्डपितृयज्ञे विशेषः ।।

पक्षादि पिण्डयज्ञादि प्रमादादकृता यदि।
प्रायश्चित्तं ततो हुत्वा कर्तव्यं तद्दिनान्तरे॥१॥

पिण्डपितृयज्ञस्तु अमादिने एव भवति। न दिनान्तरे। तस्मात्कदाचिद्दैवान्मानुषाद्वा अन्तरायः स्यात्तदा अमावास्यायां दर्शयागासम्भवे केवलदक्षिणाग्निमुद्धृत्यापराह्णे पिण्डपितृयज्ञं कुर्यात्। अमयामन्तराधाने

प्रायश्चित्तत्वेन वैश्वानरेष्टिः। अनाहिताग्नेश्वरव इत्युक्तम् अथवा इष्टिस्थाने पूर्णाहुतिः। इति।

## ।। अथ सर्वत्रर्त्विजोपयोगिपरिभाषा ।।

सूत्रानुसारी कर्त्तव्यता। उत्तरतोपचारः सर्वकर्मविहारस्योत्तरतः कार्यः। प्राच्युदक् वा सर्वाणि कर्माणि प्राक्संस्थमुदक्संस्थानि कुर्वन्ति। उपांशु उच्चैः प्लुतानि विभक्तिपूर्वकानि उक्तस्थाने पठितानि। उपांशु यागस्योपांशु देवताया-ज्यानुवाक्या जुषताऽवीवृधताऽकृतेति च सूत्रम्। उपांशु देवतापदं याज्यानु-वाक्येन। उपांशु देवतापदं याज्यानुवाक्ये च। तत्सम्बन्धि अजुषतावीवृधता कृते नीचोपांशु तनूहवींषि आधाने। अग्नीषोमौ आज्यप्रधानौ विष्णुश्च दर्शपौर्णमासस्य। वैश्वानरदेवतांश्चरुराग्रयणे एककपालाश्च। सावित्रश्चानुमास्येषु। वैश्वदेवी पयस्या न वैश्वदेवपर्वणि वायव्यं हविः। शुनासीरीये यत्र चरुशब्दस्तत्र सर्वमुपांशु। तथा पत्नीसंयाजेषु उपांशु चरतीत्युक्तम्। चातुर्मास्यपित्र्येष्ट्यौ पितृयज्ञमुपांशु चरणमित्युक्तम्। यस्मिन् मन्दादयो न विज्ञायन्ते न स्वरो न व्यञ्जनं केवलमोष्ठचालनं श्वासो वा तदुपांशुधर्माः। मन्दस्वरेण विलम्बितया च वृत्यासाभिभिनी प्रैषाज्यभागान्ते। कण्ठेन मध्यमया चेडान्तशीर्षेण दृतया च रुज्वतं। प्रथमस्थाने प्राक्स्विष्टकृतो मध्यमेनेडाया शेषमुत्तमेन इति सूत्रम्। स्विष्टकृतः प्राक् सर्वे मन्त्राः प्रथमस्थाने प्रयोक्तव्याः। प्रैषाणामपि अयमेवावसरः प्रथमस्थाने चोपांशुपेक्षया। किञ्चिदुच्चैर्भवति स्विष्टकृत्। आरभ्य आइडायाः मध्यमेन स्वरेण सर्वमन्त्रजातं प्रयोज्यम्। इडात आरभ्य कर्मापवर्गान्तं सर्वमन्त्रा उत्तमेन स्वरेण प्रयोक्तव्याः। ततः प्लुतस्थानानि वक्ष्यते। प्रणव-वषट्काराणामाद्यानि प्लवन्ते ॐ वौ३षट् ये३ यजामहे ब्रूहि मे ओ श्रा३वय श्रौ३षट् आ३ वह एतेषां च वीही३ ति द्वितीयं आज्यान्ताश्च वेतू३ वौषट् व्यन्तू३ वीतां३ इत्यादीनामाद्यानि प्लवन्ते षडक्षरे तस्मिन्सन्ध्यक्षराणि एवं प्रगृह्यानि विवेकेन प्लवन्ते। ए ऐ ओ औ सन्ध्यक्षराणि। इदूदेद्विवचनं प्रगृह्यमिति। अद्विवचनान्तामिति सन्ध्यक्षराणि। कुत एतत् इत्येवमादीनि एतेषां विवेकेन प्लुतिर्भवति। यथा जानुदीरते वौषडिति वस्थाने जातुर्दीरता३इवौ३षट् कर्तनास्मा३ इ वौषट् आई आउ इति पूर्वं पूर्वं प्लुत् प्लवयेद्वर्षे एतावान् विशेषः प्रणवान्तं पुरोनुवाक्या। वषट्कारान्तं याज्या प्रणववषट्कारैरेकश्रुतिपाठः। एका श्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि। सुब्रह्मण्यासामजपन्यूङ्खयाजमानं वर्ज इति सूत्रम्। यज्ञकर्मणि मन्त्रा एकश्रुत्यातानेन प्रयोगः। न केनचित्स्वरेण प्रयोगः किन्तु सर्वत्र तु सुब्रह्मण्यासामजपन्यूङ्खयजमानवर्जम् एतानि वर्जयित्वा अन्येषु मन्त्रेष्वेकश्रुतिर्भवति। तदुक्तं कारिकास्वपि—

उपस्थाने जपे होमे दाहे च यज्ञकर्मणि।
हस्तस्वरं न कुर्वीत शेषाः स्युः स्वरसंयुताः।।

अथ उच्चारणस्थाने यथोक्तमुक्तं तदुच्चारणं कर्तव्यम्। सामिधेनीस्थाने त्रिः प्रथमोत्तमे अन्वाहाध्यर्द्धकारम्। अध्यर्द्धकारमिति समूलं अध्यर्द्धकत्वेत्यर्थः। प्रथमोत्तमे रुन्निरध्यर्द्धे ब्रूयात्। अर्द्धमुक्त्वा वस्येदथ द्वे। प्रथमायामेवमध्यर्द्धकारं भवति पूर्वमध्यर्द्ध उक्त्वा वसायन्तनो द्वे ऋचो ब्रूयात्। द्वित्रिवचनमर्द्धर्चचतुष्टयाभिप्राये पूर्वेस्मिन्नुच्छ्रसे द्वितीयतृतीययोः। आवृत्यस्त्रयर्द्धचा।।१।। उत्तरस्या ऋच एकोर्द्धर्चः। एवं चत्वारार्द्धर्चा वक्तव्या भवेयुः। अध्यर्द्धकारविधेरुत्तरया सन्धानविरोधादिति। प्रणवस्तु सर्वत्र त्रिमात्रः। अवसाने चतुर्थमात्रं चतुर्मात्रावसाने यदवसानविहितमेव नार्थप्राप्तम्। तस्मिन्नवसाने चतुर्मात्रप्रणवो भवेन्न त्रिमात्रः समिद्धः शुक्रः आहुतो ४ इत्यादि। तस्यान्तातिः तस्य प्रणवस्य योन्तः मकारः तस्य वर्णान्तरा यति वक्ष्यत इत्यर्थः। स्पर्शेषु परेषु यस्य सो मकारात्पराः तस्य स्वगर्यमुत्तममापद्यते मकारः। समिध्य सोन्तं मार्जयन्तेत्यादि निदर्शनम्। अन्तस्थासु तान्तामनुनासिकां रेफस्यानुनासिकत्वासम्भवाद्यवला एवात्र तत्रस्था गृह्यन्ते। तासु या या परान्तस्थानं तामनुनासिकां मकार आपद्यते। तत्र सानुनासिक्य पूर्वो उत्तरा शुद्धाः एवं मन्त्रयोगः। विदयामि प्रत्वादयो वाजी वाजेष्विति निदर्शनम्। रेफोष्मस्वनुस्वारं एतेषु परेषु मकारोनुस्वारमापद्यते। अनुस्वारो नाम नासिकास्थानः अस्पृष्टकरणश्च अयज्ञस्य सुकृता समिध्यमानो अध्वर इत्यादि अनुस्वारस्य डकारमापद्यते। सुकृतों समिध्यमानो अध्वरेग्निः पावक ईड्यः अत्र किं छन्दोवत्सूत्राणीति प्रतिज्ञासूत्र उक्तम्। आवाहनमुत्तमे प्रयाजे स्विष्टकृति सूक्तवाके च। आवाहनमुत्तमे प्रयाजे द्वितीयान्तमुच्चारः स्विष्टकृति षष्ठ्यन्तेन। व्यूहने षष्ठ्यन्ते नाम कीर्तयित्वा जूहू इति। प्रथमान्तं कीर्तयित्वा प्रभृतमिति। सूक्तवाके प्रथमान्तेन वाजिनोनावाहयेत्। किञ्चित् स्विष्टकृते विशेषः होतरित्यनवानं यजति। आज्यपानामिति प्रति प्रसिद्धक्रमसङ्ग्रहात् आवाहनक्रमोऽत्रापि गृह्यते तेनास्थानिन्यानिगमत्रापि स्यात् आज्यपानामित्येवमुक्त्वा तदनन्तरेण प्रियाधामानि शब्देन यक्षेदिति सन्धाय यथा सूक्तमुक्त्वा जुषतां हविरग्रे यदद्येत्युचानुछ्र सन्त्यजेत्। सर्वत्रानुछ्रास कर्तव्योस्या या जायां। प्रकृत्या वा अर्द्धर्च वा उछ्रासमेयेदित्यर्थः। अथान्तरङ्गबहिरङ्गः। हविष्याजस्वां ऋत्विजां पूर्वमन्तरं। हवि यवाज्यादि पात्राणि स्फ्यादिति स्वामि यजमानः पत्नी च ऋत्विज ब्रह्मादयः एकत्र समाजे सति यथा पूर्वमिति यो यः पूर्वः सद्योत्तर अग्नीसमीपः यो य उत्तरः स सम्बहिर्भवति। पूर्वापूर्वपेक्षया। चात्वालोत्करावन्तरेण सञ्चरः

प्रणीतोत्कराविष्टिसु प्रणीतोत्युरावन्तरेण सर्वेषां गमनाय मार्गः सोत्तरवेदिषु कर्मसु चात्वालोत्करयोरन्तरालेन। इति।

## ।। अथ स्थलान्तरे प्रत्यक्षाग्निनयनम् ।।

प्रत्यक्षेन नयन्नग्निमुच्छ्रसेच्चेद्यदि नश्यति।
यदि वानुच्छ्रसे नीत्वा निधायोच्छ्रस्यन्तं पुनः।।१।।
हरेदनुच्छ्रसं ये च नस्ये त्रिहरणानलः।
शकटं नातिदूरे वा दूरदेशं यथा रुचिः।।२।।
स्वाङ्गेनैवाथवा शम्या परा सा प्राङ् नयेत् छ्रसन्।
कर्मार्थं हरणेग्नीनां नानुच्छ्रासादि चोद्यते।।३।।
कात्यायनमतात्केचित् छ्रसतोप्यति दूरतः।
प्रत्यक्षेनयनात्यग्नीन् शकटं न विना पितुः।।४।।
प्रत्यक्षानयने वह्निश्चारण्यारोपितेषु च।
अन्वारम्भस्तदाधाने सोन्वारम्भः कुशेन हि।।५।।
तत्र नान्वारम्भेदग्निः पुनराधीरुदाहृतः। इति।

## ।। अथ दर्शपौर्णमासेष्टिप्रयोगः ।।

धीमता शिवप्रसादेन सूत्रं कात्यायनस्य च।
निरीक्ष्य सम्यक् क्रियते दर्शयागस्य पद्धति।।

अथ ऋष्यादिकं न स्मरेदत्र ऋष्यादि श्राद्धे वैतानिके मखेति वचनात्। ततः हुतेऽग्निहोत्रे शुचिराचान्तः सपत्नीको यजमानो गार्हपत्यमपरेणोपविश्याचम्य प्राणानायम्य। देशकालौ सङ्कीर्त्य श्रीपरमेश्वरप्रीत्यर्थं पौर्णमासेन श्वोहं वा सद्योहं यक्षे। अध्वर्युराहवनीयदक्षिणाग्निखरे पञ्चभूसंस्कारान् कृत्वा गार्हपत्यादाहवनीयमुद्धरामि। गार्हपत्याद्दक्षिणाग्निमुद्धरामि। अथाग्नयन्वाधानम्। यजमानः षट् समिधो गृहीत्वा अग्निमष्टकपालेन पुरोडाशेन। उपांशु॰। अग्नीषोमावन्तराज्येन उच्चै॰ अग्नीषोमावेकादशकपालेन पुरोडाशेन सद्योऽहं यक्ष्ये। तत्र पञ्चदशो वज्रः व्रीहिभिर्यागः। अन्वाहार्यो दक्षिणा ममाग्नेपक्षः। उत्तमे काले व्रतोपायनम्। ये केचन वैकल्पिकपदार्थास्ते मया ऋत्विक् प्रत्ययेनावधारिता अध्वर्युः। ॐ ममाग्ने वर्च्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम मह्यं नमन्तां प्रदिश्चतस्त्रस्त्वयाध्यक्षेण

पृतना जयेम। इत्याहवनीये समिधमादधाति तूष्णीं द्वितीयमेवं गार्हपत्यदक्षिणाग्नौ च। ततः षडासनम्। ब्रह्मवरणार्थं यजमानयोऽर्द्धे आसने विहारस्योत्तरतः आहवनीयस्य दक्षिणतो ब्रह्मोपवेशनार्थमेकं तथैव पश्चात् द्वितीयं यजमानस्योपवेशनार्थं तथा गार्हपत्यस्योत्तरत एकमध्वर्योरुपवेशनार्थम्। आहवनीयस्योत्तरतो द्वितीयं च एतदासनद्वयं प्रणीताप्रणयनार्थं केचिन्मते गार्हपत्यस्य नैर्ऋत्ये पत्न्यासनम्। ततो ब्रह्मवरणम्। उदङ्मुखोपविष्टो यजमानः प्राङ्मुखोपविष्टं ब्रह्माणं वृणुते। दक्षिणं जान्वालभ्य गोत्रोच्चारणपूर्वकं पौर्णमासेष्ट्यर्थं ब्रह्माणं त्वां वृणे। तत्र मे त्वं ब्रह्मा भव। भवामि। ततो ब्रह्मा ॐ अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देव सवितरेतन्त्वा वृणुते बृहस्पतिं ब्रह्माणं तदहं मनसा प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजापतये प्रजापतिर्विश्वभ्योदेवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम्। यजमानः वाचस्पते यज्ञं गोपाय ब्रह्मा ॐ गोपायामि। पूर्वेणाहवनीयं दक्षिणातिक्रामति। ॐ अहै दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योस्मत्पाकतरः। इति ब्रह्मसदनमीक्षते। ब्रह्मसदनादेकं तृणमङ्गुष्ठोपकनिष्ठिकाभ्यामादाय नैर्ऋत्यां दिशि निरस्यति। ॐ निरस्तः पाप्मा सह तेन यं द्विष्मः उदको ॐ इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्यै। ब्रह्मसदन आहवनीयमभिमुख उपविशति वाग्यतः। यजमानोऽपि तीर्थेन प्रविश्य स्वासने उपविश्य पत्नी च अत्रापस्पर्शनार्थे सूत्रम्। रौद्रं राक्षसामासुरमाभिचारणीकं मन्त्रमुक्त्वा पितृमात्मानं चालभ्योपस्पृशेदप उपस्पृशेदपः कारिकायां विशेषः—

छेदने भेदने चैव पैतृके रौद्रराक्षसे।<br>
आत्माभिमर्शने चैव निरस्याप उपस्पृशेत्॥<br>
निरसनोऽपवेशश्च तथा ब्रह्मजपोऽपिच।<br>
प्रायश्चित्तमुपस्थानं ब्रह्मणः कर्म पञ्चकम्॥

ततोऽध्वर्युः चमसं वामे कृत्वा दक्षिणेनात्माभिमुखं पूर्वगार्हपत्यस्योत्तरतो निधाय। भूतस्त्वेति मन्त्रेण चमसस्यालम्भ इति कर्कः। उदकस्यालम्भ इति याज्ञिकाः। ॐ भूतस्त्वा भूतकरिष्यामि। ब्रह्मन्नपः प्रणेष्यामि। यजमान वाचं यच्छ। ब्रह्मा उपांशु पठित्वा। ॐ प्रणय यज्ञं देवता वर्द्धय त्वं नाकस्य पृष्ठे यजमानोस्तु सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि। ॐ प्रणयेत्युच्चैः अध्वर्युः चमसं गृहीत्वा आहवनीयादुत्तरस्यां दिशि बहिर्वेदिं सम्प्रति निदधाति। ॐ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा

युनक्ति। नान्तरेण गच्छेयुः। तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं दक्षिणतः पश्चादुत्तरतो वा उत्तरश्चेदुदक्संस्थं असम्भवे प्राक्संस्थमपि। पश्चाच्चेत्प्राक्संस्थः। असम्भवे उदक्संस्थमपि। शूर्पाग्निहोत्रहवणी। स्फ्यः कपालानि। शम्या कृष्णाजिनम्। उलूखलं मुसलम्। दृषदुपलापात्री पवित्रछेदनानि। पवित्रे उपवेषश्च। आज्यस्थाल्युपसर्जनीं पात्रीं च कुशमुष्टीरन्वाहार्यपात्रं च वेदितृणमभ्रिः योक्त्रं स्रुवश्च। जुहूपभृच्च। ध्रुवासन्नहनावच्छादनानि परिधयो विधृती च। आज्यं पुरोडाशपात्र्यौ। होतृसदनं शृतावदानम्। औषधं प्राशित्रहरणे। अन्वाहार्यतण्डुलाः। अन्तर्धानकटः। पूर्णपात्रपक्षे समिच्च। इध्माबर्हिषोरुपकल्पनं षडवत्तञ्च। गार्हपत्यस्य पश्चात् स्फ्योपहितां पात्रीमोषधकरणं कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय। ॐ कर्मणे वां वेषाय वामाददे। वाचं यच्छत्वध्वर्युः। तयोरेव गार्हपत्ये प्रतपनं प्रत्युष्टमिति। ॐ प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः उदको॰ गच्छति उर्वन्तरिक्षमिति। ॐ उर्वन्तरिक्षमन्वेमि। शकटं प्रतिगच्छति श्रपणस्य पश्चादनस्तिष्ठत्समङ्गी धूरसीति धूरमभिमर्शनम्। धूरीषारोहणानि पात्रीबिले जपति। ॐ धूरसिधूर्व॰ मः देवानां॰ षीत्। अथाक्रमते। विष्णुस्त्वाक्रमताम्। प्रेक्षत उरु वातायेति हविष्या ॐ उरु वाताय भव। अपहतमिति तुषां निरस्यति। ॐ अपहतं रक्षः उदको॰ अविद्यमानोऽभिमृशेद्यच्छन्तामित्यालभते। ॐ यच्छन्तां पञ्च। देवस्यत्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन्। ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामि प्रथमः द्वितीयः तृतीयः तूष्णीं चतुर्थः। एवमग्नीषोमीयम्। ॐ देवस्य त्वा॰ अग्नीषोमाभ्यां ॐ जुष्टं गृह्णामि। यथादैवतमन्यत्। भूताय त्वेति शेषाभिमर्शनम्। ॐ भूताय त्वा नारातये परिशेषयामि। स्वरिति प्राङ् ईक्षते। ॐ स्वरभिविख्येषन्दृंहन्तामित्युत्थानम्। ॐ दृंहन्तां दुर्याः पृथिव्यां दक्षिणपादेन गच्छत्युर्वन्तरिक्षमिति। ॐ उर्वन्तरिक्षमन्वेमि। श्रपणस्य पश्चात् सादयति पृथिव्यास्त्वेति। ॐ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यं रक्ष। कुशौ समावप्रशीर्णाग्रावनन्तगर्भौ कुशैश्छिन्नत्ति पवित्रे स्थ इति। पवित्रे स्थो वैष्णव्यौ॰ छित्वा। त्रिन्वा हविर्गृह्णामपा कृत्वा ताभ्यामुत्पुनाति सवितुर्वः प्रसव॰ भिः तास्दानं तयोः सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति। ॐ देवीरापो अग्रेगुव॰ युवं युष्मा इन्द्रो॰ तूर्ये प्रोक्षितास्थेति तासां प्रोक्षणं हस्तेनैव कार्यम्। ॐ प्रोक्षितास्थ हविश्च ब्रह्मन् हविः प्रोक्षिष्यामि ब्रह्मा ॐ प्रोक्ष यज्ञं देव॰ हि। ॐ प्रोक्ष। अग्नये जुष्टं प्रोक्षामि। हस्तेनैव प्रोक्षणम्। अग्नीषोमाभ्यां त्वा जु॰ यथादैवतमन्यत्। पात्राणि दैव्यायेति। ॐ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि। आदौ वज्रं प्रोक्ष्य। तमेव सव्ये गृहीत्वा कृष्णाजिनोलूखलमुसलशम्यादृषदुपलशूर्पपात्र्युपवेषकपालानि प्रोक्ष्य।

आज्यस्थाल्यादीन्यासादनक्रमेण प्रोक्ष्य। स्फ्यवर्जमाज्यप्रोक्षणं त्रि:प्रोक्षतीति सर्वेषु सूत्रान्तरेषु सकृन्मन्त्रेण द्विस्तूष्णीं प्रणीताग्नयोर्मध्ये असञ्चरे प्रोक्षणीर्निधाय। शर्मासीति कृष्णाजिनादानम्। ॐ शर्मासि अयेत्यपात्रेभ्योवधूतोत्यवधूतमिति। ॐ अवधूतं रक्षोवधूता अरातय:। उद० अवधुत न गार्हपत्यस्योत्तरत उत्करदेशे वा प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति। ॐ अदित्यास्त्वगसि प्रति त्वादितिर्वेतु। सव्याशून्ये निदधात्युलूखलमद्रिरसीति ॐ अद्रिरसि व्वा०। हविराव-पत्यग्नेस्तनूरिति। ॐ अग्नेस्तनूरसि०। वाचं विसृजति यजमानस्य वाग्विसर्ग:। हविष्कृतावा नानाबीजेष्वन्ते सामर्थ्यात्। बृहद्ग्रावेति मुसलमादत्ते। ॐ बृहद्ग्रावासि वानस्पत्य:। स इदमित्यवदधाति। ॐ स इदं देवेभ्यो हवि: शमीष्व सुशमि शमीष्व। हविष्कृदेहीति। ॐ हविष्कृदेहि ३ तत: अग्नीत् कुक्कुटोसीति त्रि: शम्यया द्विर्दृषदं सकृदुपलं आहन्ति। ॐ कुक्कुटोसि मधुजिह्व इषमूर्जमा वद त्वया वयं सङ्घातं संङ्घातं जेष्म प्रत्याहननमन्त्रावृत्ति:। अग्नीध: तूष्णीं कण्डनं वर्षवृद्धमसीति शूर्पमादते। वर्षवृद्धमसि प्रति त्वेति हविरुद्वपति। प्रति त्वा वर्षवृद्धँ वेत्तु। परापूतमिति निष्पुनाति। कृष्णाजिने। परापूतं रक्ष: परापूता अरातय: उद० वायुर्व इति विविनक्ति वायुर्वो वि विनक्तु कणनिधानं पुन: कण्डनम्। तूष्णीं शूर्पादानं हविरुद्वपनं तुषनिधानम्। विवेचनं सर्वं तूष्णीमेवाध्वर्यु:। अपहतमिति तुषां निरस्यत्युत्करे। ॐ अपहतं रक्ष:। उद० देवो व इति पात्र्यामोप्याभिमन्त्रयते ॐ देवो व: सविता हिरण्यपाणि: प्रतिगृभ्णात्वछिद्रेण पाणिना। तण्डुलाननामिकाग्रेण स्पृशन्। विलोक्य त्वामत्रं पठतीत्यर्थ:।

तथा चोक्तं कात्यायनेन—

ना स्पृशत्वनामिकाग्रेण क्वचिदालोकयन्नपि।
अनुयन्नित्यं सर्वत्र सदैवमनुमन्त्रयेदिति।।

त्रि:फलीकरोति त्रि: कण्डनेन सूक्ष्मकनिष्ठिकाभ्यो वियोज्यो-ज्वलात्करोतीत्यर्थ:। फलीकृत्य कणां निदधाति पेषणोपधाने युगपत्। मेक्षणमध्वर्यु: करोत्युपधानमग्नीत्। एकाध्वर्यु: पक्षे कपालोपधानम्। अग्नीत्। धृष्टिरसीत्युपवेषमादाय। ॐ धृष्टिरसि। अपाग्न इत्यङ्गारात्प्राच: करोति। ॐ अपाग्ने अग्निमामादं जहि निष्क्रव्यादं सेध। आदेवयजम् इत्यङ्गारमाहृत्य आदेवयजं वह कपालेनावच्छादयति ध्रुवमसीति। ध्रुवमसि पृथिवीन्दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भातृव्यस्य वधाय। तत्राभिचारं कुर्यात भ्रातृव्यस्य वधायेत्यत्रभ्रातृव्यस्येति पदस्थाने अमुकस्य वधायेति शत्रोर्नामगृह्णीयात् न तदा चोदकस्पर्श: अभिचारबुध्याभावे उदकोपस्पर्शाभाव:। मन्त्रस्यानाभिचारीकृत। एवं

सर्वत्र सव्याङ्गुल्या शून्येङ्गारं निदध्यात्यग्ने ब्रह्मेति। ॐ अग्ने ब्रह्म गृभ्णीष्व। एवमधस्तादङ्गारवर्जं धरुणमिति पश्चात्। ॐ धरुणमस्यन्तरिक्षन्दृंह ब्रह्म॰ सव्याङ्गुल्याशून्येङ्गारं निदधा॰ ॐ अग्ने॰। सर्वत्र धर्त्रमिति पुरस्तात्। ॐ धर्त्रमसि दिवं दृंह ब्र॰ विश्वाभ्य इति दक्षिणतः। ॐ विश्वाभ्यस्त्वाशाभ्य उप दधामि। समं विभज्य द्वे दक्षिणतः एवमुत्तरतश्चितस्थेति। ॐ चतुर्थापूर्वं, एककपालस्यान्तरालं परिशिष्य पञ्चमं ॐ चितस्थोर्ध्वचितः। इति प्रतिमन्त्रं सव्याङ्गु। चतुर्थपञ्चमयोरन्तराले षष्ठं चतुर्थस्य पश्चात्सप्तमस्तस्य पश्चादष्टमम्। सर्वेभ्योत्तरतो नवमदशमैकादशानि। एवमेकादशाग्नीषोमीयस्याधिकं दक्षिणतः भृगूणामङ्गित्यिङ्गारैरभ्यूहति। ॐ भृगूणामङ्गिरसां तपसा तप्यध्वम्। उपसर्जनीरधिश्रयति। अध्वर्युः शर्मासीति कृष्णजिनादानम्। पूर्ववत् ॐ शर्मासि। अपेत्य पात्रेभ्यो॰ ति अवधूत॰ तयः उदको॰ प्रत्याग्रीव॰सि। ॐ अदित्या॰ तु। सव्याशून्ये तस्मिन् दृषदं धिषणासीति ॐ धिषणासि पर्वती प्रतित्वादित्यास्त्वग्वेत्तु। पश्चाच्छम्यामुपोहत्युदीचीं दिव इति। ॐ दिवस्कम्भनीरसि। दृषदुपलान्धिषणासीति। ॐ धिषणासि पार्वेतेयी प्रति त्वा पर्वती वेत्तु। धान्यमसि तण्डुलानोप्य। ॐ धान्यमसि धिनुहि देवान् पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम्। ॐ प्राणाय त्वा पिनष्मि। ॐ उदानाय त्वा पिनष्मि। ॐ व्यानाय त्वा पिनष्मि। पिष्यमाणेषु निर्वपत्यन्त्यो महीनामित्याज्यम्। अन्यशब्देनाग्नीधः। ॐ महीनां पयोसि निरूप्याज्यं वेदोसि येन त्वं॰ भूयाः प्रादेशमात्रं करोति अध्वर्युः दीर्घामिति कृष्णाजिने प्रोहति पिष्टानि। ॐ दीर्घामनु प्र॰ पाणिना चक्षुषेत्त्वेतीक्षते। ॐ चक्षुषे त्वा इक्ष्यपात्र्यां सपवित्रायो पिष्टान्यावपति देवस्येति। देवस्यत्वा स॰ भ्यां सँव्वपामि श्रपणस्य पश्चादुपविशत्युपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप इति। ॐ समाप ओषधीभिः समोषधयो रसेन सं रेव॰ च्यन्ताम्। सँय्यौमि जनयत्यै त्वेति। ॐ जनयत्यै त्वा संयोमि। समं विभज्य पुरोडाशकरणनिर्देशः। इदमग्नेः इदमग्नीषोमयोः यथादैवतमन्यत्। ततोग्नीद्वेदसव्यहस्ते गृहीत्वा इषे त्वेति मन्त्रेण दक्षिणत आज्यमधिश्रयति। ॐ इषे त्वाधिश्रयामि घर्मोसीति पुरोडाशं युगपत्। ॐ घर्मोसि विश्वायुः उरु प्रथयति यावत्कपालमनतिपृथुः ॐ उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्ट इत्यद्भिरभिमृशति प्रत्येकं सकृत्। ॐ अग्निष्टे त्वचं मा हिंसीत् पिष्टलेपस्थापनं पात्र्यङ्गुलिप्रक्षालनम्। पर्यग्निकरोत्वन्तरिता अरातयः इति सहाज्यं पयोवर्ज्यं ॐ अन्तरिक्षं रक्षोन्तरिता अरातयः। उदको॰ देवस्त्वेति श्रपणं प्रतिपुरोडाशम्। ॐ देवस्त्वा सविता श्रपयतु वर्षिष्ठेधिनाके। मा भेरित्यालभते प्रतिपुरोडाशम्। ॐ मा भेर्मा सं विक्थाः। अतमेरुरिति स्रुवाविभिरस्यति वेदेन उपवेषेण वा ॐ

अतमेरुर्यज्ञोतमेरुर्यजमानस्य प्रजा भूयात्। पात्र्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति। अभितप्य प्रत्यग॰ संस्पन्दमानं त्रिताय त्वेति प्रतिमन्त्रं प्राचं खननं प्रत्यंच निनयनम्। ॐ त्रिताय त्वा निनयामि। इदं त्रितायाप्त्याय न मम। ॐ द्विताय त्वा निनयामि। इदं द्वितायाप्ताय॰ ॐ एकताय त्वा निनयामि इदं एकतायाप्त्याय न मम। अन्वाहार्यपात्रे प्रणीतो-दकमासिञ्च्यान्वाहार्यं दक्षिणाग्नावधिश्रयति। द्विः प्रक्षालनं, अपरेणाहवनीयं वेदिं खनति। त्र्यङ्गुलखातां व्याममात्रीं पश्चात् स्फ्येन मानं प्र॰द्वि॰तृ॰च॰ त्र्यरत्नि प्राचीं मध्ये प्रथम द्वि॰तृ॰पुरस्तात्प्र॰द्वि॰तृ॰ प्राक्प्रवणामध्ये सङ्गृहीत्वा। अग्निमभितोंसौ २ ततोग्नीत्कुशैर्वेदिं परिसमुह्य। वज्रेण वितृतीयेग्नीदुत्तरत उत्करं करोति। अध्वर्युः देवस्यत्वेति स्फ्यमादाय सतृणम्। ॐ देवस्य त्वा॰ माददेध्वरकृतं देवेभ्यः सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति। ॐ इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः नापस्पृशेत्। अभिचारभावः वेद्यां तृणं निदधात्युदक् पृथिव्यै वर्मासीति। ॐ पृथिव्यै वर्मासि। पृथिवि देवयजनीति तृणेन्तर्हिते प्रहरति। पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषं व्रजं गच्छेति हस्तेन स्फ्याग्रेण पुरीषमादत्ते। ॐ व्रजं गच्छ गोष्ठानं वर्षतु त इति वेदिं प्रेक्षते। वर्षतु ते द्यौः बधानेत्युत्करे करोति। ॐ बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योस्मान्द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौक्। अपाररुमिति द्वितीयमाने प्रहरति। ॐ अपाररुं पृथिव्यै देवयजनाद्वध्यासं उद॰ व्रजं गच्छति पूर्ववत्। अभिन्यस्यत्यग्नीं दुत्करमरचो दिवपति। ॐ अररो दिवं मा पप्तः उद॰ द्रप्सस्त इति तृतीयं प्रहरति। ॐ द्रप्सस्ते द्याम्मास्कन् व्रजं गच्छेति पूर्ववत् तूष्णीं चतुर्थं सतृणं प्रहरणं, पुरीषादानं, प्रेक्षणं, उत्करे करणं, ब्रह्मन्पूर्वं परिग्रहं परिगहीष्यामि। ॐ बृहस्पते परिगृहाण वेदिं सुगा वो देवाः सदनानि सन्त्वस्या बर्हिः प्रथतां साध्वन्तरहिं स्रापृथिवी देवी देव्यस्तु देवता वर्द्ध धेहि। ॐ परिगृहाण अध्वर्युः दक्षिणतः पश्चादुत्तरतः स्फ्येन गायत्रेणेति प्रतिमन्त्रम्। ॐ गायत्रेण त्वा छन्दसा परिगृह्णामि। ॐ त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि। ॐ जागतेन त्वा छन्दसा परि॰। वेद्यां प्राचीस्तिस्रो रेखा उल्लिखख्य आह हर त्रिः हृत्वाल्लेखा सम्मृशति। तूष्णीं अभ्यावेदिखननम्। ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामि। ॐ बृहस्पते॰ धेहि॰ ॐ परिगृहाण सुक्ष्मा स्योनोर्जस्वतीति प्रतिमन्त्रं ॐ सुक्ष्मा चासि शिवा चासि दक्षिणतः ॐ स्योना चासि सुषदा चासि पश्चात्। ॐ ऊर्ज्जस्वती चासि पयस्वती चेत्युत्तरतः। पुराक्रूरस्येत्यनुमार्ष्टि वेदेन प्रत्यक्संस्थं पुरस्तादारभ्य ॐ पुराक्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयंश्चन्द्रमसि स्वधाभिस्तामुधीरासो अनुदिश्य यजन्ते। अनुमार्जनं समीकरणमित्यर्थः।

अध्यधिवेदिप्रोक्षणीर्धारयति अन्योऽथ स्फ्यमुद्यम्याह। प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्याज्येनो देहि। वेद्यां प्रोक्षण्यासादनं द्विषतो वध इति स्फ्यमुदञ्चं प्रहरति। ॐ द्विषतोवधोसि। अवनिज्यपाणी। अपरेण प्रणीता स्फ्यं च निदधाति। इध्माबर्हिश्च प्रागग्र इध्मादुत्तरतो बर्हिश्च प्रासादयति। वेदाग्रमपच्छिद्य। गार्हपत्योदगुपविश्य स्रुवं प्रतप्य प्रत्युष्टमिति। ॐ प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः। उद० प्राङ्मुखोपक्रम्य वेदाग्रैः प्राञ्चं सम्मार्ष्टि। मूलादारभ्याग्रपर्यन्तं अनिशितोसीति। ॐ अनिशितोसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि पुनरनिशितोसि मन्त्रेण मूलैर्मुखं मूलान्तमधः प्रत्यञ्चं सम्मार्ष्टि पुनः प्रत्युष्टमिति प्रतप्याथ उपस्पृश्य प्रयच्छत्यग्नीध्रे स च प्रोक्षणीदण्डे निदधाति जघनेन वा अनिशितेति स्रुचः अन्तरतो बाह्यतश्च सम्मृज्य पूर्ववत् प्रतप्याप उपस्पृश्याग्नीध्रे प्रयच्छति। ॐ अनिशितासि० एवमेवोपभृतं ध्रुवां च सम्मृज्य तूष्णीं प्राशित्रहरणे शृतावदानम्। पुरोडाशपात्र्यौ इडापात्रीं च सम्मार्ज्य नानपास्यत्युत्करे। पत्नीं सन्नह्यति प्रत्यक् दक्षिणत उपविष्टां गार्हपत्यस्य उभयोक्तेन त्रिवृतापरिहरत्यधीवासोदित्यै रास्नेति। ॐ अदित्यै रास्नासि। दक्षिणं पाशमुत्तरेण प्रतिमुच्योर्ध्वमूदूहति। विष्णोर्वेष्प इति। विष्णोर्वेष्पोसि न ग्रन्थि करोति। बहुपत्नीत्वे सन्नहनं सर्वासाम्। ऊर्ज्जेत्वेत्याज्यमुद्वास्य। ॐ ऊर्ज्जे त्वा उद्वासयामि। पत्नीमवेक्षत्यदब्धेनेति। ॐ अदब्धेन त्वा० यजुषे। अनवकाशे अध्वर्युराज्यमवेक्षते। वेद्यां करोत्यपरं प्रोक्षणीभ्यः सवितुस्त्वेत्याज्यमुत्पुनाति। ॐ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। प्रोक्षणीश्च पूर्ववत्। ॐ सवितुर्वः प्र० आज्यमवेक्षते तेजोसीति यजमानो वा। ॐ तेजोसि शुक्रमस्यमृतमसि। स्रुवेणाज्यग्रहणम्। चतुर्जुह्वां धाम नामेति सकृन्मन्त्रेण त्रिस्तूष्णीम्। ॐ धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि। अष्टा उपभृत्यल्पियोनुयाजाश्चेत्। ध्रुवायां च जूहूवत् जुह्वादीनाज्यस्थालीञ्च वेदे पश्चान्निधाय। इध्मं प्रोक्षति विस्रंस्य ब्रह्मन्निध्मं प्रोक्षिष्यामि। प्रोक्ष य० कृष्णोसीति प्रोक्षणम्। ॐ कृष्णोस्याखरेष्ठोग्नये त्वा जुष्टं प्रोक्षामि वेदिं च। ॐ वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि। बर्हिःप्रतिगृह्य आग्नीध्रात् वेद्यां कृत्वा पुरस्तात् ग्रन्थिम्। ॐ ब्रह्मन् बर्हिः प्रोक्षिष्यामि प्रोक्ष य० ॐ प्रोक्ष बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि। शेषं मूलेष्वपसिञ्चत्यदित्यै व्युन्दनमिति। ॐ अदित्यै व्युन्दनमसि पवित्रे निधाय प्रणीतासु बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति। ॐ विष्णोस्तुपोसि तूष्णीं ब्रह्मणे प्रदाय सन्नहनं विस्रंस्य दक्षिणस्यां वेदिश्रोणौ निधाय अन्यैरवच्छाद्य आपन्नतृणं निरस्येत् वेद्यां पतितं तृणपर्णकाष्ठादिकं निरस्येदित्यर्थः। बर्हिस्त्रेधाकरणम्। अयुग धातु पञ्च सप्त कृत्वा वेदिं स्तृणात्यूर्णाम्रदसमिति। ॐ

ऊर्णंम्रदसन्त्वास्तृणामि स्वासस्थान्देवेभ्यः अधरमूलं पश्चादपवर्गे। इध्मात्समिधमादाय ब्रह्मणः प्रस्तरं चादाय आहवनीये कल्पयति। ॐ पर्युपरि प्रस्तरं धारयन् उल्मुके उद्वहत्यनुयाजाश्चेत् परिधीन्परिदधाति मध्यमदक्षिणोत्तरात् गन्धर्व इति प्रतिमन्त्रम्। ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः। इति पश्चिमः। ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै य॰ डितः इति दक्षिणम् ॐ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्या॰ डितः इति उत्तरम्। उत्थाय प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति। ॐ वीतिहोत्रं त्वा॰ ध्वरे। अनुपस्पृश्य द्वितीयां समिदसीति। ॐ समिदसि उपविश्य सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणः ॐ सूर्यस्त्वापुरस्तात्पातु कस्याश्चिदभिशस्त्यै। आवृत्य वेदिं बर्हिर्षस्तृणे विधृतीतिरश्चीनी दधाति सवितुरिति। ॐ सवितुर्बाहू स्थः तयोः प्रस्तरं तृणात्यूर्णम्म्रदसमिति ॐ ऊर्णम्म्रदसन्त्वास्तृणामि स्वासस्थान् देवेभ्यः। ॐ उभाभ्यां हस्ताभ्यामभिनिदधात्यात्वा वसव इति। आ त्वा वसवो रुद्रा आदित्याः सदन्तु। सव्याशून्ये जूहूं प्रतिगृह्य निदधाति घृताच्यसीति। ॐ घृताच्यसि जूहर्नाम्ना सेदं प्रियेण धाम्ना प्रियं सद आ सीद इतरां वेदोपग्रहेण। ॐ घृताच्य-स्युपभृन्नाम्ना सेदं॰ ॐ घृताच्यसि ध्रुवा नाम्ना॰ द। अवकृष्टेन पूर्वं नेदमाज्य-स्थाल्यपहरणम्। येत्युपुरोडाशयोर्विभस्मीकरणम्। पुरोडाश पात्र्यौ स्थापनं तयोरुपस्तारणम्। पुरोडाशमभिघार्योद्वास्य। शृतानां तु पूर्वेण उद्वासितानां तु पृष्ठतः। कपालसंख्याप्राणदानम्। ॐ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु योवितस्थे। आत्मन्वान्त्सोम घृतवान्हि भूत्वाग्निं गच्छ स्वर्यजमानाय विन्द। ॐ यस्ते॰ भूत्वाग्नीषोमौ गच्छ स्वः। यथा दैवतमन्यत् प्रत्यनक्ति कपालानि तूष्णीं संख्ययोरुद्वासयामि। एवमष्टमेवमेकादशप्रियेण धाम्नेति हवींषि वेद्यां कृत्वा। ॐ प्रियेण धाम्ना प्रियं सद आसीद। आज्यस्थालीपूर्वकं ॐ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्। आत्मानमालभते। पाहि मां यज्ञन्यम्। उद॰ व्रतग्रहणम्। अन्तरेण पराग्निं गत्वापरेणाहवनीयं प्राङ् तिष्ठन् अग्निमीक्षमाणोऽप उपस्पृश्य। व्रतमुपैत्यग्ने व्रतपत इति। ॐ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मेराध्यतां होतृषदनं कृत्वा परेण वेदिं श्रोणिं वोत्तरेण सकुशं होतरेहि ३ हि हौत्रं करिष्यन्सञ्चरेण प्रणीतोत्करावन्तरेण प्रविश्याहवनीयं प्रतिष्ठन् अध्वर्युरिध्मान् समिधमादाय अग्नये समिध्यमानायानुब्रूहि। होता ब्रह्मन् सामिधेरनुवक्ष्यामि। ब्रह्मा प्रजापतयेऽनु ब्रूहि। ॐ यज्ञं देवता॰ धेहि। अनुब्रूहि। होता ब्रह्म प्रसूतोऽङ्गुलिपर्वाग्रमान्ससंहिम्नः हृदयदेशेञ्जलिः प्रतिष्ठाप्य दक्षिणं च पादं वेद्या श्रोणीसमं कृत्वा द्यावापृथिव्योरन्तरमीक्षमाणो नमः इदं जपेत्। ॐ

नमः प्रवक्त्रे नम उपवक्त्रे नमो द्रष्ट्रे नमोनुख्यात्रे इदमनुवक्ष्यति स इदमनुवक्ष्यति क आर्त्विज्यं करिष्यति स आर्त्विज्यं करिष्यत्यृचः प्र पद्ये यजुः प्र पद्ये ब्रह्म प्र पद्ये साम प्र पद्ये नाना छन्दसां मातरं प्र पद्ये। भूः प्र पद्ये भुवः प्र पद्ये स्वः प्र पद्ये भूर्भुवः स्वः सर्वं प्र पद्ये। यजमानः सन्तन्वन्निव मे ब्रूहि इति होतारं प्रेषयति। इदमहं पञ्चदशेन वज्रेण द्विषन्तमवबाधे। पादाङ्गुष्ठाभ्यां भूमिमधः पीडयति। अत्राभिचाराभावान्नोदकस्पर्शः। होता त्रिर्हिं कृत्वोपांशु महाव्याहृतिरों पूर्वा सामिधेनीप्रणवेनार्द्धर्चशः सन्दध्यादन्यत्राप्यर्द्धर्चे वरयेत्। प्रतिप्रणयमाधान-मध्वर्युः सर्वमिध्ममेकवर्जमनुयाजाश्चेत्। समिद्धो अग्न इत्यन्तः। प्राक् पञ्चानां काष्ठानां सहैव प्रक्षेपः। ॐ हिं हिं हिं भूर्भुवः स्वरोम्। ॐ प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयोम् प्र वो वाजा० घृताच्या देवान् जि० प्र वो वा० च्या देवान् जि० सुम्नयो३मग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सिबर्हिषोम्॥३-४॥ तन्त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि। बृहच्छोचा यविष्ठ्योम्॥३-५॥ स नः पृथुः श्रवाय्यमच्छा देव विवास० सिबृहदग्ने सुवीर्यो॥३-६॥ मीडेन्यो नमस्यस्तिरस्तमांसि दर्शतः। समग्निरिध्यते वृषोम्॥३-७॥ वृषो अग्निः समिद्ध्यतेश्वो न देववाहनः। तं हविष्मन्त ईडतोम्॥३-८॥ वृषणं त्वा वयं वृषन् वृषणः समिधीमहि। अग्ने दीद्यतं बृहोम्॥३-९॥ अग्निं दूतं वृणीमहे होतारं विश्ववेद सम्। अस्य यज्ञस्य सुक्रतोम्॥३-१०॥ समिद्ध्यमानो अध्वरेग्निः पावक ईड्यः। शोचिष्केशस्तमी-महोम्॥३-११॥ समिद्धो अग्न आहुत देवान्यक्षि स्वधर। त्वं हि हव्यवाडसोम्॥३-११॥ आजुहोता दुवस्यताग्निं प्रयत्य० ध्वरे। वृणीध्वं हव्यवाहनोम्॥३॥ आजुहो० ध्वरे। वृणीध्वं ह० हनो३मा जु० ध्वरे वृणीध्वं हव्यवाहनोम्। अग्ने महां असि ब्राह्मण भारत। भारद्वाज काश्यपावत्सार नैव ध्रुवव देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्म संशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता। तूर्णिर्हव्यवाडास्पात्रं जुहूर्देवानां चमसो देवयानाँ इवाग्ने नेमिर्देवास्त्वं परिभूरस्यावह देवान्यजमानाय। ॐ अग्निमग्न आवह सोममा३वह अग्निमा३वह। उपांशु। अग्नीषोमौ उच्चैः॥३॥ आवह अग्नीषोमावा३वह। देवां आज्यपां आ३वह। अग्निं होत्रायावह स्वं महिमानमावह। आ च वह जातवेदः। सुयजा च यज। अनुवचनान्तेध्वर्युः। वेदेनाहवनीयं त्रिरुपवाज्यम्। स्त्रुवेण पूर्वमाघारमाघार्याह। **ॐ मनसा प्रजापतये स्वाहा।** उदक्प्राञ्चं ऋजुं सन्ततं दीर्घं इदं प्रजापतये०। अग्निनमग्नीत्सम्मृड्ढि। इध्मसन्नहनैरनु परिधिपरिक्रम्यादौ दक्षिणपरिधिं सम्मार्ष्ट्यग्नेवाजजिदिति सकृन्मन्त्रेण द्विस्तूष्णीम्। ॐ अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजित सम्मार्जिम।

तथैवागत्य मध्यमपरिधिं सम्मृज्य परिक्रम्य तथैवोत्तरपरिधिं सम्मार्ष्टि। तूष्णीमुपरि। अपरमाहवनीयादञ्जलिं करोति। ॐ नमो देवेभ्यः दक्षिणत उत्तानम्। ॐ स्वधा पितृभ्यः। अप उपस्पृश्य सुयमे म इति जुहूपभृतावादायोत्तरां जुहूं कृत्वा। ॐ सुयमे मे भूयास्तमस्कन्नमद्य देवेभ्यः आज्यं सम्भ्रियासम्। परिधीनपरेण सञ्चरो होष्यतः सव्येनेतो दक्षिणोनामुतः दक्षिणातिक्रामत्यङ्घ्रिणा विष्णविति। ॐ अङ्घ्रिणा विष्णो मा त्वावक्रमिषं विष्णोस्थानमसि ईशानाभिमुखस्तिष्ठति। इत इन्द्र इति जुहोत्युत्तराधारम्। ॐ इत इन्द्रो वीर्यमकृणोदूर्ध्वोध्वर आस्थात्। अग्नये॰ स्वाहा। दक्षिणेन प्राञ्चं ऋजं सन्ततं दीर्घमुत्तराघारं जुहोति इदमिन्द्राय न मम। असंस्पर्शयं स्रुचावेत्यर्जुह्वा ध्रुवां समनक्ति सं ज्योतिषेति। सं ज्योतिषा ज्योतिर्गच्छताम्। निधाय स्रुचौ इतरां वेदोपग्रहेण। इध्मसन्नहनान्यादायोत्करस्य पश्चाद्धोतुरुत्तरतः प्राङ्मुखस्तिष्ठन्। ततः अग्निदक्षिणाभिमुखोध्वर्युरुत्तरेण स्फ्यं गृहीत्वा ओ श्रावय अग्नीत्। अस्तु श्रौषट् अध्वर्युः। अग्निर्देवो देव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान् मनुष्यवद्भरतवत्कश्यपवत् अवत्सारवत् निध्रुववत्। ब्रह्मवदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारः। अमुकशर्मा होता मानुषः। होता शनैः। एतत्वा देव सवितर्वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणाग्ने पूषन् बृहस्पते प्र च वद प्र च वसूनां रातौ स्याम रुद्राणामुर्व्यायां स्वादित्वा अदितये स्यामानेहसोजुष्टामद्य देवेभ्यो वाचमुद्यासञ्जुष्टां ब्रह्मभ्यो जुष्टां नराशंसाय यदद्य होतृवर्ये जिह्मं चक्षुः परापतत्। अग्निष्टत्पुनरभ्रियाज्जातवेदा विचर्षणिः इति व्रतजपः षण्मोर्वीरं हसस्यां त्वग्निश्च पृथिवी चापश्च वातश्चाहश्चरात्रिश्चेत्येता मा देवता आर्त्तेर्गोपायन्तु। आत्मानमालभते। उदको॰ अध्वर्यमग्नीध्रं च प्रादेशन सम्मृशति दक्षिणयोरंसयोरिन्द्रमन्वेति। ॐ इन्द्रमन्वारभामहे होतृवर्ये पुरोहितम्। येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवम् सम्मृष्टा उपविशतः होता। सन्नहनान्यादाय तैः सम्मार्ष्टि मुखं त्रिः प्रदक्षिणं सम्मार्गोसीति। सम्मार्गोसि सम्मा प्रजया पशुभिर्ब्रह्मवर्चसेन च मृड्ढि सकृन्मन्त्रेण द्विस्तूष्णीं अपसव्यम्। अपमार्गोस्यप मा पाप्मना पापेन च मृड्ढि सकृन्मन्त्रेण द्विस्तूष्णीमप उपस्पृश्य। ॐ ऐन्द्रीमावृतमन्वावर्त्ते त इत्यावृत्य प्रदक्षिणं होतृषदनात्तृणमङ्गुष्ठोपक-निष्ठिकाभ्यामादाय दक्षिणापरस्यां दिशि निरस्येत्। ॐ निरस्तः परावसुः सह तेन यं द्विष्मः उद॰ ॐ इदमहमर्वावसोः सदने सीदामीत्युपविश्य जपन्। ॐ विश्वकर्मंस्तनूपा असि मा मोदोषिष्टं मा मा हिंसिष्टमेषवाँल्लोक इत्युदङ्गे जपेत्। अथाग्निमीक्षमाणो जपेत्। ॐ विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमावो वहानि। ॐ अग्निर्होता वेत्वग्नेर्होत्रं वेतु प्रावित्रं साधु ते यजमानदेवता उपांशु। योग्निं होतारमवृथाः

उच्चैः घृतवतीमध्वर्यो स्रुच मास्यस्व देवयुवं विश्ववारामीडामहै देवाँ ईडेन्यान्नमस्याम नमस्यान्यजाम यज्ञियान्। अध्वर्युः पञ्च प्रयाजान्यजति ततो जुहूपभतोग्रस्योपरि मार्गेण प्राचीमवतीर्य वषट्कारेण सह वा वषट्कारे कृते वा समिद्धतमे पूर्वं पूर्वं वाभिक्रामं प्राक्संस्थान् जुहोति। आश्रावणकाले नाभिदेशे धारणम्।

ओ श्रावय, अग्नीत् अस्तु श्रौषट्। अध्वर्युः समिधो यज ये यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू ३ वौषट्। **इदं समिद्भ्यो न मम**। एको मम एका तस्य योस्मान् द्वेष्टि यञ्च वयं द्विष्मः। त्विषिमान् भूयासम्। वषट्कारमाययुः प्रमोषीर्वाजः सहौजो मयि। प्राणापानौ पातम्। आत्मानमालभते। उद॰ एवं सर्वत्र। ओ श्रावय अस्तु॰ यज॰ ये यजामहे तनूपादग्न आज्यस्य वेतू वौ॰ इदं तनूनपाते न मम येषां नराशंसो याजस्तेषां नराशंसो अग्न आज्यस्य वेतू-वौ॰ इदं नराशंसाय न मम।

एतदर्थे कारिका—

वशिष्ठ शुनकानकान्श्रीचवधृश्चक एक कश्यप।
सांकृति प्रवराणां च नराशंस इति क्रमात्।।

द्वौ मम द्वे तस्य यो॰ **अपचितिमान्भूयासम्**। वषट्कार॰ ओ श्रावय॰ अस्तु॰ यज॰ ये यजामहे इडो अग्न आज्यस्य व्यन्तू वौ॰ इदमिड्भ्यो न मम। त्रयो मम तिस्रतस्य यो॰ यशस्वी भूयासं वषट्कार॰ चतुर्थे प्रयाजे समानयनम्। ओ श्रा॰ अस्तु॰ यज ये यजामहे बर्हिरग्न आज्यस्य वेत्तु वौ॰ **इदं बर्हिषे न मम**। चत्वारो मम चतस्रतस्य यो॰ ब्रह्मवर्चस्वी भूयासं वषट्कार ओ॰ अस्तु॰ यज॰ स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा उपांशु अग्नीषोमौ स्वाहाग्नीषोमौ स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य वेतू॰ **इदमग्नये सोमयाग्नये॰ उपांशु अग्नीषोमाभ्यां देवेभ्यः**। आज्यपेभ्योग्नये **स्विष्टकृते च न मम** पञ्च मम न तस्य किञ्चन यो॰। अन्नादो भूयासं वषट्कार एत्य वेदः पश्चादुपविश्य जुह्वाभिघारणं ध्रुवायाः आज्यस्थाल्याः हविषः इति यावद्धविः उपभृतश्च आज्यभागाभ्यां चरति। वार्तघ्ना वाज्यभागौ अग्नयेनुब्रूहि अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्रः आहुतो३म् ध्रुवाया प्रथमं तूष्णीं आप्यायतामेति चतुर्गृहीतग्रहणम्। ॐ आप्यायतां ध्रुवा हविषा घृतेन यज्ञं प्रति देवयड्भ्यः सूर्याया ऊधो अदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् प्रथमः द्वि॰ त्रि॰ चतुर्थ॰ स्वेन पञ्चमं ध्रुवायाः पञ्चावत्तीनां पञ्च। यजति स्थानातिक्रमणम्। ओ श्रा॰ अस्तु॰ अग्निं यज ये यजामहे अग्निं जुषाणो अग्निराज्यस्य वेतु वौ॰ उत्तरपूर्वार्द्धे होमः। अथवा समिद्धतमे जुहोति इदमग्नये॰ वषट्कार॰

सोमायानुब्रूहि। त्वं सोमासि सत्पतिस्त्वं राजोत॰ वृत्रहा। त्वं भद्रो असि क्रतो३म्।।३-४।। पूर्ववदतिक्रम्याश्राव्याह ओ श्रा॰ अस्तु॰ सोमं यज ये यजामहे सोमं जुषाणः सोम आज्यस्य हविषा वेतु वौ॰ इदं सोमाय॰ वषट्॰ दक्षिणपूर्वार्द्धे सौम्यम्। अथवा समिद्धतमे।

अथ प्रधानयागः—

अग्नयेनुब्रूहि। ॐ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति।।३-४।। स्थालीतो जुह्वामुपस्तीर्य आग्नेयान्मध्यात्पूर्वार्द्धात् शृतावदानेनाङ्गुष्ठपर्वमात्रमवदानग्रहणम्। त्रिर्जमदग्नीनां पश्चात्तृतीयं प्रत्युपस्तारः क्षताभ्यङ्गः यजतिस्थानातिक्रमणम्। ओ॰ अस्तु॰ अग्निं यज ये यजामहेग्निं भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्य वाहां वौ॰ इदमग्नये॰ वषट् उपांशु अग्नीषोमाभ्यामो उच्चैः अनुब्रूंहि उपांशुः। अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् प्रतिसूक्तानि हर्यतं भवतन्दाशुषे मयः उच्चैः ओं ध्रुवायामिति पूर्ववदाज्यमादायाश्राव्याह। ओ श्रा॰ अस्तु॰ उपांशु। अग्नीषोमौ यज ये यजामहेग्निसोमाभ्यामनुब्रूहि। अग्नीषोमा सवेदसा सहूतीवनत गिरः सन्देवत्रा बभूवथोम्।।३-४।। स्थालीतो जुह्वामुपस्तीर्याग्नीषोमीयान्मध्यात्पूर्वार्द्धादिरवदान ग्रहणम्। प्रत्युपस्तारः क्षताभ्यङ्गः यजति ओ श्रा॰ अग्नीषोमौ यज॰ ये यजामहेग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतां वौ॰ इदमग्नीषोमाभ्यां॰ वषट्का॰ विराजौ संयाजे। अग्नये स्विष्टकृतेनु॰ प्रेद्धो अग्ने दीदिहि पुरोनोजस्रया सूर्म्यायविष्ठ। त्वां शश्वन्त उप यन्ति वाजोम्।।३-४।। स्थालीतो जुह्वामुपस्तीर्योत्तरार्द्धात्स्विष्टकृत्। पञ्चावत्तिनो द्विर्द्धिः द्विरभिघार्य नक्षताभ्यङ्गः। अतिक्रम्याश्राव्याह। ओ श्रा॰ स्विष्टकृतं यज। ये यजामहेग्निंस्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रिया धामान्ययाडग्नेः प्रिया धामान्ययाट् उपांशु। अग्नीषोमयोः प्रिया धामान्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सोऽअध्वरा जातवेदा जुषतां हविरिमो अग्ने वीततमानि हव्याजस्रो वक्षिदेवतातिमच्छ प्रति नईं सुरभीणि व्यन्तू वौषट्। इदमग्नये स्विष्टकृते न मम। उत्तरतः असंस्पृष्टामाहुतीभिर्जुहोति। सञ्चरमभ्युक्ष्य हविर्मात्रात्। प्राशित्रमवद्यति। प्राशित्रमुपस्तारः। यवमात्रमवदाय। उपरिष्टात्प्रत्यभिघार्य एकैकमध्वर्युः सञ्चरेण ब्रह्मणे प्रदाय। मित्रस्य त्वा चक्षुषा प्रतीक्षे। ॐ मित्रस्य त्वा चक्षुषा॰ देवस्यत्वेति प्रतिगृह्णाति। ॐ देवस्यत्वा स॰ भ्यां प्रतिगृह्णामि। अपाद्य बर्हिषि पृथिव्यास्त्वेति सादयति। ॐ पृथिव्यास्त्वा नाभौ

सादयाम्यदित्या उपस्थेग्ने हव्यं रक्ष देवस्यत्वेति पुनरायानामिकाङ्गुष्ठाभ्याम्। ॐ देवस्य त्वा॰ भ्यामाददे अग्नेष्ट्वेति प्राश्नाति। ॐ अग्नेष्ट्वास्येन प्राश्नामि ॐ दन्तैरनुपस्पृशन्। प्रणीतोत्करदेशे प्रक्षाल्य पात्रमाचम्य स्वासने उपविश्य नाभिमालभते। ॐ या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ। घसिना मे मासम्पृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्यत्वा जठरे सादयामि। अध्वर्युरपः उपस्पृश्य इडां पञ्चावत्तां करोति। स्थाल्याज्येनोपस्तीर्य। दक्षिणतो मध्याच्च यावद्धविः स्विष्टकृदाज्यं ततः खण्डवत् पात्रे उपस्तारः। द्वयपुरोडाशसंख्या नियतप्रदेशस्यादेकैकमवदानमुभयत्रावदाय स्थाल्या एवोपरिष्टादभिधारयति। आग्नेयादेव ब्रह्मभागम्। ध्रुवायां यजमानभागं च। आग्नेयपूर्वार्द्धात् दीर्घप्रसार्य पुरस्ताद् ध्रुवायाः करोति वेद्याम्। ध्रुवाग्रस्योपरि निदधाति कर्कः। अग्नीषोमीयं खण्डस्य इडायां प्रक्षिपति। इडां होत्रे प्रदाय विसृजन्दक्षिणातिक्रामति इडां प्रतिगृह्य। होतुरङ्गुलिपर्वणि मध्ये चानक्तिः ओष्ठ्योर्निर्लिङ्गे अधरमधरेणोत्तरमुत्तरेण। ॐ मनस्पतिना ते हुतस्याश्नामीषे प्राणायेति प्रथमम्। ॐ वाचस्पतिना ते हुतस्यश्नाम्यूर्ज्ज उदानायेति द्वितीयम्। दक्षिणपाणितले वान्तरेडामादधाति। पूर्ववदिडां च प्रतिगृह्याङ्गुलिभिर-प्रसरिताभिर्मुखमात्रे धारयं च सर्वेन्वारभन्ते उपांशु उपहूतं रथन्तरं सह पृथिव्याह्वयतामुपहूतं वामदेव्यं सहान्तरिक्षेणोप मां वामदेव्यं सहान्तरिक्षेण ह्वयतामुपहूतं बृहत्सह दिवोपमां बृहत्सह दिवा ह्वयतामुपहूता गावः सहर्षभा उप मां गावः सहर्षभा ह्वयन्तामुपहूताः सप्तहोत्रा सौम्येनाध्वरेण ह्वयतामुपहूतेडा ततुरिरुप मामिडा ततुरिरुर्ह्वयतामुपहूतः सखा भक्ष उप मां सखा भक्षोह्वयतामुपहूतं हेगुप मां हेग् ह्वयतामुपहूतोग्निरुपहूतः उच्चैः। इडोपहूतोपहूतेडोपो अस्माँ इडा ह्वयतामिडोपहूता यजमानः आग्नेयं बर्हिषदं करोति। ॐ ब्रध्न पिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून्मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्व। तं चतुर्द्धा कृत्वा। बर्हिर्ऋत्विग्भ्यः आदिशति आग्न्येयात् इदं ब्रह्मणः। इदं होतुः इदमध्वर्योः इदमग्नीध्रः द्विदेवत्यै बहूदैवत्यश्चतुर्द्धाकरणमभावः अपसव्यमालभ्य। ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् विसृज्य ॐ अमीमदन्त पितरो यथाभागमावृषायिषत। इति जपति सव्यं उद॰ एकैकमाहरति। इदं ब्रह्मणे इदं होत्रे इदमध्वर्यवे इदमग्नीध्रे होता मानवी घृतपद्युत मैत्रावरुणी ब्रह्मा देव-कृतोपहूतोपहूता दैव्या अध्वर्यव उपहूता मनुष्याः। य इमं यज्ञमवान्ये च यज्ञपतिं वर्द्धानुऽपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे। उपहूतोयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्न् इदं

हविर्जुषन्तामिति तस्मिन्नुपहूतः उपहूते द्यावापृथिवीरुपह्वाने अग्नीध्रे खण्डवत्तं प्रयच्छति। भूयसि हविष्करण इत्याद्याशासने मयीदमिति यजमानो जपति। ॐ मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम्। अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिषः उपहूतां प्राश्नाति युक्ता यजमानश्च। अग्नीत्प्रथमखडवत्तं भागं प्राश्नाति। ॐ उपहूता पृथिवी मातोप मां पृथिवी माताह्वयतामग्नि-राग्नीध्रात्स्वाहा। आचम्य। द्वितीयम्। ॐ उपहूतो द्यौष्पितोप मान्द्यौष्पिता-ह्वयतामग्निराग्नीध्रात्स्वाहा। आचम्य। ततः इडां भक्षयति। पवित्रयोर्मार्जयन्ते। अपरेण वेदिपश्चादुपविश्य। ब्रह्मादि क्रमेण मुखमार्जयन्ते सुमित्रिया न इति। ॐ सुमित्रिया न आपः सन्तु यजमानस्य पातमिति प्रस्तरे ते करोति। ॐ यजमानस्य प्राणापानौ पातम्। भागमस्मै परिहरति ब्रह्मा इयं भागमाहवनीयं पूर्वेण यजमानभागं गार्हपत्यमपरेण समर्पयति। यजमान प्रोषितश्चेत्तत्रैव तिष्ठति। अन्वाहार्यमभिघार्योदगुद्वास्य दक्षिणाग्न्योरन्तराले दक्षिणेन नीत्वा यजमानाद्बहि-र्ब्राह्मणमन्तरेणाहवनीयं पूर्वेण सञ्चरेण वेद्यां निधाय। प्रजापतेर्भागोसीत्यालभते। ॐ प्रजापतेर्भागोस्यूर्जस्वान्पयस्यन्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदान-व्यानौ मे पाह्यूर्गस्यूर्जंमयि धेह्युक्षतिरसि मामेक्षेष्ठा अमुत्रामुष्मिँल्लोक इह च। अस्याः पौर्णमासेष्टेः समृद्ध्यर्थमयमन्वाहार्यो दक्षिणा ब्रह्मादिभ्य ऋत्विग्भ्यः समविभागेनाहं सम्प्रददे। द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु। सा दक्षिणोदगुद्वासयति पात्र्यादिस्थं हविरुच्छिष्टं चासादनम्। उदगुद्वासयति। समस्योल्मुके समिधमादाय ब्रह्मन्प्रस्थास्यामीति। समिधमादाय। अग्नि-मग्नीत्सम्मृड्ढि एतं त इति ब्रह्मा मन्त्रद्वयं पठति। ॐ एतन्ते देव स॰ मव। मनो जूतिर्जु॰ ताम्। अग्नीत्समित्प्रक्षेपः। एषा ते इति होतानुमन्त्रयते। अजानमिति यजमानः। ॐ एषा ते अग्ने॰मही। अग्निपूर्ववत्परिक्रामं सकृत्सम्मार्ज्य अग्नेवाजजिदिति। ॐ अग्ने वाजजिद्वाजन्त्वा ससृवांसं वाजजितं सम्मार्ज्मि। तूष्णीमुपरि। ब्रह्मानुज्ञातोनुयाजैस्त्रिभिश्चरत्योपभृतं समानीयातिक्रम्या-श्राव्याह। देवान्यजेति प्रैषः त्रिष्वनुयाजेषु। ओ श्रावय अस्तु देवान्यज ये यजामहे देवं बर्हिर्वसुवने वसुधेयस्य वेतु वौ॰ इदं देवाय बर्हिषे॰ वौष॰ प्रतीचीं जुहोति। ओ श्रा॰ अस्तु॰ देवान्यज। ये यजामहे देवो नराशंसो वसुवने वसुधेयस्य वेतू वो॰ इदं देवाय नराशंसाय॰ वौष॰ ओ श्रा॰ अस्तु॰ देवान्यज ये यजामहे देवो अग्नि स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुरायजीयानग्ने यान् देवानयायाँ अपिप्रेर्ये ते होत्रे अमत्सत। तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहि वौ॰ इदं देवायाग्नये स्विष्टकृते न मम। वषट्का॰ जुहोति स्थाने उपविश्य चतुर्थं

समानीयाप्राचीमभिचरन्। ॐ देवेभ्यः स्वाहा। इदं देवेभ्यो न मम। एत्य जुहूपभृतौ व्यूहति यजमानः जुहूं प्राचीं दक्षिणेनोत्तानेन पाणिना अग्नेरग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामि। प्रेरयति वामेन भुजेनोपभृतं प्रतीचीम्। ॐ अग्निरग्नीषोमौ तमपपनुदतन्तु यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामि। अध्वर्युपक्षे मन्त्रविशेषः रुज्जिति मनूज्जयत्वयं यजमानो वाज०। तमपनुदन्तु यमयं यजमानो द्वेष्टि यश्चैनन्द्वेष्टि यं वाज० अभ्युक्ष्य जुह्वातया परिधिनक्ति यथा। पूर्वं वसुभ्य इति प्रतिमन्त्रम्। ॐ वसुभ्यस्त्वा अनज्मि। ॐ रुद्रेभ्यस्त्वाऽनज्मि। ॐ आदित्येभ्यस्त्वाऽनज्मि। प्रथमं परिधिं स्पृष्ट्वाश्राव्याह। ओ श्रा० अस्तु० ॐ इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि सञ्ज्ञानाथामिति प्रस्तरादानम्। ॐ ॐ सञ्ज्ञानाथान्द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम्। विधृती आहवनीये प्रक्षिप्य। अव्यक्ते न व्यन्तु वय इति। ॐ व्यन्तु वयोक्तं रिहाणा इत्यग्रं जुह्वां उपभृतिमध्यं व्यन्तु वयोक्तं रिहाणा मूलन्ध्रुवायाः व्यन्तु वयोक्तं रिहाणाः। मरुतामिति नीचैः हृत्वा। ॐ मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह। तृणमादाय सूक्तहोमः। ॐ इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुतनमो वाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि। उपश्रुती दिवस्पृथिव्योरोमन्वती तेस्मिन्यज्ञे यजमानं द्यावापृथिवीस्तां शङ्गवी जीवदानू अत्रस्नू अप्रवेदे उरु गव्यूती अभयं कृतौ। वृष्टिद्यावारीत्यापा पा शम्भुवौ मयोभुवा ऊर्ज्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च तयोराविदि। अग्निरिदं हविर्जुषतावीवृधत महोज्यायोऽकृत सोम इदं हविरजुषतावीवृधतमहो ज्यायोऽ कृत। अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽ कृत उपांशु। अग्नीषोमौ उच्चैः इदं हविः उपांशु। अजुषेतामवीवृधेताम् उच्चैः महोज्यायः० उपांशु अक्राताम्। उच्चैः अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्याज्योक्राताम् देवा आज्यपा आज्यमजुषन्तावीवृधन्त महोज्यायो कृत। अग्निर्होत्रेणेदं ह० कृता अस्यामृधेदोवृत्रायां देवङ्गमायामाशास्ते ऽयममुकशर्मा यजमानः दर्शपौर्णमासयाजी आयुराशास्ते उत्तरां देवयज्यामाशास्ते दिव्यं धामाशास्ते यदनेन हविषाऽशास्ते तदश्यात् तद् ऋध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषाः। इष्टं च वित्तं चोभे चैनं द्यावापृथिवी अंहसस्पातामिह गतिर्वामस्येदं च नमो देवेभ्यः। प्रस्तरप्रक्षेप अग्नीत् अनुप्रहरप्राश्यतृणम्। हस्तेनाचरति। चक्षुष्पा इत्यात्मानमालभते ॐ चक्षुष्पा अग्नेसि चक्षुर्मे पाहि इदमग्नीत् संवदस्व अध्वर्युः अगानग्नीत् अग्नीत् अगन् अध्वर्युः श्रावय। श्रौ० अग्नीत् श्रौषट् अध्वर्युः स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि होता। तच्छंयोरा वृणीमहे गातु यज्ञाय

गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ॐ ऊर्ध्वं जिगातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे। अनया प्रादेशवेदिश्रोणौ निदधाति। अध्वर्युः परिधीननुप्रहरति यं परिधिमिति प्रथमम्। ॐ यं परिधिं पर्यधत्था॰ यातै इतरौ च युगपदग्नेः प्रियमिति। ॐ अग्नेः प्रियं पाथोपीतम्। ॐ संस्रवभागा इति संस्रवं जुहोति प्रतिगृह्णाति। ॐ संस्रवभागास्थे॰ वाट्। इदं विश्वेभ्यो देवेभ्यो न मम। घृताची इति उदगग्रे स्फ्यस्रुचौ प्रागग्रे निदधाति। ॐ घृताची स्थो धुर्यौ पातं सुम्ने स्थः सुम्ने मा धत्तम्। यज्ञ नमश्च त उप च यज्ञस्य शिवे सं तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व। वेदं होता स्रुक्स्रुवमध्वर्युः आज्यस्थालीमग्नीदादाय पत्नीसंयाजेभ्यो गार्हपत्ये गच्छति। गार्हपत्यदक्षिणाग्न्योरन्तरालेनागत्य गार्हपत्यस्य दक्षिणत ईशानाभिमुखोपविश्य दक्षिणं जान्वाच्य। पत्नीसंयाजमुपांशु चरन्ति। चरणशब्दे सर्वदेवानां सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति। सोमायानुब्रूहीति। ॐ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे। स्थालीतश्चतुर्गृहीतग्रहणं पञ्चावत्तीनां पञ्च। ओ॰ श्रा॰ अस्तु॰ सोमं यज ये य॰ सोमं सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानोऽ अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व वौ। इदं सोमाय॰ वषट्का॰ त्वष्ट्रेऽनुब्रूहि। इह त्वष्टारमग्र्यं विश्वरूपमुपह्वये। अस्माकमस्तु केवलोम् स्तके बले चतर्गृ॰ ओ॰ श्रा॰ अस्तु॰ त्वष्टारं यज ये यजा॰ त्वष्टारं तन्नस्तुरीपमध षोषयित्नु देव त्वष्टर्विरराःस्यवयतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा वौ॰ इदं त्वष्ट्रे॰ तृतीयेन्तर्धानकटं पुरस्तादन्वारम्भते। देवानां पत्नीभ्योनु॰ देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नः स्तुजये वाजसातये। याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतोम् चतुर्गृ॰ ओ॰ श्रा॰ अस्तु॰ देवानां पत्नी यज ये॰ देवानां पत्नीरुतग्नाव्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट्। आ रोदसी वरुणानि शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां वौ॰ इदं देवानां पत्नीभ्यो॰ वषट्का॰ अन्तर्धानकटमपनीय॰ अग्नये गृहपतयेऽनु॰ अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः। देवानामुत यो मर्त्यानां यजितः स प्रयजमातामृतावोम्॰ चतुर्गृ॰ ओ॰ अस्तु॰ अग्निं गृहपतिं यज ये॰ ग्निं गृहपतिं हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिधो दीदिह्यस्मद्ध्रक् सम्मिमीहि श्रवांसी वौ॰ इदमग्नये गृहपतये॰ सशेषं जुहूयात्। पूर्ववदिडां कृत्वा विशेषः उपहूते पत्न्युत्तरस्यां देवयज्यामुपहूता भूयस्तिह-विष्करण उपहूता देवाम इदं हविर्जुषतामिति तस्मिन्नुपहूतः। आशासने मयीदमिति जपति। ॐ मयीदमिन्द्र॰ त्यागः शिखः। उपहूता प्राश्नन्ति। ॐ लौकिकपवित्राभ्यां मार्जनम्। याज्वन्तं भवतीडांतं वा स्रुक्स्रुवं प्रतिगृह्णात्यग्ने

दब्धायविति। ॐ अग्ने दब्धायोशीतम॰ वाट् इदमग्नये अदब्धाय॰ अशीतमाय॰ सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या च सकृद् गृहीतेन। ॐ अग्नये सँवेशपतये स्वाहा इदमग्नये सँवेशपतये ॐ सरस्वत्यै यशोभगिन्यै स्वाहा इदं सरस्वत्यै॰ तत्रैव पिष्टलेपां जुहोति। उलूखले मूसले यच्च शूर्प आशिश्लेष दृषदि यत्कपाले उत्प्रुकोविप्रुपः सञ्जुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा इदमग्नये न मम। पत्नी वेदं प्रमुञ्चति वेदोसीति। ॐ वेदोसि येन त्वं॰ भूयाः योक्त्रं च। ॐ प्र मा मुञ्चामि वरुणस्य पाशाद्येन मा बध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेरिष्टां मा सह पत्या दधातु। होता वेदंस्तृणात्यावेदे। आहवनीये समिधमादधाति। येषीयन्तं निष्क्रामेद्धोता। ध्रुवाज्यं जुह्वां कृत्वा। ध्रौवं समिष्टयजुर्जुहोति देवा गातुविद इति कुशोपग्रहेण। ॐ देवा गातुविदो॰ ते धाः इदं वाताय॰। सम्बर्हिरिति बर्हिः। सम्बर्हिरङ्क्तां हविषा घृतेन समादित्यै॰ स्वाहा। इदं दिवाय नभसे॰। वेद्यां प्रणीता आसाद्याहवनीयं परीत्य वेद्या दक्षिणभागे उदङ्मुख उपविश्य। प्रणीतां निनयति वेद्यां कस्त्वेति। ॐ कस्त्वा वि मुञ्चति स त्वा वि मुञ्चति कस्मै त्वा वि मुञ्चति तस्मै त्वा विमुञ्चति। पोषाय निनयामि। पुरोडाशप्रथमकपालेन कणान्नपास्यत्यधः कृष्णाजिनं रक्षसामिति। ॐ रक्षसां भागोसि। नात्रोदकस्पर्शः। उदकोपस्पर्शस्तु देवयाज्ञिके। पूर्णपात्रं निनयति परीत्य सततं यजमानोञ्जलिना प्रतिगृह्णाति संवर्चसेति। ॐ सं वर्चसा प॰ लिष्टम्। तूष्णीं मुखं विमृष्टे। ततो दक्षिणेन वेदिश्रोण्योरारभ्याहवनीयादर्वाक् दक्षिणपादेन त्रीन् विष्णुक्रमान् क्रमयज्ञे दिवि विष्णुरिति प्रतिमन्त्रम्। ॐ दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः। ॐ अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा त॰ष्मः। ॐ पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण॰ द्विष्मः। स्वासने उपविश्य। अस्मादन्नादि भागमवेक्षते। ॐ अस्मादन्नानिर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः। अस्यै प्रतिष्ठायादिति वेदिमयि। ॐ अस्यै प्रतिष्ठायास्ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः। अगन्मस्वरिति प्राक्। अगन्मस्वरितिप्राक्। ॐ अगन्म स्वः सं ज्योतिषेत्याहवनीयम्। ॐ सं ज्योतिषाभूम। तिष्ठन् स्वयंभूरिति सूर्यम्। ॐ स्वयंभूरसि श्रेष्ठो रश्मिर्वर्च्चोदा असि वर्च्चो मे देहि। सूर्यस्येत्यावर्त्तते प्रदक्षिणम्। ॐ सूर्यस्यावृतमन्वावर्त्ते। गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति। ॐ अग्ने गृहपते सु॰ शतं हिमाः सूर्यस्येत्याऽवर्त्तते। प्रदक्षिणम्। ॐ सूर्यस्यावृतमन्वावर्त्ते। गच्छति प्राक् उरुविष्णविति। ॐ उरुविष्णो वि॰ तिर स्वाहा ततो वेदिमध्ये उपविशति ततोसीति मन्त्रेण यावन्तु पुत्राणां नामग्रहणं प्रतिपुत्रमन्त्रावृत्तिः। ॐ ततोऽसि तन्तुरसि तन्तु मे तन्तु हरिमन्येत्यां सातुकूराचामस्मिन्नत्रैस्मिल्लोके इदं मे कर्मेदं

वीर्यं अमुकशर्मा पुत्रोनुसन्तनोतु। पुत्राभावे इदं वीर्ये। त्वं त्वे त्वा ज्योतिषे त्वा अनुसन्तनोमि। तूष्णीमाहवनीयमुपतिष्ठते। अग्ने व्रतपत इति व्रतं विसृजेत्। ॐ अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेराधि। सञ्चरति मोकः सं यज्ञपतिराशिषेति भागं प्राश्नाति। ॐ सं यज्ञपतिराशिषा मुच्यन्ताम्। ब्रह्मापि भागं प्राश्नाति। तूष्णीमाचम्य। स्वासने उपविशति। ब्राह्मणं तर्पयितवै इति वै ब्रूयाद्यज्ञमेतत्तर्पयति। अस्याः इष्टेरङ्गतयैकं ब्राह्मणं तर्पयामि। अनेन पौर्णमासयागकृतेन न्यूनातिरिक्तोयं ब्राह्मणानां प्रसादात् सर्वं परिपूर्णतास्तु तेन श्री यज्ञरूपी परमेश्वरः प्रीयताम्। ब्राह्मणः कर्मापवर्गे समिधमादधाति। आहवनीयमपरेण तिष्ठत। ॐ कृताय कर्मणे अकृताय कर्मणे नमः। अयाड्यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्वं सनिं सुविमुञ्चा विमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहा। इदं जातवेदसे०। तीर्थे निष्क्रामति यजमानश्च। यजमानप्रोषितश्चेत् सूक्तवाकान्ते अध्वर्युः हस्तेनैव यजमानभागमाहवनीये जुहुयात्। अहन्त्वदसीति। ॐ अहन्त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि। ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्येलोककृज्जातवेदः स्वाहा। इदं जातवेदसे० तस्मिन् इष्टेन पूर्णपात्रासादनपूर्णपात्रग्रहणादारभ्य भागप्राशनान्ते सर्वं कर्म यजमानः करोति नान्यः। व्रतग्रहणं भवत्येव। इति।

## ।। अथ दर्शेष्टिः ।

अद्येत्यादि० तत्सत्परमेश्वरप्रीत्यर्थं दर्शेन श्वोहं यक्ष्ये। अन्वाधाने। अग्निमष्टाकपालेन पुरोडाशेन। उपांशु विष्णुमन्तराज्येन। उच्चैः इन्द्राग्नी द्वादशकपालेन पुरोडाशेन श्वोहं यक्ष्ये। तत्र पञ्चदशो वज्रादि पूर्ववत्। ग्रहणे। अग्नये त्वा जु० इन्द्राग्नीभ्यान्त्वा जु० प्रोक्षणेत्वाधिकः। अग्नये त्वा जु० प्रो० इन्द्राग्नीभ्यां त्वां जुष्टं प्रो० निर्देशः इदमग्नेः इदमिन्द्राग्न्योः। प्राणदाने। भूत्वाग्निं गच्छ० यस्ते० भूत्वेन्द्राग्नी गच्छ० आवाहने विष्णुम्। आवाहय। इन्द्राग्नीमावह देवां आज्यपादि उत्तमे प्रयाजे। स्वाहा० विष्णुस्वाहेन्द्राग्नी स्वाहा देवां आज्यपाहि। इदं विष्णवे इन्द्राग्नीभ्यां देवे० वृधन्वन्तां वाज्यभागौ अग्नये नु०। अग्निः प्रत्नेन मन्मना शुं भान स्तन्वं स्वाकविर्विप्रेण वावृधो ३ नित्ये याज्ये। सोमायानुब्रूहि। सोमगीर्भिरिष्वा वयं वर्द्धया सोमो वचोविदः सुमृडीकोन आविशोम्। प्रधानयागे। आग्नेयं पूर्ववत् आज्येन उपांशु विष्णवे अनु०। इदं विष्णुर्वि० सुरे ॐ ध्रुवाया प्रथम चतुगृ० ॐ विष्णुं यज। ये यजामहे प्रतद्विष्णुस्तवते। विश्वावो० ३ इदं विष्णु० इन्द्राग्निभ्यामनुब्रूहि। इन्द्राग्नी अवसागतमस्मभ्यं चर्षणी सह। मा नो दुःशं सहश्शतोम्। अपदानग्रहणम्। ओ श्रावय० अ० इन्द्राग्नीं यज० ये

यजामहेन्द्राग्नीगीर्भिविप्रः प्रमतिमिच्छमाना इदरयीं यशसं पूर्वभाजं इन्द्राग्नी व्रतहणा सुव्रज्रा प्रणोनव्येभिस्तिरतधेस्मैवौ॰ इदमिन्द्राग्निभ्याम्। दर्शे त्रिषुभौ ऋतुवत्यौ संयाजे। अग्नये स्विष्ट॰ पिप्रीहि देवां उशतो यविष्टविद्वं क्रतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतृणामस्याय विष्टो३म् उत्तरार्द्धात्स्विष्टकृत्। असंसृष्टाहुतिः। अग्निं स्विष्टकृतं य॰ न्ययाद्विष्णोः। प्रिया॰ इन्द्राग्न्योः प्रिया॰। देवानां॰ जुषतां हविरग्ने यदद्यविशो अध्वरस्य होतुः पावकशोचे वे ष्टंहि यज्वा। ऋतायजासिमहिमाना वियद्भूर्हव्या वहयविष्ठयाते द्या३ वौ इदमग्नये स्विष्टकृते॰। प्रधानावदानापेक्षया मदिडावदानम्। इडापेक्षया महचतुर्द्धाकरणानाम्। देव तस्य सौविष्टकृतैडा चतुर्द्धा करणीकानामुत्तरज्याय इति वचनात्। इडाभक्षणे विधिर्भागवते उक्ता। नाहं तथाग्नि यजमानहविर्विताने श्चोतध्दृतप्लुत मदन्नहविर्भुङ्मुखेन यद्वा ब्राह्मणस्य मुखा तश्चरतोनुघासं तुष्टस्य मप्यवहितैर्निजकर्मपाकैः। **इति महिमा**। इडाभक्षणा॰ नन्तरं व्यूहने। अग्नेर्विष्णुरिन्द्राग्नी तमपनुदतां॰ सूक्तवाके अग्निरिदं हविः कृत सोम इदन्षतां॰ कृत। अग्निरिदं षता॰ कृत। उपांशु विष्णु उच्चैः इदं हविः उपांशु अजुषतां वीवृधन्त उच्चैः महो ज्यायो कृत इन्द्राग्नी इदं हविर्जुषेतामवीवृधेतां महोज्यायो क्राताम्। देवां आज्यपा इत्यादि **शेषं पौर्णमासवत्। इति दर्शेष्टिः**। अनेन दर्शयागकृतेन तेन श्रीयज्ञस्वरूपी परमेश्वरः प्रीयताम्।

अथ प्रार्थना—

स्वरेण वर्णेन च यद्विहीनं तथापि हीनं क्रिययापि यच्च।
तथातिरिक्तं मम तत्क्षमस्व ततस्तवाग्रे परिपूर्णमेतत्।।१।।

दिवस्परीत्यनुवाकेन प्रदक्षिणानमस्कारान् कृत्वा। ॐ दिवस्परि प्रथमं जज्ञे इत्यादि वि वव्रुरिति पर्यन्तमेकादशर्चः। यस्य स्मृत्येति क्षमापनम्। तदुक्तं श्रुतिः। घृताची स्थो धुर्यौ पातं॰ स्व। स यत्र संयोराहतदभिमृशति यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वेति स यदतिरेचयति तन्नमस्कारेण शमयति यदूनं करोत्युपचेति तेन तन्न्यूनं भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्य न्यूनातिरिक्तं तत्स्विष्टं तेन तदुभयं शमयति। स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्य॰ न्यूनातिरक्तं तत्स्विष्टं तेन तदुभयः शमयत्येवमुहास्यैतेन यज्ञेन न्यूनातिरिक्तं नैवेष्टं भवति य एवं विद्वान्नेवाभिमृशति तस्मादहते गन्धर्वा आशुः शूर्पं यजमान्कृषिरुद्दालबाधानातर्वान्।

प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः।।



।।इति दर्शपौर्णमासेष्टिप्रयोगः।।

## ।। अथ वैकल्पिकपदार्थाः ।।

पूर्वां पौर्णमासीमुत्तरां वा।।१।। अग्न्याधानमध्वर्युर्यजमानो वा।।२।। ममाग्न इति महाव्याहृतिभिर्वा तूष्णीम्।।३।। वपनं वा।।४।। व्रतग्रहणस्य व्रतोपनी प्राशनादुत्तरकालः। ब्रह्मोपवेशनादनन्तरो वा वेदिमानादर्वाग् वा अध्वर्योरालम्भनादुत्तरतो वा।।५।। सायं भोजनं करोति न वा करणपक्षे आरण्यवृक्षाणां आरण्यौषधीनां वा।।६।। गार्हपत्यागारे वा आहवनीयागारे वा शयीत।।७।। अथ होमे वैकल्पिकपदार्थाः स्वयं जुहुयात्।।८।। क्षीरहोता पर्वणि स्वयमेव प्रोषितश्चेत्। प्रत्यङ्मुखो वा सायं विहारं निदध्यात्।।९।। यद्वा प्रत्यङ्मुखः तदा तस्मिन्नेव विहारे विहारान्तरे वा प्रातर्जुहुयात्।।१०।। अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः सूत्रद्वयेन चतुष्टयं विकल्पेन दर्शितम्।।११।। अपरेणाहवनीयं कूर्चे निदधाति। कुशान्वा कुशेषु कूर्चे वा स्रुचो निधानम्।।१२।। क्षीरहोता यदि वाग्यमं कुर्यात्तदा गां धुक्ष्वेति यावदारभ्य होमान्तं कुर्यात्।।१३।। प्रथमाहुतिं होष्यन् वा स्रुच्यनिधाय गार्हपत्यमनवेक्ष्य तां जुहोति। द्वितीयां च होष्यन् स्रुचं निधायावेक्ष्य गार्हपत्यम्।।१४।। सायं सजूर्देवेन सवित्रा॰ अग्निर्ज्योतिरिति वा।।१५।। ब्रह्मवर्चसकामश्चेत्तदाग्निर्वर्च्चो ज्योतिरिति वा।।१६।। प्रातः सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्येति सजूराद्रवसेति वा। सूर्यो ज्योतिरिति वा ज्योतिः सूर्यरिति वा।।१७।। ब्रह्मवर्चसकामप्रयोगे सूर्यो वर्च्चो ज्योतिरिति वा।।१८।। पयसा होमपक्षे वात्सप्रेणोपस्थानं भूर्भुवः स्वः सुप्रजा इति वा।।१९।। पयसा द्रव्यान्तरेण होमे भूर्भुवः स्वः सुप्रजा इत्युपतिष्ठते वा।।२०।। गार्हपत्ये शय्यासनं वेति।।२१।। **अथेष्टिः** ब्रह्माहवनीयं परेण पूर्वेण वा।।२२।। ब्रह्मसदनमागच्छेति पात्रासादनमध्वर्युर्यजमानो वा।।२३।। परिधिरेकविंशति-रिध्मेभ्य इध्मात्त्रादायतैर्वाहवनीयं परिदधाति। पलाशादीनां पूर्वालाभे खादिरौ-दुम्बरैर्वा परिधीन् परिदधाति।।२४।। अङ्गुष्ठाङ्गुलिभ्यां काष्ठेन वा कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा।।२५।। श्रपणं गार्हपत्ये वाहवनीये।।२६।। श्रपणं पश्चिमेनोत्तरेण वा पात्रासादनम्।।२७।। प्रतपनं प्रत्युष्टति पृष्ठमिति वा।।२८।। हविः; व्रीहयो यवो च।।२९।। हविर्ग्रहणं मनसि पात्र्यां वा।।३०।। पवित्रे द्वे त्रीणि वा।।३१।। उलूखलनिधानमद्रिरसि वानस्पत्य इति ग्रावासि पृथुबुध्न इति वा।।३२।। वाग्विसर्जनं तु हविरावपनान्तरं वा।।३३।। हविष्कृदाह्वानानन्तरं वा।।३४।। अवघातमग्नीत् पत्नी वा कुर्यात्।।३५।। फलीकरणं तूष्णीं देवेभ्य शुन्धध्वमिति वा।।३६।। पञ्चमं कपालमारभ्य वितलृथेत्युपधानं तूष्णीं वा।।३७।। पुरोडाशं संयवनायोपवेशनं

गार्हपत्यपश्चिमेनान्तर्वेदी वा स्यात्।।३८।। पुरोडाशस्याभिमर्शनमद्भिः सकृद्भिर्वा।।३९।। शृतावभिवासनं वेदेनोपवेषेण वा।।४०।। वेदीं व्याममात्रीं पश्चात् त्र्यरत्नीं प्राचीमपरिमितां वा।।४१।। प्रहरणं पुरीषादानमीक्षणमुत्करणं प्रत्येकं मन्त्रवत्। अथवा समस्तेनैव मन्त्रेण।।४२।। प्रहरणं कृत्वा शेषं तूष्णीं वा कुर्यात्। वेद्यां खनत्र्यङ्गुलमौषधीनां आमूलोच्छेदनं वा।।४३।। वेदीं प्राक्प्रवणामुदक्प्रवणां वा कुर्यात्।।४४।। प्रोक्षणीप्रैषं कुर्यान्न वा।।४५।। आसादनार्थमिध्मानयनं ऋजुप्रणीता दक्षिणेन वा।।४६।। स्रुक्स्रुवसम्मार्जनान्युत्करे प्राश्यत्याहवनीये वा।।४७।। आहवनीयश्रपणपक्षे गार्हपत्याधिश्रितमाज्यमुद्वासनादि संस्कृतमाहवनीयं निधाय अनिधाय वा निदधाति ४८ आज्यावेक्षणमध्वर्युर्यजमानो वा ४९ आज्यग्रहणमन्त्रः सकृत् त्रिर्वा ५० वेद्यास्तरणे त्रिवृदुपत्या प्रबृहन्वा ५१ कपालाञ्जनं तूष्णीं मन्त्रेण वा ५२ अग्नये समिध्यमानायानुब्रूहि ५३ होतारमनुब्रूहीतिवा ५४ होतृवरणार्थमाश्रवणम् ५५ इध्मसन्नहनं वेदिबर्हिः इध्मशकलं वादाय करोति ५६ यजमानस्य यादृशाः प्रवराः तादृशाः प्रवृणीतेन ध्रुववत्। अवत्सारवत्। काश्यपवत् मनुष्यवदिति वा ५६ उच्चैः उपांशुर्वा ५७ होतृनामग्रहणं प्रयाजहोमे एकत्रैव तिष्ठन् प्रचलति वा ५८ सह वषट्कारे वा वषट्कृते जुहोति ५९ चतुरवत्तं पञ्चावत्तं वा ६० उभयत आज्यं हविषः सह वा जुहोति ६१ आज्यभागा होम उत्तरपूर्वार्द्धे समिद्धतमे वा ६२ प्राशित्रावदानं यवमात्रं पिप्पलमात्रं वा ६३ अत्रोपस्तारः प्रत्युपस्तारश्च ६४ प्राशित्रमध्वर्युसञ्चरेणाहवनीयं पूर्वेण वा ब्रह्मणेऽर्पयति ६५ ब्रह्मन्नेव प्राश्नाति निदधाय प्राग्भागपरिहरणाद्वा ६६ पवित्रप्रतिपत्तिस्तूष्णीं मन्त्रेण वा ६७ ब्रह्मा प्रतिष्ठेति ब्रूयान्न वा ६८ अनुयाजप्रैषे देवान् यजेति वा करोति ६९ व्यूहनमध्वर्युर्यजमानो वा ७० प्रस्तरं प्रागग्रमुदगग्रं वा क्षिपति ७१ अध्वर्युः पत्नीसंयाजार्थं गार्हपत्यदक्षिणाग्न्योरन्तरेणाहवनीयं पूर्वेण गार्हपत्यं पश्चिमेन वा ७२ अत्रापि पत्नीसंयाजार्थं गामन्तरा वा ७३ याजवन्तमिडान्तं वा पत्नी-संयाजकर्म कुर्यात् ७४ विष्णुक्रमान् क्रमते दिवि विष्णुरिति मन्त्रं पृथिव्यामित्यन्तरिक्ष इति दिवीत्यनेन वा क्रमेण प्रतिमन्त्रं कुर्यात् ७५ गार्हपत्योपस्थाने शतं हिमा इति ब्रूयान्न वा ब्रूयात् ७६ ब्रह्मा जुहोति न वा ७७ उपतिष्ठते समिदाधानं वा करोति ७८ इन्द्राय विमृधे एकादशकपालं पौर्णमासं निर्वपेन्न वा ७९ हौत्रिणां वैकल्पिकपदार्थानामवधारणं संहतौ पाणिं धारयन्नाकाशवत्यङ्गुलीः हृदयसव्यं सम्मिता वा ८० भूर्भुवः स्वरिति जपित्वा हिं करोति वा हिं कृत्य ८१ भूर्भुवः स्वरोमिति जपति ८२ परोक्षवचनान्युच्चै-रुपांशुर्वा ८३ अग्नीध्रमंसदेशेन सव्येन पाणिनान्वारभते वा ८४ अग्नये

पुरोडाशस्य भुवो यज्ञ इति याज्या अयमग्निः सहस्त्रिण इति वा ८५ अग्नये दधविशो अध्वरस्य होतरिति अनवानं यो जपति प्रकृत्या वा ८६ इडामास्य सम्मितिमुपाट्कयने प्राणसम्मिता वा ८७ अवान्तरेडाप्राशनमन्त्रे सर्वे पुरुषा इति वा ८८ वेदं पत्न्यै प्रदाय वाचयेद्धोता अध्वर्युर्वा ८९ ऊर्ध्वायां दिशि यज्ञः संवत्सर इत्यत्र मार्जयन्तां मार्जयन्तामिति वा ९० दर्शे सर्वं समानयनं पिण्डपितृयज्ञे दक्षिणाग्नि पश्चिमेनोत्तरेण वा ९१ पात्रासादनं हविर्ग्रहणं चरुणा स्रुचा वा दक्षिणोल्लिख्य अपरेण वा ९२ देवदत्त एतत्तेत्रं ये च त्वा मनुवा ९३ अथवा देवदत्त एतत्तेत्रं ये च त्वा मनुयाश्चत्यामन्वितिवा ९४ सूत्राणि वाउणदिशा वा ९५ वयस्युत्तरे यजमानलोमानि वा ९६ अर्वाक्सोमात्सान्निध्यं कुर्यान्न वा सान्नाय्ये सति चतुर्दश्याममावास्यायां वोपवसेत् ९८ शाखा शाल्मली पालाशी वा ९९ दक्षस्य प्रागुदीचीमैशानी वा १०० इषे त्वा छिनत्ति ऊर्जे त्वा छिनत्ति वा १०१ यरीषेत्वेति तदा ऊर्ज्जे त्वासनम् १०२ प्रगुणीकरोति वत्सापाकरणं वायवस्थेति उपायवस्थेति १०३ सान्नाय्यमैन्द्रं माहेन्द्रं वा १०४ गार्हपत्यागारे आहवनीयागारे वा प्राक्शाखानवगूहति १०५ शाखायां कुशपवित्रद्वयं त्रिवृत्या बध्नाति १०६ उखायां प्रागग्रमुदगग्रं वा पवित्रं निदधाति १०७ आदित्यश्चरुरु॰ मावास्यायां मन्वादिकल्पः १०८ एते वैकल्पिका इति द्व्यहपक्षे पौर्णमास्यां पूर्वाह्णे विहृतेष्वेवाग्निषु वैकल्पिकपदार्थावधारणं मांसमैथुनवर्जं सङ्कल्पः वपनपक्षे वपनं वा १०९ व्रतोपायनीयाशान ११० अत्र वा ग्रहणम् ११ रात्रावारण्यभोजनं वा १२ अन्तरागारशयनम् १३ उदङ्मुखं ब्रह्माणं वृणीते १४ ब्रह्माणं यजमान आह १५ वाचस्पतये यज्ञं गोपाय वासनोपविष्टे ब्रह्मणि सत्यत्र वा व्रतग्रहणम् १६ अध्वर्युणा यजमान वाचं यच्छेति प्रोषितो वाग्यतः १७ आज्यनिर्वापानन्तरं वेदोसीति मन्त्रेण वेदबन्धनम् १८ पात्रीनिर्णेजनतिनयने प्रथमे इदं त्रिताय इ॰ द्विताय इदम् १९ अधिश्रितेन्वाहार्ये सत्यत्र वा व्रतग्रहणम् २० अध्वर्युणात्मालम्भनान्तरमुदकोपस्पर्शकृते स्वासनादुत्थाय सञ्चरेण प्रविश्य गार्हपत्यदक्षिणाग्न्योरन्तरेण हवींषि प्रदक्षिणीकुर्वन्नागत्याहवनीयं पश्चिमेन तिष्ठन्नुदकमुपस्पृश्याहवनीयमीक्षमाण अग्ने व्रतपत इति २१ इदमहमनृतात्सत्य-मुपैमीत्यनेन वा व्रतग्रहणं कृत्वा आव्रतविमोकान्मया सत्यं वक्तव्यमिति २२ सत्यवदनसङ्कल्पं करोति सामिधेनि पठितुमिच्छति होतरी सन्तन्वन्निव मेनुब्रूहि होतारमुक्त्वा २३ इदमहं पञ्चदशेन वज्रेण वेदिं प्राक्रमते पूर्वाघारे इदं प्रजापतये॰ २४ उत्तराघारे इदमिन्द्राय॰ २५ प्रथमे प्रयाजे इदं समिद्भ्यो॰ २६ एको मम त्विषिमान् भूयासं आभ्यां प्रथमं प्रयाजमनुमन्त्रयते द्वितीये इदं तनूनपाते द्वौ मम॰ अपचि॰ आभ्यां द्वितीयम् २७ तृतीये इदं समिद्भ्यः त्रयो ममेति॰यशस्विभू॰

चतुर्थे समानयनमिदं बर्हिषे॰ चत्वारो ब्रह्मवर्च॰ पञ्चमे इदमग्ने इत्यादि यथादैवतं पञ्चममनन्तस्य॰ अन्नादो भू॰ आभ्यां पञ्चमम् २८ इडोपह्वानं करोति आग्नेयं चतुर्द्धा कृत्वा दक्षिणहस्तेन गृहीत्वा ब्रध्न पिन्व स्वाहेति बर्हिषि निधाय ऋत्विग्भ्य आदिशति ब्रह्म इत्यादि अत्र पितर इति जपति उदको॰ अमीमदन्त॰ उपहूते द्यावापृथिवी इत्युच्चमानेग्नीध्रे खङ्गवत्तं प्रयच्छति उपहूतो यजमान इत्युच्यमाने म इदं जपति उपहूतामिडां प्राश्नाति। तत पवित्रयोर्मार्जयन्ते अध्वर्युणार्पितं भागं गृहीत्वा निदधाति अध्वर्युणान्वारब्धमन्वाहार्यमृत्विग्भ्यो ददाति आग्नीध्रेणाहवनीये प्रक्षिप्ता या समिद् आजानति होतार यजमानस्तां समिधमनुमन्त्रयते एषा तेति अनुयाजेति यथादैवतं त्यागः चतुर्थे देवेभ्यः संस्रवहोमे विश्वेभ्यो देवेभ्यो॰ विष्णुक्रमणं दिवि विष्णुरिति प्रतिमन्त्रमथवा पृथिव्यामित्यन्तरिक्ष इति २९ सूर्यावेक्षणे वर्चस्थाने यदि गवादि गायमायते तदा गोदा असि ३० सुवर्णदा असि पुत्रदासीत्यादि गो मे देहि सुवर्णं मे देहि पुत्रान्मे देहि गार्हपत्यं पश्चिमेन तिष्ठन् गार्हपत्यमुपतिष्ठते अग्ने गृहपत इति अथवा त्विसन्त्पतेनोपतिष्ठते शतं हिमा इत्यन्तेन वा ३१ ततोसीत्यनेन पुत्रनाम ग्रहणमग्ने व्रतपत इति व्रतविसर्गः ३२ यदीदमहनूतादित्यनेन व्रतग्रहणं कृतं तदेदमहं य एवास्मि सोऽस्मीत्यनेन। संयज्ञपतति भागं प्राश्नाति युज्यन्तां ततः स्वासने उपविशति ब्राह्मणं तर्पयेति वैं ब्रूयात्। दर्शे तु विशेषः। पूर्वाह्णेऽग्निषु हुतेषु वैकल्पिकपदार्थावधारणम्। प्राप्तसमये वैश्वदेवस्ततोऽपराह्णे पिण्डपितृयज्ञमध्वर्युः करोति। रेखायां क्षित्यां पिण्डानवजिघ्रति अवघ्राणमपसव्येन। तत उदकोपस्पर्शः। सान्नाय्यपक्षे यवाग्वैव होमः। यदा सान्नाय्यः स्यात्तदा गोदोहप्रैषानन्तरं स्थालीमन्वारभन्ते। तावता अन्वारभन्ते यावति रात्रौ गोदोध्रि प्रातरप्येवम्। उदयात्प्राग् ब्रह्मवरणं पञ्चमे प्रयाजे सान्नाय्यपक्षे तु इन्द्राग्निभ्यामित्यस्य स्थाने इन्द्रायेति प्रयुज्यते। द्वितीयपुरोडाशहोमे सान्नाय्ये तु इदमिन्द्राय माहेन्द्रपक्षे इदमिन्द्राय तथा शाखा पवित्र प्रकृतपवित्रैर्मार्जनम्। शेषं प्रकृतिवत्।। **इति वैकल्पिकपदार्थाः।।**

## ।। अथाग्रयणप्रयोगः ।।

तदुक्तं गृह्ये—

वक्ष्ये नवप्राशनमाहितस्य पुण्येह्नि तत्कर्म शरद्वसन्ते।
न पूर्णिमाया नियमस्त्वमायाश्चाचार्यमत्याग्रयणं नहीदम्।।
पौष्णदये चादितिभद्वये च ब्रह्मद्वये चैव करद्वये च।
त्रिरुत्तरे विष्णुयुगे ज्ञजीवे सिप्ते च रिक्तातिथिवर्जिते स्यात्।।
यवैर्वसन्ते यष्टव्यं व्रीहिभिः शरदीयके।
श्यामाकैर्वापि शरद्येव ग्रीष्मकाले च वेणुजैः।।

कृताकृतं वेणुयवैर्वदन्त्याग्रयणं बुधाः।
समानतन्त्रे वा व्रीहिश्यामाकाग्रयणे उभे।।
कात्यायनमतेनैके श्यामाकेषु यां न कुर्वते।
शरद्वसन्तयोः केचित्तथा प्राप्तिस्तिथिस्मिन्नत्यह्याधर्मदीपितः।। इति मुहूर्त्तः।

अथाग्रयणमैन्द्राग्न० पावकस्य व्रीहीणां यवानां च वैश्वदेवश्चरुः पयसि। द्यावापृथिवी एककपालेन उद्वास्यान्तं छादयेनाज्यस्य वा यजेत्पुराणानां वा चरुः प्रथमजो गौर्दक्षिणा प्रथमप्रसूता गौः तस्या दक्षिणेति सूत्रेण, शरदि नवैर्व्रीहिभिर्वसन्ते नवैर्यवैराग्रयणं विहितं तत्र प्रथमप्रयोगे देशकालकीर्त्तनानन्तरं आग्रयणेष्ट्या यष्टुर्गणेशपूजनं स्वस्ति पुण्याहवाचनं मातृकापूजनं वसोर्धारापूजनपूर्वकं नान्दीश्राद्धं च करिष्ये। तत्कृत्वा पुनर्देशकालकीर्त्तनान्ते आग्रयणारम्भार्थमन्वारम्भणीयेष्ट्याहं यक्ष्ये वाग्रयणेनाहं यक्ष्ये। इति सङ्कल्पः। तत्रैककालपक्षे अहतवासः परिधानम्। त्रेधा बर्हिः कुशप्रस्तरणानि नियमेनाज्यपक्षे द्यावापृथिवी० अध्वर्युरुद्धरति। यजमानः षट् समिधो गृहीत्वा इन्द्राग्नी द्वादशकपालेन पुरोडाशेन विश्वान् देवान् चरुणोपांशु। द्यावापृथिवी एककपालेन पुरोडाशेनोपांशु शरदि व्रीहिमयेन वसन्ते यवमयेनाहं यक्ष्ये। आज्येन द्यावापृथिवी यक्ष्ये। सप्तदशो वज्रः शरदि यवैर्व्रीहिभिर्यागः वसन्ते चेद्यवैः, ममाग्ने पक्षः उत्तमे काले व्रतोपायनं, प्रथमजो गौर्दक्षिणा, शेषमध्वर्युः प्रत्ययेन। अत्र विशेषः पयः पक्षे ब्रह्मन्नपः पयांसि प्रणेष्यामि, द्वादशकपालानि एकं पाणितलसम्मितं वा उपसर्जनीद्वयमुद्धरणपात्रीद्वयं वा त्रेधा सन्नद्धकुशप्रसूनप्रस्तरेण सह पुनरेकधा सन्नधबर्हिः आन्ताछादनाज्यस्य चरोश्चोपकल्पनं मेक्षणस्य च ग्रहणे प्रोक्षणे निर्देश प्राणादानानुवाचनयाजनतूहेष्वध्वर्योः तथावाहनोत्तमप्रयाजस्विष्टकृत्सूक्तवाकेषु होतुर्यथादैवतमूहः पुरोडाशपक्षे प्रथमं तुषान्ते द्वितीयहविरग्नेस्तनूरित्यावपति मूसलादानं तूष्णीं स इदमिति मन्त्रेणावदधाति तूष्णीं शूर्पादानं ततो मन्त्रैर्हविरुद्धपतीत्यादि कणान्ते चरुविवेकः। इदं विश्वेषां देवानां पुरोडाशपक्षेन एककपाले तप्यस्वेत्यूहः। पिष्टेक्षणामन्त्रेण तन्दुलक्षणमन्त्रेण पात्र्या असपवित्रायां पिष्टानोप्य सपवित्रे चरोस्तन्दुलावपः पिष्टेषूपसर्जनीसेकान्ते चर्वासेकः पयः पक्षे प्राकृतोपसर्जनीग्रहणानन्तरं समाप ओषधीभिः सम्पृच्यन्तां सम्मधुमतीर्मधुमतीभिः पृच्यन्तामिति क्षीरोपसर्जनीग्रहणं प्राणदानान्ते द्यावापृथिवी . स्यातां छादनं होतुः सप्तदशसामिधेन्य समिध्यमान समिद्धवत्यावान्तरेण पृथुपाजावत्यौ दधाति इत्युपसर्ज प्राप्ते नवतिश्चिर्कीर्षते पृथुपाजावत्यौ स्थानेन नवत्यौ दधाति हौत्रं तत्र प्र वो वाजा इत्यादि शोचिष्केशस्तमीमहो३म्। नवनु स्तोममग्नये दिवः

श्येनायजीजनं वस्वः कुविद्वान्नातिनो स्पार्हायस्य श्रियोदशेरयिर्वीरवतो यथा अग्ने यज्ञस्य शोचतो समिधो अग्न इत्यादि अथाज्यभागौ अग्नयेनु० अदाभ्यः पुर एता विशामग्निर्मानुषीणां तूर्णीरथः सुदानवो सोमायानुब्रूहि० नवस्य सोमते वयमासुमती वृणीमहे सनोरास्वे सहस्रिणो प्रधानयागे। इन्द्राग्निभ्यामनु० नवं स्तोमनवं हविरिन्द्राग्निभ्यां निवेदय तज्जुषेथां सचेतसो ये यजामहे इन्द्राग्नी शुचिन्नुस्ते मनवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम्। उन्नाहिं सुहवाजोहवामितावाजं सद्य उशते धेष्टावौ इति याज्या उपांशु विश्वेभ्यो देवेभ्यः उच्चैः अनु० विश्वान् देवांस्तर्पयत हविषो स्यनवस्यनः। स्वर्दिदोह यज्ञिरों३ये० विश्वान्देवान्तदम्बर्हिः सुष्टरीमानवे नायं यशो भुवनस्य भागः। अयं बभूव भुवनस्य गोप्ता विश्वे देवा इदमद्या गामिष्ठावो उपांशु द्यावापृथिवीभ्यामनु० इमे नु द्यावापृथिवी समीची यज्ञं पुरुरूपे ससन्धिया अप्रणीतां भुवनानि विश्वप्रजां पुष्टिरमृतं दधातो आज्येन चेत् घृतं मिमिक्षे० हव्यों-३ ये इमे तुरमृतं दुहाते पयस्युत्तमामयि तु पुष्टिं इमं यज्ञं गोपमाणा नवेन समीची द्यावापृथिवी घृताची वौषट्। अग्नये आज्येन चेत् घृतवती भुवनानां० तासां वौषट्। अग्नये स्विष्टकृतेनु० यविष्टो हव्यवाहनश्चित्रभानु घृताहुतः नवौ जातो विरोजसेग्ने नत्तेमहित्वनो ये। अग्निं स्विष्टकृतमयाडग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाडिन्द्राग्न्योः प्रियाधामान्ययाड् द्यावापृथिव्योः प्रि० देवानामा० जुषतां हविस्त्वमग्नेर्देवताभ्यो भागे देव नवीयसे स एता द्वि विद्वान्यांक्षि नवं स्तोमं जुषस्वनां वौषट् दक्षिणास्थाने गोरस्यूर्जं मयि धेहि इति। शेषं प्रकृतिवत्। अथ सौम्याः श्यामाकचरुररण्यस्य वैणवो ग्रीष्मो पुनः संस्कृतो रथो दक्षिणा क्षोमं मधुपर्को वर्षाधृतं वा वासः इति सूत्रे वर्षास्तु सोमदैवतः श्यामाकचरुः ग्रीष्मे वैणवाश्चरुरुक्तः। ततश्चरुधर्माः सर्वे तत्र सोमायानुब्रू० नवस्थसोमहविषः पीयूषस्येह तृप्तुहि। यस्ते भागऋतावयो सोमं यज ये३ सोमं नवं स्तोमं जुषस्व न ऋतुभिः सोमहुतये मा इदं प्रतिहर्यता राजन्सोम प्रति हव्या गृभाया वौ० अन्यत्समानम्। यदा व्रीह्याग्रयणेन सदैवेयश्यामाकेष्टिस्तथा यवाग्रयणेन सहैव वैणवेष्टिः क्रियते। तदा द्यावापृथिवीव यागात् पूर्वं सौम्यचरुयागः। अथ नवतीचिकीर्षतः पूर्वोक्तविधिः इन्द्राग्नी अवसागत० इन्द्राग्नी गीर्भिर्विप्रः प्रमतिमिच्छमाना० इत्यैन्द्राग्नस्य० विश्वे देवा स आगत० विश्वेदवाः शृणुतेमम्० इति वैश्वदेवस्य मही द्यौ० चक्षुषः पिता इति द्यावापृथिवी यस्य। आप्यायस्व० अस्मिन् पक्षे सप्तदशसु सामिधेनीषु शोचिष्केशस्तमीमहे। पृथुपाजा अम०। तं सबाधोयत० तयो३समिद्धो अ० इत्यादि पूर्ववत्। यदा **प्रतिबन्धवशाद्दर्शपौर्णमासौ येन** नारब्धौ समातृपूजानान्दीश्राद्धोत्तरं दर्शपूर्णमासावीजानो दक्षिणाग्निपक्वचातुःप्राश्य चतुर्णां पर्याप्तमन्नं ब्राह्मणान् भोजयेत्। तेन अग्न्याधानस्य सिद्धिः। यश्च **त्रिंशद्वर्षाणि रमाग्निहोत्रमेव** जुहोति

तस्याग्निहोत्राणि नो नवैः सायं प्रातरग्निहोत्रहोमः। आग्रायणकालो संवत्सरदीक्षादौ यज्ञे आरब्धे नवान्नमासितायाः गोः पयसा दीक्षितव्रतम्। उपवत्सरोहिणो कुर्वीत। न नवान्नपुरोडाशौ संवत्सरसुत्यासु सवनीया पुरोडाशाः एतत्सर्वमाग्रायणकाले एव इत्याग्रयणसाङ्गतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् भोजयिष्ये। ततो यजमानायाशीर्दद्यात्। तथाशीर्मन्त्राः। आदित्यं गर्भं पयसा॰ यजमानः॥१॥ पयसि पुरुषमुपदधाति। पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठापयत्यादित्यं गर्भं पयसा समङ्धीत्यादित्यो वा एष गर्भो यत्पुरुषस्तं पयसा समङ्धीत्येतत्सहस्रस्य प्रतिमां विश्वरूपमिति पुरुषो वै सहस्रस्य प्रतिमापुरुषस्य ह्येव सहस्रं भवति परिवृङ्धिहरसा माभिमंस्था इति पर्येनंवृ॰ शतायुः॥ **इति श्री श्रौतोल्लासे आग्रयणेष्टिप्रयोगः।**

## ।। अथ प्रवासविधिः ।।

**प्रवासलक्षणं गृह्ये—**

यदि सीमामतिक्रम्य रात्रौ यत्रोपविश्यति।
अगृहस्व प्रमाणं तत् प्रवासः प्रोच्यते बुधैः॥१॥

**ग्रामान्तरे नगर्यां** वा **पत्न्या** चान्यत्र वा क्वचित्।
**सीमामतीत्य रात्रौ चेद्वासः प्रवसनं स्मृतम्**॥२॥

**निक्षिप्याग्निं स्वदारेषु परिकल्प्य च ऋत्विजम्।**
**प्रवासे कार्यवान्विप्रो न वृथैव चिरं क्वचित्**॥३॥

**प्रवसेद्धनसम्पत्यै न तीर्थाय कदाचन।**
इति कूर्मपुराणोक्तं तथा बौधायनेन च॥४॥

प्रविश्य चालनं पश्चात् उपविश्योपतिष्ठति।
प्रवत्स्यामीति सङ्कल्प्य ततो ब्रूयान्नमोग्नये॥५॥

ब्राह्मे मुहूर्त्ते चोत्थाय प्रातर्होमादिकं विधाय देशकालौ सङ्कीर्त्य धनमर्जयितुं प्रवासं करिष्ये। ततो गार्हपत्यादाहवनीयदक्षिणाग्न्योरुद्धरणं, नर्येति गार्हपत्योपस्थानम्। ॐ नर्य प्रजां मे पाहि शंस्य पशून् मे पाहि, दक्षिणाग्न्युपस्थानम्। ॐ अथर्य पितुम्मे पाहि ततो वाग्यतः पद्भ्यां व्रजति। ॐ नमो रुद्राय पथिषदे स्वस्ति मां पारयेति जपित्वा गच्छति। यत्र गच्छति तत्र वाचं विसृजेत्। होमसमये अद्येत्यादि॰ सङ्कल्पं कृत्वा वृष्टिरसीति मन्त्राचमनं गृहाभिमुखः ॐ इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजापतिः अग्नये मम॰। इदमग्नये गृहपतये रयिपते पुष्टिपतये॰ इदमग्नये॰ इदं प्रजापतये॰

इदमग्नयेऽन्नादायान्नपतये॰ इदं प्रजापतये॰ प्रातः सूर्यायेति विशेषः। इदं सूर्याय॰ इदं सूर्याय॰ इदं प्रजापतये॰ विद्युदसि॰ पुनराचमनम्। ॐ नडाय नैषधाय अन्वाहार्यपचनाय॰ इत्यग्निहोत्रहोमः। **अथ स्मार्त्तहोमः**। अद्येत्यादि॰ इदमग्नये॰ इदं प्रजापतये॰ समास्त्वेति जपेत्। प्रातर्होमः। इदं सूर्याय॰ इदं प्रजापतये॰ विभ्राडित्यनुवाकं जपेत् इति स्मार्त्तहोमः। **दर्शपौर्णमासयोरुद्धरणादि अभिधानम्**। वपनम्। व्रतोपायनीयाशनमवधारितकाले व्रतग्रहणं सत्यं वद सङ्कल्पः ततः देशकालौ॰ दर्शपौर्णमासाभ्यामहं यक्ष्ये। ततो वैकल्पिकस्मरणम्। अग्निमष्टकपालेन पु॰ अग्नीषोमावहं॰ अग्नीषोमावेकादशक॰ दर्शे विष्णुमन्तराज्येन इन्द्राग्नीद्वादश॰ अन्वाहार्यो दक्षिणा ममाग्नेपक्षः उत्तमे काले व्रतोपाय॰ एतान्वैकल्पिकपदा॰ नावधारिता प्रतिपदि प्रातर्होमानन्तरं प्रणीताप्रणयनम्। उदपात्रं निधाय। आलभते भूतस्त्वा भूत करिष्यामि ब्रह्मन्नपः प्रणेष्यामि वाग्यमनं यज्ञं देवता॰ धेहि। ॐ कस्त्वा युनक्ति ततः पात्रासादनं प्रोक्षणीपात्रं पवित्रछेदनानि पवित्रे द्वे पूर्णपात्रं ततः पवित्रकरणम् ॐ पवित्रे स्थो वैष्णव्यौ छित्वा प्रोक्ष्य संस्कृत्य प्रोक्षिण्यापः कृत्वा ताभ्यामुत्पुनाति। ॐ सवितुर्वः प्रस॰ पूर्णपात्रप्रोक्षणं प्रोक्षणीनिःशेषकरणं पवित्रयोः प्रणीतासु निधानम्। ॐ वेदो॰ भूया॰। इदं त्रितायाप्त्याय॰ इदं द्विता॰ इदमेकता॰ व्रतग्रहणम्। अग्निमीक्षमाणः अपः स्पृश्य ॐ अग्ने व्रत॰ सत्यवाग्यतः स्वद्रव्यपरित्यागः। इदं प्रजापतये॰ इदमिन्द्राय॰ इत्याघारौ। अथ प्रयाजानुमन्त्रणम् इदं समिद्भ्यो न॰ एको मम एका तस्य॰ त्विषिमान् भूयासम्। इदं नराशंसाय॰ द्वे मम॰ अपचिति॰ इदमिड्भ्यो॰ त्रयो॰ यशस्वी॰ इदं बर्हिषे॰ चत्वार॰ ब्रह्मवर्चसी भू॰ इदमग्नये सोमायाग्नीषोमाभ्यां देवेभ्यः आज्यपेभ्योऽग्नये स्विष्टकृते च पञ्च मम न त॰ अन्नादो भू॰ दर्शे इदमग्नये सोमायाग्नये विष्णवे इन्द्राग्निभ्यां देवेभ्य॰ पूर्ववत्। अथाज्यभागौ इदमग्नये॰ इदं सोमाय॰। प्रधानदेवता। इदग्नये॰ इदमग्नीषोमाभ्यां॰ दर्शे इदमग्नये॰ इदं विष्णवे॰ इदमिन्द्राग्निभ्याम्॰ इदमग्नये स्विष्टकृते॰ मयीदमिति जपति यजमानः। ॐ मयीद॰ शेषः त्रयोनुयाजः इदं देवाय बर्हिषे॰ इदं देवाय नराशंसाय॰ इदं देवायाग्नये स्विष्टकृते॰ इदं देवेभ्य इदं विश्वेभ्यो देवेभ्यो॰। अथ पत्नीसंयाजाः इदं सोमाय॰ इदं त्वष्ट्रे॰ इदं देवानां पत्नीभ्यो॰ इदमग्नये गृहपतये९ मयीदमिति जपति इदमग्नये अदब्धाय अशीतमाय॰ इदमग्नये संवेशपतये॰ इदं सरस्वत्यै॰ यशोभगिन्यै॰ इदमग्नये॰ इदं वाताय॰ इदं दिव्याय नभसे॰ पूर्णपात्रग्रहणं सं वर्चसेतिमुखं विमृष्टे। ॐ सं वर्चसा॰ दिवि विष्णुः॰ जाग॰ द्विष्मः ॐ अन्तरिक्षे वि॰ त्रैष्टु॰ ष्मः। पृ॰वि॰ गायत्रे॰ ष्मः। अगन्म स्वरिति प्राक् सञ्ज्योतिषेत्याहवनीयं स्वयम्भूरसि सूर्यम् ॐ स्वयम्भूरसि॰ देहि सूर्यस्यावर्त्तते

प्रदक्षिणम्। ॐ सूर्यस्यावृतमन्वावर्त्ते। गच्छति प्राक् उरु विष्णो इति। उरु विष्णो॰ तिर उपविश्य ततोसि तन्तुरस्य॰ वीर्ये अनेन मन्त्रेण पुत्रनामग्रहणं व्रतविसर्गः ॐ अग्ने व्रतपते॰ राधि॰ ब्राह्मणतर्पणम्। **इति दर्शपौर्णमासेष्टिः**।

**अथ पक्षादि**। इदं प्रजापत॰ इदमिन्द्रा॰ इदमग्नये॰ इदं विष्णवे॰ इदमिन्द्राग्निभ्याम्॰ इदं ब्रह्मणे॰ इदं प्रजापतये॰ इदं विश्वेभ्यो देवेभ्यो॰ इदं द्यावा-पृथिवीभ्याम्॰ **अथ बलिहरणम्**। इदं विश्वेभ्यो देवेभ्यो॰ इदं भूतगृह्ये इदमाकाशाय॰। **अथ वैश्वदेवाहुतिः**। इदमग्नये॰ इदं प्रजापतये॰ इदं विश्वेभ्यो देवेभ्यो॰ इदमग्नये स्विष्टकृते॰ इदमग्नये॰ इदं वायवे॰ इदं सूर्याय॰ इदमग्निवरुणाभ्यामिति द्वयम् इद-मग्नये॰ अयसे॰ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः इदं वरुणायादित्यायादितये॰ इदं प्रजापतये॰ इदं स्त्रियै॰ इदं पुं सेवयन्ते॰ इदं शुक्लाय कृष्णाय दन्ताय पापीनां पतये॰ इदं मे प्रजामुपलोभयन्ति ग्रामे वसन्ति उत वारण्ये यश्च न मम। ब्राह्मणभोजनसङ्कल्पः। **इति पक्षादि**।

**अथ पिण्डपितृयज्ञः**। इदमग्नये कव्यवाहनाय॰ इदं सोमाय पितृमते॰। अथ वैश्वदेवः। इदं ब्रह्मणे प्रजापतये गृहेभ्यः कश्यपाय अनुमतये॰ बलिः इदं पर्जन्याय॰ इदं अद्भ्यः इदं पृथिव्यै इदं धात्रे विधात्रे वायवे चतुर्वारं इदं प्राच्यै दक्षिणायै प्रतीच्यै उदीच्यै दिशे इदं ब्रह्मणे अन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्यः उषसे भूतानां पतये पितृभ्यः स्वधा यक्ष्मणे॰। पारस्करगृह्यानुसारिणां वाजसनेयीनां तु प्रवासे ब्रह्मयज्ञवर्त्तिता देवयज्ञादयश्चत्वारो यज्ञा भवन्ति। अत एव देवयज्ञादीनां चतुर्णां सत्यप्रवासे गृह एवानुष्ठानम्।

**तदुक्तं गृह्ये**—

नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतम्।
पुत्रो भ्राताथवा पत्नी शिष्यो वा हरते बलिम्।।
प्रवासे नैत्यकं कर्म कृत्वा चैव यथाविधि।
सङ्कल्पः पूर्ववत् त्यागान् कुर्यात्पञ्चयज्ञवदिति रेणुकारिका।।

**कात्यायनः**—

स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन।
नह्याहिताग्नौ स्वं कर्म लौकिकाग्नौ विधीयते।।

अत एव गृह्ये ब्रह्मयज्ञवर्जिताः देवयज्ञादयश्च चत्वारो यज्ञाः ऋत्विगादिद्वारा करणीयाः। दर्शश्राद्धं क्षयाहश्राद्धादि कुर्यादिति सिद्धं विस्तरेणास्मृतत्कृते स्मार्तोल्लासे अवगन्तव्यम्। **इति वैश्वदेवः**।

प्रवासे आग्रयणं पतिस्तद्गृहे ऋत्विगादि करोति। प्रवासे त्यागमन्त्रः। ततो वैकल्पिकादि व्रतविसर्गान्तं पूर्ववत्। अत्र विशेषः। इन्द्राग्नि द्वादशकपालेन पु॰ विश्वान् देवान् चरुणा द्यावापृथिवीं आज्येन वा एककपालेन सद्योहं यक्ष्ये तत्र सप्तदशो वज्रः व्रीहियवैर्यागः। गौर्दक्षिणा ममाग्ने पक्षः उत्तमे काले शेषं पूर्ववत्। उत्तमे प्रयाजे इदमग्नये सोमाय इन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यां देवेभ्यः प्रधानयागे इदमिन्द्राग्निभ्याम् इदं विश्वेभ्यो देवेभ्यो॰ शेषं पूर्ववत्। इत्याग्रयणेष्टिः। एवं सर्वत्र नित्येषु। आगच्छतो मत्वा वाग्यमनम्। समित्पाणिः कुशोपग्रहः गुरूणामपि सम्भाषणमकुर्वन्नागत्य पादप्रक्षालनपूर्वकमाचम्य विहृतामग्नीनां प्रथम आहवनीयमुपस्थानमागन्मेति। ॐ आगन्म वि॰ ॐ अयमग्निः पुरी॰ ततो गृहा मा बिभेति। गृहानुपैति। ॐ गृहा मा बिभीत॰ मानः प्रविशति। क्षेमाय वः शान्त्यै॰ शंयोः पुत्रं दृष्ट्वा जपति।

अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतं त्रिः शिरोऽवघ्राणम्। दक्षिणकर्णे जपति। अस्मे प्रयन्धि मगवन् नृजीषिनिन्द्ररायो विश्ववारस्य भूरेः। अस्मे शतं॰ सव्यकर्णे जपति। इन्द्र श्रेष्ठानि द्रविणानि धेहि॰ इति मूर्द्धानमेवावजिघ्रति। **इति श्रौतोल्लासे प्रवासविधिः**।

**अथ पुनराधाने विशेषः**। देशकालौ सङ्कीर्त्य अमुकसमयमारभ्य अद्यदिनपर्यन्तं श्रौताग्निविच्छेदजनितप्रत्यवायपरिहारार्थं एतावत्प्रायश्चित्तं अमुकप्रत्याम्नायत्वेन करिष्ये। अमुकदिनमारभ्याद्यदिनपर्यन्तं लुप्तानां सायं-प्रातर्होमानां दर्शपौर्णमासानां तन्दुलादिद्रव्यं यस्मै कस्मै ब्राह्मणाय सम्प्रददे। इति हौम्यं दत्त्वा आचम्य प्राणानायम्य पुनः देशकालौ सङ्कीर्त्य परमेश्वरप्रीतये विच्छिन्नसन्धानार्थं श्रौताधानं करिष्ये। तदङ्गभूतं गणेशपूजनं पुण्याहवाचनं ऋत्विग्वरणं करिष्ये। नान्दीश्राद्धं तु कृताकृतम्। उच्छ्वासोश्वासने न भवतः। पवमानेष्टिः कृताकृतम्। संस्कारस्य जात्यत्वात्। नात्र वसन्तादिनियमः। निमित्तान्तरमेव। अत्र नान्वारम्भणीया अन्यत्सर्वमाधानवत् पुनराधानं कर्तव्यम्। इति **पुनराधानप्रयोगः**।

**अथ पुनराधेयमुच्यते**। तत्र पुनराधेयमाधानादि प्रतिज्ञातस्य राजयशःकाम-स्येति सूत्रे। आधानानन्तरं संवत्सरादर्वागेव मानवित्तादिहान्वा अप्रतिष्ठितो भवति तस्य वा राज्यकामस्य यशः। त्रिरात्रावरमग्नीनुद्धृत्य सद्यो वाहृत्योत्सृज्य सभ्यं विना। पुनर्वस्वोर्षो पुनराधेयम्। वर्षर्तौ मध्यन्दिने वा। तत्र देशकालौ सङ्कीर्त्य एतन्निमित्तं ऋत्विक्करणं नाग्न्यागारकरणम्। वपनं वा क्षौमाहतपरिधानम्। गार्हपत्ये संस्कारपूर्वकं निर्मथ्याभ्यादधाति। वैश्वानरसाक्षी वै देवाः

पितर इति जपः। पूर्वद्वारेण यजमानप्रवेशः। दक्षिणद्वारेण पत्न्याः पश्चादग्नेरुपविशति दक्षिणतः पत्नी अरणीप्रदानाभावः। गार्हपत्यागारेजं बध्नाति वा। यथोक्तं चातुष्प्राश्यं वा। व्युष्टायामुपशमष्याग्निम्। वाचं यच्छेति प्रैषः। गार्हपत्याद्यायतनसंस्कारः। पक्षे सम्भाराः सद्यः पक्षे सम्भारेभ्यः प्राक् श्रौतोल्लेखनान्ते व्रीह्यपूपमर्कपालाशयोः लौकिकाग्निं पक्वं गार्हपत्यस्थाने निदधाति। एवमाहवनीयस्य यावमपूपं निदधाति। ततोऽन्वारब्धौ श्रौताभ्युक्षणादिशर्करान्तं सन्यस्य विद्यमानत्वान्न तत्र संस्काराः। अश्वमानयेति प्रैषः। मन्थनं जाते वरदानम्। अभिश्वासो मन्त्रेणोच्छ्वासः। कुशैर्ज्वलते गार्हपत्यस्थापनमन्त्रेण पक्षे इध्म पूर्वार्द्धान्वारम्भणं सार्पराज्ञः। दक्षिणाग्निस्थापनम्। सभ्यस्य मन्थनस्थापने न स्तः नगान्दिव्यध्वमिति न धुतं परित्याश्वस्यो॰ सर्गः पूर्णाहुतिः। तूष्णीमग्निहोत्रहोमः। इति यथोक्तमाधानवत् मन्त्रवत् तनु हवीषां स्थाने आग्नेयः पञ्चकपालः तत्रोत्तमानुयाजवर्जं सर्वमुपांशु। तत्र अग्नये जुष्टं गृह्णामीत्यादि प्रकृतिवत् एकला दक्षिणनिर्देशः होतुः पञ्चदशसामिधेन्यः। आवाहने अग्निमग्न आवह। अग्निं पवमानमावह। अग्निमिन्दुमतमिति वा। अग्निमावह देवा इत्यादि। प्रथमप्रयाजे। अध्वर्युः अग्नीत् होता यज ये यजामहेऽग्निमग्न आज्यस्य व्यन्तू वौ॰ यजमानः इदमग्निभ्यो॰ द्वितीयादिषु अध्वर्युः यजत्येव ये यजामहेऽग्निमग्नी राज्यस्यवेतू वौ॰ इदमग्नये॰ तृतीये ये यजामहेऽग्निमग्नी राज्यस्य व्यन्तू वौ॰ अग्नये पवमानायाग्नयेऽग्निभ्य॰ आज्यपेभ्योऽग्नये स्विष्टकृते च॰ अथाज्यभागौ प्रथमेध्वर्युः अग्नयेनु॰ होता अग्निं स्तोमेन बोधय॰ उच्चैः ये यजामहेऽग्निं जुषाणो अग्निराजस्य वेतू वौ॰ अग्नये पवमानायानु॰ अग्न आयूंषि पव॰ छूनाम् उच्चैः अग्निं पवमानं यज ये यजामहेग्निं पवमानं जुषाणो अग्निः पवमान आज्यस्य वेतू वौ॰ इदमग्नये पवमानाय॰ अथवा अग्नये इन्दुमतेनु॰ उच्चैः ॐ अग्निमिन्दुमतं यज ये यजामहे अग्निमिन्दुमतं जुषाणो अग्निमिन्दुमाना वेज्यस्य व्यन्तू वौ॰ इदमग्नये इन्दुमते।

**अथ प्रधानयागः**। अग्नयेनु॰ अग्निं तं मन्ये यो व॰ अस्तम॰ भरावौ॰ इदमग्नये॰ अग्नये स्विष्टकृतेनु॰। अग्ने तमद्याश्वम्॰ उच्चैः ॐ अग्निं॰ स्विष्टकृ॰ ये यजामहेग्निं स्विष्टकृतमयाडग्निर॰ सर्वेपि सूक्तवाके अग्निरिदं हविः अग्निः पवमान इदं हविः इन्दुमानवा अग्निरिदं हविः अग्नय आज्यपा आज्यम जुषन्ताम्॰ अग्निर्होत्रेणेत्यादि प्रकृतिवत्। एवमेव होमार्थं दर्शपौर्णमासार्थवो धृतयोरुभयोर्युगपत् ज्ञानान्तरमुदयेऽस्तमये वा जाते सद्यःकालीनं पुनराधेयं कर्त्तव्यम्। तस्मिन्नेव विहारे होमो वेष्टिः ब्रह्मचर्यादयो नियमाः। **इति पुनराधानेष्टिप्रयोगः।**

**अथ सूत्रक्रमेणाग्निहोत्राङ्गत्वात्सद्योपस्थानमुच्यते।** सायमग्निहोत्रहोमे समिदसीति समिदाधानानन्तरं यजमानो वात्सप्रेणाग्नी उपतिष्ठते। नोपतिष्ठते वा। तदा पयसा होत्रपक्षे वात्सप्रेण भूर्भुवः स्वरिति वा यदा वात्सप्रेण तदेत्थम्। आहवनीयसमीप उपप्रयन्त इति त्रिः पठित्वा अग्निमूर्द्धेति उभावामिति। अयं ते योनिरिति अयमिहेति सकृज्जत्वा अस्य प्रत्नामनु॰ मृषिमिति त्रिर्जपित्वा तनूपा अग्नेसीति इधानास्त्वेति सकृज्जप्त्वा चित्रावसो इति त्रिर्जपित्वोपविश्य सन्त्वमग्न इति सकृज्जप्त्वा अधस्थोत्पन्नेन गां गत्वा संहितेति गामालभते गार्हपत्य उप त्वाग्ने दिव इति उपस्थाय इड एहीत्यनेन गां गत्वा काम्याये एतेत्यनेन ह्यालभ्यते ततः सोमायानुमित्यनुदकं व्रतोपायनवत् अन्तरेणापराग्निं गत्वाहवनीयस्य पश्चात्प्राङ्मुखस्तिष्ठन् नाहवनीयमीक्षमाणः सोमानमिति जपति नोदकं स्पृशति कात्यायनभाष्यकारस्तत्र इदं व्याख्यातवानिति सकृत्सोमानमिति योरेवानिति मा नः शंस इति महि त्रीणामिति नहि तेषामिति ते हि पुत्रासो इति कदाचनस्तरीरसीति तत्सवितुरिति परि ते॰ इति त्रिर्जप्त्वा पौर्णमासमनेनैव मन्त्रेण तच्चैवं पुत्रनामग्रहणमिति। उपप्रयन्त इत्यादि पुत्रनामग्रहणान्तं वात्सप्रमभिधीयते दध्यादीनां तु द्रव्यान्तरेण होमपक्षे पद्युपतिष्ठते भूर्भुवः स्वरित्यनेन वात्सप्रेणते ततो भूर्भुवः स्वः। आहवनीयमुपस्थाय तेनैव मन्त्रेण गार्हपत्यमुपस्थाय ततो धारावर्जं पर्युक्षणमित्यादि सर्वं पूर्ववत्। इति।

## ।। अथ पुनराधाननिमित्तानि ।।

अग्नावतु गतेयस्य होमकालद्वयं व्रजेत्।
उभयोर्विप्रवासे वा लौकिकाग्निर्विधीयते।।१।।

अनो विना समारुढ ऊर्ध्वं शम्यापरासनात्।
हृतोग्निर्लौकिको ज्ञेयः श्रुतौ सर्वत्र दर्शनात्।।२।।

कुरुक्षेत्रादितीर्थानां गमने देशविप्लवे।
समारोपं विनैवाग्निर्निर्द्वहेयुर्विपश्चितः।।३।।

आरोप्याग्निं नरण्योः स्वानुवश्येत्सहाग्निभिः।
दृष्टोग्निर्यदि नश्येत मथ्यमानो हुताशनः।।४।।

ग्रामात्सीमान्तरं गत्वा प्रत्यक्षो हव्यवाहनः।
अहुतो वत्सरं गच्छेदुदकेन शमं गतः।।५।।

शीक्येनोद्वाहयेदग्नीन् पुनराधानमर्हति।
अग्निहोत्रेण रहितः पन्थानं शतयोजनम्।।६।।

आहिताग्निः प्रयायाच्चेदग्निहोत्रं विनश्यति।
अब्दं स्वयमजुह्वन्नोहापयेदृत्विगादिना॥७॥

तस्य स्यात्पुनराधेयं पवित्रैरथापि हि।
विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति॥८॥

होमकालात्यये तस्य पुनराधानमिष्यते।
अरण्योक्षयनाशाग्निदाहेष्वग्निसमाहितः॥९॥

पालयेदुपशान्तेऽस्मिन्पुनराधानमिष्यते।
ज्येष्ठां चेद्बहुभार्यस्य ह्यतिचारेण गच्छति॥१०॥

पुनराधानमत्रैके इच्छन्ति ननु सूरयः॥११॥

दाहयित्वाग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम्।
पात्रैश्चाप्यग्निमादध्यात्कृतदारो विलम्बित॥१२॥

दाहयित्वाग्निहोत्रेण स्त्रियं वृतवतीं पतिः।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्॥१३॥

जीवत्यामपि ज्येष्ठायां द्वितीयां परिणीयते।
कृते च उत्सर्गेष्ट्यनुसृज्य अन्यया सह॥१४॥

पुनरादध्यादिति स्मृतिचन्द्रिकायाम्—

भार्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि।
तदा वैवाहिकं कर्म कुर्यादावसथ्येऽग्निमान्॥१५॥

उपघातक्रियालोप उपेक्षा च प्रमादतः।
चतुर्विधमिदं प्रोक्तं पुनराधानकारणाम्॥१६॥

प्रतीची कर्मणां लोप उपघातोन्त्यजादिना।
उपेक्षणं प्रवासादि प्रमादोऽग्नेरधारणाम्॥१७॥

स्पृष्टोग्निर्यदि चाण्डालैरुदक्यादिभिरेव वा।
उपघातेषु सर्वेषु पुनस्त्वेति समिन्धनम्॥१८॥

यजमानश्च पत्नी च उभौ प्रवसितौ यदा।
अहोमात्र निवर्त्तेत पुनराधानमर्हति॥१९॥

यदि भावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः।
होमकालमतिक्रम्य तदा नश्यन्ति वह्नयः।।२०।।

विनाग्निभिर्यदा पत्नी नदीमम्बुधिगामिनीम्।
अतिक्रामे तदाग्नीनां विनाशः स्यादिति श्रुतिः।।२१।।

पत्न्यन्तरेऽथवा पत्यौ हुताशनसमीपगे।
तदा पत्नी यथाकाममतिक्रामेन्नदीमपि।।२२।।

पत्नी सीमामतिक्रान्ता यजमानो गृहे यदि।
आहोमाद्यदि नागच्छेत्पुनराधानमर्हति।।२३।।

एकाकिनी यदा पत्नी वह्निपादाय गच्छति।
तत्र नाशोग्निमित्याहुर्मर्यादा तेन दुष्यति।।२४।।

रजोदोषे समुत्पन्ने सूतके मृतकेपि वा।
प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति।।२५।।

बह्वीनामपि चैकस्यादुदक्यायां तु न व्रजेत्।
एकादशे चतुर्थेऽह्नि गन्तुमिच्छेन्निमित्ततः।।२६।।

त्रयीमुक्ता तु यो लोभात्प्रवसेत्सर्वसन्धिषु।
करोति पुनराधानं प्रायश्चित्तमनाहते।।२७।।

नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि।
न विना च निमित्तेन क्रीडाद्यर्थे तु न व्रजेत्।।२८।।

नदीसन्तरणेग्नीनां सीमातिक्रमणे तथा।
सर्वशद्यन्नसीम्नोर्वा स्वामिस्पृष्टाः स्युरग्नयः।।२९।।

प्रत्यक्षमरणिद्वारा वान्यथाग्निर्विनाशनम्।
आत्मारोपणपक्षे तु नान्वारम्भणमिष्यते।।३०।।

तत्र चान्वारभेदग्निं पुनराधिरुदाहृता।
न क्वाप्यारम्भणं किञ्चिल्लौगाक्ष्यादिनिबन्धनात्।।३१।।

उदकी चेद्भवेत् पत्नी प्रसूता प्रवसेद्यदि।
अन्वारम्भविकल्पत्वात्पुनराधिर्न [illegible]मतात्।।३२।।

शवानुगमने चैव शवसंस्पर्शने तथा।
पुनरेवाग्निमादद्यादिति शातातपोऽब्रवीत्॥३३॥

आहिताग्निः प्रमादाच्चेत् शवानुगमनो यदि।
अग्निनाशं विजानीयात्सपिण्डेषु न दोषभाक्॥३४॥

ज्येष्ठान्वारभते वह्निं बहुभार्यस्य नेतरा।
पत्नीवृषसमारूढा तीर्थयात्रा करोति च॥३५॥

स मूढो नरकं याति प्रत्यक्षग्निविनाशनम्।
नरुच्चैकाकिनी पत्नी प्रयायादग्निभिः सह॥३६॥

राष्ट्रभ्रंशादिसम्प्राप्ता उचितं यानमीदृशम्।
अन्यथाहि प्रवसत्यां वह्नयो लौकिकाः खलु॥३७॥

राष्ट्रभ्रंशादिगमने प्राप्ते देशे मनस्विते।
जुहुयाच्चतुरानेन स्मार्त्ते गौसर्वसञ्ज्ञितः॥३८॥

सायं प्रातर्हुते सर्वमेव स्यादुमनेन्वहम्।
यस्त्वाग्न्याधेयमात्त्मार्थं कृतवान् मृतभार्यकः॥३९॥

पत्नीविरहितो वह्निर्यथाकामं सनिर्हरेत्।
होमद्वयात्यये दर्शपौर्णमासात्यये तथा॥४०॥

पुनरेवाग्निमादध्यादिति भार्गवशासनम्॥४१॥

बहुधा विहृतो हावसथ्यात्कदाचन।
यावदेकोपतिष्ठेत तावदन्यो न मथ्यते॥४२॥

वैश्वदेवास्तथा होमात् प्राग्ज्ञेयं नैव मन्थनम्।
एको नान्तरितो वह्निरावसथ्यस्तु मथ्यते॥४३॥

आवसथ्यात्तु कर्मार्थं योग्निरुद्ध्रियते क्वचित्।
पूर्वेण योजयित्त्वा तु तस्मिन्होमो विधीयते॥४४॥

प्रातर्होमं तु निर्वृत्य समुद्धृत्य हुताशनात्।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत्॥४५॥

तमग्निं पुनराहृत्य शालाग्नावेव निक्षिपेत्।
ततोऽस्मिन् वैश्वदेवादि कर्म कुर्यादतन्द्रितः॥४६॥

नित्यपाकाय शालाग्नेरेकदेशस्य कार्यतः।
पाकार्थमुल्मुकं हृत्वा पक्त्वा चैव महानसे॥४६॥
वैश्वदेवोऽग्न्यगारे स्यात्पाकार्थाग्निश्च लौकिकः।
भूरिपाको भवेद्यत्र श्राद्धादावुत्सवेषु च॥४८॥
कृते वैश्वदेवेथ लौकिको नैव कार्यतः।
होमेनान्तरिते केचिदाहुः सर्वत्र लौकिकम्॥४९॥
न तस्यमञ्जसं तेषामर्पयद्धोमदर्शनात्।
समासं चोल्मुकस्याहुरग्न्यागारे महानसात्॥५०॥
पाकान्ते वैश्वदेवात्प्राक् चैतादुपपद्यते।
आहृते ह्युल्मुके पाकः शामित्रे दृश्यते पशौ॥५१॥
वचनादाहृतिः सा तु लौकिकस्त्वपवर्गतः।
दीपको धूपकश्चैव तापार्थे यश्च नीयते॥५२॥
सर्वे ते लौकिका ज्ञेयास्तावन्मात्रापवर्गतः॥५३॥
पचनाग्नौ पचेदन्नं सूतके मृतकेऽपि वा।
पीवेत्तुषसेद्रात्रौ पुनराधानमर्हति॥५४॥
आरण्योर्दग्धयोर्वापि नष्टयोः क्षीणयोस्तथा।
आहृत्यान्ये समारोप्य पुनस्तत्रैव निर्मथेत्॥५५॥
अरण्योरल्पमप्यङ्गं यावत्तिष्ठति पूर्वयोः।
न तावत्पुनराधानमन्यारण्योर्विधीयते॥५६॥
पूर्वे च योनिपूर्वा चेत् पुनराधानकर्मणि॥५७॥
एकाकिनी यदा पत्नी कदाचिद् ग्राममाव्रजेत्।
होमकालेऽभिसम्प्राप्ता न सा दोषेण युज्यते॥५८॥
अथ तत्रैव निवसेद् ग्रामं गत्वा प्रमादतः।
लौकिकाग्निः स विज्ञेय इत्येषा नैगमी श्रुतिः॥५९॥
भार्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेपि वा।
तत्र स्यात्पुनराधानमन्ये त्वाहुरिहान्यथा॥६०॥

पत्न्याः प्रवासविषये पुनराधीरुदाहृता।
वाक्यैर्मुनिभिःप्रोक्तैरेकभार्यस्य ज्येष्ठा चेत् प्रवसेत्पुनराहतिः।
ज्येष्ठा चेदग्निसंयुक्ता गच्छत्यन्यां यथारुचिः॥६२॥

यजमानेन सहिता यद्वा ता एव केवला।
एकस्यामपि तिष्ठन्त्यामग्निहोत्रसमीपतः॥६३॥

पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे जगुः॥६४॥

यदा सीमामतिक्रम्य रात्रौ तत्रैव वश्यति।
आगृहस्य प्रयाणं तु प्रवासे उच्यते बुधैः॥६५॥

यत्तु नारायणेनोक्तं ग्रामान्वाग्निसमन्वितान्।
गत्त्वा ग्रामान्तरे वापि प्रवासोऽप्ययमीदृशः॥६६॥

ग्रामान्तरे नगर्या वा पत्न्या वान्यत्र वा क्वचित्।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम्॥६७॥

प्रवसेद्धनसम्पत्यै न तीर्थाय कदाचन।
इति कूर्मपुराणोक्तं तथा बोधायनेन॥६८॥

सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि मानवः।
पुराणवचनात्साग्नेः प्रवासोऽस्तीति केचन॥६९॥

न कुर्युरग्न्युपस्थानं प्रवत्स्यन्तोऽपि योषितः।
त्यागं न प्रोषितः कुर्युरश्नन्त्येव सधर्मकम्॥७०॥

आगतोपस्थितिश्चापि स्त्रीणां नेच्छन्ति सूरयः।
सगृहस्य प्रमाणं यत्तत्पत्न्याश्चसमन्वितम्॥७१॥

प्लिष्टश्चेन्न प्रवत्त्यर्थे मनसा सह गच्छति।
अरण्यां रोपयेदग्निं तत्पात्राण्यपि तत्र च॥७२॥

स्वाङ्गेन वा नयेदग्निं कात्यायनमतादपि।
नयेद्वा ब्राह्मणस्त्वन्यो यवेन स न गच्छति॥७३॥

प्रत्यक्षेण नयन्नग्निमुच्छ्वसेच्चेद्विनश्यति।
यदि यातुच्छ्वसं नीत्वा निधायोच्छ्वस्य तं पुनः॥७४॥

हरेदनुच्छ्वसन्नेव वश्यत्रिर्हरणेनलः।
शकटेनापि दूरं वा हरेदेवं यथारुचिः॥७५॥
स्वाङ्गेनैवाद्यषा सम्यापरा सा प्राङयेच्छ्वसन्।
कर्मार्थहरणेग्नीनां नानुच्छासादि चोद्यते॥७६॥
कात्यायनमतात्केचिच्छ्वसन्तोऽप्यतिदूरतः।
प्रत्यक्षेण नयन्नग्नीन् शकटेन विनापि तु॥७७॥
आधानावसरे जाते यद्याधातुरुपद्रवः।
अवृद्धिर्नाम सा प्रोक्ता तत्र स्यात्पुनराहितः॥७८॥
नाशः तेऽग्नौ उद्धरणात् प्राक् मथ्यमानेप्यजन्मनि।
लौकाग्न्यादावनिक्षिप्तेभ्युदयेऽस्तमयेऽपि वा॥७९॥
विनष्टहेतुना तेन जातवेदा विनश्यति।
विहारोत्तरकालं वां नष्टौ पूर्वापरानलौ॥८०॥
शेषं पूर्वोदितं सर्वं तत्राप्यग्निर्विनश्यति।
कालाल्पत्वेत्वनिर्मथ्य लौकाग्न्यादि क्षिपेद्यदि॥८१॥
उदयास्तमयात्पूर्वं कर्कोत्र नाशमिच्छति।
एकयोनित्वपक्षेपि सर्वाग्न्यनुगमेद्यदि॥८२॥
मन्थनारम्भमात्रेण नाशो वृद्धिर्निवारितः।
उभयोर्नाशविज्ञानादूर्ध्वमर्कोऽस्तमेति च॥८३॥
कर्कोग्नि नाशमाचष्टे॥८४॥
उदयास्तमये तत्र नाशमेके न तूभयोः।
अथ चेदुभयो०॥८५॥
पराग्निरेकोजातश्चेत्तावतापि न नश्यति॥८६॥
मन्त्रविना समारुढोरण्योरात्मनि वा यदि।
तत्र ज्वालनशान्तः स्यादसमारूढशान्तिदः॥८७॥
आरूढोऽपि यथाशास्त्रमवरूढो न शास्त्रतः।
पितृमेधे च दीक्षायां तथैवावभृथेषु चा॥८८॥

एतेष्वेवं हरेदग्निं प्रत्यक्षमनसा विना।
तृतीये होमकालेथ सम्प्राप्ते पुनराहित:॥८९॥

यदा तु लौकिकाग्न्यादिर्निधाय हवनं तथा।
हुतेऽपि लौकिकाग्न्यादौ मथ्यमानोप्यनन्तरम्॥९०॥

द्वितीयाद्वा तृतीयाद्वा होमकालात्पुरा यदि।
अग्निर्न जायते तत्र पुनराधेयमाचरेत्॥९१॥

हुतेषु पक्षहोमेषु पक्षत्रयमनन्तरम्।
कर्त्तव्यं पुनराधेयं मथ्यमानो हुताशनः।
पृष्टमात्रोनुगच्छेच्चेत् तत्र तत्र विनाशनम्।
शतशोनुगमे चान्ये पुनर्निर्मथ्य जप्यते॥९२॥

नष्टे मथितमात्रे वा समारोपयनुर्जपेत्।
पुनर्निर्मथ्य जप्तव्यं यजुस्तस्यावरोहणम्॥९३॥

जलेन हेतुना वह्निरूपशान्तो यदा भवेत्।
कर्त्तव्यं पुनराधेयं यज्ञपार्श्वे निरूपितम्॥९४॥

तदेव पुनराधेयमग्नावनुगते सति।
असमाधाय यत्स्वामी सीमामुल्लङ्घ्य गच्छति॥९५॥

शुकरारासभकाकशृगालकुक्कुटमर्कटशूद्राः।
अन्त्यजपातकीभि: कुणपैर्वा सूतिकयापि रजस्वला॥९६॥

रेतोमूत्रपुरीषैर्वा पूयसुश्लेष्मशोणितैः।
दुष्टास्थिमान्समज्जादिभिरन्यैर्वा विजुगुप्सितैः॥९७॥

आरोपितारणिस्पर्शे कृतेग्नौ स्पर्शनोपि वा।
आत्मारूढेषु मज्जेद्वा वदेद्वा पतितादिभिः॥९८॥

अथवा योषितां गच्छेदनृतौ काममोहितः।
वदन्तेषु निमित्तेषु अग्न्याधेयं प्रचक्षते॥९९॥

यद्वा सर्वोपधानेषु पुनस्त्वेति समिन्धनम्।
द्रव्यस्थाप्युपघातेषु द्रव्यशुद्धिं समिन्धने॥१००॥

समिन्धनं पुनस्त्वादित्या रुद्रा इति
समिधस्याप्यग्नेः पुनरिन्धनप्रक्षेपेण प्रदीप्तिकरणम्।
आरोपितारणी उभे एका वा यदि नश्यति
तत्राग्न्याधेयमिच्छति पुनराधेयमेव वा॥१०१॥
नष्टायामरण्यौ वा यदाग्निस्तिष्ठति वेश्मनि।
तावद्धोमादिकं कृत्वा तन्नाशे पुनराहरेत्॥१०२॥

॥इति पुनराधानपुनराधेययोर्निमित्तानि॥

## ॥ अथ चातुर्मास्यप्रयोगः ॥

कर्कभाष्यं पद्मनाभिं देवयाज्ञिकपद्धतीं।
सम्प्रदायात्समालोक्य पदार्थान्दशमेव च॥
आलोक्य शिवभट्टेन चातुर्मास्यस्य पद्धतिम्।
क्रियते ह्युपकारार्थं परं वाजसनेयिनाम्॥

अत्र शाखान्तरोक्तानि सप्त पञ्चाहिकमेकाहिकान्युक्तानि। सप्ताहपक्षे प्रथमेहनि अभ्युदयिकादिवैश्वानरपर्जन्येष्टिः। द्वितीये वैश्वदेवपर्वतृतीये वरुणप्रघासः। चतुर्थे साकमेधस्यानीकवत्यादयस्तिस्त्र इष्टयः पञ्चमे दर्विहोमे क्रीडिन्या महाहविः षष्ठे पितृयज्ञस्त्र्यम्बकानि। सप्तमे शुनासीरीयम्। पाञ्चाहिके प्रथमे वैश्वदेवं करम्भपात्रं च। द्वितीये वरुणप्रघासाः। तृतीये अनीकवतेत्यादि गृहमेधीयातम्। चतुर्थे दर्विहोमादि त्र्यम्बकेष्ट्यन्तम्। पञ्चमे शुनासीरीयपर्व। एकाह्विकपक्षैकदिनसाध्यम् एषु पक्षेषु उदगयन आपूर्यमाणपक्षे अधिकमास गुरुशुक्रमोढ्यादिरहिते काले कृत्तिकादिशाखान्यतरनक्षत्रे चारभ्य तादृशकाले एव समाप्तिः। केचिन्मते कृष्णपक्षेऽपि प्रारम्भः।

तदुक्तं संग्रहे—

ऋत्विक् श्रद्धा स्थलं द्रव्यं यस्य सम्पद्यते यदा।
तदैव कृष्णपक्षेऽपि चातुर्मास्यादि प्रारभेत्॥
पतङ्गोऽयं प्रदीपार्चिर्यथा विशति लालसः।
तथैव कर्ता प्रविशेत्तत्र नो कालचोदना॥
आरम्भे तद्द्विजः कर्म श्रौतस्मार्त तु धर्मवित्।
श्रद्धेव सर्वथा पुंसां निमित्तं समयो नहि॥

विस्तरेणास्मत्कृते चातुर्मास्यकृतेऽवगन्तव्यम्। अत्र सुगमः प्रयोगः।

**'अथ वितानकरणम्'** एतदर्थें आपदेवकृतकारिका लिख्यते।

भूपाङ्गुलव्यासदलेन वृत्तमध्यस्थितर्काङ्गुलशङ्कुभागम्।
विंशत्यपैत्र्या च परा च पूर्वा ताभ्यां तिमिस्त: खलु याम्यसौम्ये।।

देवागारे पुण्यगङ्गादितीरे स्वीये गृहे वा विशुद्धप्रदेशे।
आदौ कृत्वा सद्दिशां साधनं हि पश्चाच्चातुर्मास्यकुण्डानि कुर्यात्।।

अर्थप्रमाणमिति वाक्यवशेन नर्येमानं हवि: श्रपणयोग्यतयाधिकं च।
स्वीकृत्य तेन च विधाय तमेकमेव शंस्यादियत्प्रकृतिजं च विधाय आदौ।।

शंस्यात्पुरस्तादिह सञ्चर: स्यात्प्रस्थातुरेतत्पुरत: स्मृतोत्तरा।
वेदिश्च तस्या अपि दक्षिनेत्रप्रस्थातृवेदि प्रकृश्च सोदिता।।

प्रादेशमात्रान्तरिता नितम्बे पृथोत्तरा वोत्तरवेदित: स्यात्।
स सङ्ग्रहा साहवनीयकुण्डोऽथो त्र्यम्बकेष्ट्यै त्वनयैव तुल्या।।

उदङ्मुखी चोत्तरदिक् प्रयाता वेदि: परोक्ताथ च पैतृकेष्ट्यै।
वेदिस्तदा दक्षिणागा तदा स्यात्स्माथर्वकुण्डे सम सङ्ग्रहा स्यात्।।

यातर्यव मध्योत्तरवेदिशंस्य मध्यान्तरेत्करस्यादुभयो: स एक:।
अथोत्करादुत्तरतश्च सञ्चरश्चा ह्यालभस्यादपि चान्तरे स्मृतम्।।

कृत्वेदमेवं सकलं निजस्थले वेदिं प्रकुर्यान्निजभाग उत्तरम्।
अङ्का ९ रत्नी: सीतपाशाच्च रज्जु: सम्यक् कुर्याऽरत्नी षट्के सचिह्ना।।

तस्माच्चाग्रे त्रिष्वरन्त्यार्धकैष्मायाम: कर्षश्रोणिरंस क्रमेण।
तर्कारत्न्या यामजातस्थशङ्को प्रत्यक् प्राञ्चो: पूर्ववन्मुच्चपाशे।।

कर्षे कृष्यो छ्रोणिरेवं द्वितीया पाशव्यत्यासेन चासौ विधेयौ।
श्रोण्यो: चिह्नादंसगस्तत्र युग्मं देयं भूयादुत्तरावेदिरेवम्।।

अस्या अंसान्तश्चतुष्कोणरूपा शम्यामात्री चोद्धिता वेदिका स्यात्।
अस्या मूर्धं वेदकोणा च नाभिं कुर्यात्प्रादेशप्रमाद्यङ्गुलोच्चम्।।

एवं नानावेद य: पञ्च चात्रस्तासां खातं त्र्यङ्गुलं संविधेयम्।
आपदेव: स्याज्जनस्थानवासी सुज्ञो देवज्ञश्च धर्मोधिकारी।
व्यक्तिं चातुर्मास्य कुण्डादिकानां श्रौतात्सूत्रकारिकाभिश्चकार।।

।।इति कुण्डकरणानि।।

**'इष्टिकाप्रयोगः'** तत्रादौ शुभे दिने देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं करिष्यमाण चातुर्मास्याङ्गभूतं वितानकरणं करिष्ये। तदङ्गभूतं गणपति॰ पृथ्वीरज्जुः शङ्क्वादीनां पूजनं करिष्ये। पूर्वोक्तं वितानं साधयित्वा। ततः पूर्वोक्तशुभे दिने प्रातर्होमं कृत्वा, प्राचीनप्रवणे विताने गार्हपत्यादग्नयो नीत्वा पञ्चभूसंस्कारान्कृत्वा, गार्हपत्येऽग्निस्थापनम्। यजमानो गार्हपत्यस्य पश्चात्प्रागग्रान् दर्भानास्तीर्य प्राङ्मुख उपविश्य दर्भहस्तया पत्न्यान्वारभ्यमाणो प्राणानायम्य देशकालौ॰ तत्सत्परमेश्वरप्रीत्यर्थं अक्षय्यसुकृतकाम एष्टिकपञ्चाहिकचातुर्मास्यैर्यक्ष्ये तदङ्गतया विहितं स्वस्तिवाचनपूर्वकं मातृकापूजनं वसोर्द्धारां नान्दीश्राद्धं च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं च करिष्ये। तत्कृत्वा ऋत्विजो वृणुयात्। ब्रह्मादय ऋत्विजः प्राङ्मुख उदङ्मुखो वा उपविश्य, तत्र यजमानो दक्षिणं जान्वालभ्य गोत्रप्रवरान्वितोऽमुकशर्मा यजमानोऽहं गोत्रप्रवरान्वितममुकशर्माणं एष्टिकपञ्चाहिकचातुर्मास्याख्ये कर्मणि ब्रह्मत्वेन त्वामहं वृणे। वृतोस्मीति प्रतिवचनम्। एवं होताध्वर्युप्रतिप्रस्थाता अग्नीत्। ततस्तान् मधुपर्केणार्चयेत्।

**'वैश्वानरपर्जन्येष्टिः'**—पुनर्देशकालौ सङ्कीर्त्य चातुर्मास्यारम्भनिमित्तं वैश्वानरपर्जन्येष्ट्याहं यक्ष्ये। सङ्कल्पोद्धरणम्। अग्न्यन्वाधानादिर्ब्राह्मणतर्पणान्ते विशेषः षट्समिधो गृहीत्वाग्निं वैश्वानरं द्वादशकपालेन पुरोडाशेन पर्जन्यं च चरुणा सद्योहं यक्ष्ये। तत्र पञ्चदशो वज्रः। व्रीहिभिर्यागः। अन्वाहार्यो दक्षिणा। ममाग्ने पक्षः उत्तमे काले व्रतोपायनम्। केचन वैकल्पिकपदार्थास्ते न मयावधारिताः। षडासनादि ब्रह्मवरणम्। वैश्वानरपर्जन्येष्ट्यर्थं ब्रह्माणं त्वा वृणीमहे। तत्र मे त्वं व्रह्मा भव। भवामीति प्रतिवचनम्। पात्रासादने कपालानि द्वादश पुरोडाशपात्र्येका। चरुपात्रमेक्षणयोरुपकल्पनम्। ग्रहणे अग्नये वैश्वानराय जुष्टं गृ॰। पर्जन्याय जुष्टं॰ प्रोक्षणे त्वाधिकः। अग्नये वैश्वानराय त्वा जुष्टं॰ प्रोक्षणे पर्जन्याय त्वा जुष्टं॰ कणान्ते च॰ इदमग्नये वैश्वानरस्य। इदं पर्जन्यस्य। चरो संयवन प्रथनन्द्भिरभिमर्षणं पात्र्यङ्गुलिप्रक्षालनं पिष्टलेपानामभावः सर्वत्र। प्राणदाने। अग्निं वैश्वानरमा३वह। पर्जन्यमा३वह। उत्तमे प्रयाजे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा वैश्वानरं स्वाहा पर्जन्यं स्वाहा देवा आज्यपा॰ इदमग्नये सोमायाग्नये वैश्वानराय पर्जन्याय देवेभ्य॰ वार्त्रघ्नावाज्यभागौ। अग्नये जु॰ अग्निर्वृत्रा॰ हुतो सोमायानु। त्वं सोमोऽसि॰ क्रतोम्। **अथ प्रधानयागः**। अग्नये वैश्वनरायानु॰ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्। अजस्रं घर्ममीमहोम् ओ॰। अस्तु॰। अग्निं वैश्वानरं यज। ये अग्निवैश्वानरं वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः। इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण वौ॰ इदमग्नये वैश्वानराय न मम। पर्जन्यायानु। पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे।

सनो यवसमिच्छतो३म् ये य॰ पर्जन्यं प्रवातां वान्ति प्रतयन्ति विद्युत्। उदोषधीर्ज्जिहते पिन्वते स्वः सुरा॰। इदं पर्जन्याय अग्नये स्विष्ट॰ प्रे॰ ये यजामहे। अत्र चतुर्द्धाकरणम्। व्यूहने। अग्निर्वैश्वानरस्य पर्जन्य॰ सूक्तवाके अग्निरिदं॰ इत्यादि शेषं कर्मापवर्गान्तं प्रकृतिवत्। इति।

**'द्वितीयादि प्रयोगे'**—पार्जन्येष्टिं विना शुक्लपक्षे माघादिपञ्चमासे देवनक्षत्रे प्रारम्भः कार्यः। देशकालौ॰ सङ्कीर्त्य ततः स्वगृहे निर्णेजनान्तं निर्वृत्य श्रीपरमेश्वर-प्रीत्यर्थं चातुर्मास्ययागाङ्गभूतं समारोपाख्यकर्माहं करिष्ये। यथाविधिना समारोपं कृत्वा अरणीं गृहीत्वा पत्न्यन्वारब्धं सर्वाणि यज्ञपात्राणि गृहीत्वा प्राचीनप्रवणे गत्वा वेदघोषेण तत्र निर्मथ्य प्राकृतवेद्यां गार्हपत्ये पञ्चभूसंस्कारपूर्वकाग्निं प्रतिष्ठाप्य। अक्षय्यसुकृतकाम एष्टिक पञ्चाहिक चातुर्मास्यैरहं यक्ष्ये। तदङ्गभूतं गणपतिपूजनपूर्वकं पुण्याहवाचनं ऋत्विग्वरणं च करिष्ये। तत ऋत्विग्भिः सह सपत्नीको यजमानः गार्हपत्यसमीपे गत्वा अध्वर्युर्गार्हपत्यादग्नीन् खर्परे सर्वानुद्धृत्य यजमानः सपत्नीकोऽन्वारब्धः कृत्वा। अरणीसहितसर्वाणि यज्ञपात्राणि गृहीत्वा प्राचीनप्रवणे गार्हपत्यं तत्र पञ्चभूसंस्कारान् कृत्वाग्निस्थापनम्। ततो यजमानः। पुनर्देशकालौ॰। तत्सत्परमेश्वरप्रीत्यर्थं वैश्वदेवपर्वण्यहं यक्ष्ये। उद्धरणं ततो यजमानः षट् समिधो गृहीत्वा अग्निमष्टकपालेन पु॰। सोमं उपा॰ चरुणा, सवितारमष्टकपालेन पु॰, सरस्वतीं चरुणा, पूषणं पैष्टेन चरुणा, मरुतः॰ स्वतवसः सप्तकपालेन पु॰ विश्वान्देवान् उपा॰ पयस्यया, द्यावापृथिवी एककपालेन पु॰, सद्योहं यक्ष्ये। सप्तदशो वज्रः व्रीहिपयोभिर्यवैर्वायागः प्रथमजा गौर्दक्षिणा। ममाग्ने पक्षः, उत्तमे काले व्रतोपायनं, केचन॰ अन्वाधानोत्तरं शाखाछेदनम्। ॐ इषे त्वा छिनद्मि। ॐ ऊर्ज्जे त्वा सन्नयामि अग्रतः छित्वा शाखां परिवास्य वेषोसीति मूलादुपवेषं करोति। ॐ वसोः पवित्रमसि। मातृभिर्वत्सान्त्संसृज्य वत्सं स्वशाखयोपस्पृशति। ॐ वायवस्थेति प्रतिवत्सं स्पर्शनम्। ॐ देवो वः सविता॰ गार्हपत्याहवनीयान्यतमस्य पुरस्तात् शाखां गूहयति। ॐ यजमानस्य पशून्पाहि षडासनादि ब्रह्मवरणम्। वैश्वदेवपर्वणाहं यक्ष्ये। तत्र भूपतेत्यादि। पात्रासादने चतुर्विंशतिकपालानि शाखोपवेश-कुशमुष्ट्यानन्तरदोहनचतुष्टयम्, रज्जु, नियुञ्जनम्, दोहनपात्रं शाखापवित्रम्। उखा चेति वेदितृणादि पुरोडाशपात्र्यश्चतस्रः। वाजिनं भाण्डम्। होतृषदनादि उपकल्पनीयानि त्रेधा बर्हिः कुशपुष्पप्रस्तरः पृथक् बध्वा पुरस्तात्प्रस्तरान् त्रीनपि दर्भमूलकान् महता एकेन सूत्रसंहनेनैकत्र बध्नीयात्। षडवत्तं च चरुपात्रत्रयं मेक्षणानि दधिमन्थनचतुष्टयम् समित् शकलम् कुशतरुणे द्वे अधरारणी उत्तरारणीश्च गार्हपत्यस्य पश्चात् स्थापित-पात्र्यामोधकरणादिग्रहणं। अग्नये,

जुष्टं०। सोमाय जु० सवित्रे जु० सरस्वत्यै पूष्णे, मरुद्भ्यः स्वतवद्भ्यो जु० द्यावापृथिवीभ्यां० प्रोक्षणेत्वधिकः। अग्नये त्वा जुष्टं प्रोक्षामि सोमाय० सवित्रे० सरस्वत्यै० पूष्णे० मरुद्भयः स्वतवद्भ्यस्त्वा० द्यावापृथिवीभ्यान्त्वा० पात्राणि दैव्यायेति। कणान्ते चैकः। इदं सरस्वत्या इतरेषां मेषणे। तपसा तप्यध्वमित्यत्र एककपाले स्वेति विशेषः। प्रोहणान्ते परिक्षलनान्तोदोहः। उपस्पृष्ट्वा प्रब्रूयात्। अग्नी उपस्पृष्ट्वा द्यौरसीति स्थाल्यादानम् ॐ द्यौरसि पृथिव्यसि। मातरिश्वन इत्यधिश्रयति। वाग्यमं न उपत्तिपवित्रकरणम्। वसोः पवित्रमित्यनेन स्थाल्युपरि उद्गग्रशाखापवित्रं निधाय वाग्यमनं गां धुक्ष्व दोग्धा दोहयति। यजमानस्य स्थाल्यान्वारम्भः। दोग्धा पवित्रोपरि आसिच्यमाने पयसि। अध्वर्युः ॐ देवस्त्वा० इति जपः। गङ्गां इति तस्य प्रत्युत्तरम्। सा विश्वायुरित्यध्वर्युः गां धुक्ष्व। देवस्त्वा० कामधुक्षः। यमुनाम्। सा विश्वकर्मा गां धुक्ष्व देवस्त्वा० सरस्वतीं सा विश्वधाया मौनं विसृज्यान्यास्तिस्रो गाः धुक्ष्वेति प्रैषेण दोहयति। पय आसिंच्य अनन्वारम्भः अध्वर्योर्जप एव न प्रश्नोत्तरो अध्वर्योरेव परिक्षालनासेकः। सम्पृच्यध्वमिति ईक्षते ईक्षणान्ते पौष्ण विवेकः। पात्र्यां सपवित्रायां पिष्टसंय्यवनान्ते विभज्यालम्भः। इदमग्ने० इदं सवितुः इदं मरुतां स्वतवसां इदं द्यावापृथिव्योः। पयसा वर्जं पर्यग्निकरणम्। पूर्वोक्तकल्पितपयसि दधिप्रक्षेपः सम्मार्जने पुरोडाशपात्र्यानन्तरं वाजिनभाण्डसम्मार्गः इडापात्री . च तत्रस्थामिभ्रधारणमदत्त्वा वाजिननिषेकः। प्राणदाने अग्निं गच्छ सोमं सवितारं सरस्वतीं पूषणं मरुतः वृषणौ स्थ इति शकलोपरि कुशतरुणद्वयं प्रागग्रं निधाय। स्वतवसो० विश्वान् देवान्। द्यावापृथिवी० वाजिनो० प्राणदानान्तरमेककपालपुरोडाशस्याज्येनान्ताच्छादनं वेद्यां हविषा साद्यवाजिनोत्करदेशे। ध्रुवाऽअसदन्नित्यालम्भनं सर्वेषां वाजिनस्य च। आत्मालम्भः पाहि मां यज्ञन्यम् उदकोपस्पर्शः।

**'अथाग्निमन्थनम्'**—अग्नेर्जनित्रमसीति शकलमादाय तूष्णीं वेदिमध्ये उदयं निदधाति। ॐ उर्वश्यसीत्यधरारणी तयोः आयुरसीत्युत्तरां याज्यस्था संस्पृश्य पुरूरवा असीत्यभिनिधानं तथा अग्नये मथ्यमानायानुब्रूहि। मन्थति गायत्रेणेति प्रतिमन्त्रम्। ॐ गायत्रेण त्वा छन्दसा मन्थामि ॐ त्रैष्टुभेन त्वा छन्द० ॐ जागतेन त्वा० प्रदक्षिणं त्रिः होता आसन् प्रैषुहवींष्युत्तरां वेदिश्रोणिमपरेण प्राङ् तिष्ठन्। हिङ्कृत्वा हिङ्कृत्य वाकल्पामधुरवाचामित्यर्थः। एषावान्वा त्रयोदशाग्निमन्थनीयान् वाह। ॐ हिं हिं हिं भूर्भुवः स्वरोम्। अभि त्वा देव सवितरीशानं वार्याणां' सदा वंत्रागमीमहो त्रिः। मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरिमभो३म्। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतो३म्। तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरा३म्। तमु

त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्। पञ्चम्या अर्द्धर्च उपरमेत्। यावदग्निर्न जायते तदा राक्षोघ्नी जपेत्। अग्निरक्षां सिसेधति शुक्रशोचिरमर्त्यः। शुचिपावक ईड्यो३म्। यावदग्निर्जायते तावदेव पुनः पुनः पठेत्। अग्नौ जाते अध्वर्युः अग्नये यानायानुब्रूहि। धनञ्जयं रणे रणो३मुत ब्रुवंतु जन्तव उदग्नि वृंत्रहाजनि। धनं जयो रणे रणां३॥५॥ मायँ हस्तेन खादिनं शिशुं जातन्न बिभ्रति। सप्तम्या अर्धर्चं उपरमेत्। अध्वर्योः अरण्योरादानम्। आहवनीयेग्नौ जातस्याग्नेः प्रक्षेपं करिष्यन्। अग्नये प्रहीयमाणायानुब्रूहि। विशामग्निं स्वधरों३प्रदेवं देववीतये भरताय सुवित्तमम्। आश्वेयोनौ निषिदतो३माजातं जातवेदसि प्रियं शिशीतातिथिम्। स्योन आगृह पतो३मग्निनाग्निः समिध्यते कविर्गृहपति०। यज्ञेन यज्ञमयजन्त। अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण। इदमग्नये०। ततो व्रतग्रहणम्। ॐ होतरेहीति प्रैषः। प्र वो वाजा इत्यादि०। आवाहन ॐ अग्निमग्न आ३वह। ॐ सोममावह। ॐ अग्निमावह। सोममावह। ॐ सवितारमा० ॐ सरस्वतीमा० ॐ पूषाणमा० ॐ मरुतः स्वतवस आवह। ॐ विश्वान् देवान् आवह। ॐ द्यावापृथिवी उच्चैः आवह। ॐ देवान् आज्यपान् आवह इत्यादि। प्रयाजकालेन प्रयाजाः प्राकृतश्चत्वारः। चतुर्थसप्तमयोः समानयनं ॐ श्रावय अस्तु० यज० ये यजामहे। दुरो अग्न आज्यस्य व्यन्तू३ वौ०। इदं दुर्भ्यो न मम। पञ्च मम न तस्य०। अन्नादो पञ्चमातिरिक्ते प्रयाजे। पञ्चमप्रयाजवदनुमन्त्रणम्। ओ श्रा० उषासानक्ता अग्न आज्यस्य वीतां वौ० इदमुषासानक्ताभ्याम्। सप्तमे समानयनम्। ओं दैव्या होतारो अग्न आज्यस्य व्यन्तू वौ०। इदं दैवाभ्यो होतृभ्यां० ओं तिस्रो देवी अग्न आज्यस्य व्यन्तू वौ० इदं तिसृभ्यो ओं स्वाहाग्निं स्वाहा सोमं स्वाहा मरुतः स्वतवसः स्वाहा। विश्वान् देवान् स्वाहा। द्यावापृथिवी स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तू वौ०। इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वते पूष्णे मरुद्भ्यः स्वतवद्भ्यः विश्वेभ्यो देवेभ्यो द्यावा पृथिवीभ्यां देवेभ्यः प्रयाजशेषेण ध्रुवादिवाजिनां तमभिघारणं वार्त्रघ्नावाज्यभागौ। अग्नये० अग्निर्वृ० सोमाय त्वं सोमासि०। **प्रधानयागः**। अग्नये० अग्निर्मूर्द्धा० अग्निभुवो० सोमायानुब्रू० वृषासो मधुमा असि वृषोदेव वृषवृतः। वृषा धर्माणि दधिषों। सोमं यज। सोमं याते० इदं सोमाय। सवित्रे अनुब्रूहि आविश्वदेवं सप्तविंसूक्तैरध्वा वा वृणीमहे। सप्तसंवसवितारम्। ॐ सवितारं यज ये० सवितारं वा ममाद्य यस्य प्रया० त्वनावौ० इदं सवित्रे० सरस्वत्या अ० पावका नः वसों० सरस्वतीं यज०। ॐ सरस्वती पाविरवि कन्या० इदं सरस्वत्यै० पूष्णेनु० पूषन्तव स्मसोम्। पूषाणं यज० पूषणं शुक्रं० इदं पूष्णे० मरुद्भ्यः स्वतवद्भ्यो० मरुतः स्वतवसो यज०। मरुतः स्वतवसः प्रचित्र० इदं

मरुद्भ्यः॰ स्वतवद्भ्यो॰ ॐ विश्वेभ्योनु॰ विश्वे देवास आगत॰ षीदतोम्। विश्वान् देवान् यज॰ विश्वान् देवान् विश्वे देवाः शृणुतेमं इमं हविभ्यः द्या वौ॰। इदं विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामनु॰ मही द्यौः पृथिवी भिः ॐ द्यावापृथिवी यज॰ द्यावापृथिवी चक्षुषः पिताद्येतां वौ॰ इदं द्यावापृथिवीभ्याम्॰। अग्नये स्विष्टकृते तु॰। प्रेद्धो॰ वाजो॰। अग्निं स्विष्टकृतं यज ये॰ अग्निं स्विष्टकृतमयाडग्निरग्नेप्रि॰ सोमस्य प्रि॰ मरुतां स्वतवसां प्रि॰ विश्वेषां देवानां प्रि॰ द्यावापृथिव्योः प्रि॰ देवाना॰ रिमों अग्नेषित॰ व्यन्तू॰ इदमग्नये स्विष्टकृते। सञ्चरमभ्युक्ष्यादि। सप्तकपालस्य पयश्चतुर्धाकरणभागानामभावः। शाखापवित्रेण सह मार्जनम्। शाखापवित्रयोः पुनः शाखायामेव स्थापनम्। प्रस्तरे पवित्रप्रतिपत्तेः दक्षिणालम्भे ऊर्गसीत्यस्थाने प्रथमजो गौरसीति ऊहः। अस्यैष्टिकवैश्वदेवपर्वणः समृद्ध्यर्थं प्रथमाङ्गं दक्षिणां ब्रह्मादयो ऋत्विजः यथाविभागो॰। अथ नवानुयाजा॰ चतुर्थसप्तमयोः समानयनं प्रथमस्य पूर्वार्द्धहोमः। द्वितीयप्रभृतीतानराशंसान्तानां च मध्ये होता। अन्यस्य पश्चाद्धोमः। द्वितीयानुयाजप्रभृति यज यजेति प्रैषः। प्रयाजेषु च। ओं॰ देवान् यज ये॰ देवं बर्हिर्वसुवने वसुधेयस्य व्यन्तू तां वौ॰। ॐ देवीर्द्वारो वसुव॰। इदं देवीर्द्वारिभ्यो॰। देवी उषासानक्ता वसुवने वसुधेयस्य वीतां वौ॰। इदं उषासानक्ताभ्याम्। चतुर्थे समानयनम्। देवी जोष्ट्री वसुवने वसुधेयस्य वीतां वौ॰। इदं देवीभ्यां जोष्ट्रीभ्यां॰ देवी ऊर्ज्जाहुती वसुवने वसुधेयस्य वीतां वौ॰ इदं देवीभ्यामूर्जाहुतीभ्याम्। देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां वौ॰ देवाभ्यां दैवाभ्यां होतृभ्याम्। सप्तमे समानयनम्। देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तू॰ इदं देवीभ्य॰ तिसृभ्यस्तिसृभ्यो देवीभ्यो॰। देवो नराशंसो वसुवने वसुधेयस्य वेतू॰। इदं देवाय नराशंसाय॰। देवो अग्निः स्विष्ट॰ व्रीही वौ॰ इदं देवायाग्नये स्विष्टकृते॰ ततो धारानुयाजः। देवेभ्यः स्वाहा इदं देवेभ्यो॰ प्रभृतौ व्यूहति। अग्नेः सोमस्य सवितुः सरस्वत्याः। पूष्णो मरुतां स्वतवसां विश्वेषां देवानां द्यावापृथिव्योरुज्जिति॰। अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो विश्वेदेवा द्यावापृथिवी तमपनुदे॰ सूक्तवाके। अग्निरि॰ कृत। सोम इदं कृत। अग्निरिदं षताकृत सविता इदं हविः अजुषतं वीतं महोज्याय अकृत सरस्वतीदं कृत पूषेदंषता कृत मरुतः स्वतवस इदं ह॰ षन्तावौ वृधन्तः क्रतविश्वेदेवो। इदं हविः अजुषतां वीवृधन्त। महोज्यायः कृताम्। देवा आज्यपा॰ पाता॰ धन्ताः क्रन्त। अग्निहोत्रेणेत्यादि। सह शाखा प्रस्तरानुप्रहरणम्। प्राश्यावृणं। चक्षुष्पा ३० उदकोपस्पर्शः। **अथ वाजिनयागः**। जुह्वानुपस्तीर्य वाजिनग्रहणम् अवसिञ्चनों बर्हिषि प्रत्युपस्तरणम्। वाजिभ्योनुब्रूहि शन्नो भवतु॰ मीवों॰ अनतिक्रम्याश्रावयति। ऊर्ध्वजानुरासीनो नवानामवषट् करोति।

वाजेवाजेवत॰ नै वौ॰ अग्निः पूर्वार्द्धे होमः इदं वाजिभ्यो॰ अत्र तिर्यग्जानुः वाजिनस्याग्नेव्रीही वौ॰ इदमग्नये स्विष्टकृते॰। दिग्भ्यावाराणं उत्तरां उपविश्य ॐ दिशः स्वाहा पूर्वे इदं दिग्भ्यो॰ दक्षिणे प्रदिशः स्वाहा इदं प्रदिग्भ्यो॰ पश्चिमे आदिशः स्वाहा इदं आदिग्भ्यो॰ उत्तरे विदिशः स्वाहा इदं विदिग्भ्यो॰ मध्ये उद्दिशः स्वाहा इदमुद्दिग्भ्यो॰ बहिर्गत्वा वाजिनशेषं अञ्जलिना प्रतिगृह्य शेषस्योपहूय भक्षणम्। होताध्वर्युर्ब्रह्माग्नीध्रयजमानः क्रमेण। प्रथमं होता ब्रूयात्। अध्वर्युरुपह्वयस्व। उपहूतः। ब्रह्मन्नुपह्वयस्व अग्नदुपह्वय॰ एवं सर्वे। ऋतूनां त्वा वाजिनं भक्षंयामि। ततः संवदस्वेत्यादि। परिधिः सहोपवेषहोमः। अग्नीदुपवेशस्तु जुह्वामुपरि निधाय होतव्यः। जुहोमि त्वा सुभगा सौभगाय पुरुहूतं पुरुहूतः श्रवस्यं स्वाहा इदं जुह्वे। पत्नीसंयाजे सोमाय आप्यायस्वे पुरोनुवाक्या। ये सोमं त्व सोमक्रतुभिः सुकृतुभूस्त्वं दक्षैः सुदक्षो विश्ववेदाः। त्वं वृवावृषत्वेभिर्महित्वा द्युम्न्यभवो नृचक्षा वौ॰ इदं सोमा॰ त्वष्टेनुब्रूहीत्यादि। त्रीणि समिष्टयजूंषि जुहोति। देवा गातु॰ ते धाः। इदं वाताय यज्ञ यज्ञं॰ गच्छ स्वाहा इदं यज्ञाय॰। एष ते यज्ञो यज्ञपते॰ स्व स्वाहा इदं यज्ञाय यज्ञपतये॰। बर्हिहोमादि कर्मापवर्गान्तं समानम्। अस्य ऐष्टिकवैश्वदेवपर्वणः समृद्ध्यर्थं यथाकालेन यथासम्पन्नेन शतं ब्राह्मणान् भोजयिष्ये। **इति वैश्वदेवपर्वः समाप्तः।**

## ।। अथ वरुणप्रघासाः ।।

तत्र पूर्वेद्युः कर्मपात्रकरणम्। देशकालौ॰ करिष्यमाणवरुणप्रघासपर्वणाङ्गभूतं करम्भपात्राणि करिष्ये। तत्र सर्वे तूष्णीं **दक्षिणाग्न्युद्धरणं** चतुरासनम्। ब्रह्म-वरणम्। तस्यैव दक्षिण उपवेशनम्। तद्दक्षिणतस्तूष्णीं प्रणीताप्रणयनम्। दक्षिण्यग्न्युत्तरतो निधानम्। (दक्षिणाग्नेरेवोत्तरतः पात्रासादनम्)। शूर्पाग्निहोत्रहवणी स्फ्यः खर्परं (शम्या) कृष्णाजिनं उलूखलमूसलं दृषदुपलं पात्री पवित्रच्छेदनानि पवित्रे उपसर्जनीपात्रं यवौषधम्। गार्हपत्यस्य पश्चात् स्फ्योपहितपात्र्यामौषधकरणं शूर्पाग्निहोत्रहवण्यादानं तयोः प्रतपनम् उदकोपस्पर्शः औषधं प्रतिगमनम्। पात्री विलालम्भः हविरावेक्षणं अपद्रव्यनिरसनं उद॰ हविरालम्भनं यजमानप्रजा-सङ्ख्यैकाधिकचतुर्मुष्टिग्रहणम्। एकप्रजद्विप्रजाप्रजानां चत्वारि, शेषाभिमर्शनम्। प्राङ् ईक्षणं उत्थानं दक्षिणाग्निं प्रतिगमनं तस्यैव पश्चाद्धविरासादनं पवित्रकरणं हविर्ग्रहण्यां प्रणीतानामपः करणं उत्पवनं सव्ये कृत्वोदिङ्गनं हविः प्रोक्षणं वज्रप्रोक्षणं तं गृहीत्वा पात्राणां प्रोक्षणं प्रोक्षणी—निःशेषकरणम्। पवित्रयोः प्रणीतासु निधानं कृष्णजिनादानम् अवधूननं प्रत्यग्ग्रीवमास्तरणं सव्याशून्ये उलूखलनिधानं हविरावापः वाग्विसर्गः मुसलग्रहणं मुसलयोजनं कुक्कुटाहननवर्जः

कण्डनं शूर्पादानं हविरुत्पवनं निष्पवनं विवेकीकरणं तुषविमोकः, दक्षिणाग्नौ खर्पराधिश्रयणं खर्परोपर्यङ्गारकरणं नाङ्गारैरभ्यूहनं अधस्तात्तापनम् उपसर्जन्यधिश्रयणं दक्षिणाग्नौ यवकुलिकखर्परेधिश्रयणं गार्हपत्यपर्यग्निकरणम्। पुनस्तत्र निधानम्। अधस्तात्तापनम्। धानानामुद्वासनम्। पात्र्यामोप्यभिमन्त्रणं त्रिःफलीकरणं कणानां निधानं पुनः कृष्णाजिनादानम्। अवधूननम् उदको० प्रत्यग्ग्रीवमास्तरणं सव्याशून्ये दृषन्निधानं पश्चात् शम्यामुपोहनं उपलनिधानं यवकुलिकानोप्य पेषणं प्रोहणं ईक्षणम् सपवित्रपात्र्यां सक्तून्वाय० उपसर्जनीभिः सेचनं पिष्टसंयवनं चतुर्धा विभज्य करम्भपात्राणां करणं दीपवत् निर्देशः। सपवित्रपिष्टलेपपात्र्यङ्गुलीप्रक्षालनकणानां स्थापनम्। प्रणीताविमोकः। मन्त्रवर्जमेते पदार्था जुहोति धर्मत्वात्। पुनः गृहान्तरेग्रयोनीत्वात्स्थापनम्। गृहान्तरशब्देन प्राकृत्यै वेद्यां गार्हपत्ये स्थापनं तत्राग्निहोत्रं हुत्वा। **इति करम्भपात्रकरणम्।** प्रथमदिवसः समाप्तः।

**'द्वितीयं, पर्व'**—प्रातर्होमानन्तरं यजमानपत्नयोर्वैश्वदेविकानां वाससां परिधानम्। देशकालौ० तत्सत्परमेश्वरमीत्यर्थं समारोपाख्यकर्माहं करिष्ये। अयं ते योनिरिति गार्हपत्यसमारोप० सकृन्मन्त्रं द्विस्तूष्णीं उदवसानं स्थाल्यान्तर-गमनमित्यर्थः। प्राचीनप्रवणे मथित्वा गार्हपत्येग्निस्थापनम्। गार्हपत्यस्य पश्चादुपविश्य प्राणानायम्य देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं ऐष्टिकपश्चादिकपक्षेन वरुणप्रघासाख्येन पर्वणाहं यक्ष्ये। गार्हपत्ये षडासनं गार्हपत्योत्तरतो ब्रह्मवरणं ॐ भूपते० गार्हपत्याद्दक्षिणत उपवेशनं तदुत्तरतः प्रणीताप्रणयनं तत्रैव निधानम्। उत्तरवेद्यर्थं पञ्चकासाधनमुभयोः। अग्निहोत्रहवणीर्वज्रः पवित्रच्छेदनानि पवित्रे। अन्तर्धानं तृणं च। रज्जुः शङ्कुशम्या अभ्रिः पुरीषाहरणं प्रोक्षणी सिकताः आच्छादनानामुकल्पनम्। प्रतिप्रस्थातुश्च रज्जुः शङ्कोरुपकल्पनम् उभयोः पवित्रकरणं कुशो सप्ताहविः देवी० तासां प्रोक्षणं दैव्यायेति वज्रप्रोक्षणं तृणप्रोक्षणं गार्हपत्यप्रणीतानामन्तरं प्रोक्षणीनिधानमुभयोः। दक्षिणावेदि प्राकृतिः आहवनीयपुरस्तात्प्रक्रमं त्रयमधिकं परित्यज्य पुरस्तादुत्तरे वेदिः कार्या। वेदिमानमुपर्योः चतुरत्नीर्वा पश्चात् सप्तप्राची षड्वा त्रयः पुरस्तात्। तस्साधनार्थं परिशिष्टसूत्रं नवशयापाशाभ्यामर्द्धतृतीयोर्लक्षणे द्रिषये पुरस्तात्।

पूर्वस्मात्त्रिशयेद्धं वषट् सुपात्रां प्रतीच्या उदीच्या परस्मादर्ध तृतीये गृहीत्वा द्वयोः शङ्कुं निहन्पातु एवमेवोत्तरतः। अथवा मानान्तरं— .

द्विहस्ते लक्षणं कुर्यात् षड्ढस्ते मध्यमः शिरः।
पार्श्वहस्ते भवेच्छङ्कु वेदि स्याद्रणपर्यासिका।

नवारत्निमिता रज्जु लक्षिता षट्स्वतः परम्।
अर्द्धे अर्द्धत्रिषु पाशस्य षट् प्राची पल ईरितः।।।

रथमानमपरिमितं वा अग्निमभितोऽसौ वेदिं परिसमुह्य वितृतीयेग्निरुत्तरतः उत्करं करोति। उभयोः संस्कारः। प्रतिप्रस्थातुश्चतर्वेदे पश्चात्पुरीषं प्रक्षेपार्थं गमनम्। देवस्यत्वेति स्फ्यमादाय सतृणमुभयोः तूष्णीं चतुर्थं सतृणं ब्रह्मन् पूर्वौ परिग्रहौ परिगृहीष्यामः। ॐ बृहस्पती गृहीतं वेदी सुगावो देवा सदनानि सत्वनयोः बर्हिः प्रथेतां साध्वं तर्हि पृथिव्यौ देव्यौस्ता वर्द्धयन्तां युवां नाकस्य पृष्ठे यजमानोस्तु। सप्त० धत्तं। ॐ परिगृहीतम्। दक्षिणतः पश्चादुत्तरतः स्फ्येन गायत्रेणेति प्रतिमन्त्रं ॐ गाय० हत्वाग्नील्लेखा सम्मृशति। सम्मर्शतां तेध्वर्योरेव शम्यामादाय चात्वालमानं अध्वर्युरुत्तरवेदिं पूर्वार्द्ध उपकल्पित शङ्कुं निधाय उत्कर पूर्वेणासञ्चरमुक्त्वा पश्चात्शम्यामुदीचीं निधाय ॐ वित्तायनीमेसि। दक्षिणतः प्राची निधाय ॐ अवतान्मानाथितात्। उत्तरतः प्राची निधाय ॐ अवतान्माव्यथितात्। विदेदग्निर्नभो नामाग्ने अङ्गिर इति स्फ्यं हस्ताभ्यां पुरीषमादाय ॐ अग्नेऽअङ्गिर आयुना नाम्नेहि योस्यामित्यनेन शङ्कुलग्नं पुरीषं निर्वपति। ॐ योस्याम्पृथिव्या० दधे। अग्निं तस्योपरि दक्षिणस्योत्तराभ्यान्न्युब्जपाणिभ्यां तूष्णीं प्रभिन्यासः। पुनः प्रहरणं पुरीषादानम्। मन्त्रमात्रे विशेषः। यो द्वितीयस्यां० दधे प्रहरणादि यत् तृतीये स्यादधे अभ्यादानं चात्वालखननम्। अमुत्वेति उपकल्पितपुरीषाहरणेन पुरीषमादाय। ॐ अनु त्वादेववीतये। सिंह्यसीति निष्पादयति। ॐ सिंह्यसि सपत्नसाही देवेभ्यः० कल्पस्व उपकल्पितरुज्वां द्वात्रिंशदङ्गुलशम्यामात्रीमुच्छ्रितां चतुरस्रामुत्तरवेदिं करोति। तस्यां मध्ये प्रादेशमात्रा द्व्यङ्गुलोछेदाताभिकरोति। सिंह्यसीति उपकल्पितप्रोक्षणीभिः प्रोक्षणम्। ॐ सिंह्यसि सपत्नसाही देवेभ्यः शुन्धस्व। पुनः सिंह्यसीति सितकारोपकरणम्। आसादितरुणेनाच्छादनम्। निरूप्याज्यं गार्हपत्ये अधिश्रित्य पर्यग्निकरणं दर्भैः स्रुक् स्रुवं च सम्मृज्य आज्यमुद्वास्य पवित्राभ्यामुत्पूय अवेक्ष्य प्रणीताप्रोक्षणीनाग्नीना सह हरणम्। अग्निभ्यां प्रह्रीयमानाभ्यां अनुब्रूहि। होता चात्वालोत्करावन्तरेण प्रवित्स्यामग्नि प्रणयिष्यन्। जघने गार्हपत्ये तूष्णीमात्मानमालभ्य होतृषदनात्तूष्णीं तृणं निरस्योपविशति। ॐ ह्रीं भूर्भुवः स्वरों प्रदेवें देव्या धिया भरता जातवेदसम्। हव्यानो वक्षदानुषोन्त्रिः। आसीन एव तृतीयत वचतनानुष्कस्योत्थाय द्वितीयाश्चारुच आह अध्वर्युः ब्रह्म यजमानयो-रनुगमनम्। प्रणीताप्रोक्षणीनां चाग्निना सह हरणं प्रतिप्रस्थातुश्चाग्निहरणं होता अनुव्रजत। अयमुख्यप्रदेवयुर्होता यज्ञाय नीयते। रथोरयोरमीवृतोघणी वाचेति त्मना३। मयमग्निरुरुष्पत्यमृतादि वजन्मनः। सहसश्चित्सहीयादेवो जीवते कृतो-

३ मिडायास्त्वा पदे वयन्नाभा पृथिव्या अधि। चतुर्था अर्द्धर्च उपरमेत्। अन्याज्य-मन्यस्यै समर्प्य। लौकिकप्रोक्षणीरादाय। छन्दावसति। वेद्यन्तरे स्थित्वा उत्तरवेदिं प्रोक्षति। इन्द्रघोष इति प्रतिमन्त्रं प्रागादिषु प्रदक्षिणम्। ॐ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु। ॐ प्रचेतास्त्वा रुद्रैः पश्चात्पातु। ॐ मनोजवास्त्वा पितृभिः दक्षिणतः पातु। ॐ विश्वकर्मा त्वादित्यैरुत्तरतः प्रातु। दक्षिणास सहितं ॐ विश्वकर्मा त्वादित्यैरुत्तरतः पातु। दक्षिणास सहितं बहिर्वेदिं निषिञ्चति। ॐ इदमहं तप्तं वार्बहिर्धा यज्ञान्निः सृजामि। वेद्याः पश्चादुपविश्य। मध्ये हिरण्यं निधाय पञ्चगृहीतं जुहोति। अग्नये॰ कुशोपग्रहः। ॐ सिंह्यसि स्वाहा। इदं सिंह्य॰ वायव्ये। ॐ सिंह्यस्यादित्यवनिः स्वाहा। इदं सिंह्यस्यादित्यवत्यै॰ नैर्ऋत्यै॰ सिंह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा इदं ब्रह्मवत्यै क्षत्रवत्यै॰ ईशान्या सिंह्यसि॰ मध्ये॰। सिंह्यस्यावह देवान्यजमानाय स्वाहा इदं सिंह्यस्यद्यजमान भूतेभ्यस्त्वा उपस्थामि। आर्हतस्याग्नेर्नाभ्यां निधानम्। दक्षिणवेद्या आहवनीयस्थाने पञ्चभूसंस्कारान्कृत्वा आहवनीयस्थापनं प्रतिप्रस्थातः। प्रतिप्रस्थापनमग्निस्थापनम्। निधायाग्निं दृष्ट्वा जपति जातवेदो नि धीमह्यग्ने हव्याय वोढवों ३ अग्ने विश्वेभिः स्वनीकदैवैरुर्णावन्तं प्रथमः। सीदयोनिं कुलायनं घृतवन्तं सवित्रे यज्ञनयं यजमानाय साधों३ सीदहोतः स्व॰ वयोधों३। नि होता होतृष॰ अनों३ त्वं दूतस्त्वमुनः परस्थान्स्त्वं वस्य वृषभं प्रणमेत्। अग्ने तोकनस्तेन तनूनामप्रयुच्छं दीधद्दीधियो यों ३ त्रिः अध्वर्योः। अग्निमष्टक॰ सोमं चरुणा। सवितारमष्टक॰ सरस्वतीं चरुणा। पूषणं चरुणा दक्षिणाऽग्न्युद्धरणम्। असञ्चरे प्रोक्षणीनां निधानम्। प्रतिपस्थातुर्दक्षिणेग्नौ उत्तरतः प्रोक्षणीर्निधानम्। **ततो अन्वाधानम्।** यजमानोऽष्टसमिधो गृहीत्वा आग्नेयादि पौष्णा पर्यन्तं पूर्ववत्। इन्द्राग्नी द्वादशकपालेन, वरुणं पयस्यया मेषेण च मरुतः पयस्यया मेष्या च कम्, एककपा॰ सद्योहं यक्ष्ये ममाग्ने पक्षः उत्तमे। एवं प्रतिप्रस्थातुर्दक्षिणा-हवनीयेन्वाधानम्। अपराग्न्येरध्वर्योरविशयाछेदन उभयोः। अन्वाधानोत्तरशाखा-छेदनमुपग्रहनान्तमुभयोः। मन्त्रे विशेषः। वरुणभागमित्यध्वर्योः मरुद्भ्यो भागमिति प्रतिस्थातुः। ततो अध्वर्युः दक्षिणवेद्याः समीपे सतृणं ब्रह्मसदनस्थापनम्। तत्पश्चिमतो यजमानासनम्। ब्रह्मचात्वालोत्करावतरेणाहवनीयौ पूर्वेण दक्षिणातिक्रम्य। ब्रह्मसदनावेक्षणनिरसनप्रवेशनानि पूर्ववत्कृत्वोपविशति। परिस्तरणमुभयोः। उभयोः पात्रासादनम्। पात्रान्तरात्प्रोक्षणीरुन्नीय। शूर्पाग्निहोत्रहवणीभ्यु॰ एकोनत्रिंशत्कपालानि। शेषं वेदितृणं विना आज्यान्तं पूर्ववत्। आज्यं करम्भपात्री पुरोडाशपात्र्येश्चतस्रः। तत्रैकाङ्गभिरा वाजिनभाण्डं होतृषदनं शूर्पं [illegible] वैश्वदेववत्। दधि चरुपात्रत्रयं तावन्ति

मेक्षणानि। उणां कुम्भी पृषदाज्यपात्रं शमीयत्राणि करीराणि मन्थनचतुष्टयं प्रतिप्रस्थातुश्च पात्रासादनं शूर्पाग्निहोत्रहवणी स्फ्यः शम्या कृष्णाजिनं उल॰ मू॰ दृ॰ दु॰ पात्री आज्यस्थाली कुशमुष्टिः दोहनचतुष्टयं स्रुवः जुहूपभृत् ध्रुवावत्सादनानि परिधयो विधृत्यौ आज्यं वाजिनभाण्डं शृतावदानं यवौषधं पूर्णपात्रं समिच्च प्राकृतं बर्हिः इध्मा उर्णा कुम्भी पृषदाज्यपात्रं शमी करीराष्टि गार्हपत्यस्य पश्चात् ख्योपहितायामित्यादि पौष्णग्रहणान्तं पूर्ववत्। इन्द्राग्निभ्यां जु॰ वरुणाय जुष्टं॰ प्रतिप्रस्थातुः मरुद्भयो जु॰ काय जु॰ भूताय त्वेत्यादि ब्रह्मन् हविः प्रोक्षन्यासः ॐ प्रोक्षणं यज्ञं देवता वर्द्धयत। युवां नाकस्य चाधनम्। ॐ प्रोक्षतम् अग्नयेत्यादि पौष्णान्तानां प्रोक्षणम्। इन्द्राग्निभ्यां त्वा न॰। वरुणाय त्वा॰ प्रतिप्रस्थातुः मरुद्भ्यः स्त्वत्कायत्या यथासादितपात्राणां प्रोक्षणम्। असञ्चरे प्रोक्षणम् असञ्चरे प्रोक्षणीर्निधानमुभयोः। शर्मासीति कृष्णाजिनादानादि मुसलयोजनान्तं पूर्ववत्। उभय कुक्कुटाहननम्। आग्नीध्रस्तूष्णीं कण्डनादि पात्र्यामोप्यान्तम्। ततो द्वितीयस्य हविरावपनमग्नेस्तनूरसि। यवौषधं उलूखले कृत्वा तूष्णीं मुसलादानं स इदं देवेभ्यो हविः शमी॰ कण्डनं तूष्णीं शूर्पादानं प्रति त्वेति ह॰ परापूता॰ उद॰ देवो व इति। उभयोः त्रिफलीकरणं पूर्वं तण्डुलानां ततो यवानां फलीकृत्य कणात्रिदधाति। ततः कपालोपधानं कृष्णाजिनादानादि प्रोहनान्तमुभयोः पश्चात् यवानां पेषणम्। प्रोहणान्तम्। उभयत्र आज्यनिर्वापः वेद इदं बन्धनं यजमानस्य प्रोहणान्ते प्रक्षालनान्ते दोहः पूर्ववत्। ततः चक्षुषे त्वा ईक्षते पूष्ण विवेकः पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्यत्वेति। चरोस्त्रिप्रक्षालनम्। निर्देशः इदमग्नेः। इदं सवितुः इदमिन्द्राग्न्योः इदं कस्य यवपिष्टस्य मेषकरणम्। प्रतिपस्थातुः मेषीकरणम्। मेषमेष्योः लौकिकोदकेन ऊर्णा प्रक्षाल्याश्लेषयेत्। इषे त्वाज्यमधिश्रयादि घर्मोसि पुरोडाशं युगपत्। मेषमेष्योः प्रथमाश्लेषणाभावः। उरु प्र॰ आश्लिष्ट॰ पात्र्यङ्गुलिप्रक्षालनमुभयोः पयस्यावर्जं पर्यग्निकरणम्। पूर्वकल्पितपयसि दधिप्रक्षेपः। देवस्यत्वेति श्रपणमित्यादि करम्भपात्रस्थमुदकमहाप्तोदकदानम्। प्रतिपस्थातुः सहाम्योदकदानमभ्र्रादिव स्वननमुभयोः ब्रह्मन्नुत्तरौ परिग्रहीष्यावः। ॐ बृहस्पती॰ धत्तं ॐ परिगृहीतं सूक्ष्माखोः। ॐ प्रोक्षणीरासादयनमिध्मं बर्हिरुपसादयनं स्रुचः सम्मृष्टं पत्नीं सन्नह्याज्येनोदेयं वेद्यां प्रोक्षण्यासादनादि। स्रुवादि प्रतपने। अग्नीसमीपात्प्राच्यां गत्वा वेदाग्रैरन्तरतः प्राञ्चं सम्मार्ष्टि। मूलादारभ्याग्रपर्यन्तं अनिशितोसि मन्त्रेण ततो वेदमूलैर्बहिः प्रदेशे स्रुवपुष्करस्य बुध्नादारुपमूलपर्यन्तं प्राञ्चं सम्मार्ष्टि। अनेनैव मन्त्रेणग्नीध्रे प्रयच्छति। उत्करे दर्भैः सादयति। जघनेन वा इति देवयाज्ञिके सञ्च प्रोक्षणीदण्डे निदधात्यन्यः। एवं जुहू। जुह्वनन्तरं तूष्णीं शूर्पस्य सम्मार्गः ततः

उपभृत् वा। श्रृतावदानानन्तरं करम्भपात्री ततः पुरोडाशपात्रीणां इडापात्र्यानन्तरं वाजिनभाण्डस्य सम्मार्गः। सम्मार्जनान्यपास्यत्युत्करे पत्न्याज्यद्वयावेक्षणं सकृन्मन्त्रः आज्यमवेक्षते तेजोसीति ईक्षणान्ते नानाज्यकरणम्। पृषदाज्ययाजनम्। स्रुवेणाज्य० उपभृति चतुर्गृहीत्वा पात्रान्तरपञ्चगृहीतपृषदाज्यं ज्योतिरसीत्यनेन। ॐ ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित्। सकृन्मन्त्रेण चतुस्तूष्णीम्। ध्रुवायां च जुहूवत्। ब्रह्मन् इध्मं प्रोक्षिष्याव: ॐ प्रोक्षतं यज्ञं० धत्तं ॐ प्रोक्षतं कृष्णोसीति० ब्रह्मन् बर्हिः प्रोक्षिष्यावः। ॐ प्रोक्षतं यज्ञं० धत्तं० बर्हिरसि स्रुग्भ्यस्त्वा० घृताच्यसीति जुहूमासाद्य तूष्णीं दक्षिणस्यां वेद्यां शूर्पमासादयति। प्रस्तरं घृताच्यस्युपभृ० पृषदाज्यासादनम्। प्रियेण धाम्ना प्रियं सद आसीद। घृताच्यसीति ध्रुवा० एत्य पुरो० णं० करम्भपात्रीस्थापनम्। ततः पुरोडाशपात्रीणां करम्भपात्रीणामुपस्तारः। पुरोडाशपात्रीणां वाजिनं भाण्डस्योपस्तरणमुभयोः। ततः स्थाभिधारणमदत्वावाजिन निषेकः। उभयोर्वाजिने निषिच्य शमीपत्रकरीशवपनं पूर्वकरम्भपात्राणां तत्रस्थाभिघाराः तत आग्नेयादीनां चारणिमभिघार्य मेषस्याभिघारणम्। प्रतिपस्थातुर्मारुती समनन्तरमेष्याः। ततः कायस्याभिघारणं करम्भपात्रीषु करम्भपात्रीस्थापनम्। आग्नेयादीनामुद्वासनं क्रमेण यथा स्वस्य उद्वासनम्। मारुतीमुपस्तीर्य मेषं निदधाति। प्रतिपस्थाता वैरुणीमुपस्तीर्य निदधाति। कायस्योद्वासनम्। कपालसङ्ख्याप्राणदानम्। तूष्णीं करम्भपात्राणां प्राणदानम्। ततः आग्नेयादिपौष्णपर्यन्तं प्राणदानम्। इन्द्राग्नी गच्छ वरुणं गच्छेति स्वपयस्यायाम्। मेषोपि वरुणं गच्छ। प्रतिप्रस्थाता स्वपयस्यायां च मेष्यां मरुतो गच्छेति। ततः कं गच्छ वाजिनो गच्छेत्युभयोः प्रत्यनक्ति। सव्ययोरुद्वासयति। अध्वर्युराज्यस्थालीमासाद्य तूष्णीं दक्षिणवेद्यां करम्भपात्राण्यासादयति। आग्नेयानामासादनं क्रमेण पूर्ववत् पयसोः प्रियाभ्यां धामभ्यां प्रियं सद आसीदन्तम्। उत्करे वाजिनस्य च ध्रुवा असदन्निति स्वयमालभ्य तूष्णीं करम्भपात्राणामालम्भनम्। ततो जुह्वादिपयस्यामालभ्य मेषमेष्य अन्ते वाजिनयोः अन्वालम्भनमुभयोः। उद० आमद्यग्निमन्थनं पूर्ववत्। ततः शकलदानादि अग्नावग्निरिति होमान्त वैश्वदेववत्। ततो व्रतग्रहणम्। होतरेहि इत्यादि वृणीध्वं हव्यवाहनो३ मग्निमहान्तस्थौ ब्राह्मणौ भारतौ गोत्रोच्चारः देवेद्धोमसिद्ध ऋषिः त्रिष्टुभौ विप्रानुमोदितौ कविशस्तौत्र ब्रह्मसंशितौ धृताहवनौ। प्राण्योय० आहवतं देवान्यजमानाय। अग्निमग्निमाहवनम्। सोम० अग्निमा० सोममा० सवितारं० सरस्वतीं० पूषाणं० इन्द्राग्नी० वरुणमा० मरुत आ० कम् आ० देवाँ आज्यपाँ वहतम् अग्नि होत्रायां वहनं स्वं महिमानं व्यावहन्तम्। आ च वहतं जातवेदसौ सुयजतम्। आहवनान्ते [illegible] [illegible]म्। प्रजापतये०

अग्नीमग्नीत्सम्मृड्ढी। असम्मृधे प्रतिप्रस्थाता पत्नी समीपे गत्वा। पत्नी पृच्छति केन चरसीति प्रश्नः। सा पत्नी अमुकेनामुकेनेति। यदि लज्जया जारस्य नाम न गृह्णाति तदा प्रतिजार एकैकं तृणमाददाति। जारश्चेन्न भवन्ति तदा भर्तव्यतिरिक्तेन न केनापि चरामीति कथयति। पत्न्या प्रतिवचने कृते सति प्रतिपस्थाता पत्नीमुत्थाप्य स्वाहवनीयं प्रतिनयन्। प्रघासिन इत्यमुं मन्त्रं वाचयति। प्रघासिनो॰ षस इति ब्रूहि। मन्त्रपठनं पत्न्याः प्रघासिनो॰ सः। ततोध्वर्युः स्वाज्येन शूर्पमुपस्तीर्य शूर्पे करम्भपात्राणि कृत्वा प्रत्युपस्तरणम्। प्रतिपस्थाता पत्न्याः मूर्ध्नि शूर्पं कृत्वा बाहुं गृहीत्वा दक्षिणेनोद्धृत्य ब्रह्मयजमानयोरुत्तरतश्च दक्षिण इत्येवमन्तरालमार्गेणानीय चात्वालोत्करावन्तरेण सञ्चरेण प्रविश्य पूर्वेण परेण वा वेदीमेत्य दक्षिणाग्नौ प्रत्यङ्मुखी तिष्ठती पत्नी जुहोति। यजमानस्यान्वारम्भः। यद्ग्रामे यद॰ हे स्वाहा। इदं मरुद्भ्यो॰ मो षू ण इति यजमानो जपति। ॐ मो षू ण इन्द्र॰ ते गीः। ॐ अक्रन्कर्मेत्येनां वाचयति। प्रतिनयेत्। ॐ अक्रन्कर्म कर्म॰ भुवः। आगत्य तेनैव मार्गेण तां पत्नीस्थानं प्रति नयेत्। अथवा प्रतिगमने ब्रह्माणमन्तरा यजमानाद्बहिश्च नयेति स्वस्थाने उपविशति। देवयाज्ञिके अग्नीदुभयोग्नीत्सम्मार्गम्। होतृवरणे इध्मसन्नहनान्यादायोत्करस्य पश्चाद्धोतुरुत्तरतः प्राङ्मुखस्तिष्ठन् ओं श्रा॰ अस्तु॰ अग्निर्देवो॰ मानुष इत्यन्ते होतृवरणं होता एतत्वेत्यादि अङ्गिरसो दिव इत्यन्तं सम्मृष्टा अध्वर्युः प्रतिपस्थाताग्नीच्चोपविशन्ति। होता। इध्मसन्नः मुखं सम्मार्ष्टि। सम्मार्जौ स्थः सम्मा प्रजया पशुभिर्ब्रह्मवर्चसेन च मृष्टम् अप्रदक्षिणम्। अपमार्गोस्थः अयमापाप्मना पायेन च मृतम्। अप उ॰। ऐन्द्रीमावृतेत्यादि वहानीत्यन्तम्। अग्निहोतारौ वीतामग्निहोत्रं वेतुं पावित्रं साधुते यजमान देवतायावग्नी। अग्निर्होतेत्यादौनौह। योग्नि होता॰ धृतवतीमध्वर्यु स्रुचमास्येथां देवस्ययुवं विश्ववारे। मीडायान्। उभयोः नवप्रयाजान्यजति। ॐ श्रा॰ अस्तु॰ समि॰ ये३ समिधः समिधो अग्नि आज्यस्य व्यन्तु॰ सर्वत्राग्रेहति द्विवचनान्तप्रयोगः। यजमानः इदमिदं समिद्भ्यो॰ इति नवस्वपि इदं पदावृत्तिः। एकम् आज्यभागस्विष्टकृत धारानुयाज संस्रवाहुति समिष्टयजुषा च त्यागे। इति विशेषः। यज यजेत्युत्तरेषु। उत्तमे प्रयाजे। स्वाहाग्नि॰ पूषणं स्वाहेन्द्राग्नीमरुतः कं देवाव्यम्। इदमिदमग्नये॰ पूष्णे इन्द्राग्निभ्यां वरुणाय मरुद्भ्यः काय देवेभ्यः। सर्वान्प्रयाजान्प्रदीप्तोग्निप्रदेशे जुहोति। अथवा प्रतिहोममाहवनीयसन्मुखं स्तोकं गत्वा प्राक् संस्थान् जुहोति। ततो दक्षिणपादेन हविः समीपपत्यागत्योपविश्य जुहूस्थेन प्रयाजः। शेषेण जुह्वैव ध्रुवायाः आज्यस्थाल्याः पुरोडाशयोः उपभृतश्च क्रमेणाभिघारणं करोति। वार्त्रघ्नावाज्यभागौ। अग्नये॰ अग्निर्वृत्राणि हुतौ यजति स्थाने तिष्ठन् उत्तरपूर्वार्द्धे

आग्नेयं दक्षिणपूर्वार्द्धे सौम्यम्। अत्रापि त्यागे। इदमिदमग्नये॰ इदमिदं सोमाय॰ पाणायैव प्रतिप्रस्थाता स्रुचौ कृत्वोपासे। अध्वर्योराग्नेयादि पौष्णपर्यन्तानां वैश्वदेवत्यागः। ऐन्द्रस्य दर्शैवत्यागः। पयस्याया: प्रचरेण मेषमेष्या व्यतिक्रमः। वरुणायानु॰ इदमेव॰ चके जुहूमुपस्तीर्य मेक्षणेन पयस्यां सकृदवदाय द्वितीयावदानेन सह मेषावदानम्। प्रत्युपस्तरणाम्। क्षताभ्यङ्गः अतिक्रम्याश्राव्याह ये३ वरुणं तदतपामि पीवौ इदं प्रतिप्रस्थातुर्वासो दक्षिणेन गृहीत्वा मरुद्भ्योनु॰ मरुतो यद्धवो दिवः सुम्नायं हो हवामहे। आतनयं गन्तुनो प्रतिप्रस्थातुर्जुहूमुपस्तीर्य प्रेक्षणेन मारुत्या पयस्यायां अवदानग्रहणं अन्यतरेणावदानेन सह मेष्या ग्रहणम्। प्रत्युपस्तारः। क्षताभ्यङ्गः। अध्वर्योरेव आश्राव्याह मरुतो यज ये३ मरुतो अरा इध्मेद चरामीह देव प्रजायन्ते। अकवा महोभिः। प्रश्रे पुत्रा उपमासोरभिष्टास्वयामरुतः सम्मिमिक्षुर्वौ॰ इदं मरुद्भ्यो॰ वासस्त्यक्त॰ काय अ॰ हिरण्यगर्भ॰ म। ॐ सकलग्रहणम्। प्रत्युपस्तारणाद्वयं होमश्च अपरिवर्त्तनं कं यज ये३ कं मः प्राणप्तोः धेर्मा वौ॰। इदं काय उभयोः स्विष्टकृत्। अग्नये स्विष्टकृते॰ प्रेद्धो॰ अग्निं स्वि॰ धे॰ अग्निं स्विष्टकृतमयाष्टान्तया अग्नेः प्रि॰ सोमस्या प्रि॰ सवितुः प्रि॰ सरस्वत्याप्ति॰ पूष्णः प्रि॰ इन्द्राग्न्योः प्रि॰ धामान्ययाष्टा देवाना॰ तूष्णीं तु तावध्धृतौ जातवेदसौ जुषेतां हविर्हिरिमोमविनिनी व्यन्तूवौः। इदमिदमग्नये स्विष्ट॰ सञ्चरमभ्युक्ष्य। इडामुपस्तीर्य सर्वहविभ्र्यः इडामवदाय प्रतिपस्थात्रे समर्पयति। प्रतिपस्थाता स्वपयस्याया द्विरवदायाध्वर्युं वेडां प्रयच्छति। प्रत्युपस्तरणमध्वर्योः होतुः समर्पणादि मयीदमिति जपान्तं पूर्ववत्। अत्र द्विः हेवत्यश्चतुर्द्धाकरणानां पयस्योत्तरभावः समस्य मार्जनम्। प्रतिपस्थाता तु वेदिमपरेण स्वकीयपवित्रे समस्य मार्जनं करोति। प्रस्तरे पवित्रकरणमुभयोः अत्र गौर्दक्षिणा। ब्रह्मन्प्रस्थास्यावः स समिधायाग्निमग्नीत् समृड्ढी। एवं च तेदे॰ मों प्रतिष्ठेताम्। एतत्ते अग्ने समिधौ ताभ्यां वर्धस्व चा च प्यायस्व। वर्द्धिषीम॰ मही॰ अग्नीत् सम्मार्ष्टि पूर्ववत्। पृषदाज्यग्रहणमुभयोः। नवानुयाजाः अत्रापि त्यागे इदं इतीदं शब्दस्यावृत्तिं चतुर्थसप्तमयोमानयनम् वरुणप्रघासे यजमानस्य व्यूहनं नास्ति। अग्नेः पूषन्द्राग्न्योर्वरुणकस्योज्जितिमनूजायत्वं॰ मि। अग्निं पूषेन्द्राग्नीवरुणकस्तमपनुदं॰ मि। शूर्पजुह्वोपरि निधाय प्रतिपस्थातुव्यूधामेद्धोता। अग्नीध्राद‍िध्मसन्नहनान्यादायाह। वनीये पक्षे यः त्रीणि समिद्यजुः तूष्णीं प्रतिपस्थातु॰ तदन्ते अवभृथेष्टिः। ततो यजमानः चात्वालसमीपे आमेन्योरुं हितीवाचनम्। उरुं हि राजा॰श्चिदिति ब्रूहि यजमानः उरुं हि नीस्वरेण पठति। वाग्यमनं वारुणि निष्कायं जुहुस्त्रुवमाज्यस्थालिश्रृतावदानस्फ्यमुष्टिमात्रं बर्हिसमिदेका [illegible] नाभिमात्रे जले प्रवेशयति। ततः

प्राणानायम्य। देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं वरुणप्रघासान्तर्गत अवभृथेष्ट्याहं यक्ष्ये। उदके आहवनीयकल्पनम्। अयामेव परिस्तरणम्। जुह्वाचतुर्गृहीतमाज्यं गृहीत्वा समित्पूर्वकमाहवनीये होमः। अग्नेरनीक० स्वाहा इदमग्नयेनीकवते०। पुनश्चतुर्गृहीतं गृहीत्वा बर्हिवर्जं चत्वारः प्रयाजाः अत्र समानयनाभावः। उत्तमे प्रयाजे स्वाहा वरुण स्वाहाग्नी वरुणाय देवेभ्यः। प्रधानयागे। वरुणायानु० इमं मे० चको३म्। जुह्वामुपस्तीर्य शृतावदानेन निष्काशाद्विरवदानग्रहणम्। प्रत्युपस्तरणं क्षताभ्यङ्गः। वरुणं यज। ये३ वरुणं तत्वा यामि० षी वौ०। इदं वरुणाय० अग्नीवरुणाभ्यामनु०। त्वन्नो अग्ने० दध्यसदों सकृदवदाय द्विरभिघार्य न क्षताभ्यङ्गः। अग्नीवरुणं यज। ये३ अग्नीवरुणौ स त्वन्नो० धी वौ अग्नीवरुणाभ्यां स्विष्टकृतेन नीष्काशस्थाल्यां मज्जनम्। अवभृथेति। अवभृथ नि० हि० जायापत्योः स्नानम् इतरेतरपृष्टिशोधनं सर्वैः स्नात्वा अन्यद्वासः परिधानं पूर्वेषां दानम्। ततस्तूष्णीमेवागत्य चात्वालोत्करावन्तरेण प्रविश्याहवनीये देवा तां समिदसीति मन्त्रेणैकां समिधमादधाति। यजमानः पत्नीं च गार्हपत्ये तूष्णीं बर्हिहोममुभयोः प्रणीताविमोकोध्वर्योः करम्भपात्रकर्णैः सहकणोपासनम्। प्रतिपस्थातुरभि लोकिक कपालेन सहकणा पासनम्। द्वयोः पूर्णपात्रनिनयमः। युगपत् ग्रहणम्। मुखमार्जनम्। विष्णुक्रमेण वेदिद्वयावेक्षणम्। आहवनीयद्वयावेक्षणम्। ब्राह्मणैस्तर्पयत वै द्वयोस्तर्पणम्। उभयत्र कर्मापवर्गः। शतब्राह्मणभोजनं ततोऽरणी गार्हपत्यस्यस्थाने गत्वा निर्मथ्य गार्हपत्यस्थापनम्। अयं षडाहुतिपक्ष एव वाजसनेयीनां नियमेन इतरेषां तु यजमानेच्छया। कर्माङ्गभूतं शतं ब्राह्मणभोजनम्। इति श्रीश्रौतोल्लासे चातुर्मास्यप्रयोगे **वरुणप्रघासद्वितीयपर्वः समाप्तः।**

## ।। अनीकवतीष्टिः ।।

अथ तृतीयदिने साकमेधपर्वोच्यते। प्रातर्होमानन्तरं गार्हपत्ये समारोपः। उदवसानप्राचीनप्रवणे प्रत्युविहारे मथित्वा निधानम्। तत्र प्रातरनीकवतेष्टिः। पूर्वाह्णे देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं साकमेधाख्येन पर्वणाहं यक्ष्ये। तत्रानीकवतेष्ट्याहं यक्ष्ये। उद्धरणमन्वाधानम्। अग्निमनीवन्तमष्टाकपालेन पुरोडाशेन सद्योहं यक्ष्ये। तत्र पञ्चदशो वज्रः। व्रीहिभिर्यागः। अन्वाहार्यो दक्षिणा ममाग्ने पक्षः। उत्तमे काले व्रतोपायनम्। एकेन पात्रासादने कपालान्यष्टौ पुरोडाशपात्र्येकाग्रहणे अग्नयेनीकवते जु० अग्नयेनीकवते त्वा जुष्टं० प्राणदाने। अग्निमनीकवत गच्छ० अग्निमनीकवतमावह। उत्तमे प्रयाजे। साग्निं स्वाहा सोमं स्वाहा० इदमग्नये सोमाय० वार्त्रघ्नावाज्यभागौ **अथ प्रधानयागे।**

अग्नयेंनीकवतेनु० अनीकवतं भूतयेग्निगीर्भिर्हवामहे। स नः पर्षदति द्विषो३म्। अग्निमनीकवतं यज० ये३ अग्निमनीकवन्तं सैनानिकेन सुविदत्रो अस्मे जुष्टादेवां अयजिष्ट स्वस्ति। अदब्धो गोपा उत नः पुरस्या अग्ने द्युमदुत्तरैद्विदीहीवौ०। इदमग्नयेनीकवते०। अग्नये स्विष्ट० प्रद्धो० प्रि० नीकवतः प्रि० मो अग्ने वी० अत्र चतुर्द्धाकरणम्। व्यूहनेरनीकवतो ज्जिति०। अग्नीरनीकवतस्तमः। सूक्तवाके। अग्नीरनीकवाती०। देवा आज्यपादिकर्मापवर्गान्तं पौर्णमासवत्। **इत्यनीकवतेष्टिः।**

## ।। अथ सान्तपनेष्टिः ।।

ॐ सान्तपनेभ्यो मध्यन्दिने चरुः कालस्यातिसूक्ष्मत्त्वान्मध्यन्दिने प्रधानहोमः पुनरुद्धृत्य प्राणनायम्य देश० साकमेधान्तर्गतसान्तपनेष्ट्याहं यक्ष्ये। उद्धरणमग्न्यन्वाधानं, मरुतः सान्तपनान् चरुणा सद्योहं यक्ष्ये। पञ्चदशो वज्रः व्रीहिं० अन्वाहार्यों० ममा० उत्तमे० एते पात्रासादने। कपालोपवेषोद्धरणपात्रीणाम-भावः। कुक्कुटाहननार्थं शम्या दृषदुपलासादनम्। चरुमेक्षणयोरुपकल्पनं ग्रहणे मरुद्भ्यः सान्तपनेभ्यो जु० मरुद्भ्यः सान्तपनेभ्यस्त्वा जुष्टं प्रो० अग्र उपसर्जनी च आज्यनिर्वापोध्वर्योरिव। प्राणदाने मरुतः सान्तपनानागच्छ आवाहने मरुतः सान्तपनानावह उत्तमे प्रयाजे मरुतः सान्तपनान् स्वाहा देवा इदं सोमाय मरुद्भ्यः सान्तपनेभ्यो देवेभ्यः परोक्षप्रत्यक्षावाज्यभागौ। अग्नये जु० य उध्र इव शर्यहातिग्मश्रगोषवं समा। अग्ने पुरो झेजियों३ सोमायानु० प्रधानयागे मरुद्भ्यः सान्तपनेभ्यो जु० सान्तपना इदं हविर्मरुतस्तज्जुष्टन् युष्माकोनीरिशाद सो३म्। मरुतः सान्तपनान्यज ये मरुतं सति० इदं मरुद्भ्यः सान्तपनेभ्यो०। त्रिष्टुभावीडितवत्यौ संयाज्ये। अग्नये स्विष्ट०। त्वामीडते अजिरं इन्याय हविष्मन्तः सदमिन्मानु स्वास०। यस्य देवै रासदो बर्हिरग्नेहान्यस्मै सुदिना भवत्वों३ ये३ग्नि सिदमरुतां सान्तपनानां प्रि० देवा० हविरग्नि सुदितीं सुदृशे गृणन्तो नमस्या० अत्र चतुर्द्धाकरणाभावः। व्यूहने मरुतां सान्तपनास्तम० सूक्तवाके। मरुतः सान्तपना इ० ह० षन्ता वीवृधन्त महोज्यायो क्रत। शेषं प्राकृतं समिष्टयजुरन्तं भवति बर्हिप्रहरणं वर्जवा सान्तपनेन बर्हिहोमः। शेषं कर्मापवर्गान्तमिति कर्कः। **इति सान्तपनेष्टिः।**

## ।। अथ गृहमेधीयेष्टिः ।।

अथ गृहमेधीया तस्मिन्नेव विहारे मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि सायं शब्दोऽपराह्णवाचकः। ततो यजमानः देशकालौ सङ्कीर्त्य साकमेधान्तर्गत-गृहमेधीयेष्ट्याहं यक्ष्ये। नाग्निविहारणम्। तूष्णीं शाखांच्छेदनं सन्नमनं शाखा एव परिवासम्। तिसृणामपाकरणम्। नोपवेषः पवित्रबन्धनं [illegible] तूष्णीं

स्थाल्यां दोहनम्। षडासनं करणम्। ब्रह्मवरणादि प्रणीतानिधानान्तं समन्त्रकम्। ब्रह्मन्नप: पर्यांसि प्रणेष्यामीति प्रैष:। चतुरासनम् अग्निहोत्रहवणीर्वज्र: पवित्रछेदनानि पवित्रे। पवित्रकरणे। पवित्रे त्वाहविगृहणे। ॐ सवितु व: प्र० ता स्थापनं प इति। ॐ देवीरापो० तासां प्रोक्षणं दैव्यायेति वज्रं प्रोक्षणम्। अग्नीत् वज्रमादाय। इध्ममुपसादय इति प्रेषयति। अध्वर्यु: प्रणीतामपरेण स्फ्यं निधाय तस्मिन्निध्मस्थाने इच्छया सङ्ख्यकान् यज्ञियवृक्षशकलान् इध्मसन्नहने बध्वा परिधींश्च निधाय ततो अग्न्यन्वाधानम्। समिधद्वयं गृहीत्वा मरुतो गृहमेधिन: पायसेन चरुणा सद्योहं यक्ष्ये। अत्र नववज्र: व्रीहिभिर्याग:। अन्वाहार्यो दक्षिणा ममा० उत्तमे० एके। ॐ ममाग्ने नापराग्न्यो आहवनीयस्यैव परिस्तरणं पात्रासादनं पात्रासादने प्रोक्षणीरुत्रीय शूर्पाग्निहोत्रहवणी स्फ्य: कृष्णाजिनमुलूखलमुसलं दृषदुपलं पात्री रमा० पवित्रे त एव आज्यस्थाल्युपसर्जनीपात्रं कुशमुष्टिरन्वाहार्यपात्रं च। योक्त्रं स्रुवश्च जुहूसन्नहनायाच्छादनानि। विधृत्यौ च आज्यमेकं पिशीलकं होतृषदनं शृतावदानं हविर्द्रव्यमन्वाहार्यं तन्दुलाश्चेति। अथोपकल्पनीयानि सन्नहनं प्रस्तरमात्रं बर्हि: एकं कांस्यपात्रं पिशीलकं चरुपात्रे मेक्षणं योतकं चेति गार्हपत्यस्य पश्चात् स्फ्योपहितपात्र्यादिग्रहणे मरुद्भ्यो गृहमेधिभ्यो जुष्टं, मरुद्भ्यो गृहमेधिभ्यस्त्वा जु० यथासादितपात्राणां प्रोक्षणादिकरणनिधानान्तं पूर्ववत्। क्षीरोपसर्जन्यधिश्रयत्यग्नीत्। आज्यनिर्वाप्याध्वर्येरेव महीना० वेदोसीति यजमानो वेदं करोति। चक्षुषे त्वा ईक्षति तन्दुलेक्षणं क्षीरोपसर्जनीग्रहणं पवित्राभ्यां समाप ओषधीभि: स० भि: पृच्यन्तां सम्मधुमतीभि: पृच्यताम् इषेत्वाज्यं घर्मोसीति चरु सहाश्रयत: पर्यग्निकारो० इति सहाज्यम्। उद० देवस्त्वेति श्रपणम्। मा भेरित्या-लभते। ॐ मा भेर्मा सं विक्था:। अन्वाहार्यं दक्षिणाग्नावधिश्रयति। अध्यधिदेवेति प्रोक्षणीर्धारन्यति। ॐ प्रोक्षणीरासादुपबर्हिरुपसादय स्रुचम्। सम्मृड्ढी पत्नीं सन्नह्याज्येनो देहि। वेद्यां प्रोक्षणीर्निधानं स्फ्योदकप्रहरणं न पाण्योरवनेजनम्। अपरेण प्रणीतास्फ्यो बर्हिर्निदधाति। वेदाग्नि निष्पति: प्रत्यक्ष रक्षति। स्रुवं प्रतप्य अनिशितेति जुहू तूष्णीं शृतावदानमेकं पिशीलकमिडापात्रीं च सम्मार्जनान्यपास्यत्युत्करे पत्नीसन्नहनादि तेजोसीत्यन्तं नाज्यग्रहणं ब्रह्मन्निध्मं कृष्णोसीति इध्मप्रोक्षणं न वेदिप्रोक्षणं ब्रह्मन्बर्हि: प्रोक्षिष्यामि। बर्हिरसि स्रुभ्यस्त्वा जुष्टं प्रो. शेषं पूर्ववत्। तूष्णीं ब्रह्मणे सर्वं समर्पणम्। सन्नहनं विस्त्रंस्य अन्यैरवच्छाद्य आसादित एवोपस्तरणं तत्रस्थाभिघारणमुद्वास्य पिशीलकयो-रुद्धरणमेकस्मिन्प्राणदानं मरुतो गृहमेधिनो गच्छ उभयोर्गर्तकरणमाज्यासेक:। आज्यस्थाली दर्वीहोमार्थं सशेषयो: स्थापनम्। तूष्णीं वेद्यभिमर्शनम्। समित्प्रस्तरादानमाहवनीयकल्पनम्। नोल्मुकोदूहनं परिधीन् परिदधाति गन्धर्व इति

प्रतिमन्त्रम्। स्पृश्यास्पृश्ययोराराधनम्। सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणः इध्मस्थानस्थितशकलाधानम्। आवृत्य वेदिं विधृतीतिरश्चित्यादि जुह्वासादनान्तम्। वज्रोपग्रहो दक्षिणोदनस्य। प्रियाभ्यां धामभ्यां प्रियं सद आसीद ध्रुवा असदन्नित्युभयोराज्यधारालम्भनम्। दक्षिणोदनस्य च आत्मालम्भनं पाहि मां यज्ञन्यम् उद॰ व्रत ग्रहणं होतरेहीति प्रैषः होता सञ्चरेण प्रविश्य सामिधेनीस्थाने तिष्ठति नमः। ॐ क्रदं जपेत्। ॐ नमः प्रवक्त्रे॰ सर्वं प्रपद्ये समिध्यमान प्रैषसं तन्वप्रैषसन्तन्व प्रैषय बाधनायनामभावः। न सामिधेनीरनुब्रूयान्नावाहयेन्न प्रयाजानानुयाजास्तिष्टकृतिन निगदं ब्रूयात् वेदेनाहवनीयं निरुपवाज्यं आधारवर्ज-मग्निमग्नीत् सम्मृड्ढि। अग्नीत्सम्मार्गः। अध्वर्युरिध्मसन्नहनाश्राव्यादि मानुष इत्यन्तेन होतृषदनं कुर्यात्। होता एतत्वेत्यादि जातवेदा विचर्षणिरित्यन्तं व्रतजपं कुर्यात्। तूष्णीमात्मानमालभ्य उद॰। इन्द्रमन्वारभामहे इत्यादि ऐन्द्रीमावृतामन्वा-वर्त्तेत्यन्तम्। तूष्णीं तृणं निरस्योपविशति। विश्वकर्मान्नित्यादि हव्यमावो वहानीत्यन्तम्। ततोध्वर्युः आज्यभागाभ्यां चरत्याग्नेर्य दक्षिणात्सौम्यमुत्तरात्। स्रुवं च स्रुचं चाददान आह पुष्टिमन्तावाज्यभागौ। अग्नये मू॰ अग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्। दक्षिणशरावाच्चतुर्गृहीतमाज्यं गृहीत्वा निष्क्रम्याश्राव्याह। सोमायानुब्रूहि। गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनम्। सुमित्रः सोमनो भवो३म्। उत्तरात्सौम्यः प्रधानयागे मरुद्भ्यो गृहमेधिभ्योनु॰ गृहमेधा स आगत मरुतो मापभूतन। युष्माकोनीसुदानवो३म्। दक्षिणादाज्यजुह्वामुपस्तीर्योदनार्द्धिरवदाय प्रत्युपस्तीर्य नक्षताभ्यङ्गः। अतिक्राम्या-श्राव्याह। मरुतो गृहमेधिनो यज। ये मरुतो गृहमेधिनः प्रबुध्ना वइरतो महान्सि प्रणामानि प्रयज्य बस्तिरध्वं सहस्त्रियं दभ्यं भागमेत्तं गृहमेधीय मरुतो जुषध्वां वौ॰। इदं मरुद्भ्यो गृहमेधिभ्यो न॰। अनुष्टुभौ चित्रवत्यौ संयाजे। अग्नये स्विष्ट॰ त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवौ३म्॰ उत्तरोदनस्य सर्पिरासेचनादुपस्तरणम्। सकृदवदानग्रहणं द्विरभिघारणम्। नक्षताभ्यङ्गः। अतिक्रम्याश्राव्याह। ये॰ अग्निं स्विष्टकृतं यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो। महिषीवत्वद्रयिस्त्वद्वाजा उदीरतों३ वौषट्। इदमग्नये स्वि॰ स्रुक् निधानं सञ्चराभ्युक्षणं न प्राशित्रं च। इडां पञ्चावत्तां करोति दक्षिणशरावत् षडवत्तमेवं भागपरिहरणमिडोपह्वानं न चतुर्द्धाकरणं प्रथमं मार्जनम्। भक्षणं यजमानवर्जम्। यजमानस्य प्राणापानौ पानं प्रस्तरेण करोति। भागमस्मै परिहरति। अन्वाहार्यो अभिघार्योद्वास्येत्यादि तद्वानान्ते। अग्निमग्नीत्सम्मृड्ढि पूर्ववत्सम्मार्गः। व्यूहनं जुह्वामेव। मरुतां गृहमेधीनामुज्जि॰ अभ्युक्ष्य जुह्वादिप्रस्तरप्रक्षेपान्तं प्रस्तराञ्जनं जुह्वामेव तृणप्रक्षेपः। यथैतं निष्क्रम्योद्वासा।

आत्मालम्भः उद॰ न संवादः यं परिधिमिति परिधिप्रक्षेपः। संस्रव इति संस्रवां जुहोति। घृताच्यसि धर्यौपाहि सुम्नासि सुम्नेमाधेहि इति स्फ्यो जुहोति दधाति। पत्नी वेदं प्रमुञ्चति वेदोसीति योक्त्रां च प्रमामुम्मुञ्चामि। आवेदेस्तरणं सर्वं बर्हिरिति ४ अवच्छादनबर्हिहोमः वेद्यां प्रणीता निनयति। परीत्य कस्त्वेति रक्षसामिति राक्षसभावः। न पूर्णपात्रग्रहणम्। न विष्णुक्रमणम्। अस्मादन्नामिति भागमवेक्षते सञ्चरविमोकः। सं यज्ञपतिराशिषेति भागमश्नाति। ब्राह्मणतर्पणप्रैषः। न कर्मापवर्गसमिद्धोमः। रात्रौ वत्ससंसर्गः। निवान्यानृतगौर्वत्सा सहान्या गौदुग्धं **इति गृहमेधीयः**। इति।

## ।। अथ दर्वीहोमः ।।

चतुर्थे दिने प्रातर्हुते वा हुतेग्निहोत्रे दर्वीहोमः। ततो यजमानः गार्हपत्यस्य पश्चादुपविश्य तत्सत्परमेश्वरप्रीत्यर्थं साकमेधान्तर्गतदर्वीहोममहं करिष्ये। तत्र सर्वं तूष्णीमाहवनीये समिद्द्वयं निधानं षडासनं ब्रह्मवरणं प्रणीताप्रणयनमाहवनीयस्यैव परिस्तरणं पात्रासादनम्। अग्निहोत्रहवनीर्वज्रः शम्या दृषदुपलं पवित्रच्छेदनानि पवित्रे आज्यस्थाली कुशमुष्टियोक्त्रं स्रुचं जुहूरुपभृद्दर्वी ध्रुवासन्नहनावच्छादनानि। परिधयो विधृत्यौ आज्यं शृतावदानं वृषभो दक्षिणा पूर्णपात्रं समिच्च। उपकल्पनीयानि सहसन्नहनं इध्मकाष्ठद्वयं प्रस्तरमात्रबर्हिः पूर्वस्थापितमुन्दनं पवित्रकरणं प्रोक्षणीसंस्कारः पात्राणां प्रोक्षणमसञ्चरे प्रोक्षणीर्निधानं वाग्विसर्गः कुक्कुटाहननमध्वर्योराज्यनिर्वापश्च। यजमानस्य वेदवन्धः आज्याधिश्रयणम् उद॰ वेद्युपरि प्रोक्षण्यासादनम्। न स्फ्योदकप्रहरणम्। न पाण्योरवनेजनम्। अपरेण प्रणीतानां स्फ्यो बर्हिरासादनम्। वेदाग्रनिष्पति स्रुवादीनां सम्मार्जनम्। जुह्वन्तरं दर्व्याः पत्नीसन्नहनम् आज्योद्वासनम्। आज्यावेक्षणम्। आज्यस्यान्तर्वेद्यां नयनम्। आज्यप्रोक्षण्युत्पवनम्। अन्यतरस्यावेक्षणम्। ध्रुवायामेव चतुर्गृहीतग्रहणमिध्मप्रोक्षणं बर्हिप्रोक्षणं मूलावसेकः प्रणीतासु पवित्रकरणं बर्हिर्विस्रंसनं दक्षिणश्रोण्यां निधानमन्यैरवसादनं समित्प्रस्तरादानं आहवनीयकल्पनम्। परिधिपरिधानं स्पृश्यास्पृश्ययोराधानम् आहवनीयेक्षणम् आवृत्य विधृत्यौस्तरणं हस्ताभ्यामभिन्यासः जुह्वासादनं दर्व्यासादनं उपभृद्ध्रुवासादनं शीतोदनं शीतोदनस्य प्राणदानम् आज्यस्थाल्यासादनं शीतोदनस्यासादनं स्थाल्यालम्भः आत्मालम्भः उद॰ व्रतग्रहणं वेदानाहवनीयोपवाजनम्। पूर्वाघारः। अग्निसम्मार्गः अञ्जलिकरणम् उद॰ जुहूपभृतोरादानं सकृद् गृहीतेन यजतिस्थाने तिष्ठत इन्द्राय स्वाहेति उत्तराघारः। आज्यशेषेण ध्रुवाभिघारणं ध्रुवाया आप्यायतश्चतुर्गृहीतेन अग्नये स्वाहा सोमाय स्वाहेति आज्यभागा उपविष्टस्यैव जुहूनिधानम्।

दर्व्युपस्तरणम्। पूर्णा दर्वीत्यनेन मन्त्रेण स्थालीतः शीतोदनस्य ग्रहणं द्विरभिघारणं वृषभमाह्वयेति प्रैषः। वृषभे हिङ्कृते देहि म इति होमः। ॐ देहि मे ददा॰ ते स्वाहा। इदं शतक्रतवे। अव्याहरति वृषभे ब्रह्मा जुहुधीति ब्रूयात्। स्रुक् दर्व्योर्निधानं पवित्रप्रतिपत्तिः वृषभस्य दानं स एव वृषभो दक्षिणा अस्य दर्विहोमसमृद्ध्यर्थं वृषभदक्षिणां ब्रह्मणेऽध्वर्यवे चाहं सम्प्रददे। अग्निसम्मार्गः जुहूदर्व्युत्तरां कृत्वा व्यूहनं जुह्वाभ्युक्षणं परिध्यञ्जनं प्रस्तरादानं नीचैर्हरणं तृणगृहणं प्रस्तरप्रक्षेपः तृणप्रक्षेपः आत्मालम्भः परिधिप्रक्षेपः विश्वेभ्यो देवेभ्यः स्वाहेति संस्रवाहुतिः। स्फ्ये स्रुङ्निधानं वेद्यालम्भः वेदयोक्त्रविमोकः आवेदेस्तरणं वाजाय स्वाहेति समिष्टयजुः अन्यैरवच्छादनं बर्हिहोमः। प्रणीताविमोकः पूर्णपात्रनिनयनं यजमानस्याञ्जलिग्रहणम्। विष्णुक्रमणं प्राङ् ईक्षणं आहवनीयेक्षणं भूम्यावेक्षणं आवर्तनं प्रागागमनं पुत्रनामानुधानं व्रतविसर्गः ब्राह्मणतर्पणं कर्मापवर्गाधानं सम्बर्हिरिति मन्त्रेण सान्तपनीयबर्हिहोमः। अहुतश्चेदग्निहोत्रस्तदा उद्धृत्याग्नि-होत्रहोमः। **इति दर्वीहोमप्रयोगः।**

## ।। अथ क्रीडिनीयेष्टिः ।।

ततो यजमानः देशकालौ सङ्कीर्त्य॰ साकमेधान्तर्गतक्रीडिनीयेष्ट्याहं यक्ष्ये। उद्धरणम्। अग्न्यन्वाधानं षट्समिधो गृहीत्वा मरुतः क्रीडिनः सप्तकपालेन अदितिं चरुणा सद्योहं यक्ष्ये। पञ्चदशो॰ व्रीहि॰ अन्वाहार्यो॰ ममा॰ उत्तमे॰ एते प॰ षडासनं॰ ब्रह्मवरणं क्रीडिनीयेष्ट्याहं यक्ष्ये। पात्रासादने कपालानि-सप्त, पुरोडाशपात्र्यैका चरुमेक्षणयोरुपकल्पनं ग्रहणे मरुद्भ्यः क्रीडिभ्यो जुष्टं, मरुद्भ्यः क्रीडिभ्यस्त्वा जु॰ अदित्यै त्वा कणान्ते चर्चकः इदं मरुतां क्रीडिनाम् इदमदित्या॰ प्राणदाने मरुतः क्रीडिनो ग॰ अदितिं ग॰ आवाहने मरुतः क्रीडिन आ॰ अदिति मा॰ उत्तमे प्रयाजे मरुतः क्रीडिनः स्वाहा अदितिं स्वाहा देवा॰ इदमग्नये सोमाय मरुद्भ्यः क्रीडिभ्यः अदित्यै देवेभ्यः। परोक्षप्रत्यक्षावाज्यभागौ सान्तपनीयेष्टिवत्। अग्नये य उग्र सोमाया॰ अयं कृणु॰ प्रधानयागे मरुद्भ्यो क्रीडिभ्योनु॰ क्राडंवः शर्धोः मारुत मनर्वानरुंरथे शुमं। कण्वा अभिप्रगायत। मरुतः क्रीडिनो यज। ये॰ मरुतः क्रीडिनोभ्यासोनये मरुतः स्वञ्चो पक्षदशो न शुभयं नजर्याः। ते हर्म्येष्टासिशवो न शुभ्रा वत्सा सोम प्रकीडितः पयोवावौ। इदं मरुद्भ्यो॰ क्रीडिभ्यो॰ आदित्यानु॰ सुत्रामाणं पृ॰स्तयो३म्। अदितिं यज ये॰ अदितम्। महीमू षु मातरं णीतिं वौ॰ इदमदित्यै॰ त्रिष्टुभावीडितवत्यै॰ संयाजे। अग्नये स्विष्ट॰ त्वामिडते॰ वत्वां मरुतां क्रीडितां प्रीया॰ अदितेः प्री॰ जुषतां हविरग्नि सुदिति॰ भावौ॰ पुरोडाशश्चतुर्द्धाकरणाभावः। अदित्यैस्तु कर्त्तव्यम्। व्यूहने मरुतां क्रीडिना-

मदिते रज्जि॰ मरुत॰ क्रीडिनो दितिस्तु॰ सूक्तवाके। मरुतः क्रीडिनः इदं हविर्जुषतां॰ क्रत। अदितिरि॰ हवी॰ षकृत। देवा आज्यपा इत्यादिपौर्णमासवत्।

## ।। अथ महाहविः ।।

प्राणानायम्य देशकालौ सङ्कीर्त्य॰ साकमेधान्तर्गतमहाहविषेष्ट्याहं यक्ष्ये। अत्र प्रतिप्रस्थातृवर्जषडासनादि उत्तरवेदे अग्निनिधानान्तं वरुणप्रघासवत्। अन्वाधाने आग्नेयादि इन्द्राण्न्यन्तं वरुणप्रघासवत्। महेन्द्रं चरुणा विश्वकर्माणमेककपा॰ सद्यो तें॰ सप्तदशो वज्रः व्रीहि॰ वृषभो द॰ ममा॰ उत्तमे॰ एक॰ अन्वाधाय तृणैरग्नीन्परिस्तीर्य। ब्रह्मयजमानौ सञ्चरेणागत्य स्वस्थाने उपविशतः ततः पात्रासादनम्। शूर्पाग्निहोत्रहवणी, स्फ्यः, एकोनविंशत्कपालानि, पवित्रे त एव पुरोडाशपात्र्यश्चतस्रः वृषभो दक्षिणा शेषं पूर्ववत्। उपकल्पनीयानि बर्हिचतुष्टयम्। चरुपात्रचतुष्टयं तावन्ति मेक्षणानि मन्थनचतुष्टयं दृषदं दधिपृषदाज्यपात्रं चेति। ग्रहणे आग्नेयादि इन्द्राग्न्यन्तं वरुणप्रघासवत्। ग्रहणं महेन्द्राय जु॰ विश्वकर्मणे जु॰ प्रोक्षणे त्वधिकः कणान्ते पूष्ण विवेकः। पुरोडाशं चतुर्द्धा कृत्वा निर्देशः इदमग्नये॰ इदं सवितुः इदमिन्द्राग्न्योः इद विश्वकर्मणः ईक्षणान्ते नानाज्यकरणम्। उपभृति चतुर्गृहीत्वा पृषदाज्यपूर्ववत्। प्राणदाने महेन्द्र॰ विश्वकर्माणं गच्छ आसाद्याग्निमन्थनं ततः शकलदानादि अग्नावग्निरिति होमान्ते वैश्वदेववत्। ततो व्रतग्रहणम्। होतरेहीत्यादि ऐन्द्राग्नान्तां वरुणप्रघासवद्याजनम्। महेन्द्रायानु॰ महाँ इन्द्रो य ओजसा वावृधों३ महेन्द्रं यं य॰ ये महाँ इन्द्रो नृवदा॰ भिर्भूद्धौं३॰। इदं महेन्द्राय॰ विश्वकर्मणेऽनु॰ विश्वकर्मन्हविषा वा॰ विश्वकर्माणं य॰ ये॰ विश्वकर्माणं या ते धामानि यस्मा॰ धानावौ॰ इदं विश्वकर्मणे। अग्नये स्विष्ट॰ प्रेद्धो॰ महेन्द्रस्य प्रि॰ विश्वकर्मण; प्रि॰ देवा अग्ने वी॰ वौ॰ सञ्चराभ्युक्षणादि वरुणप्रघासवत्। नवानुयाजान्तं वेदेभ्यः स्वाहेति धारानुयाजाश्च। व्यूहने। अग्ने इन्द्राग्न्यो महेन्द्रस्य विश्वकर्मणोज्जिति॰। अग्निरिन्द्राग्नि महेन्द्रो विश्वकर्माणम॰ सूक्तवाके। अग्निरिदं ह॰ इन्द्राग्नी इदं हविजुषेताम्। महेन्द्र इदं ह॰ षता॰ कृत। विश्वकर्मन्निदं ह॰ कृत। देवा आज्यपा इत्यादि जुह्वाभ्युक्षणादि पत्नी संयाजान्तम्। सोमाया नु॰ आप्याय॰ ये॰ सोमत्वं सोम॰ नृचक्षावौ॰ त्वष्टागादि समिष्टयजुर्होमान्तं त्रीणि समिष्टयजूंषि जुहोति। बर्हिहोमादिकर्मापवर्गान्तम्। वैश्वदेववत्। **इति महाहविः।**

## ।। अथ पित्र्येष्टिः ।।

तत्रादौ निर्णेजनान्तं वैश्वदेवं कृत्वा अत्र प्रैषादिकं सर्वमुपांशु चरणम्। आहवनीयकार्यं दक्षिणाग्नौ दक्षिणाप्राचीनम्। पत्नीं विना यजमानः आचम्य

प्राणयामान्ते प्राचीनावीती वर्द्धनीवद्देशकालौ॰ साकमेधान्तर्गतपैत्र्येष्ट्याहं यक्ष्ये। अथाध्वर्युः प्राचीनावीती निवानी दोहयित्वा। यज्ञोपवीती आहवनीयमुद्धृत्य प्राचीनावीती सकृत् परिसमूहनादि दक्षिणाग्निमुद्धरति। अत्र सर्वं दक्षिणाभिमुखो भवति। अन्वाधानं यजमानः समिधद्वयं गृहीत्वा पितॄन् सोमवतः षट्कपालेन पु॰ पितॄन् बर्हिषदो धानाभिः पितॄनग्निष्वात्तान् मन्थेनाहं यक्ष्ये। वज्रत्रितयः। यवैर्यागः अन्वाहा॰ ममा॰ उत्तमे॰ शेषमध्वर्युः प्रत्ययेण दक्षिणाग्नौ समिधमादधाति। ततः षडासनम्। आहवनीयं पूर्वेण ब्रह्मवरणार्थमासनद्वयं ततरुपवेशनार्थं दक्षिणाग्नेः पश्चात्पुरस्ताद्वा गार्हपत्यपूर्वेण प्रणीतालम्भनार्थं दक्षिणाग्रं दक्षिणाग्निः। पुरस्तात्प्राणयनार्थमिति षडासनम्। ततो ब्रह्मा प्राचीनावीती प्राङ्मुखो यजमानो दक्षिणाभिमुखं ब्रह्माणं वृणीते भूपते॰ त्यादि। ब्रह्मयजमानौ दक्षिणाग्नेः पश्चात्स्वासने प्राङ्मुखौ पुरस्ताद्वा प्रत्यङ्मुखौ उपविशतः। उत्तरतो यजमानः यदा पुरस्तादुपविशतः। तदा वक्ष्यमाणेषु कालेषु पुनः पुनर्विपर्यासं कुरुतः। पश्चिमभागे समाप्तिपर्यन्तं तत्रैवोपविशतः गार्हपत्यूपर्वेणोदपात्रं निधायालभते। भूतस्त्वा भूत करिष्यामि ब्रह्मन्नपः पयांसि प्रणेष्यामि। पूर्वेणाहवनीयं प्रणीतः परिहरति दक्षिणाग्नेः पुरस्ताद्दक्षिणग्निं निदधाति। कस्त्वेति दक्षिणाग्नावेद दक्षिणाग्रं परिस्तरणम्। पात्रासादनम्। श्रपणस्य पश्चात्प्रागग्रं दक्षिणसंस्थपात्राणामासादनम्। अथ गार्हपत्यस्य पुरस्तात्प्राक्संस्थदक्षिणपात्रासादनमेकैकशूर्पादिषट्कपालानि भजने समानि शम्यादि उपसर्जनीपात्रद्वयं कुशमुष्टिः। तयोक्त्रन्नसन्नहनावच्छादनानि न विधृत्यौ पुरोडाशपात्र्यस्तिस्रः। गोकर्णकृतिशृतावदानं यवौषधनं न प्राशित्रहरणे अन्वाहार्यतण्डुलानन्तर्धानकटं॰ न पूर्णपात्रं न कर्मापवर्गः अथोपकल्पनीयानि इध्माबर्हि प्रकृति एक शलाक॰ उदपात्रं दुग्धं योक्त्रं चेति। दक्षिणाभिमुखेन गार्हपत्यमपरेण स्फ्योपहितपात्र्यामौषधकरणं सव्यं जान्वाच्य मन्त्रे विशेषः। धूरसि॰ र्वामः पितॄणामसि व॰ जुष्ट तमं पितृहूतमम्। ग्रहणे पितृभ्यः सोमपितृवद्भ्यो जुष्टं॰ पितृतीर्थेन ग्रहणं तूष्णीं चतुर्थं पितृभ्यो बर्हिषद्भ्यो जु॰ पितृभ्योग्निष्वात्तेभ्यो जु॰ भूताय त्वेति॰ ॐ देवीरापो यज्ञपति देव पितृयुवं प्रोक्षणं पितृभ्यः सोमवद्भ्यस्त्वा जु॰ पितृभ्यो बर्हिषद्भ्यस्त्वा जु॰ वज्रप्रोक्षणं दैव्याय पित्राय कर्मणे शुन्धध्वं पितृयज्यायै उलूखलमुसलशम्यादृषदुपलं शूर्पापात्री उपवेशकपालेषु अजिनवत् दैव्याय पित्र्याय॰ देवपितृयज्यायै॰ आज्यस्थाली पित्र्यायक॰ पितृयज्याः उपसर्जनीपात्रद्वयं दैव्यायः मिदेव पित्र्या॰ कुशमुष्टिं पात्र्याय॰ अन्वाहार्यपात्रं दैव्याय पित्रा॰ देवपित्रे॰ वेदितृणमभिः योक्त्रं स्रुवः जुहूः उपभृतच्च सव्यं दैव्याय कर्मणे। देवयज्यायै॰ ध्रुवा पुनः प्राचीनावीती। दैव्याय पित्र्याय॰ परिधिं नाज्येति। पित्र्याय क॰ पुरोडाशपात्रं दैव्याय पित्र्याय॰ हविष्कृदेहि पित्र्याय॰ शृतावदानमन्वाहार्यं

तण्डुलाश्चेति। असञ्चरे प्रोक्षणीं निधाय कृष्णाजिनादि गार्हपत्यं पूर्वदक्षिणोत्तरं कृष्णाजिनास्तरणम्। अग्नेस्तनू०। पितृवीतये त्वा गृह्णामि बृहद्ग्रावेति मुसलमादत्ते तिष्ठन् स इदं पितृभ्यो० हविः शमी० हवि० देहीति त्रिराह्वयति। अथाग्नीत् अपसव्यं कृत्वा कुक्कुटोसीत्यादि पात्र्यामोप्यान्तं कृत्वा पुरोडाशार्थे पृथक्करणं इदं तृणं सोमवताम्। सकृत् फलीकरणम्। पितृभ्यः शुन्धध्वमिति कणान्निदधाति। कपालोपधाने आ पितृयजं वह। गार्हपत्यस्य दक्षिणार्द्धे षट्कपालोपधानम्। ध्रुवमसीति मध्यमम् उत्तरतः पञ्चमं मध्यात्पूर्वं षष्ठं भर्जनं दक्षिणाग्नौ ध्रुवमसीति मन्त्रेण तत्र नाङ्गारावाहनम्। नाहरणं नाभ्यूहनं सव्याशून्येङ्गारं निदधात्यग्ने ब्रह्मेति उदकोपसर्जन्यधिश्रयति। गार्हपत्ये क्षीरोपसर्जन्यधिश्रयणम्। दक्षिणाग्नौ कृष्णाजिनादाय पिष्टसंयवनान्ते विशेषः। धान्यमसि धिनुहि पितॄन् प्राणा० वेदबन्धने। वेदोसि० देवपितृभ्यो वेदो भव० दीर्घामित्यादि आज्यपुरोडाशाधि-श्रयणान्तम्। यवकुलिकाधिश्रयणं दक्षिणाग्नौ योगपद्ये। उरुप्रथा इति प्रथयति। पात्र्यङ्गुलिप्रक्षालनयोः पृथक् स्थापनं गार्हपत्यादेव पर्यग्निकरणम्। अन्तरि० उद० देवस्त्वेति श्रपणं मन्त्रवर्जं धानान्तं मा भेरित्यालभते। पुरोडाशमभिमृश्य धानोद्वासनम्। देवो व इति पात्र्यामोप्याभिमन्त्रयते। तूष्णीं कृष्णाजिनादानमन्यपात्रेभ्योवधूनोत्यप उपस्पृश्य प्रत्यग्ग्रीवमास्तरणानि तत्रैवोलूखले सकृत्फलीकरोति। पितृभ्यः शुन्धध्वमिति उपासनार्थं कणानि दधाति। समं विभज्यालभते। इदं पितॄणां बर्हिषदाम् इदं पितॄणामग्निष्वात्तानाम्। पुनस्तूष्णीं कृष्णाजिनादानवधूननास्तरणम्। दृषदनिधानं शम्योपोहितोपलनिधानान्ते धान्यमसि पितॄनित्यादि पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्त्वेति श्रपणस्य पश्चाद्वर्त्तवेदि वा क्षीरोपसर्जनी राजन पत्यन्यः पवित्राभ्यां प्रतिगृह्णामि समाप इति। ॐ समाप० भिः पृच्यन्ताम्। सम्मधुमतीर्मधुमतीभिः पृच्यन्ताम्। जनयत्यै त्वेति एक शलाकया अप्रादक्षिण्येन संयवनं पिण्डं कृत्वाऽवदानचतुष्टयकरणम्। अतमेरुरिति शृतावभिवासयति। ॐ अतमे० भूयात् पात्र्यङ्गुलिप्रक्षालनं द्वितीयसहान्येभ्यो निनयति अभितप्य। आहवनीयं पूर्वेण दक्षिणसंस्था व० त्रयकरणं तिस्रैः परिवृतश्चतुरस्रं कृत्वा तन्मध्ये अवान्तरा दिक्स्रक्ति प्राकृतिवेदिं करोति। तत्र प्रकृतिवत् वेदिमानमङ्गुलखातः उत्तरतः उत्करे करोति। ततो वेदिमध्ये दक्षिणाग्निरन्तुं कृत्वा तत्र सकृत्परिसमूहनादि पञ्चभूसंस्कारान् कृत्वा खर्परागिन परिस्तरणसहितदक्षिणाग्निं मध्ये स्थापयेत्। आहवनीयं पूर्वेण प्रणीतानुहरणम्। ब्रह्मयजमानौ अनुगच्छतं यथोपविष्टौ तथोपविशतः। अन्वाहार्यं दक्षिणाग्नावधिश्रयति। देवस्यत्वेति स्फ्यमादायेत्यादि सम्मार्जनान्ययास्यत्यन्तं मन्त्रेण विशेषः। आददेऽध्वरकृतं देवेभ्यः सव्ये कृत्वा पृथिव्यै देवपितृयजन्यो०

अपारुं पृथिव्यै देवपितृयजमान॰ मा सं॰ बृहस्पते॰ वो देवाः पितरः सदनाति सन्त्वस्यां॰ प्रोक्षणीरासादयेध्वं॰ सम्मृज्याज्येनो देहि। ऊर्ज्जे त्वाज्यमुद्वास्य। अदब्धेनेत्यध्वर्युराज्यमवेक्षते। सुहूर्देवपितृभ्यो धाम्ना वेद्यां करोत्यपरं प्रोक्षणीभ्यः। सवितुस्त्वेत्याज्यमुत्पुनाति तेजोसीति। ततोध्वर्युः सव्यं कृत्वा प्रकृतिवदाज्यग्रहणम्। ॐ धाम नामासि प्रियं देवपितृणामनाधृष्टं देवयजनमसि। पुनः प्राचीनावीती स्थाल्यपहरणम्। इध्म प्रोक्षतीत्यादि पवित्रे प्रणीतासु निधानान्तं बर्हिविस्रंसनप्रस्तरणग्रहणं यूतश्च विस्रंस्य तेन सह बर्हिरग्रे गृहीत्वा वेदेरुत्तरापरकोणादारभ्य अप्रदक्षिणमूर्णम्रद॰ सस्थान् देवपितृभ्यः सकृन्मन्त्रेण तृणन्नग्निं पर्येति। यत्रारम्भस्तत्रापवर्गः। प्रस्तरमभ्रं अवशिष्टानावत्प्रतिगमनं परिस्तरणं कुर्वन् ततः सकृदिति रथ्यावृत्तम्। इध्मात्समिधमादायेत्यादि प्राणदानान्तं समानं मन्त्रविशेषः। ऊर्णम्र॰ सस्थं देवपितृभ्यः विधृतिवर्जं प्रस्तरास्तरणम्। यस्ते प्राणः पशुषु प्रविष्टो पितृणां विष्टामः भूत्वा पितृसोमवतो गच्छ पितृन् बर्हिषदो गच्छ पितृग्निष्वात्तान् गच्छ। प्रत्यनक्ति कपालानि कपालभर्जनोद्वासनं प्रियेण धाम्नेति वेद्यां प्राक्संस्थं-हविरासादनम्। ध्रुवा असदन्नित्योक्तं लम्भनम्। आत्मालम्भः उद॰ व्रतग्रहणम्। गार्हपत्यदक्षिणाग्निमन्तरेण गत्वा दक्षिणाग्निरुत्तरतो दक्षिणाभिमुखस्तिष्ठन्। दक्षिणाग्निमीक्षमाणोऽप उपस्पृश्य त्वग्ने व्रतपते इति। होतृसदनं कृत्वा होतरेहि होता अपसव्यं कृत्वा सञ्चरेण प्रविश्य पूर्वावेदि श्रोणि। पूर्वे दक्षिणाभिमुखस्तिष्ठति। अग्नये समिध्यमा ब्रह्मा प्रजापतये॰ ततः सर्वे यज्ञोपवीतिनः आज्यभागान्तं ब्रह्मयजमानयोः पश्चात्। पुरस्तादग्नीत्। यज्ञं देवता॰ ब्रह्म प्रसूतो॰ ईक्षमाणः नमः क्रन्दं जललोपः। सन्तत्वन्निव मेऽनूब्रूहि। इदमहं तृतीयेन वज्रेण द्विषन्तमवबाधे। पञ्चदशामिध्मकाष्ठानां समं त्रिधां विभक्तानां ॐ हिं ॐ उशन्तस्त्वा॰ धीमहि शन्नुशति आवहे। त्रिरनवानमनुर्द्धिवारं पठेत्। प्रतिप्रणवमाधानमिध्मस्य। एका रक्षणीया। अग्ने महाँ असि ब्राह्मण भारत। अर्षनोच्चरणाम्। देवेद्धोम त्विद्ध॰ रस्यावह देवान् पितृन् यजमानाय॰ अग्निमग्न आवह सोममावह। पितृन्सोमवत आवह। पितृन् बर्हिषद आवह। पितृनग्निष्वात्तानावह। देवाँ आ॰ अग्निं हो३ स्वं महिमानमावहेत्येवं न भवति। आ च वह जातवेदेत्यादि इध्मसन्नहनान्यादायेत्यन्तम्। उत्तराधरमन्त्रे ॐ इत इन्द्रो वीर्य॰ स्विष्टकृते देवपितृभ्य इदं आज्ये॰ स्वाहा। ॐ श्रावय अस्तु श्रौ॰। सीद होतः स्व उ लोके॰ वयो धाः अग्निर्देवौ दैव्याहोंतेत्यादि मानुषः इत्यन्तं होतृवरणं नास्ति। एतत्वेत्यादि आ गोपायन्ति न व्रतजपः आत्मानमालभते। उद॰ इन्द्रमन्वारभामहेत्यादि होतृषदनात्तृणमङ्गुष्ठौ कनिष्ठिकाभ्यामादायेत्यन्तम्। तूष्णीं तृणं निरस्यति। उद॰ इदमह मर्वाव॰ धृतवती॰ देवपितृयवं विश्ववारमीमहे

देवान् पितॄन्। इडेन्यान्नमस्याभं जातं यज्ञियान्। ततोध्वर्युः स्रुचमादाय हविषामग्नेश्चान्तरेण प्रत्यतिक्रम्याश्राव्याह। बर्हिवर्ज चत्वारः प्रयाजाः चत्वारोभमेत्य स्याभावः। न समानयनम्। उत्तमे प्रयाजे स्वाहाग्निं० सोमं पितॄन् सोमवतः स्वाहा पितॄन् बर्हिषदः स्वाहा पितॄनग्निष्वातान् स्वाहा देवा आ० इदमग्नये सोमाय पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्यः पितृभ्योग्निष्वात्तेभ्यो देवेभ्य आज्यपेभ्योऽग्नये कव्यवाहनाय स्विष्टकृते च न मम। एत्युजुह्वाभिघारणम्। जीववन्ता आज्यभागौ अग्नये० आने सुच अग्ने सुचेतनारयि विश्वाययोपसम्। मीडीकन्धेहि जीवसो३म्। आश्राव्यादि। सोमाया० त्वेच सोमनो वसो जीवानुनमरामहे प्रियस्तोत्रो वनस्यतौ। आश्राव्याह ततः प्राचीनावीती ब्रह्मयजमानयोरग्नीध्राय प्रतिपरिगमनं वा प्रधानयागे। पितृभ्यः सोमवद्भ्योनु० उदीरताम० असुँ य० वेषो३मङ्गिरसो नः पितरः तेषां व० द्वे अनुवाक्ये अन्वाह। जुह्वां पितृतीर्थेन सकृदुपस्तीर्य पुरोडाशधानामन्थेभ्यो मध्यात्सकृत्सकृदवदाय सहैव जुह्वामवदाय द्विरभिघारणम्। क्षताभ्यङ्गः अनतिक्रमणं च। ॐ स्वधा अस्तु स्वधा। पितॄन् सोमवतो यज ये स्वधामहे पितॄन् सोमवतो ये नः पूर्वे पितरः सोम्यासोनू० तेभिर्य० मत्तु स्वधा नमः। इदं पितृभ्यः सोमवद्भ्योनु० पितृभ्यो बर्हिषद्भ्योनु० बर्हिषदः पितर० उत्तरतो धानामन्थपुरोडाशानां सकृदवदाय द्विरभिघारणं क्षताभ्यङ्गः नातिक्रमणम् ॐ स्वधा अस्तु स्वधा। पितॄन् बर्हिषदो यज। ये स्वधामहे पितॄन् बर्हिषद उपहूताः पितरः सोम्यासो बर्हिष्ये० त आगमन्तु० त्वस्मान्स्वधा नमः। इदं पितृभ्यो बर्हिषद्भ्यो अग्निष्वात्तेभ्यो०। अग्निष्वात्ताः पितर एह गच्छत अनाहते तोये अग्निष्वात्ता० तेभ्यः स्वधा०। जुह्वामुपस्तीर्य दक्षिणातो मन्थपुरोडाशानां सकृदवदाय द्विरभिघार्य क्षताभ्यङ्गः नातिक्रमणम्। ॐ स्वधा अस्तु स्वधा पितॄनग्निष्वात्तान्यज। ये स्वधामहे पितॄनग्निष्वात्ता नू० अग्निष्वात्तानू नु० तनो वि० योणां स्वधा नमः। इदं पितृभ्योऽग्निष्वात्तेभ्यो० अग्नये कव्यवाहनाय स्विष्टकृतेनु० यमग्ने कव्यवा० तन्नो गीर्भिः युवो३म्। यो अग्निः कव्यवाहनः पितृन् यक्षदृता० प्रेदु ह० भ्य ओ३म् उपस्तीर्य। पुरस्तान्पुरोडाशधानामन्थेभ्यः सकृत्सकृत्सहावदानग्रहणम्। द्विरभिधारणं न क्षताभ्यङ्गः। नातिक्रमणं ॐ स्वधा अस्तु स्वधा अग्नि कव्यवाहनं स्विष्टकृतं यज ये३ स्वधामहे अग्निं कव्यवाहनं स्विष्टकृतं मया प्रि० सोम प्रि० पितॄणां सोमवता प्रि० पितॄणां बर्हिषदा प्रि० पितृणामग्निष्वात्तानां प्रि० देवानामा० यक्षत्स्वं० जुषतां हविस्त्वमग्न ईडितः कव्यवाहनावा० प्रादाः पि० स्वधा नमः। इदमग्नये स्विष्टकृते। सञ्चरमभ्युक्ष्य। ततो मन्थकदेशं होत्रे प्रयच्छति। इडोपहूतेत्यादि निगदने उत्तरस्यां देव पितृयज्यायामुपहूतो भूयसि हविष्करण उपहूतो देवा० पितरो

म इदं हविर्जुषतामिति तस्मिन् उपहूतः होताध्वर्युब्रह्माग्नीदवघ्राय बर्हिषि निदधाति। उत्करे वा यजमानस्य प्राणापानौ पानं प्रस्तरे ते करोति। अन्वाहार्यमभिघार्योद्वास्येत्यादि दक्षिणादानान्ते। अग्र दक्षिणं वेदिपरिसेकः। यजमानेनोदपात्रेण उत्तरापरश्रोणेरारभ्य परिषिञ्चति। उत्तरा परमे श्रोण्यां गोत्रपितरमुकशर्मन् अवनेनिक्ष्व प्रदक्षिण इत्यस्यावृत्तिः। पुनर्दक्षिणकोणादारभ्य तथैव परिसेचनम्। गोत्र पितामह अव० इतरथावृत्तिः। गोत्र प्रपितामह इतरथावृत्तिः। ततः सर्वेभ्यो हविर्भ्यः सव्ये पाणौ समवदाय मिश्रीकृत्य यथावनक्तिं पिण्डान् ददात्यसावेतत्त इति गोत्र अस्मत् पितः एतत्तेन्नमिति उत्तरापकरणे। पितामह एतत्तेन्नमिति। उत्तरापरकोणे प्रपितामह एतत्तेन्नं उत्तर पूर्वस्य पाणिनिमार्जनम्। अत्र पितरो० यध्वम्। ततः सर्वे यज्ञोपवीतिनो भूत्वोदं चतु उपनिष्क्रम्याहवनीयोत्तरमुपतिष्ठते। अक्षन्नमीमदन्तेति द्वाभ्याम्। अक्षन्नमी० हरी २ मनोन्वा ह्वामह इति गार्हपत्यं तिसृभिः। मनोन्वा० आ न इ० सर्वे प्राचीनावीतिनो भूत्वा प्रविश्य अमीमदन्तेति पिण्डदातुर्जपः अमीमद० यिषत। प्रत्यवनेजनं पूर्ववत्। प्रदक्षिणं परित्सेकश्च अप्रदक्षिणम् इतरथावृत्तिः नीविं विस्रंस्य। नमो व इति षडञ्जलिकरणम्। ब्रह्मयजमानौ पश्चादवस्थापनं पुरस्तादग्नीत्। समस्योल्मुके इत्याद्य बर्हिवर्जमनुयाजद्वयवरणं देवेभ्यः स्वाहा इति धारानुयाजाः। स्रुक् निधानं मन्त्रे विशेषः। देवो अग्निः स्वि० नग्नेयां देवान्पितॄन्० ततः सर्वे प्राचीनावीतिकरणम्। ब्रह्मयजमानाग्नीध्रात् पुरस्तादागत्योपविशति। एत्य जुहूपभृतौ व्यूहति। पितॄणां सोमवतां पितॄणां बर्हिषदां पितॄणामग्निष्वात्ताना-मुज्जितिमनुप्रोक्षामि। पितरः सोमवतः पितरो बर्हिषदा पितरोग्नि० त्तास्तमपनुदन्तु। ना प्रोक्षामि। अभ्युक्ष्य जुह्वापरिधिननक्तिः यथापूर्वं। वसुभ्यस्त्वेत्यादि यजमाननामग्रहणं वर्जं यथा दैवतसूक्तवाके पठेत्। अग्निही० सोमई० पितरः सोमवन्त इदं० पितरो बर्हिषद० देवा आज्यपा० अग्निहोत्रेणे० अस्या मृधेद्वाशयां देवपितॄन् मायाशास्ते। उत्तरां देवपितॄन्य० तदस्मै देवः पितरो रासतां तदग्नि देवो देवेभ्यः पितृभ्यो वनुज्ञाय० नमो देवेभ्यः पितृभ्यो अनुप्रहरे सूक्तेनानुप्रहरणम्। तूष्णीमात्मानमालभते। उद० अग्नीत्संवदस्वेत्यादिशंयो ब्रूहीत्यन्तम्। तच्छँयो० शं चतुष्पदे। इति संवतं भवतीदं कर्म परिधिप्रहरणकालतूष्णीं परिध्युपस्पर्शनम्। संस्रवभागा इति संस्रवां जुहोति। घृताच्युधुरिति दधाति उलूखले० पिष्टलेपां जुहोति। वेदविमोकः वेदोसि० देवपितृभ्यो वेदो भूया० आ वेदेस्तरणं न समिष्ट-यजुहोमा सम्बर्हिरिति बर्हिर० त्स्वाहा। बर्हिः परिधाग्नौ प्रास्यति। सदैव तूष्णीं वा समन्त्रको वा पृथक् परिधिप्रक्षेपः। वेद्यां प्रणीता निनयति परित्यकस्त्वेति। पोषाय निनयामि। पुरोडाश प्रथमकपालेन कृष्णान्नपास्यत्यधः कृष्णाजिनं दृसामीति न

पूर्णपात्रग्रहणम्। न विष्णुक्रमणं सञ्चरविमोकः। न कर्मापवर्गः। हविरुच्छिष्टानां ध्रौवाज्यं चाग्नौ प्रक्षेपः उदके वा। ततः सर्वेषां सव्यकरणं उदकः स्पर्शः। अस्य पित्रेष्टेः समृद्ध्यर्थं यथासम्पन्नेनान्नेन ब्राह्मणान् भोजयिष्ये। उद्वाहे पुत्रजनने पुत्रेष्टयोः पैतृके मखे। एभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत। **इति पित्र्येष्टिः।**

## ।। अथ त्र्यम्बकेष्टिः ।।

अथ त्र्यम्बकाः। अत्रोदीचीं प्राचीवत् सर्वमुदङ्मुखेन कर्म भवति। तूष्णीति-कर्त्तव्यता। किञ्चिदपि होत्रकनास्ति। सपत्नीको यजमानः गार्हपत्यस्य पश्चादुपविश्य देशकालौ सङ्कीर्त्य श्री परमेश्वरप्रीत्यर्थं साकमेधान्तर्गतत्र्यम्बकान् करिष्ये। दक्षिणाग्न्युद्धरणमग्न्वाधानं रुद्रत्र्यम्बकेष्ट्याहं यक्ष्ये। दक्षिणगाग्नौ समिद्द्वयनिधानं षडासनं ब्रह्मवरणं ब्रह्मयजमानौ दक्षिणाग्नेः पुरस्तात्प्रत्यङ् मुखोपविशतः उत्तरतो ब्रह्मादि दक्षिणे यजमानः दक्षिणाग्नेः पश्चात्प्रणीतानिधानम्। दक्षिणाग्नेरेव परिस्तरणं गार्हपत्यस्य दक्षिणतः उदक्संस्थानि प्रत्यगग्राणि असम्भवे प्रत्यक्संस्थान्युदगग्राणि अथवा गार्हपत्यस्य पश्चादुदक्संस्थं प्रत्यगग्राणां पात्रासादनम्। कर्मापवर्गान्तं पूर्ववत्। तत्र विशेषः पुरोडाशं संख्यया कपालानि। उपभृतानन्तरमध्यपलाशपत्रं पुरोडाशपात्र्यैका न होतृषदनं न प्राशित्रहरणेनान्तर्धानं कटम्। अथोपकल्पनीयानि बर्हिः इध्मकाष्ठद्वयं शिक्यार्थं बर्हिः वेणुयष्टिः ततः गार्हपत्यस्य पश्चादुदगग्रापात्री निधायोदगग्रात्परं तस्याधः प्रेरयित्वा शूर्पाग्निहोत्र-हवण्यादानं तयोः प्रतपनम् उद॰ ओषधं प्रतिगमनं पात्री बिलालम्भः हविषावेक्षणं अपद्रव्यनिरसनम् उद॰ आत्मालम्भनं प्रजासङ्ख्यया एकाधिकानां चतुर्मुष्टिग्रहणं शेषाभिमर्शनं प्राङीक्षणमुत्थानं गमनं पश्चाद्धविरासादनं पवित्रकरणं हविः प्रोक्षणं वज्रप्रोक्षणं तं गृहीत्वा पात्राणां प्रोक्षणं असञ्चरे प्रोक्षणीर्निधानं कृष्णाजिनादानं अवधू॰ तत उद॰ गार्हपत्यमपरेण दक्षिणाग्रीवस्यास्तरणं सव्याशून्ये उलूखलनिधानं आह्वानं कण्डनं शूर्पादानं हविरुत्पवनं निष्पवनं विवेकीकरणं तुषनिरसनं पात्र्यामोप्याभिमन्त्रणं त्रिःफलीकरणं कणनिधानमग्नीदुपवेशमादाय गार्हपत्यस्य पश्चादुदङ्मुख उपविश्य गार्हपत्यस्योत्तरार्द्धे प्रत्यक्संस्थानि कपालानि प्रथमकपालधर्मेणोपदधाति। प्रतिपुरोडाशमेकैकम्। तत्राग्न्यङ्गाराणां दक्षिणत उपहूतम् उत्तरतः कपालोपधानस्य विधानात् दृषलानामङ्गारैरभ्यूहनमुप-सर्जनीरधिश्रयति। पुनः कृष्णाजिनादानं अवधूननं दक्षिणग्रीवमास्तरणं सव्याशून्ये दृषदनिधानं पश्चाच्छम्यामुपोहनमुपलनिधानं तण्डुलानोप्यपेषणम् आज्यनिर्वापो वेदबन्धः प्रोहतं ईक्षणं सपवित्र्यां पिष्टावपः। उप सन्यानयनं सपवित्रमासेकः। संयवनं कपालसङ्ख्या पुरोडाशकरणम्। अतिरिक्तवर्जं सर्वेष्वेकैकमवदानकरणं

सर्वेषामालभनं आज्यपुरोडाशाधिश्रयणम् अद्भिरभिमर्शनं पिष्टलेपायनयनं पात्र्यङ्गुलिप्रक्षालनं पात्रीमभितप्य आस्फ्योदकरणम् अन्वाहार्याधिश्रयणं चतुष्पथे गत्वा आहवनीयदेशे करणं वेदिमानं वेदिसमूहनं उत्करकरणं सतृणवज्रादानं सव्ये कृत्वालम्भनं वेद्यां तृणनिधानं प्रहरणं पुरीषादानं प्रेक्षणम् उत्करे करणम् एवं द्वितीयतृतीयप्रहरणम् अग्नीध्रोभिन्यासः। चतुर्थं सतृणं पूर्वपरिग्रहः। वेद्यां त्रिरुल्लिखय अग्नील्लेखा सम्मृशति अभ्र्या खननम् इत्यन्तं प्रतिपुरोडाशकेपि द्विल्लेंखः उत्तरपरिग्रहः अनुमार्जनं प्रोक्षणीर्धारणं वेद्यां निधानं स्फ्योदकप्रहारः। पाण्योरवनेजनं स्फ्येध्मा बर्हिरासादनं वेद्राग्ननिष्पत्तिः गार्हपत्यं गत्वा पूर्ववत्सम्मार्गः स्रुवः जुहूः पलाशपत्रम् उपभृत् धुवा शृतावदानं पुरोडाशपात्रीणां सम्मार्गः सम्मार्गप्रतिपत्तिः योक्त्रबन्धनम् आज्योद्वासनं पत्न्याज्यावेक्षणं वेद्यानयनम् आज्योत्पवनं प्रोक्षणीरुत्पवनम् आज्यावेक्षणं ध्रुवायामेव चतुर्गृहीतग्रहणं दक्षिणाग्न्युल्मुकमादाय चतुष्पथे गत्वा वेद्यामाहवनीयस्थानं पञ्चभूसंस्कारान् कृत्वा अग्निदेशे निधानम्। प्रणीता ब्रह्मयजमानयोः सहानुगमनं स्वस्थाने निधानं स्थाल्यपहरणम् इध्माविस्रंसनं इध्माप्रोक्षणं वेदिप्रोक्षणं बर्हिग्रहणं वेद्यां निधानं बर्हिप्रोक्षणं मूलावसेकः प्रणीतासु पवित्रीकरणं बर्हिविस्रंसनं पुरस्तात्प्रस्तरग्रहणं ब्रह्मणे प्रदानं बर्हिस्तरणं समित्प्रस्तरादानम् आहवनीयेक्षणम् आवृत्य विधृत्योस्तरणम् अभिन्यासः जुह्वासादनं पलाशपात्रासादनम् उपभृद्ध्रुवासादनम् एत्य पुरोडाशयोर्विभस्मीकरणं पुरोडाशपात्रीस्थापनम्। तयोरुपस्तारः पुरोडाशमभिघार्य एकस्यां पात्र्यां सर्वेषामुद्वासनं यक्षे प्राणदानं आज्यस्थाली-पूर्वकमासादनं वेद्याम्। आज्यस्थालीपूर्वकसर्वेषां हविषामालम्भनम् आत्मालम्भनम् उद॰ व्रतग्रहणं वेदेनाहवनीयोपवाजनं पूर्वाघारः अग्निसम्मार्गः अञ्जलिकरणम् उद॰ स्थाल्यां सकृद् घृतेन इन्द्राय स्वाहेति तिष्ठत एवोत्तराघारः। शेषेण ध्रुवामभिघारणम्। न होता प्रयाजानस्विष्टकृत्र प्राशित्रं नेडाभागानुयाजन-पत्नीसंयाजनं दक्षिणाग्निहोमः। ध्रुवायामाप्यावतश्चतुर्गृहीतग्रहणम्। गृहीतेनाग्नये स्वाहा सोमाय स्वाहेत्याज्यभागावुपविष्टस्यैव। प्रधानयागे। पलाशपत्रमुपस्तीर्य अतिरिक्तिवर्जे शृतावदानेन सकृदेव दानग्रहणम्। प्राणदानपक्षेत्युपस्तरणम् एष त इति होमः इदं रुद्राय न मम अतिरिक्तिस्याखूत्करोपकरणम्। एष ते रुद्र भागः आखुस्ते पशुः इत्युपकिरति। आखुत्कीर्णोपांशुरासौ अन्तर्हितं करोतीत्यर्थः। आखूत्करादागत्य यजमानब्रह्माध्वर्योग्नीध्राः। अवरुद्रमदीति जपः। आभेषजमसि भेषजं॰ स्रुङ्निधानं सञ्चराभ्युक्षणं प्रस्तरे पवित्रकरणम् अन्वाहार्योद्वास्य दक्षिणादानम् अग्निसम्मार्गः पालाशपत्रमुतरं कृत्वा जुह्वामेव व्यूहनम् आप्युक्ष्य जुह्वा परिध्यञ्जनं प्रस्तरग्रहणं विधृतीस्थाने कृत्वा प्रस्तराजन् नीचैर्हरणं

प्रस्तरप्रक्षेपः। तृणप्रक्षेपः आत्मालम्भः उद० परिधिप्रक्षेपः संस्रवाहुतिः धूरिनिधानं वेद्यालम्भः पिप्पलेषाहुतिः वेदयोक्त्रविमोकः आवेदेनास्तरणं वाताय स्वाहेति समिद्यजुः बर्हिहोमः प्रणीताविमोकः कणोपासनं पूर्णपात्रनिनयनं तद्ग्रहणं विष्णुक्रमणं भूम्यावेक्षणं प्राङ्ईक्षणं आहवनीयेक्षणं सूर्यावेक्षणं वर्त्तनं प्रागागमनं पुत्रनामानुधानं व्रतविसर्गः ब्रह्मार्पणकर्मापवर्गाधानं त्रिरग्निपरिगमनं कुर्वन्ति यजमानस्य सपत्नी सहिताः ऋत्विजः सर्व्यैरनुपात्राणाम् अप्रादक्षिण्येन त्र्यम्बकं यजामहे० मन्त्रेण दक्षिणोरुद्राघ्राता प्रदक्षिणं त्रिः परिक्रमणम्। ततो यजमानेन पुरोडाशमादायोर्ध्वं प्रक्षिप्य पुनः अञ्जलिना प्रतिगृह्णामीत्यादि भूमौ पतन्ति तर्हि तेषामुपस्पर्शनं सर्वान् पुरोडाशान्विभज्य शिक्ययोः कृत्वा वेणुयष्ट्या उभयतः दृढीकृत्वावधारणम्। स्थाल्यु वृक्षवंश वल्मीकानामन्यतमस्मिन् एतत्ते रुद्रावसन्ते कावसः। इति मन्त्रेणोत्क्षेपनवदासृजति। ॐ कृत्तिवासाः। अहिंसन्नः शिवोतीहि इति मन्त्रेण निश्चलीकरणम्। अनवेक्षमानगमनम्। शालामेत्य सर्वेषामाचम्य समारोपः मथित्वा गार्हपत्ये स्थापनम्। अस्य साकमेधपर्वणः साङ्गतासिद्ध्यर्थं स्मृत्युक्तान् शतसङ्ख्याकान् ब्राह्मणान् भोजयिष्ये। इति।

## ।। अथ शुनासीरीयपर्व ।।

पञ्चमेह्नि शुनासीरीयम्। अत्र समारोपोदवसानेन भवतः। बर्हिवर्जं पौर्णमासवद्धर्माः प्रातर्होमान्तरं खर्परिणाग्निं गृहीत्वा गार्हपत्ये पञ्चभूसंस्कारान् कृत्वा अग्निस्थापनम्। पश्चात्सपत्नीको यजमानः प्राणानायम्य देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं शुनासीरीयपर्वणाहं यक्ष्ये। उद्धरणम् अग्न्यन्वाधानं षट् समिधो गृहीत्वा आग्नेयादि पौष्णान्तानां पूर्ववत्। शुनासीरौ द्वादशकपालेन पुरो० वायुं धारोष्णेन पयसा। सूर्यमेककपालेन पुरो० सद्योहं यक्ष्ये। तत्र पञ्चदशो वज्रः व्रीहिभिर्यागः शीरोष्टारौश्चेनोश्वो वा दक्षिणा। अभावे गौः ममाग्नेपक्षः उत्तमे काले एके च। अन्वाधानोत्तरं शाखाच्छेदनं पूर्ववत्। वायवे भागमिति विशेषः। षडासनादि ब्रह्मवरणम्। शुनासीरीयेण पर्वणाहं यक्ष्ये। पात्रासादने एकोनत्रिंशत्कपालानि। पुरोडाशपात्रश्चतस्रः। शृतावदानानन्तरं दोहनचतुष्टयम्। अश्वो दक्षिणा अथोपकल्पनीया इध्माबर्हिचतुष्टयम्। चरुपात्रत्रयं तावन्ति मेक्षणानि ग्रहणे। आग्नेयादिपौष्णपर्यन्तानां वैश्वदेववत्। शुनासीराभ्यां जुष्टं० प्रोक्षणे त्वाधिकः प्राणदाने अग्निङ्गच्छेत्यादि शुनासीरौ गच्छ सूर्यं गच्छ आवाहने शुनासीरावावह उपांशुः वायुम्, उच्चैः आवह सूर्य आव० उत्तमे प्रयाजे शुनासीरौ स्वाहा वायुं स्वाहा सूर्यं स्वाहा देवाँ आज्य० इदमग्नये पूष्णे शुनासीराभ्यां वायवे सूर्याय देवे० इत्यजुह्वाभिघारणं प्रयाजे शेषेण किञ्चिदाज्यं वायवार्थे पृथक् निधाय

पुष्टिमन्तावाज्यभागौ गृहमेधीयवत्। अग्नयेनुब्रूहि। ॐ अग्नितारयितमा० ॐ सोमायानु० गयस्फानो० प्रधानयागः। आग्नेयादिपौष्णपर्यन्तं पूर्ववत्। ॐ शुनासीराभ्यामनु० शुनासीरौ शुनं सु फाला वि० इवौषट् इदं शुनासीराभ्याम्०। ततः उपश्रवादि श्रपणं परिक्षालनं वर्जं गवां दोहः। उद्वास्य वायुं गच्छति प्राणदानं प्रियेण धाम्नेत्यासादनं ध्रुवा असदन्नित्यालम्भनं नात्मालम्भः प्रयाजशेषेणाज्येन हविषा यागः वायवे अनुब्रूहि। ॐ तव वायवृ० महो३म्। ॐ श्रावय अस्तु वायुं यज ये यजामहे। वायुमध्वर्यवश्च कृत्वा सोमधूनिप्रवायवे भरतचारुशुभ्रम्। होतेवनेः प्रथमः पाह्यस्य देवमध्वोरविमाने यादायावौ० इदं वायवे न मम। ॐसूर्यायानु० उदुत्यं जातवेद० सर्वे अवदाय द्विरभिघार्य निष्क्रम्याश्राव्याह। ॐ सूर्यं यज चित्रं देवा० वौषट् इदं सूर्याय०। अनुष्टुभौ चित्रवत्यौ संयाज्य। अग्नये स्विष्टकृतेनुब्रूहि। ॐ त्वां चित्रश्रवस्त० ये यजामहे अग्निं स्विष्ट० पूष्णः प्रिया० शुनासीरयो प्री० वायो प्री० सूर्यस्य प्री० देवानां० जुषतां हविर्यद्वादिष्ठन्तदग्नये० वौषट्। इदमग्नये स्विष्टकृते। सञ्चराभ्युक्षणादि इडाभक्षणान्तं शुनासीर्यं पयसञ्चतुर्धाकरणानामभावः समस्यमार्जनं शाखापवित्रयोः शाखायां स्थापनम्। व्यूहने० अग्ने० पूष्णः शुनासीर्योः सूर्यस्योज्जिति० अग्निं० पूष्ण शुनासीरौ वायु० सूर्यस्तमपनुदन्तु० सूक्तवाके। अग्निरि० पूष्णोरङ्कृत० सूर्येदं हविकृतरेवा आ०। सह शाखाग्रस्तरानुप्रहरणम्। परिधिः सहोपवेषहोमः। जुहोमि स्वा० संस्रवहोमादि कर्मापवर्गान्तं समानम्। एकं समिष्टयजुः अत्र पञ्चप्रयाजा इति त्रयोनुयाजा इति। अस्य शुनासीरीयपर्वणः साङ्गता० सिद्ध्यर्थे स्मृत्युक्तान् शतसङ्ख्याकान् ब्राह्मणान् यथा सम्पन्नेनान्नेन भोजयिष्ये तेन यज्ञपुरुषः प्रीयताम्। इति।

**'अथाग्निपूजनम्'**—ऋत्विजश्चान्येभ्यो ब्राह्मणेभ्यो पूजयेत्। दक्षिणाभिश्च तोषयेत्। ततो द्विजाराशीर्दद्यात्। स यद्वैश्वदेवेन यजतेग्निरेव तर्हि भवत्यग्नेरेव सायुज्यं सलोकतां यजत्यथ यत्साकमेधैर्यजेत्तत इन्द्र एव भवतीन्द्रस्यैव सायुज्यं सलोकतां यजति विष्णुलोकमेति स परमेव स्थानं परमां गतिं गच्छति। चातुर्मास्ययाजी तदाहुर्न चातुर्मास्ययाजीनमनु विदं परमं खलु स्थानं परमां गतिं गच्छतीति श्रुतेः। ततो गार्हपत्याग्निम्। खर्परे गृहीत्वा शालायामेत्य गार्हपत्ये पञ्चभूसंस्कारान् कृत्वा स्थापनमिति। **इति श्रौतोल्लासे चातुर्मास्यप्रयोगः समाप्तः।**

## ।। अथैकाह्निकचातुर्मास्यप्रयोगः ।।

तत्रादौ यजमानः प्राणानायम्य देशकालौ सङ्कीर्त्य ॐ तनुत्वरोक्षशरीरसार्थं एकाह्निकैरिष्टैकैश्चातुर्मास्यैरहं करिष्ये। तदङ्गभूतं गणपतिपूजनं स्वस्ति-

पुण्याहवाचनम् ऋत्विग्वरणं च करिष्ये। तन्त्रामहत्वा वरुणप्रघासिकस्तन्त्रम्। अर्थात्प्रमाणमिति विहारकरणम्।

१ **चातुर्मास्यसामग्री**। स्वस्तिवाचनं श्रीफले द्वे ऋत्विजार्थे वस्त्रालङ्कारा: यजमानसपत्नीकार्थे वस्त्राणि पुन: अवभृथार्थे वस्त्राणि पित्र्येष्ट्यर्थं वस्त्रे वरुणप्रघासार्थे वस्त्रद्वयं योत्ताकद्वयं वस्त्राणि धोत्रजोडे ७ पाटले ३ उपवस्त्रे ४ सुवर्णशकले २ दक्षिणा अश्व ९ गौ२वृषभ२ चरु दूर्वाजिनभाण्डम् ३ उखाकुम्भी ५ चरुपात्र ४ सराव २ खर्परोपधान १० सामिधेनी २०० समिध १०० परिधि ७५ वेद १३ सन्नहत ४० करवीरफल शमीपत्र ऊर्णी सिकता दधि दुग्ध आज्यं तण्डुला तण्डुलपिष्ट ब्राह्मणभोजनम् ४०० इत्यादि।

गार्हपत्योत्तरवेदि वरुणप्रघास दक्षिणाग्नि प्रतिप्रस्थातराहवनीय पूर्वोक्तरीत्या कुर्यात्। तत्र पूर्वेद्युः प्रकृतिविहारे यथोक्तकरम्भपात्रं करणम् प्रातरहतवस्त्रपरिधान समारोपोसमानम्। प्राचीनप्रवणे मन्थित्वाग्निस्थापनं तत्रादौ तूष्णीं शाखाच्छेदनादिं पवित्रबन्धनान्तं तिसृणामपाङ्करणं शाखापवित्रमवधाय तूष्णीं स्थाल्यां दोहनं ततः गार्हपत्ये षडासनं ब्रह्मवरणम् एकाह्निकचातुर्मास्येनाहं यक्ष्ये। तत्र ॐ भूपते भुव० गार्हपत्याद्दक्षिणतोपवेशनं तदुत्तरत: सक्षीरप्रणीताप्रणयनम्। ब्रह्मन्नप: पयांसि प्रणेष्यामि इति प्रैष:। तत्रैव निधानं उभयो: पञ्चकासादनम् अग्निहोत्रहवणीर्वज्र: पवित्रच्छेदनानि पवित्रे अन्तर्धानतृणञ्च रज्जु: शङ्कु: शम्या अग्नि: पुरीषाहरणं प्रोक्षणी सिकता आच्छादनानामुपकल्पनं पवित्रकरणं प्रोक्षणीसंस्कार: दैव्यायेति वज्रप्रोक्षणं ततो वज्रमादाय इध्ममुपसादयेति प्रैष:। इध्मस्थाने सकलपरिधिनिधानं ततस्तृणप्रोक्षणं वेदिमादि त्यग्न्यो प्रयनान्तं वरुणप्रघासवत्। ततो अग्न्यन्वाधानम् अग्निमष्टकपालेन० ९ सोमं चरुणा २ सवितारमष्टा० ३ सरस्वतीं चरुणा ४ पूषणं पैष्टेन चरुणा ५ मरुत: स्वतवस: सप्तकपालेन ६ विश्वादेवान्पयस्यया ७ द्यावापृथिवी एकैकया० ८ इन्द्राग्नीद्वादशक० वरुणं पयस्यया मेषेण च १० मरुत: पयस्यया मेष्या च ११ कम् एक कपाले० १२ अग्निमनीकन्वतमष्टाक० १३ मरुत: सान्तपनान् चरुणा १४ मरुतो गृहमेधिन: पायसेन चरुणा १५ मरुत: क्रीडिन: सप्तक० १६ अदितिं चरुणा १७ महेन्द्रं चरुणा १८ विश्वकर्माणमेककपालेन १९ शुनासीरो द्वादशकपालेन २० वायुं धारोष्णेन पयसा २१ सूर्यमेककपालेन २२ सद्योहं यक्ष्ये। सप्तदशो वज्र: व्रीहिर्यवाभ्यां याग:। प्रथमजां गां धेनुवृषभम् अश्वं च दक्षिणाम्। ममाग्ने पक्ष:। उत्तमे काले० अपराग्न्योरध्वर्योरेव। अन्वाधानोत्तरशाखाछन्दनमुभयो: उपवेषनिष्पर्त्तिरध्वर्योरेव। न प्रतिपस्थातु: पवित्रबन्धनमुभयो: विश्वेभ्यो देवेभ्यो भागमिति। पुनर्वरुणाय भागं पुनर्वायवे भागं मरुद्भ्यो भागमिति। प्रतिप्रस्थातु: परिस्तरणमुभयो: पात्रासादनं

पात्रासादने कपालानि षट्षष्ठि॥६६॥ उपसर्जनीपात्रद्वयं कुशमुष्ट्यन्तरं दोहनचतुष्टयम् आज्यं वाजिनभाण्डं करम्भपात्रः पुरोडाशपात्र्येकादश ११ होतृषदनसूर्पं शृतावदानं दोहनत्रयं दर्वी व्रीहियवौ प्राशित्रहरणे दक्षिणासमुच्चयः धेनुर्वा अन्तर्धानकटं पूर्णपात्रं कर्मापवर्गा वेति। उपकल्पनीयानि इध्मः शकलानि च बर्हिचतुष्टयं च चरुपात्राणि सप्त तावन्ति मेक्षणानि द्वे पयस्ये एकां पयः एवमेकविंशति हवींषि ऊर्णाकुम्भः पृषदाज्यपात्रं शमीपत्राणि करीराणि दधिमन्थनचतुष्टयं शकलं कुशतरुणाद्वे अधरारणी उत्तरारणीश्च ग्रहणे अग्नये जुष्टं० सोमाय जुष्टं० सवित्रे० सरस्वत्यै० पूष्णे० मरुद्भ्यः स्वतवद्भ्यः द्यावा-पृथिवीभ्याम्० इन्द्राग्निभ्यां० वरुणाय० प्रतिप्रस्थातु० मरुद्भ्यो० काय० अग्नये-नीकवते० मरुद्भ्यः सान्तपतेभ्यो० मरुद्भ्यो गृहमेधिभ्यो० मरुद्भ्य० क्रीडिभ्यो० अदित्य० महेन्द्राय विश्वकर्मणे० शुनासीराभ्यां० यवागपक्षे वायवे० सूर्याय जुष्टं गृह्णामि। प्रोक्षणे त्वाधिकः अध्वर्यवे एकमौषधं तुषविमोकान्तं कृत्वा। द्वितीयस्ययवावयतादि मन्त्रेण कणान्ते चर्चकः। इदमग्नेः सवितुः पूष्णश्च मरुतां स्वतवसां द्यावापृथिव्योरिन्द्राग्न्योः वरुणस्य कस्याग्नेरनीकवतो मरुतां क्रीडिनां विश्वकर्मणः। शुनासीरयोर्वायोः सूर्यश्च। इदं सरस्वत्या इदं मरुतां सान्तपनाम् इदं मरुतां गृहमेधिनाम् इदं महेन्द्रस्य पुनः कृष्णाजिनादानादि प्रोक्षणान्तमुभयोः। प्रोहणान्ते प्रक्षालनान्ते दोहः। ईक्षणान्ते पूष्णाविवेकः। इदं पूष्णः। पात्र्यां पिष्टयवादि पिण्डबन्धनान्तम्। मेषमेष्योः करणमुभयोः ऊर्णाश्लेषणम् आज्यादीनामधिश्रयणम्। चरुधर्माः प्रोक्ताः। करम्भपात्रप्रक्षालनोदकेन सहोष्णोदकादानम्। प्रतिप्रस्थातुः स्वाप्योदकदानं ततः खननादि सम्मार्जने। जुह्वान्तरं तूष्णीं शूर्पदर्व्याः करम्भपात्री पुरोडाशपात्रीणां सम्मार्गः वाजिनभाण्डं पत्नीसन्नहनाद्याज्यावेक्षणान्तम्। ईक्षणान्ते नानाज्यकरणं स्थाल्यापसरणम् इध्मप्रोक्षणादि जुह्वासादनान्तम्। जुह्वासादनान्तरं दक्षिणस्यां वेद्यां शूर्पमासादयति। प्रस्तरं ततो दर्व्यासादनम् उपभृतानन्तरं पृषदाज्यासादनं ध्रुवासादनम्। एत्य पुरोडाशयोर्विभस्मीकरणं करम्भपात्रीणामुपस्तारः। पुरोडाशपात्रीणां च तत्रस्थामिधारणमदत्वा वाजिननिषेकः करीरावपनमुभयोः करम्भपात्रपूर्वकं सर्वेषामुद्वासनम्। एवं प्रतिप्रस्थातुः वरुण्या मेष्या तूष्णीं करम्भपात्राणां प्राणदानं तत्र आग्नेयादि अग्निं गच्छ सोमं गच्छ सवितारं गच्छ सरस्वतीं गच्छ मरुतः स्वतवसे विश्वान् देवान्० द्यावापृथिवी० इन्द्राग्नी० वरुणं पयस्यायां मेषे च मरुतो० पयस्यायां मेष्यां चकं गच्छ। अग्निमनीकवन्तं० मरुतः सान्तपनं० मरुतो गृहमेधिनो० मरुतः क्रीडितो० अदितिं० महेन्द्रं० विश्वकर्माणं० शुनासीरौ० वायुं० सूर्यं० वाजिनो गच्छेति। कपालाञ्जनमुद्वासनम् आज्यस्थालीपूर्वकमासादयति।

प्रतिप्रस्थातुराज्यस्थाल्यन्तरं स्ववेदौ करम्भपात्रमासादनम्। अध्वर्युः सान्तपनीयचरुमासाद्य गृहमेधी चरुं गार्हपत्यसमीपात् स्वयमेवानीय तूष्णीं वेद्यभिमृश्याहवनीये शकलान्याधाय चरुमासादयति। ततः क्रैडिनाद्यासादनादि आत्मालम्भनान्तम्। ततो अग्निमन्थनम्। अग्नेर्जनित्रमसि शकलदानादि अग्नावग्निरिति होमान्तं पूर्ववत्। ततो व्रतग्रहणं होतरेहीत्यादि आवह देवान्यजमानायेत्यन्तम्। आवाहनम् अग्निमग्न आहव सोमपा। अग्निमा। सोमं। सवितारं। सरस्वतीमा। पूषाण। मरुतः स्वतवन्तः मरुतः सान्तपनानां। मरुतो गृहमेधिन। मरुतः क्रीडिन अदितिं। महेन्द्रं। विश्वकर्माणम् आ। शुनासीरा। वायुं। सूर्य। देवान् आज्यपान् इत्यादि सम्मार्जनान्तं समानम्। ततः यथोक्तकरम्भपात्रहोमः। ततो अग्नीत्सम्मार्गादि प्रयाजकालेन वप्रयाजाः प्राकृतश्चत्वारः ये य। दुरो। व्यन्तू। ये य। उषा वीर्दयेप। तिस्रो। व्यन्तू। स्वाहां स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं। सवितारं सरस्वतीं पूष्णः मरुतः स्तवद्भ्यः विश्वान् देवान् द्यावापृथिवी। महेन्द्राग्नी। वरुणं मरुतः कम्। अग्नयेनीकवते। मरुतः सान्तपनान्। मरुतः क्रीडिनः अदितिं महेन्द्रं विश्वकर्माणं। शुनासीरौ। वायुं। सूर्यं। देवा आज्यपा। इदमग्नये सोमायाग्नये सोमाय सवित्रे सरस्वत्यै पूष्णे मरुद्भ्यः स्तवद्भ्यो द्यावापृथिवीभ्यामिन्द्राग्निभ्यां वरुणाय मरुद्भ्यः कायाग्नयेनीकवते मरुद्भ्यः क्रीडिभ्यो अदित्यै महेन्द्राय विश्वकर्मणे शुनासीराभ्यां वायवे सूर्याय देवेभ्य इत्यादि न प्रयाजशेषेण गृहमेधीयचरोरभिघारणम्। वाजिनस्य च वार्त्रघ्नावाज्यभागौ अग्नयेनु। ॐ अग्निर्वृत्रा ॐ सोमायानु। ॐ सोमा। अग्नि जुषाणो। सोमं जुषा।।

**अथ प्रधानयागः**। ॐ अग्नयेनु। अग्निर्मूर्द्धा। अग्नि भुवो। इदमग्नये। सोमायानु। वृषासोम। सोम याते। सवित्रे। आ विश्वे देवा। सवितारं यस्य प्र। ३ सरस्वत्त्या। पावका नः सरस्वती। पूष्णो। पूषन्तव। पूषणंशु। मरुद्भ्यः स्तवद्भयो इहे हवः स्वः मरुतः स्वतसः प्र। ६ विश्वेभ्यो देवेभ्यो। विश्वे देवासऽआ। विश्वे देवाः शृणु। ७ द्यावापृथिवी मही द्यौः पृथिवी। चक्षुषः पि। इन्द्राग्नी। इमम्मे। अवसा। इन्द्राग्नीगी। ९ पयस्या प्रचरणकाले मेषमेष्योर्व्यतिक्रमः। इमं मे। वरुणाय। तत्त्वा यामि। १० मरुद्भ्यो। मरुतो अ। ११ कायं हिरण्यगर्भ। यः प्राणतो १२ अग्नयेनीक। अनीकवन्त। अग्निमनीकवन्तम् १३ मरुद्भ्यः सान्तपतेभ्यो। सान्तपते। मरुतः सान्तपनान्यो १४ अत्र वा सकलाधानम्। सूर्यस्त्वेति जपान्ते वा मरुद्भ्यः गृहमेधिभ्यो। गृहमेधास आ। मरुतो गृहमेधिनः प्र। १५ गृहमेधीयागे स्थाल्या एवोपस्तराभिघारौ च ध्रुवायाः ततः पूर्णादर्वीतो गृहमेधिचरोरादाय। प्रथमे

हिङ्कृते देहि मे॰ इति होमः स्विष्टकृते वा। दक्षिणादानान्ते देवा मरुद्भ्यः क्रीडिभ्यो॰ क्रीण्डवः शर्द्धा मरुतः क्रीडिने त्वा। १६ अदित्या॰ सुत्रामाणं॰ अदितिं महीमूषु॰ १७ महेन्द्राया॰ महाँ इन्द्रो य ओ॰ महाँ इन्द्रो नृवदा॰ १८ विश्वकर्माणं या ते धामानि॰ १९ शुनासीराभ्यां॰ शुनासीराविमो॰ शुनासीरौ शुनं सु फा॰२०। ततः उखादानादि श्रपणं परिक्षालनम्। वरमो दोहः प्राणनोदोहः। प्राणदानम् आलम्भः। वायवे॰ तव वायवृत॰ वायुमध्वर्युर्वचः॥२१॥ सूर्याय॰ उदु त्यं॰ चित्रन्देवानाम्॰ ३२ उभयोः स्विष्टकृत् अग्नये स्विष्टकृते॰ त्वां चित्रश्च॰ ये यजामहेग्निं स्विष्टकृतमयाडग्निरग्नेः प्रि॰ सोमस्य प्रिया॰ सवितु॰ प्रिया॰ सरस्वत्त्याः प्रि॰ पूष्णः प्री मरुतां स्वतवसां प्री॰ मरुतां क्रीडिनां॰ अदितेः प्री॰ महेन्द्रस्य॰ विश्वकर्मणः प्री॰ शुनासीरयोः प्री॰ वायो॰ सूर्यस्य॰ देवानामाज्यपानां॰ हविर्यद्वाहहिष्ठं॰ वौषट्। ततः सञ्चरमभ्युक्षणादि दक्षिणादानान्तम्। गृहमेधीचरोर्न प्राशित्रावदान इडामुपहूयपूर्वसमस्यमार्जनम्। ततो भक्षणम्। भागमस्मै परिहरति। वरुणीपयस्य शेषस्यावभृतार्थं सगुप्तं देशे स्थापनं ततोऽपराह्न यथोक्ता पित्राकरणं तस्मिन्नेव विहारे ब्रह्मवरणं व्रतग्रहणाभावः कृत्वा तच्छेषं प्रागुक्तम्। तदन्ते त्र्यम्बकोपस्पर्शनात्। ततो दक्षिणादानम्। प्रजापतेर्भागोस्यूर्ज स्वान्ययस्वान् प्राणापानौ मेऽपान सपानव्यानौ मेऽपान उदानव्यानौ मे पान प्रथमजा गौर्धेनुस्त्वष्टमशिराश्वास्थौ मयि धताक्षित स्थममेक्षध्वममुत्रा॰ उदगुद्वासनं हवि॰ ततोल्मुकसमासाधुभयोः पृषदाज्यग्रहणमुभयोः नवानुयाजाः देवं बर्हि॰ वेतू वौ॰ देवीर्द्वारो॰ व्यन्तू॰ २ देवी उषासा॰ वी॰ ३ देवी जोष्ट्री॰ वी॰ ४ देवी ऊर्ज्जाहुती॰ वी॰ ५ देवा दैव्या होता॰ वी ६ देवी-स्तिस्रस्तिस्रो॰ ७ देवो नराशं वेतू॰ ८ देवो अग्निः ९ व्यूहने अग्नेः सामस्य सवितुः सरस्वत्याः पूष्णो मरुतां स्वतवसां विश्वेषां देवानां द्यावापृथिव्योरिन्द्राग्न्योर्वरुणस्य कस्याग्नेरनीकवतो मरुतो सान्तपनानां मरुतां गृहमेधीनां मरुतां क्रीडिनामदितेर्महेन्द्रस्य विश्वकर्मणः। शुनासीरयोर्वायो सूर्यस्योज्जिति॰ अग्निः सोमः सविता सरस्वती पूषा मरुतः स्वतवसो विश्वे देवा द्यावापृथिवी इन्द्राग्नौ वरुणरनीकवान् मरुतः सान्तपनान्मरुतो गृहमेधिनो मरुतः क्रीडिनोदिति महेन्द्रो विश्वकर्मा शुनासीरौ वायुः सूर्यस्तमपनुदन्तु॰ प्रतिप्रस्थाता मरुतामुज्जिति मरुतस्तमपनुदन्तु। ततो जुह्वाभ्युक्षणादि। सूक्तवाके अग्निरिदं हङ्कृत। सोम इदं॰ मरुत॰ सविता इदं हङ्कृत॰ सरस्वती इदं कृत॰ पूषेदं॰ मरुतः क्रीडित॰ क इदम्॰ विश्वे देवा इदम्॰ द्यावापृथिवी इदम्॰ इन्द्राग्नी इदम्॰ वरुण इदम्॰ मरुतः क्रीडित॰ क इदम्॰ अनीकवानीदम्॰ मरुतः सान्तपने॰ मरुतः क्रीडित॰ अदिति॰ महेन्द्र॰ विश्वकर्मा॰ शुनासीराविद॰ वायुरिदम्॰ सूर्य इदम्॰ देवा आज्यपा इत्यादि आत्मानमालभते।

उद॰ ततो वाजिनयागः शन्नो भवन्तु॰ ये॰ वाजिनो वाजेवाजेव॰ दिग्वाधारणम्। वाजिनभक्षः परिधिः सहोपवेषहोमः। यं परिधिमित्यादि त्रीणि समिष्टयजूंषि भवतीत्यन्तम्। तदन्ते अवभृथेष्टिः। समिधादानान्तं पूर्ववत्। ततो बर्हिहोमादि कर्मापवर्गान्तं वरुणप्रघासवत्। अस्यैकाहचातुर्मास्यकर्मणः साङ्गतासिद्धयर्थं यथाशक्ति यथासम्पन्नेन ब्राह्मणान् भोजयिष्ये तेन श्रीयज्ञपुरुषः प्रीयताम्। इति।

## ।। अथ विधुरस्याग्निहोत्रप्रयोगः ।।

श्रीयज्ञपुरुषाय नमः।

गणेशं भास्करं विष्णुं तत्त्वाग्न्याधानकर्मणि।
विधुरस्याधिकारार्थं प्रयोगं विच्य साम्प्रतम्।।

तत्रादौ भर्तुः पूर्वे पत्नीमरणे गार्हपत्यैकदेशे न तस्या दाहं पत्न्यन्तरेण कुशपत्नी यावज्जीवमग्निहोत्रानुष्ठानं कर्तव्यम्। यदि पूर्वभर्तृमरणं पत्न्याश्च कालान्तरे श्रौताग्निना दाहेतां तदा भर्तृमरणकाले गार्हपत्न्योल्मुकं पृथक् कृत्वा उल्मुकस्थमग्नित्नारण्यो समारोप्य पत्नीमरणपर्यन्तं अरणीं रक्षयित्वा पत्नीमरण-समये अग्निं निर्मथ्य तेनाग्निना पुत्रादिभिः पत्नीदाहः कर्तव्यः। अथवा लौकाग्निना पत्नीदाहः कर्तव्यः। अथवा पूर्वं पत्नीमरणे सर्वानग्नीन् दत्वा। कुशपत्न्या सहाधानं कुर्यात्। तदुक्तं कर्मप्रदीपे—

मृतायामपि भार्यायां वैदिकाग्निं नहि त्यजेत्।
उपाधिनापि तत्कर्म यावज्जीवं समापयेदिति।।

उपाधिना काञ्चनपत्न्यादिना—

रामोपि कृत्वा सौवर्णसीतां पत्नीमनिन्दिताम्।
ईजे बहुविधौ यज्ञैः सह भातृभिरच्युत।।

इति अपरार्के स्मृत्यर्थसारेऽपि—

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः।
अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रता इति।।

ग्रन्थान्तरेपि—

विरक्तौ वा वयातीतः कथं चित्रोद्वहेद्यदि।
भार्यां स्वर्णमयीं कृत्वा कौशीवाधानमाचरेत्।।

एतदेवाभिधानं तदवे स्वग्रन्थे विष्णूक्त्या कुशपत्न्या सह वाधानमित्युक्तम्। एतयोः पूर्वं प्रेतस्तस्याग्निहोत्रेतायां पितृमेधः सम्पद्यते। तदा पत्न्याः पूर्वमरणे तत्राग्निहोत्रमौपासनत्वौत्सृज्य पुनः परिणीत्य तया सहाधानम्। तत्र सामर्थ्यमात्मार्थमाधानम्। तत्राप्यसामर्थ्ये यजमानेन औपासनं कर्तव्यम्। यजमानमरणे कुशपत्नीसहैव दाहः कर्तव्यः। सहैव पितृमेधो द्विवचनप्रयोगः।

**अथ प्रयोगः—**

ततः पूर्वोक्त आधानदिवसे शुभे काले आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य तत्सत्परमेश्वरप्रीत्यर्थं यावज्जीवमग्निहोत्रं होष्यामित्य सत्यभयात् विवाहसामर्थ्याच्च उत्तमलोक प्राप्त्यर्थं विधुराधानं करिष्ये। तदङ्गभूतं गणपतिपूजनं स्वस्तिपुण्याहवाचनमृत्विग्वरणं करिष्ये अत्र वृद्धिश्राद्धं कृताकृतम्। अस्मिन्विधुराधानाख्ये कर्मणि ब्रह्माणं त्वां वृणे। एवं होताध्वर्युराग्नीध्रं च। ततः पूर्वोक्त आधानवत्सर्वं कुर्यात्। अत्र चातुष्प्राश्यपचनपावमानेष्टि अन्वारम्भणीयाभावः। प्रकृतीपत्नी कर्म लुप्यते अन्यत्सर्वं समानं सायं प्रातर्होमकाले यथापूर्वं होमादि दर्शपौर्णमासेष्टिरा ग्रहणं यावज्जीवं कुर्यात्। अत्रापि पत्नीकर्म लुप्यते। चातुर्मास्यादीनामभावः। **इति श्री शिवप्रसादकृत-श्रौतोल्लासेग्निहोत्रप्रयोगः।**

## ।। अथ बौधायनोक्तविधुरोपासनप्रयोगः ।।

**तदुक्तं सूत्रे—**

अथातो मृतपत्नीकस्य विवाहसमर्थस्य होमविधिं व्याख्यास्यामः। प्रणवेन लौकिकाग्निं परिगृह्यान्वग्निरुषसामग्रमख्यदित्यादिनीय पृष्टो दिवीति होमस्थानेग्निं प्रतिष्ठाप्य तत्सवितुः॰ सवितुरधानादेव सवितर्विश्वानि देव सवितरिति चतुर्भिर्मन्त्रैश्चतस्त्र समिधोभ्याधाय ततोग्निमलङ्कृत्योपासनं हुत्वैवमस्तमिते काले प्रणवादियागान्तं कुर्यात् विवाहादौ औपवसादावरणादानश्रमदोषो नास्तीत्याह भगवान् बौधायनः।

**ततः प्रयोगः—**

पुनः सन्धानमग्नित्यागप्रायश्चित्ते होमद्रव्यदानपूर्वकं कुर्यात्। अनाहिताग्नेर्विधुरेण पूष्णे दिवि विधिना अग्निमूर्द्धान्यादानीया। ततः शुभे काले प्राणानायम्य देशकालौ सङ्कीर्त्य ब्रह्मान्वाधानप्राप्त्यर्थं विधुरकल्पोक्तविधिना विधुराग्निमुत्पादयिष्ये। इति सङ्कल्प्य स्वस्तिवाचनान्तं कुर्यात्। तत्र स्थण्डिले लेखामुल्लिख्य व्याहृतिभिः प्रणवेन च श्रोत्रियानाराणाग्निमादाय अन्वग्निरुष-

सामग्रमख्यदन्वहानि प्रथमो जातवेदा:। अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावा-पृथिवी आततन्थ। पृष्टो दिवीत्यनेन स्थण्डिले लेखासु प्रतिष्ठाप्या। ॐ पृष्टो दिवि पृष्टो॰ तुनक्तम्। तेनैव काष्ठे समिध्य परिसमुह्य तत्सवितुर्वरेण्यं॰ इदं सवित्रे॰ तां सवितुर्वरेण्यस्य॰ हीङ्गाम् स्वाहा। सवित्र इद॰ विश्वानि देव सवित:॰ सवित्रे इदम्। अद्यानो देव सवित: प्रजावत्सावी: सौभगं परो दुस्वप्नं सुव स्वाहा। सवित्र इदम्। इति चतस्र:। समिधोभ्याधाय। पुन: परिसमुह्य। यस्य स्मृत्या॰ इत्यादि वह्निं समिद्धं कृत्वा विधुरोग्निसमिन्धनं कुर्यात्। अस्मत्कृते स्मार्त्तोल्लासे प्रसवोत्थानोक्ते विधुरोपासनद्रष्टव्यं **इति बौधायनमतोक्तविधुरोपासनप्रयोग:।**

## ।। अथ प्रायश्चित्तप्रयोग: ।।

विघ्नराजं नमस्कृत्य गुर्वादींश्च तथैव च।
शिवभट्टप्रसादेन क्रियते श्रौतपद्धतिम्।।१।।

कर्मोपपाते प्रायश्चित्तं तत्कालम्। चतु: प्रकारात्मकं प्रायश्चित्तं तत्र न्यूनकरणमतिरिक्तकरणमयथाकरणमकरणं चेति। तच्च द्विविधं आदिष्टमनादिष्टं चेति। तत्र आदिष्टे कर्मणि ब्रह्मा प्रायश्चित्तं जुहोति। अनादिष्टे व्याहृतिहोम:। तत्र होत्रिकेष्टिनिष्टे पूर्णाहुतिवदाज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा गार्हपत्ये तिष्ठन्समिधमादायोपविश्य दक्षिणं जान्वाच्य भू: स्वाहेति जुहोति यजमानत्याग:। तत: सकृत् स्रुवेण स्रुचिं गृहीत्वा आहवनीये समिधादानपूर्वकं त्वन्न: सत्वन्न: अयाश्चाग्ने ये ते शतम् उदुत्तममिति जुहोति। यथा दैवतत्याग:। इति सर्वप्रायश्चित्तम्। याजुर्वेदिककर्मोपपाते दक्षिणा वाध्वर्यवे भुव इति उक्तमन्यत् इति अध्वर्युप्रायश्चित्तम्। आग्नीध्रये कर्मोपपाते दक्षिणाग्ना वेद। उद्गातृवेद् विहितकर्मोपपातेत्याहवनीये स्वरिति सर्वप्रायश्चित्तं च पूर्ववत्। इति सामवेद प्रायश्चित्तम्। आचमनं कुशोस्पृय शिखायज्ञोपवीतिन प्रदक्षिणोपचारेण यत्कृतं तत्राहवनीये चतुर्गृहीतानि भू: स्वाहा भुव: स्वाहा भूर्भुव: स्वाहेति विशेष:। समिधादानादि पूर्ववत्। **इति स्मार्त्तप्रायश्चितम्।** अनादेशेप्येवमिति परिभाषा।

## ।। अथ विकल्परहितसुगमस्वल्पप्रायश्चित्तम् ।।

अथाग्निहोत्रहोमउद्धरणकाले गार्हपत्यानुगमने भस्मनारणीं संस्पृश्य मन्थनम्। अन्यत्रानादिष्टं गार्हपत्यगमने सभ्यगमने च। प्राग् होमकालानुगमने लौकिकाग्निं वा हिरण्यं निधाय होम:। न भूसंस्कार: ततो मन्थनम्। द्वितीयकालात्तृतीय-कालाद्वाऽनुत्पन्नो तदा पुनराधानम्। तत: मन्थनोत्तरं गार्हपत्ये भूसंस्कारपूर्वकमग्निं संस्थाप्य। ततो दक्षिणाग्निमुद्धृत्य अन्वायु जुहोति। इति गार्हपत्यानुगमने

प्रायश्चित्तम्। यदा आहवनीये उद्धृते सूर्यास्तसमयात् तदा हिरण्यं बध्वा पश्चाद्धर्त्तवै इति प्रैष:। अन्यो धारयेत्। द्वाविंशति इध्मकाष्ठं त्रियूनं बध्वा मूलभागे गार्हपत्ये प्रदीप्य सोपयमनीमादाय तं गृहीत्वाहवनीये संस्कारान्कृत्वा स्थापनं गार्हपत्ये गत्वाज्यं संस्कृत्य चतुर्गृहीत्वाहवनीयं गत्वा समिधं तिष्ठत एवमुक्तोपविश्य दक्षिणं जान्वाच्य विष्णवे स्वाहेति होम:। ततो दक्षिणाग्निमुद्धृत्याग्निहोत्रहोम:। ततोनुवृते सूर्योदये जाते तदा पुरस्तात्कुशबद्धे रजनेध्रियमाणे पूर्ववदुद्धरणम्। अत्र विश्वेभ्यो देवेभ्य: स्वाहेति उभयत्र वा वैश्वदेव्याहुति:। अन्यत्सर्वं पूर्ववत्। अथ उच्चारणकाले त्वतित्त:। तदा मनो जूतिरिति स्रुवेण घृताहुतिर्जुहोति। इति उद्धरणकालोपप्रायश्चितम्। उद्धरणानन्तरमाहवनीयानुगमने पुनरुद्धरणं दक्षिणाग्नेश्च। तत: कूर्चासादनान्तरमाहवनीयमुद्धृत्य होम:। इदं प्राणायेति त्याग:। तत: होमात् प्राक् गार्हपत्य: शाम्ये तदा गार्हपत्यं मथित्वा संस्थाप्य तत्राज्यं संस्कृत्य उदान प्राणमप्यगा त्वाहेति मन्त्रेणाहवनीये समिधादानपूर्वकं सकृद् गृहीतमाज्यं जुहोति। इदमुदानाय। अस्मिन्नेवावसरे दक्षिणाग्निगमने पूर्ववदाज्यं संस्कृत्य सकृद्गृहीतेन समित्पूर्वकं जुह्वा गार्हपत्ये जुहोति। व्यान उदानमप्यगात्स्वाहा इदं व्यानाय। सर्वगमने तूर्णं मथित्वा प्रतिवातमुद्धृत्य वायवे स्वाहेत्याहवनीये होम:। पुनस्तमेवाहवनीयं स्वस्थाने स्थापयित्वाग्निहोत्रहोम:। निवातचेति तूर्णं मथित्वा प्राञ्चमुद्धृत्य गार्हपत्यं संस्कृत्य आहवनीयस्य पश्चादुपविश्य स्वयमेव तस्य संस्थतस्याज्यस्थालीस्थस्येवपानं कुर्यात्। अत्र सैव तत्र प्रायश्चित्तमिति। इति उद्धृतेऽग्निगते प्रायश्चित्तम्। तत: सञ्चरप्रवेशाकरणे स्वीकृतान्यकरणे सञ्चरप्रवेशे चाध्वर्यवम्।

हुत्वा यथा यथा विहितप्रवेश: कर्तव्य:। प्रागन्त्यपर्युक्षणात् प्रवेशानन्तरं यजमानस्य स्वस्थाने उपवेशनाकरणे चाध्वर्यवं होमपूर्वम्। तस्य करणं प्रागन्त्यपर्युक्षणात् कूर्चासादनादिमां पदार्थानामकरणे, च समन्त्राध्वर्यवहोमो भवति। अध्वर्यव शब्देन दक्षिणाग्नौ भुव: पतय इति चतुर्गृहीतहोम:। त्वन्न: इत्त्याहुतिपञ्चकं सकृद्गृहीतेनाहवनीये होम: इत्येतावदुच्यते। कूर्चासादनमकृतं प्राकृतं स्रुगासादनान्तकार्यं परिस्तरणं प्राक् तत्र तत्र होमात्। पर्युक्षणं दोहनप्रैष: प्रादुग्धाहरणात्। अधिश्रयणादय: संस्कारात्प्राद‍क्षिणहोमात्। उद्वासिते पयस्युदकासेको न भवति। पूर्वं समिधादानम्। प्रागुत्तराहुते: होमादूर्ध्वं स्रुक्स्थे नाशे दोषे चाध्वर्यवमेव नोत्पादनं द्रव्यस्य भक्षादीनां लोप:। अपराग्निहोमे अकृते स्थालीस्थस्य द्रव्यस्य काशदोषादौ पूर्वादन्यज्जातीयं संस्कृत्य तेनापराग्न्योर्होम: कार्य: धारातिनयनमाहवनीय पर्युक्षणात्। गां धुक्ष्वेति प्रैषदानप्राग् होमात्। उत्तरतोऽङ्गारकरणं उद्वासनाधिश्रयणे च। अवज्योतनोदकासेकश्च होमात्। पाणिना

सम्मार्जनं पुनः प्रतपनं उन्नयत प्रैषः। चतुरुन्नयहोमात्। समिधादानं प्रागुत्तराहुतेः। पश्चादध्वर्युमेव। विहितगमनाभावेप्याध्वर्यवं पूर्वाहुतिविस्मरणे तत्र मध्ये सकृद् ग्रहणं कृत्वा होमः। चतुर्ग्रहणं समाप्तौ पुनरावृत्तिः। उत्तराहुतिविस्मरणे अनादिष्टम्। कूर्चे निधानं प्रागुत्तराहुतिः। द्विः प्रकूपनं माभक्षात् गार्हपत्यावेक्षणयोराहुतेः। निधानमाभक्षान्नमो देवेभ्यः स्वधा पितृभ्यः इति च। अपस्य करणे आध्वर्यवमेव। असमाप्तेपराग्निहोमः। ऊर्ध्वं विष्णुस्मरणं प्राशतमोदकक्षेपात्। उक्षणमासमाप्तेः कूर्चस्थाने च। प्रतपनमपि कूर्चेति धानाकरणे समिदाधानाकरणे अन्यपदार्थकरणम्। पर्युक्षणमासञ्चरविमोकात्। व्रतविसर्गातीत्य निष्क्रमणे प्रागाहवनीयदक्षिणाग्न्युपशमात्। सभ्युसमीपासनभस्मोद्वाप समीपोपगम-योश्चाध्वर्यवपूर्वकं प्राक् सायं होमात्करणं उत्कावधेरूर्ध्वं सर्वत्राध्वर्यवमेव न तस्य पदार्थस्य करणम् **इति होमप्रायश्चितम्।**

## ।। अथ दोहप्रायश्चित्तम् ।।

अग्निहोत्री दुहानोपविशति चेत्तदा उदस्थादमदितिरिन्द्राय कृण्वतीभागं मित्राय वरुणाय चेति अनेन मन्त्रेण संस्थाप्य। दुगधायतां यः पुनर्भागमिष्यति। ब्राह्मणः तस्मै दद्यात्। दुग्धेन तु होमं दद्यात्। दण्डेनोत्थापनं पक्षदानमदानदानं च यदि दोह्यमाना दुग्धं न ददाति। तदान्यां दोहयेत्। न प्रायश्चित्तमस्ति यदि दोह्यमाना शब्दं करोति तदा सुयवसाद्भगवतीमित्यनेन भूतान्यपि तृणाभिस्तूष्णीं स्थित्वा। अनेन मन्त्रेण तस्या मुखे क्षिप्त्वा तां दुग्धवानेन पयसा जुहोति। लोहितदोहे तु दक्षिणाग्निं तदिकादिनां वस्त्रेण वा वेष्टयित्वा व्युत्क्रामतेत्युक्तान्तत्यान् प्रभृतीन् लोकान् बाह्यतः कृत्वा अग्निहोत्रहोता प्रविश्य उष्णे दक्षिणास्थे भस्मनि रुद्राय स्वाहेति। तेनैव गोदोहेन तत्पयः क्षिपति ततः उदकं स्पृशति। ना गां पुनर्नागमयिष्यति यो ब्राह्मणः तस्मै दद्यात्। अन्यतमद्रव्यं यदवाप्नोति तेन जुहोति। गां धुक्ष्वेति प्रैषानन्तरं प्रागृवत्संसर्गात् वृषभक्रमेण घ्राणादीनां दोषे पयोदुग्धाहवनीये दोहनेन रुद्राय स्वाहेति हुत्वोदकमुपस्पृशति। रुद्रैतत्ते पय इति दोहनस्थानमतिदिशति वा। ततः तत्पयो भस्मनि जले वा क्षिपति। दोह्यमानं यदा स्कन्देत्ततः। दा अस्कन्न धीन प्राज नित्यनेनाभिमृश्योपरि आपो निषेकः। स्थालीभेदेऽप्येवम्। भिद्यते चेदवापद्यते स्कन्न प्रायश्चित्तेनाभिस्पृश्य व्याहृतिभिरद्भिरुपतिनीय कपालानि भस्मोद्वार्य कुर्यात्। अन्यदुग्धेन होमः। वत्सोपसृष्टायां गवि तस्मिन्नेव कदाचिद्दोषे पूर्ववद् वायवे स्वाहेति जुहोत्यति-दिशति सा दोह्यमानायां पूर्ववत्। अश्विभ्यां स्वाहेति जुहोति दिशति वा। अधि-श्रितं च दुष्यति। पूर्ववत् वरुणाय स्वाहेति जुहोति दिशति वा। उद्गच्छति विधौ

दुष्यति चेत्पूर्ववत्। मित्राय स्वाहेत्यतिदिशति वा। उद्वासितं दुष्यति चेत् पूर्ववददित्यै स्वाहेति अतिदिशति। उन्नीयमानं दुष्यति चेत् बृहस्पतये स्वाहेति अतिदिशति। ततो नीयमाने दुष्यति चेत् विश्वकर्मणे स्वाहेत्यतिदिशति वा। गार्हपत्याहवनीययोरन्तरालं नीयमानं दुष्यति चेदग्नये वैश्वानराय स्वाहेत्यतिदिशति वा। नीतं चेद् दुष्यति द्यावापृथिवीभ्यां स्वाहेत्यतिदिशति वा। स्त्रुचं नीतं किञ्चित् स्कन्देत्तदा स्कन्दनधीत प्राजनीत्य मृस्य उदकेनासिञ्च्य शेषेण होमः। सर्वं स्कन्दनस्त्रुमेदयोः स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनीय तत्रोपविश्य अन्य दुनीयान्मस्मै प्रयच्छते न होमः यदा स्त्रुचौ स्थाल्य पितरं नष्टे तदापदन्यद्विदैवतदा दग्नावधिश्रित्यावृज्योत्यापः प्रत्यायः प्रत्यानीयोद्वास्या उन्नेष्या इत्युक्त्वा पुनरुन्नीय गत्वा होमः। प्रथमाहुतौ दुष्यति चेदिन्द्राग्निभ्यां स्वाहेत्यदिशति वा। द्वितीय-माहुतौ हूयमानं दुष्यति चेत्प्रजापतये स्वाहेति अतिदिशति वा। हुतशेषं दुष्यति चेत् इन्द्राय स्वाहेति अतिदिशति वा। दक्षिणाग्निहोमानन्तरं स्त्रुक्स्थं दुष्यति चेदिन्द्राय स्वाहेति अतिदिशति वा स्थालीस्थमदुष्टं यदि न विन्देत्तदान्यत् दुग्धादिं लभते तेन यथा विहितसंस्कारसंस्कृतेन जुहुयात्। ततः पूर्वाहुतौ हुतायां सद्य आहवनीयो गच्छेत्तदाध्वर्यवं प्रायश्चित्तं कृत्वोद्धृत्याहवनीयं तत्रोत्तरामाहुतिं जुहोति अथवा सन्निहितं दारुशकलं वा हिरण्यं निधाय तत्र जुहोति। हिरण्यपक्षे आध्वर्यवं प्रायश्चित्तादेरभावः। इति।

## ।। अथ वाहोद्धृत्यप्रायश्चित्तम् ।।

त्रिरुद्धेन्तश्चेदाहवनीयोनुगच्छेत्तदा गार्हपत्यमुत्तरेण पञ्चभूसंस्कारपूर्वकं गार्हपत्यस्थानमुपकल्प्याहवनीयमुत्तरेणाहवनीयस्थानमुपकल्प्य दक्षिणाग्नि-मुत्तरेणाग्निस्थानमुपकल्प्यारणी समादाय अयन्ते योनिरिति मन्त्रेण समारोपं करोत्यरणीभ्यां गार्हपत्यमुपस्पृशेत्। ततो गार्हपत्यं निर्मन्थ्य प्राग्प्रदेशे निधायाहवनीयमुद्धृत्य लूत्यदेशे निधाय दक्षिणस्तु पूर्वोद्धृतलूतदेशे निधाय सायं जुहोति। प्रातरपि प्रातश्चेदेवं यस्याश्चान्तरे जुहोति। अथवा विद्यमानादेव गार्हपत्यादुद्धरेद्यद्यपि शतशां कृत्वोहवनीयोनुगच्छेत्। तथापि यदि विहारसमये गार्हपत्योनुगच्छेत्तदा गार्हपत्य भस्मनारणी उपस्पृश्य निर्मन्थ्य पञ्चभूसंस्कारपूर्वकं विधौ विहारं कृत्वा जुहोति। आहवनीय उद्धृते सति यदि गार्हपत्योनुगच्छेत्तदा गार्हपत्यवुध्याश्रव्याहवनीयादाहवनीयं प्राञ्चं विहृत्य पञ्चभूसंस्कारकृते देशे निधाय पूर्ववज्जुहोति। अथवा समस्तमेवाहवनीयमादाय पञ्चभूसंस्कारपूर्वकं गार्हपत्यदेशे निधाय तस्मादाहवनीयं हृत्य पूर्ववज्जुहोति। अथवा आहवनीयादारंभ्य तृणपङ्क्तिं गार्हपत्यदेशे यावत्करोति। यथा गार्हपत्यदेशे यावत्करोति। तदा गार्हपत्यस्थाने

प्रविष्टेग्नौ समृद्धं कृत्वा तृणपङ्क्तिमुद्धृत्य आहवनीयं चोपशम्य तृणवर्ति सञ्चरति तद्गार्हपत्यादाहवनीयमुद्धृत्य पञ्चभूसंस्कारपूर्वकमाहवनीयदेशे निधाय पूर्ववज्जुहोति। निर्मन्थ्य गार्हपत्यमादधाति। अथवा त्रिवृताहवनीयविनाशे प्रथमे पक्षे यथोपलेपनादिपूर्वकं मन्थनादि तद्वदिहापि करोति। आहवनीयस्य समारोपणमिति। अथवा आहवनीयमुपशम्य निर्मन्थ्य गार्हपत्यस्य देहे पञ्चभूसंस्कृते निधाय पूर्ववदाहवनीयं विहृत्य जुहोति। उभयविधौ मन्थने प्रायश्चित्तेनापि मन्थनानन्तरं कार्यमिति। अवशिष्टपक्षत्रये च होमानन्तरं निर्मथ्य गार्हपत्ये निधाय ततो दक्षिणाग्नौ विहृत्याध्वर्यवं प्रायश्चित्तं जुहोति। विहृतोऽपि दक्षिणाग्निरनुगच्छेत्। सायं तदा सायं प्रातरपि पुनरुद्धरणादि न कुर्यात्। इदमेव तत्र प्रायश्चित्तम्। अथवा शतकृत्वाप्यनुगतः पुनरुद्धरेत्। विद्यमाने आहवनीये भ्रान्त्याहवनीयोनुगत इति मत्वा गार्हपत्यादुद्धृत्य पूर्वोद्धृत पश्येत् तदा व्याघ्र पद्य पूर्ववदाध्वर्यवं प्रायश्चित्तं कृत्वा गार्हपत्ये क्षिप्त्वा पूर्ववज्जुहोति। अथवा पूर्वाद्धृतं पश्चिमेन पूर्वेण वोद्धृत्य खातवतीं मध्योन्नतां समिधमादाय तस्यां प्रदीप्तायां तथा जुहोति। तथोभयत्र हविः समापयन्ति। यदि वाहवनीये पूर्वोद्धृते भ्रान्त्योद्धृतमाहवनीयं क्षिपति। तदाग्न्यन्वाधानादारभ्य ब्राह्मणतर्पणपर्यन्तं अग्नयेग्निमतेष्टाकपाल इति निर्वपति। एतद्यवाग्यग्निहोत्रं जुहोति। अथवैष्टिमकृत्यैवसमिति द्वाभ्यामाहवनीयमुपस्थाय पूर्ववदग्निहोत्रं जुहोति। प्रतिपन्ने वर्त्तते पुनरुक्तिलेखनम्। यदात्वग्न्याधाने कृते सत्याहवनीयो दक्षिणाग्निर्वानु-गच्छेत्। तदा अन्वग्निरित्यनेनाग्निं गार्हपत्ये हृत्य निधाय पूर्वोक्तामिष्टिं कुर्यात्। अथवा पूर्वोक्ताभ्यां मन्त्राभ्यामुपस्थानमिति गार्हपत्यानुगमनेप्येवमेव। इयांस्तु विशेषो मन्थनमन्त्रेति। इति बहवोद्धृत्यानुगमनप्रायश्चित्तम्। यदि सायमग्निहोत्रं न जुहोति तदापक्रान्तकालादाध्वर्यवं कृत्वा जुहोति। तदा प्रातरध्वर्यवं हुत्वा प्रातर्होमेन सम्पृष्टं जुहोति। यदि सायं प्रातरपि नहुतं तदा पूर्णाहुतिवदाज्ये संस्कृत्य सकृद्गृहीतेनाज्येन मनोजूतिरित्यादिना आहवनीये समित्पूर्वकं जुहोति। इदं मनस्वते न मम। बहुहोमलोपेप्येवम्। अथवा तन्तुमतेष्टिः। तदुक्तं गृह्ये। लुप्तहोमत्रये तद्वत्पौर्णमासादिषु त्रिषु। तथान्वाग्रयणे युग्मे लुप्ते तन्तुमतीं यजेत्। इष्ट्यासम्भवे पूर्णाहुतिः। अग्नये तन्तुमतेष्टकपालः पुरोडाशः कर्त्तव्यः। तस्य याज्यापुरोनुवाक्ये ॐ तन्तुमतं कोमाद दर्शकतमः सदेवा॰ इति पुरोनुवाक्या। पूर्णाहुतिः ॐ अग्नये तन्तुमते स्वाहा इदम॰ पूर्णाहुतिलक्षणकारिकायाम्—

आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत् स्रुचम्।
तया चाज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते।।१।।

स्रुचि पूर्णाहुतिर्वास्यादित्येके याज्ञिका विदुरिति।

अथ प्रातर्होमे अभ्रेणाच्छादिते अनुदयो भ्रान्त्या सूर्योदये जाते तदा न दोषो न प्रायश्चित्तम्। सायं होमकालं ज्ञात्वा होमे कृते सूर्यो यदि दृश्यते तदा पुनः सन्ध्याकाले जाते होमं कुर्यात्। अग्नेरुद्धरणं कृत्वा ततो आहवनीयमपरेण प्राङ्मुखस्तिष्ठन्। भवतन्नः समनसाविति मन्त्रेणाग्निमुपतिष्ठते पुनः सायंहोमः कर्तव्यः।

तदुक्तं गृह्यकारिकायाम्—

रजो निहारैरथवाभ्रधूमैर्वृक्षादिभिर्वान्तरिते दिनेश।

उद्दिश्य सन्ध्याहवनं विधेयं न लुप्यते तत्र हुतं न दोषः।

संस्थादिने दिनकरेतिङ्घ्नैः सकृत्यैः सर्वासु दिक्ष्वपितदस्तमलं च मत्वा।

होमे कृते घनचयापगमे यदि स्याद्भास्वद्दिशि तु नियतेः पुनरेव काले।

सन्ध्यादिकर्म कुरुते भवतन्नमन्त्रेणोपस्थितिर्हुत्वा विधिः सपुनर्विधेयः।

श्रौतेपि तद्विहरणे खलु शंस्य वह्नेरुपस्थितिर्हुतविधिः सपुनर्विधेयः।

अथ प्रतिपदि नेष्टं पौर्णमासेन तदानन्तरमेकस्यां तिथौ यदापद्यते तदा प्राग्दर्शविहारं तस्यां यजति। अथ प्रतिपदमारभ्य दर्शविहारं यावत्कुतश्चिन्निमित्तान्ने-ज्यते। तदाध्वर्यवप्रायश्चित्तम्। तन्त्रेण प्रतिपदि यजति। दर्शाकरणे पिण्डपितृयज्ञवर्जमेव। यदि तन्त्रेणापि पौर्णमासं नेष्टवान् तदा पथिकृतीष्टिमेव परां करोति। यदि कदाचिद्दैवान्मानुषाद्वा अन्तराये अमावास्यायां दर्शयागासम्भवे केवलं दक्षिणाग्निमुद्धृत्य अपराह्ने पिण्डपितृयज्ञं कुर्यात्। इष्टित्रयलोपे आग्रयणद्वयलोपे तन्तुमतेष्टिप्रायश्चित्तम्। पिण्डपितृयज्ञलोपे वैश्वानरचरुरिष्टिः कर्त्तव्या।

तदुक्तं कात्यायनेन—

परेणाग्नौ हुते स्वार्थं परस्याग्नौ हुते स्वयम्।
पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च॥

अग्निश्चानवयज्ञेन नवान्नप्राशने तथा।
भोजने पतितान्नस्य चरुवैश्वानरो भवेत्॥

यदि दर्शे पिण्डपितृयज्ञाकरणे आगामिपौर्णमासेष्टिदिने प्रधानात्पूर्वमग्नये वैश्वानरायानुब्रूहि इति प्रैषः। आप्यायस्वेति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति। तस्य याज्या पुरोनुवाक्या। ॐ वैश्वानरो न ऊतय ऽ आ प्र या तु परावतः। अग्निरुक्थेन वाहसो३म्। चतुर्गृहीतग्रहणम्। श्रावय अस्तु॰ अग्निं वैश्वानरं पृष्टोदिवि पृष्टो अग्निः॰ स्पातु नक्तां वौषट्। इदमग्नये वैश्वानराय न मम। अथवा

दिनान्तरे इष्टिः। कर्तव्या पूर्णाहुतिर्वा। पौर्णमासेष्टिपतिस्तदा पथिकृतेष्टिप्रायश्चित्त-मग्नये पथिकृतेष्टाकपालः पुरोडाशस्तस्य याज्या पुरोनुवाक्ये। अग्नये पथिकुतेनुब्रूहि। ॐ वेत्था हिवे वेधो अध्वनः पथश्च देवाञ्जसा। अग्ने यज्ञे पशुक्रतो३म्। अग्निं पथिकृतिं यज आ देवानामपि पन्थामगमन्मयच्छ-क्रवत्मृतदनुप्रवोढम्। अग्निर्विद्वान्सयाजान्त्से जुहोति। अध्वरासक्रतून्कल्पयाति वौषट्। इदमग्नये पथिकृते न मम। इष्ट्यशक्तौ द्वादशगृहीतेनाज्येन स्रुचीं पूरयित्वा अग्नये पथिकृते स्वाहेति पूर्णाहुतिं जुहुयात् स्रुवाहुतिं वा। अथान्वाधानेष्टिमध्ये प्रयाणोपस्थितौ तुभ्यं ता अङ्गिरस्तमेति सङ्कल्पपूर्वकसंस्कृताज्यं हुत्वा अरण्यादिषु समारोपयेत्। पुनर्मतेनाग्निं प्रतिष्ठाप्य प्रातर्होमानन्तरं पुनरन्वाधायेष्टिं कुर्यात्। अन्वाधाय प्रदीप दीपमादादिष्ट्यकरणे तृतीयादिषु तिथिषु प्रातरौपासनोत्तरं संस्कृताज्यं व्यस्तसमस्तव्याहृतिभिर्हुत्वा पुनरन्वाधाय यागं कुर्यात्। अन्वाधानेष्टिमध्ये चन्द्रग्रहणे चेष्टिदिने प्रधानयागात्पूर्वं नवो नवो भवतीत्यनेन स्रुवाहुतिं जुहुयात्। अन्वाधानेष्टिमध्ये चन्द्रग्रहणदोषप्रायश्चित्तार्थमाज्यहोमं करिष्ये। इति सङ्कल्प्य। ॐ नवो नवो भवति॰ इदं चन्द्रमसे न मम। ॐ यमादित्या अंशुमा॰ इदं चन्द्रमसे न मम। ततः प्रधानादि सर्वं कुर्यात्। सूर्यग्रहणे तु। अन्वाधानेष्टिमध्ये सूर्यग्रहणे दोषप्रायश्चित्तार्थमाज्यहोमं करिष्ये। अत्रापि प्रधानात्पूर्वं चित्रं देवानामित्यादि तिस्रो वाज्याहुतयः। ॐ चित्रं देवाना॰ इदं सूर्याय न मम। ॐ उदु त्यं जात॰ इदं सूर्याय न मम। ॐ उद्वयन्तमसस्परि॰ इदं सूर्याय न मम। शेषं पूर्ववत्। इति ग्रहणप्रायश्चित्तम्। अथान्वाधानोत्तरमाहवनीय-दक्षिणाग्निरनुगच्छेत्। तदा अन्वग्निरुषसेति मन्त्रेणाग्निमाहृत्य स्थापयेत्। समितमिति द्वाभ्यामुपस्थानं गार्हपत्यगमनेप्येवम्। इति।

## ।। अथ नैमित्तिकप्रायश्चित्तानि ।।

शम्या परिमितदेशाद्बहिरायतनाद्गतेग्नौ पथिकृतेग्नये चरुं निर्वपेत्।

तदुक्तं कारिकायाम्—

अतिक्रान्तो यदा शम्या परासनमलो भवेत्।<br>
चरुः पथिकृते कार्या पूर्णाहुतिरथापि वा।।

शम्या द्वात्रिंशदङ्गुलेति कात्यायनः। **अथैकाध्वर्यवप्रायश्चित्तम्।** दर्शपौर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने प्रायश्चित्तं हुत्वा त्रयः प्रचरेयुः। द्वयोरभावे द्विवारं वा प्रायश्चित्तं हुत्वा द्वौ प्रचरतः यदाध्वर्युः यजमानो तदा सर्वप्रायश्चित्तं त्रिवारं हुत्वा कर्म कुर्यात्। यदा यजमान एक एव तदापि

चतुर्वारं सर्वप्रायश्चित्तं हुत्वा यजमानोन्तर्वेद्यासीनो वक्ष्यमाण वृता सर्वं कुर्यात्। 'अथ हविर्दोषान्वक्ष्यामः' अश्वदेहवर्त्तिनि नील माक्षिकानवाचमङ्गवर्त्तिन्या शान्तिकाल लोपावर्ति मत्कुणश्चैल शिलोवर्त्तिनी यूकामलपिण्डकारी कीटश्च मार्जारनकुलमर्कटाः प्रसिद्धाः ध्वाङ्क्षकाकः। आवक मूषकस्तेषामन्येषां च पुरीषं मल केशः प्रसिद्ध सेकः परिहितवचनं चरुः पदं यदा मृतनसच्छिन्ननखः कुतसोदुष्टनस्यः पुरीषः पूर्ति दुष्टकं गन्धवहः ईप्समुखनाविप्रुषः। स्वेदं प्रसिद्धः असृक् रुधिरं स्नेहो नात्सिकाकः अश्रुनयनां बुसेकः। श्लेष्मायैक्ष वपुः क्षुतं आर्द्रवणं चेति। एतैरुपहतं वसाशुक्रमसृक् मज्जामूत्र विट्करण विट्नखाः श्लेष्माशु पूजिकास्वेदो द्वादशैते नृणां मला इति एतैश्चोपहतम्। रजस्वलासूतिकाभ्यां स्पृष्टदुष्टम् अप्रयतेनाशुस्पृष्टं च भूतध्रुववापं च। शिशुर्वज्यार्भिणि ब्राह्मणो नृप इति। एतेषामन्यतमयोहति भ्रूणघ्नः स्तेनदृष्टं स्पृष्टं च। अयसपात्रेण चाण्डालादिना दृष्टं च। ध्वजी वराकोहङ्कारी लोहकारः। सूना पचतक्षको वागुरिति च ग्रामचाण्डालिका स्मृताः। अमेध्यदेशे वा स्कन्नं यत्र प्रसूयते नारी म्रियते दह्यतेपि वा।

चाण्डालाभ्युषितं यत्र मूत्रविष्टादि सङ्गतिः।
एवं कल्मषभूयिष्ठा भूरमेध्या प्रकीर्तिता:॥

एवं भूता मेध्यदेशे स्कन्नं च। एवं दुष्टं हविरप्सु सिते भस्मनि वा प्रक्षिप्य। दुर्गमनस्वतिव्याहृतिभिश्च हुत्वा। शूर्पादानप्रभृतिहविरन्तरमुत्पाद्य यजेत्। आज्यपक्षे मनस्वतीति प्रायश्चित्तम्। क्षुद्रकीटमक्षिकादि पिपीलिकावर्जं क्षुद्रकीटो भ्रूणादिः मक्षिका पिपीलिके प्रसिद्धे। एषु प्रमादात् हविर्द्धर्षितेषु न दोषः। सर्वत्र क्षुद्रकीटमक्षिकादिकानापश्च्येभ्य उद्धृत्याभ्युक्ष्य उत्पूय जुहुयात्। दुष्टेन हविषा यागे कृते पश्चाद्दोषदर्शने पुनर्नयागः कर्त्तव्यः।

तथा च कात्यायनः—

दुष्टेन हविषा यागाभिनिवृत्ति पश्चाद्दोषसंवृतितत्कृतिमेवेति।

बौधायनसूत्रेपि—

'अथ सर्वयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः'—हविषा यत्र कुत्रचित् स्कन्न स्थिन्न भिन्न मग्न दुष्ट विपरीत भक्षण स्पन्दन स्रावितं पतित स्फुटितादि निमित्तेषु अव्यताश्च श्वानविडालकाकखरमृगपशुपक्षि सरीसृपादिषु अग्नीनामन्तरा ऋत्विजामन्तरागतेषु द्वादशगृहीतेन स्रुचं॰ पूरयित्वा दुर्गमनस्वतीव्याहृतिस्तिस्रो जुहुयात्। अथवा अनादिष्टाहुतिः। अनादिष्टशब्देन व्यस्तसमस्तव्याहृतिभिर्हुत्वा त्वन इत्यादि मन्त्र एतदमादिष्टम्।

कात्यायनसूत्रे तु—

आज्यतण्डुलादि स्कन्दने भूपतये स्वाहा भुवनपतये॰ भूतानां पतये स्वाहेति मन्त्रेणभिमर्शनम्। दर्शपौर्णमासादिषु हविष्वासादितेषु हविषामुपरि यदि काक आसीत् तदेदं विष्णुर्विचक्रमे॰ इति स्रुवाहुतिं हुत्वा तद्धविरप्सु प्रक्षिप्य शूर्पादानादि हविरन्तरमुत्पाद्य प्रचरेत्। अध्वर्युराश्रावणप्रभृति आहोमाद्वाचं यच्छेत्। यदि वाचं विसृजेत्। वैष्णवीमन्त्रं जप्त्वा पुनराश्रावयेत्। वैष्णवी इदं विष्णुः। यस्मिन्देशे स्थित आश्रावयति। तत्र स्थित एव होमं कुर्यात्। आश्रावणप्रभृति होमान्तं पदं न चलेत्। यदि पदा चलयेत्तदा पुनराश्राव्य यजेत्। यतो अन्ये तानभिक्रम्य होष्यामीति न तत्र तिष्ठन्ता श्रावयेत्। ततः सर्वत्र प्रस्तर विधृतो परिधिः बर्हिः पवित्रशाखा पवित्रोपवेशवेदपरिस्तरणेध्मादीनां छेददाहापघातेषु नाशे तद्रूपं कृत्वा तज्जातिं तत्प्रमाणं तत्परिणाहं कृत्वा तत्स्थाने सादयित्वा त्वमग्ने अयासि प्रजापतय इत्येताभ्यां द्वेस्तु वाहुतिर्जुहोति। ॐ त्वमग्ने अयास्य यासन् प्रतस्याहितः। अस्यासन्यज्ञऽमूहिषे या नो धेहि भेषजं स्वाहा। इदमग्नये अयसे न मम। ॐ प्रजापते न त्व॰ इदं प्रजापतये॰ ततः स यजमान ऋत्विजो मन्त्रोच्चारणकालोपांशु प्रभृतिवाचनानां भ्रंशे उदात्तादिस्वरभ्रंशे अक्षरपदमात्राभ्रंशे वा आ गीर्भिरिति स्रुवाहुतिं जुहुयात्। ॐ आभि गीर्भि॰ इदमाभिगीर्भ्यो॰ ततः सर्वेष्वग्निषूपधाते केशकीटं चर्वाद्यसिक्ते पुनस्त्वेति समिधादानम्।

**'अथ हविर्दग्धप्रायश्चित्तम्'**—

यदा हविरयकृस्यात्तेनैव हविषा यजेत्।
चतुः शरावमात्रं तु यद्व्रीहिचेभिदोहनम्।।

भोजयेत्तेन चान्येन चतुरो ब्राह्मणान् वरान्।
बहुदुग्धमदग्धं वा किञ्चिदेव यदा हविः।।

शिष्टेनेष्ट्वा पुनर्यागः स्यादारभ्यादितिस्तथा।
कृत्स्नं दग्धं यदा न स्यात्पुनरुत्पादयेद्धविः।।

स्वयमेव यागः प्रकर्त्तव्यः पुनर्यागस्तु नेष्यते।
मध्यात्पूर्वार्द्धतो वेतं यदि दुष्टहविर्भवेत्।।

तस्यैव हविषौ बन्धे मध्यात्पूर्वार्द्धतः पुनः।
इष्ट्यारम्भकृते दुष्टं प्रधानं हविरत्र चेत्।।

तत्स्थाने जुहुयादाज्यं ह्यदुष्टे च जुहोत्ययम्।
एवं समाप्य दुष्टं हि तदप्सु प्रक्षिपेत्पुनः।।

अन्वाधानादिको यागः पुनः कर्त्तव्य एव तु।
प्रागिध्मानतो दुष्टे प्रधानहविषस्तथा।।
तद्धविः पुनरुत्पाद्य सर्वं तत्र समापयेत्।
आयागात् चेद्धविर्दुष्टं तदप्सु प्रक्षिपेत्पुनः।
स्विष्टकृद्धविषो दोषे आज्येनैव समापयेत्।।

ततः श्वमार्जारादि अन्तरागमने गार्हपत्याहवनीयं यावदिदं विष्णुरिति मन्त्रेण उदकधारां गार्हपत्यभस्मधारां च क्षिपति। रासभगमने अग्नये पथिकृतेष्टकपालः पुरोडाशः कर्त्तव्यः पूर्णाहुतिर्वा। 'अथ कपालकरणे'—अश्वशफमात्रं स्थानं परिकल्प्य तत्र रथचक्र क्रत्याकरण कपालान्युपदध्यात्। अश्वशफमात्र देशात्कपाल ह्रास वृद्ध्यो व्याहृतिः स्रुवाहुतिं जुहुयात्। अष्टाकपाले पुरोडाशे न्यूनातिरिक्तेन सप्तकपालानां नवकपालानां चोपधाने कृते व्याहृतिभिः स्रुवाहुतिं हुत्वा हीनाष्टाकपालमुपदध्यात्। अतिरिक्तकपालमुत्सृजेत्। कपालानामसंहतोपधाने व्याहृतयः प्रायश्चित्तम्। कपालानामूर्ध्वप्रमाणमङ्गुलद्वयम्। अष्टकपालोपधाने समचतुरस्राणि च एकादशकपालेषु सप्तकपालानि चतुरस्राणि च। द्वादशकपालेषु सप्तकपालानि चतुरस्राणि च। त्रिकोणानि चत्वारि चत्वारि कपालानि चक्रत्रिकोणानि उक्तप्रमाणानि न्यूनातिरिक्तयो व्याहृतयः प्रायश्चित्तम्। अथोद्वासनकाले कपालं नश्येत्तदाश्विनं कपालं पुरोडाशं निर्वपेत्।

अप्रायश्चित्तको यज्ञो ह्यसुरैः सम्भुज्यते।
असुरैर्भुक्तंयज्ञस्तु देवा शेषेण संश्रयेत्।।
ऋत्विजो यजमानं च वायुपोब्रह्मवर्चसात्।
प्राच्यातये दुरिष्टं च तस्माद्दोषत्र्यणाशयेत्।।

अथ चातुर्मास्याग्रयणेष्टीनामपि कालातिक्रमे पथिकृतिमिष्टिं कुर्यात्। व्रत्येहनि मैथुनकरणे मांसाशनेन वा अग्नये व्रतयेष्टाकपालः पुरोडाश इति। व्रतपतिरिमामिष्टिं कुर्यात्। यदि विहारे आर्त्याश्रुमुञ्चति तदाग्नये व्रतप्रभृतेष्टाकपालं निर्वपेत्। यदि गार्हपत्याहवनीयदक्षिणाग्निनां समस्तानामन्यतरस्य वा लौकिकाग्निनां कथञ्चित् सङ्गो जायते तदा अग्नये संसर्गाष्टाकपालः पुरोडाशं निर्वपति। अथवा सकृद्गृहीतेनाग्नये संसर्गाय स्वाहेति आहवनीये जुहुयात्। अथ ते परस्परं सम्मृज्यते अन्यतरो वा नाद्रीयते। तदाग्नये विचयेष्टाकपालं पुरोडाश निर्वपति। अथवा सकृद्गृहीतेनाग्नये विचये स्वाहेत्याहुतिमाहवनीये जुहोति। अथ दावाग्निना संसृज्यते तदानादरोनुक्रोशे त्वग्नये संसर्गाष्टाकपालं पुरोडाशं निर्वपति। अथवा सकृद्गृहीतेनाग्नये संसर्गाय स्वाहेत्याहुतिमाहवनीये जुहोति।

अथ वैद्युताग्निना संसृज्यते तदानादरोनुक्रोशे त्वग्नये अप्सुमते अष्टाकपालं पुरोडाशं निर्वपति। अथ सकृद् गृहीतेनाग्नये अप्सुमते स्वाहेति आहवनीये जुहोति। अथ ते शवाग्निना चाण्डालाग्निना सूतिकाग्निना संसृज्यते तदानादेशेन कार्यः। अग्नये अष्टाकपालं पुरोडाशं निर्वपति। अथ सकृद्गृहीतेनाग्नये मुचये स्वाहेति आहवनीये जुहोति अथवा भार्यागौर्वा युगलं प्रसूते तदा पर्वणि श्राद्धपूर्वकमन्वारम्भणीयां कृत्वा। मारुतं त्रयोदशकपालं पुरोडाशं निर्वपेत्। अथ प्रधानग्रहदाहो भवेत्तदा पर्वणि श्राद्धानन्तरम्मत्वारम्भणीयेष्टिपूर्वकमग्नये क्षामवते अष्टाकपालं पुरोडाशं निर्वपेत्। इति सर्वेष्टानां याज्यापुरोनुवाक्याहौत्रसूत्रे अवगन्तव्यम्। **इति नैमित्तिकप्रायश्चित्तानि।**

## ।। अथ दर्शपौर्णमासयोः प्रतिपदार्थप्रायश्चित्तम् ।।

अकरणे चाध्वर्यव हुत्वा तस्य करणमिति सर्वत्रानुक्तमपि ज्ञेयम्। ततो व्रत्येहनि रजस्वला वा सूतिका वा भवति यदाध्वर्यवेण इध्मादि कर्म करोति। अयं निषेधो बह्वृचादीनां न वाजसनेयीनाम्। ततो यजमानं वपनं स्वीकृतं प्राक् कर्मापवर्गात्। सर्वत्रावधेरूर्ध्वमाध्वर्यवमात्रं भवति। सामर्थ्ये सति व्रतोपायनीं यस्या भोजनेपि प्रागस्तमयाद्भोजनम्। न रात्रौ द्वितीयेह्नि माषमसूरमधुपराश्र-क्रोधाहङ्कारभयविषादकार्पण्यलोभादिना यजमानेन वर्जनाकरणे स्मार्त्तप्रायश्चित्तं स्मार्तशब्देनादिष्टम्। श्रुत्युक्त्वा करणे श्रौते। स्वीकृतकाले व्रतग्रहणस्याकरणेप्येवं पश्चिसर्गात्। अध्वर्युपदार्थानुष्ठानकाले होत्रकम्। अवधारितवृक्षाण्योषधीनामभक्षणे अन्यतरागारशयने चाध्वर्यवम्। बहुः पक्षे स्वीकृते पौर्णिमामनारम्भे अध्वर्यवपूर्वकं प्रतिपदि कर्त्तव्यम्। ब्रह्मवर्णं प्राक्समाप्तेः। व्रतजपश्च ईक्षणासन-संस्कारान्प्रागुपवेशनम्। उपवेशनमासमाप्तेः प्रणीताप्रणयनं सर्वार्थपक्षे प्रागन्यकुर्यात्। संयवनार्थपक्षे प्राक्संयवनात्। अदृष्टार्थपक्षे प्राग्विमोकात्। सर्वत्र मन्त्ररहितपदार्थाकरणे आध्वर्यवमात्रं न पदार्थस्यावृत्तिः। भूतस्त्वेत्यालम्भः प्राग् विमोकात्। प्रणीतास्कन्दने एनुराजेन्यभिमृशेत्। ॐएनुराजा वरुणेरिवतीभि-रस्मिन्स्थाने तिष्ठनुमोदनः। अरिष्टास्माकं वीरामापरासेचिमत्परित्यनेनाभिमर्शनम्। आज्यं तण्डुलादिस्कन्दने भुवपतय इति। उस्वा उपसर्जनी कपालखर्परमृण्मयपात्रादि भग्नं तदा भूमिमवागान्माता मातरमप्यगात्। भूयाम पुत्रैः पशुभिर्योनो द्वेष्टि समिद्यतामित्यनेनाभिमर्शनम्। यजमानस्य वाग्यमनाकरणे प्राग्हविकृतः आह्वानम्। अथ चारेअध्वर्यवं परिस्तरणं प्राक्तत्र तत्रत्य होमात् पुरस्तात्प्रथममित्यस्याकरणेश्रौतम्। अन्यथा दिष्ट्यन्यथाकरणे स्मार्त्त-पात्राणामासादनम्। प्राक्तत्र तत्पात्रयोजनात्। शूर्पाग्निहोत्रहवण्योरादानं न

प्राङ्निर्वापात्। तयोर्मध्ये एकस्यादानविस्मरे कर्मणे वामिति मन्त्रेण तस्यैकस्यादानम्। अध्वर्यें वाग्यमनं प्राग्हविष्कृत॰ विसर्गा अङ्घिणा विष्णवितिप्राक्करणीयकस्य मन्त्रस्य जपः। स्फ्योपहितं पात्रीकरणं प्राग्ग्रहणात् धूरसीत्यादि नियच्छतामित्यन्तानि प्राग्ग्रहणात्। हविष ईक्षणांलभते प्राग्यागात्। निर्वापः प्रागधिश्रयणात्। शेषाभिमर्षणं प्राग्घविर्यागात्। प्रागीक्षणादि सादनान्तस्याकरणे अन्यथाकरणे वाध्वर्यवम्। यदि पुरोडाशाज्यसान्नायामांसादिद्रव्यं स्कन्दति तदा स्कन्दितस्य भूम्यादिपतितस्य भूपतये स्वाहेत्यादि मन्त्रत्रयेणाभिमर्शनं कुर्यात्। पवित्रकरणमार्जनात्। प्रोक्षणीसंस्कार आमूलावसेकात्। स्कन्दने आध्वर्यवनाशादौ पुनरुत्पत्तिः हविः प्रोक्षणं प्राग्यागात्। पात्राणां प्रोक्षणमिति तत्पात्रप्रयोजनात्। अध्वर्यवमात्रं कुक्कुटाहननं प्राक्समाप्तेः कण्डनादिकणनिधानान्तमापेषणात्। उपवेषादानं प्राग्व्यूहननात्। अङ्गाराणा-मूहनमान्त्यकपालोपधानात्। एकद्विबहुकपालानामुपधाने प्रागधिश्रयणात्। तेषामुपधानपञ्चकपालादीनां प्राग्दक्षिणोपचारे स्मार्त्ते। अभ्यूहनप्राक् पुरोडाशाधि-श्रयणात् उपसर्जन्यधिश्रयणं प्राक्संयवनात् कृष्णाजिनादीनामुपलोपधानान्तानां प्राक्प्रेषणात्। प्रेषणं प्रोहनं च पात्र्यामावपनादीक्षणं प्राग्यागात्। पात्र्यामावपनं पवित्राभ्यामुपसर्जनीग्रहणमासंयवनात्। तच्च प्रागधिश्रयणात्। सपवित्राभ्यां प्रतिग्रहणस्य वा करणेत्वाध्वर्यवमात्रं विभज्यालम्भः प्राग्यागात्। यौगपधाकरणे अध्वर्यवमात्रमाज्यनिर्वापः प्रागन्यं कुर्यात्। वेदबन्धः प्राग्विमोकात्। आज्यपुरोडाशाधिश्रयणं प्राग् यागात्। अथ न ताभिरभिमर्षणम्। पात्र्यङ्गुलिप्रक्षालनादिशृताभिवासनान्तानां प्राक्स्वप्नयोजनात्। अभिवासनमुद्वासनात् प्राक्आष्ट्योदकनिनयनमासमाप्तौ। द्रव्यस्य नाशदोषावाध्वर्यवमात्रं द्रव्यमुत्पाद्य निनयेदिति केचित्। वेदिमानपूर्वपरिग्रहणात् परिसमूहनं प्रास्तरणात्। उत्करकरणं च सतृणवज्रादानं प्राक्तूष्णीमित्येतत्तस्मात् एकस्य तृणस्यादानविस्मरणे मन्त्रवर्जमादानम्। आलम्भः प्राक्स्तम्बयजुषः तृणनिधान या चतुर्थप्रहरणात्। तृणस्योदग्रात्तापचारौ आध्वर्यवं लेखाकरणहरणसम्मर्शनाति प्राग्धरणात्। प्रैषः प्राग्धरणात् खननपरिग्रहश्च प्राक्स्तरणात् अनुमार्जनं च प्रैषः प्रागर्थकरणात्। स्फ्योदकप्रहारमासमाप्तेः प्रोक्षण्यासादनमुत्पवनात् इध्मसादनं प्रागिध्माधानात् बर्हिरासादनमास्तरणात् स्रुवजुहूसम्मार्ग आकर्मापवर्गात्। उपभृत् आसंस्रवहोमात् ध्रुवयामासमिष्टयजुषः प्राशित्रादीनां मा तत्कार्यात्। संमार्जनान्तं प्रासनमासमाप्तेः पत्नीसंन्नहनमाविमोकात्। आज्योद्वासनमुत्पवनादीक्षगमाकर्मापवर्गाहुतेः। वेद्यामासादनं प्रागुत्पवनात् उत्पवनावेक्षणे प्राक्कर्मापवर्गाहुतेः प्रोक्षण्युत्पवनमामूलावसेकात्। आज्यग्रहणमात्रं तत्प्रयोजनात्। इध्मप्रोक्षणं

प्रागिध्माधानात्। बर्हिप्रोक्षणमासमिष्टयजुर्होमात् मूलावासेचनं च। प्रणीतासुपवित्रयोर्निधानमाप्रतिपत्तेः। बर्हिर्विसर्जनं प्रस्तरग्रहणं प्रागन्त्यमुष्टिस्तरणात् सन्नहनाद्यवच्छेदनान्तमाबर्हिर्होमात्। वेदिस्तरणमासमिष्टयजुषः प्रस्तरणग्रहणे विस्मृतेर्बर्हिषः बर्हिप्रस्तरणेऽकृते आध्वर्यवं कृत्वा यजमानवाचं यच्छेति प्रैषः। प्रस्तरमात्रबर्हिषः आसादनम्। पूर्वाभ्यामेव पवित्राभ्यां प्रोक्षणीसंस्कारः। दैव्यायेति प्रोक्षणमध्यदिवेदि अग्नीध्रः प्रोक्षणीनां धारणं प्रोक्षणीरासादनं बर्हिरासादयेति प्रैषः। प्रोक्षणीनां वेदावासादनं प्रणीता अपरेण प्रस्तरमात्र बर्हिष आसादनम्। प्रोक्षणीनां सवितुर्व इति उत्पवनम्। बर्हिः प्रतिग्रहणं वेद्यामासादनम्। ब्रह्मन् बर्हिः प्रोक्ष्यामीति प्रैषः। स्रुचेत्वेति प्रोक्षणं मूलावसेकः। तूष्णीं प्रस्तरग्रहणम्। ब्रह्मणे समर्पणम्। प्रस्तरादानकाले स्मरणं न भवति ततः प्राक् भवति। समिदाधानं प्रागुपस्पर्शनात्। मूलावसेचनप्राक्प्रोक्षणीशेषस्य नाशदोषादौ पुनरुत्पाद्य मूलावसेचनं कार्यं मूलसंस्कारत्वात्। प्रस्तरस्यादानं प्राक्स्तरणात्। आहवनीयकल्पनं प्राक्कर्मापवर्गाहुतिः। उल्मुको ईहनं प्रागन्त्यानुयाजात् परिधिपरिधान आकर्मापवर्गाहुतेः। परिधिनाशदोषादौ संस्कारैरुत्पाद्य पुनः परिधानं प्रथमपरिध्युपसर्जस्पर्शनमापरिधिप्रक्षेपात्। समिदाधानानन्तरं काष्ठान्तरेणोपस्पर्शनं कार्यं परिधिसंस्कारत्वात्। स्पृश्यास्पृश्योरामासमिष्टयजुः आहवनीयेक्षणं च विधृत्यास्तरणमास्तरणात्। सव्याशून्यकरणं चाजुह्वांसादनात् जुह्वासादनमा-व्यूहनात्। उपभृतश्च आसमिष्ट यजुषो ध्रुवायाः विभस्मीकरणमोद्वासनात्। पात्र्युपस्तरणमाहविर्निधानात्। शृताभिधारणम् अयोगात्। प्राणदानं च कपालाञ्जननमोद्वासनात्। उद्वासनमाकर्मसमाप्तेः। उद्वास्यमानकपालनाशे अश्विनो द्विकपालः पुरोडाशं सान्निपातिकैरङ्गैर्युक्तः कर्त्तव्यः। हविषादानं प्राग्यागात्। आलम्भनञ्च। आत्मालम्भः आसमाप्तेः होतृषदनाकरणमन्त्यपत्नीसंयाजात्। सामिधेनिप्रैष सतन्वन्निति प्रैषं चान्त्यसामिधेनीप्रक्षेपात्। अवबाधनमासमाप्तेः इध्माधानमासमिष्टयजुषः प्रतिप्रणवमाधानाकरणे अनादिष्टमेव। अनुयाजार्थकाष्ठस्थापनविस्मरणे क्षये च एकस्य द्वयोर्बहूनां वा पुनरासादनादि कार्यम्। तत्र यजमान वाचं यच्छेति प्रैषः श्रवणस्य पश्चादुत्तरतो वा। अग्निहोत्रहवण्यासादनं पवित्रे चेत् प्रस्तरे कृते ततः पवित्रछेदनं पवित्राणां चासादनम्। पूर्वेणैवेध्मसन्नहनेन वध्वेध्मस्यासादनम्। पूर्वाभ्यामेव पवित्राभ्यां प्रोक्षणीसंस्कारः। दैव्यायेति प्रोक्षणम्। पवित्रप्रतिपत्तेरूर्ध्वतयोरपि छेदनं प्रोक्षणीनामवध्येदिधारणमग्नीध्रः। अध्वर्योः स्फ्यमुद्यम्य प्रोक्षणीरासादयेध्मं बर्हिरुपसादयेति प्रैषः। अन्तर्वेदिप्रोक्षणीनामासादनम्। प्रणीतानां पश्चादिध्मासादनम्। प्रोक्षण्युत्पवनं सवितुर्व इति। ब्रह्मन्निति प्रैषः। अनुज्ञातस्य

कृष्णोसीति प्रोक्षणं ततो यथार्थविनियोगः। अनुयाजा ऊर्ध्वमाध्वर्यवमेव नत्विध्मसंस्कारः। उपवाजनमासमिष्टयजुषः पूर्वाधार आसमाप्तेः सम्मार्ग आन्त्याहुतेः सम्मार्गे प्राग्दक्षिणोपचारैः स्मार्त्तमञ्जलिकरणमोत्तराधारहोमात्। पाणिभ्यां जुहूमित्यादि दक्षिणतोवस्थानान्तानामनादिष्टमात्रमुत्तराधारमासमाप्तेः। ऋज्वाद्यकरणे अनादिष्टं द्रव्यनाशादौ सकृद्गृहीतेन आधारः ध्रुवासम्मञ्जन-प्रथमप्रयाजान् इध्मसन्नहनादानमाहोतृनामगहणात्। आश्रावणादिहोतृनाम-ग्रहणान्तमान्त्यपत्नीसंयाजात्। समृषयोरुपवेशनमास्रुगादानात्। ये३ यजामहादिनां याज्यावषट्काराणामकरणे अन्यथाकरणे च हौत्रकम्। देवेनोद्देशेन द्रव्यत्यागाकरणे पुनर्द्रव्यमुत्पाद्य त्यागः प्रयाजामासमाप्तेः एकैकस्याकरणे च। समानयनविस्मरणे जौहवैनैव सर्वे अशेषेषु पुनरौपभृतेन चतुर्थपञ्चमयोर्यागः शेषेण हविषामभिघारणम्। प्रागाज्यभागार्थाज्यग्रहणात्। नाशदोषादावनादिष्टमात्रम्। आज्यभागहीनं स्विष्टकृदन्तानामासमाप्तेः। अनुवाचनादिवषट्कारान्तप्राग्यागात्। देवताविपर्यासे जाते पुष्कलदानरूपं प्रायश्चित्तं कृत्वा यथानुपूर्व्यकरणं यथाक्रमेण करणं यस्य देवताया उच्चारणकालो भवति तस्या उच्चारणं कर्तव्यमित्यर्थः। पुष्कलशब्दो यज्ञपार्श्वेषूक्तः—

> अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिद्दृष्टौ तु पुष्कलमिति।
> देवताविपर्यासे च तत्रैव विशेषोऽस्ति।।
> धेनुर्वा यदि चानड्वान्मेषकाद्वादशापिवा।
> देवतानां विपर्यासे एतत्पुष्कलमुच्यते।।

धान्यमुष्टिचतुःषष्टिरितरेषु पुष्कलमिति। तथान्यदपि ग्रासमात्राद्भिक्षा पुष्कलं चतुर्गुणमिति। न देवताविपर्यासे धेनुर्वेत्यादिकमेव यागादौ। इतरेषु पुष्कलदाननिमित्तेषु व्यवस्थासमर्थस्य चतुःषष्ठिपरिमितेन धान्येन पुष्कलमित्यादौ असमर्थस्य चतुर्ग्रासपरिमितेन समस्ते पुरोडाशदग्धे तत्सदृशेन नान्यकर्म समाप्य तदेव तस्मिन्नेव विहारेग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं कुर्यात्। एकदेशे दाहे तु न दोषः। अवदाननाशदोषादौ सान्निपातिकैरपि अङ्गैर्युक्तं हविरन्तरमुत्पाद्यते न यागः प्रधानयागादूर्ध्वविनाशे आज्येन स्विष्टकृत्। प्राशित्रादीनां लोपः उपांशुयागस्य विस्मृतौ समिष्टयजुषः ऊर्ध्वं स्मरणे प्रकृतं समाप्यादित आरभ्य कर्मापवर्गान्तमाज्यहविष्कं कर्मावर्त्तते। विहितस्थानेषु होमाकरणेऽनादिष्टमात्रं नावृत्तिः। अनुब्रूहीत्युक्त्वा ता पय्या हरेदित्यादावापव्याहरणे भूर्भुवः स्वरिति वा जपेत्। पुनरनुवाचनादि कुर्यात्। स्रुग्विधानकरणे अनादिष्टं सञ्चराभ्युक्षणं मन्त्यानुयाजात्। प्राशित्रादिमार्जनान्तमासमाप्तेः [illegible] इक्षणग्रहणसादनान्याभक्षणात्।

इडासमर्पणादिभागपरिहरणान्तं च आसमाप्तेः भक्षणं मार्जनं च पवित्रप्रतिप्रस्तरहोमात्। नाशदोषादावनादिष्टमेव भाग्यहरणमासमाप्तेः। अन्वाहार्योभिघारणाद्यालम्भनान्तं प्राग्दानात्। दानं त्वासमाप्तेः उल्मुकसमास आअन्त्यानुयाजात्। उल्मुकदूहनानन्तर आहवनीयानुगमनेनोल्मुकादानयनम्। किन्तु गार्हपत्यादेवाग्निरुषसेति पुनराहरणम्। तयोः समानयनविस्मरणे चोत्तमानुयाजानन्तरमाहवनीये समासो न कार्यः। अनुयाजानां विस्मृतिः स्यादिति आध्वर्यवप्रायश्चित्तं होतव्यमिति प्रैषश्च आत्यानुयाजान् समिदाधानसम्मार्गो प्राक्समिष्टयजुषः। समानयनविस्मरणे जुहूशेषेणोपभृतेन ध्रौवेन वा कृतानामनुयाजानामावृत्तिः। स्रुग्विपर्यासेनादिष्टमात्रं धारानुयाज आसमाप्तेः व्यूहनं च। अनुयाजार्थस्य द्रव्यस्य नाशदोषादौ वक्ष्यते। जुह्वाआभ्युक्षणमासमाप्तेः परिध्यञ्जनमाप्रक्षेपात्। परिधिग्रहणादिप्राक्सूक्तानुवाकात्। प्रस्तरादानादीनि नोच्चैर्हरणानान्याप्रस्तरहोमात् विधृत्योः स्थाने करणमाप्रस्तरहोमात् प्रस्तरहोमः आसमाप्तेः। तृणप्रक्षेप आत्मालम्भो वा परस्परसंवाद आशंयोर्वाकान्। शंयोर्वाक आसमाप्तेः। परिधिप्रक्षेपश्च प्राक् पत्नीसंयाजार्थाज्यग्रहणासंस्रवाहुतिः। धूरितिधानमासमाप्तेः। वेद्यालम्भ आसमिष्टयजुषः पत्नीसंयाज आसमाप्तेः अन्यतरसञ्चरेण प्रवेशनमासंपत्नीसंयाजान्। इडाभक्षणमासमाप्तेः। अदब्दाहुतिः प्राग्दक्षिणाग्निहोमार्थाज्यग्रहणात्। द्रव्यनाशादौ सकृद्गृहीतेन जुहुयात्। सव्येनावृतेत्यस्याकरणे आध्वर्यवमेव। दक्षिणाग्निहोमः आसमाप्तेः। वेदयोक्त्रविमोकादिस्तरणमासमाप्तेः समिष्टयजुश्च ध्रौवस्य नाशदोषादौ सकृद्गृहीतेन बर्हिहोमः आसमाप्तेः प्रणीतानयनं च। उदकाभावे अनादिष्टमेव। कणानपासमाप्तेः कृष्णाजिनमधोधः कणानपासकरणे अध्वर्यवमेव। पूर्णपात्र-निनयनमासमाप्तेः विष्णुक्रमेणमाहवनीयोपस्थानां तस्याकरणेप्येवमेव। भागस्य नाशादौ चाध्वर्यवमेव। आवर्त्तनप्रदक्षिणाकरणे आध्वर्यवम्। न तु स्मार्त्त प्रैषकरणे प्रैषार्थं वा। अकृतेध्वर्यवमेव। कर्मापवर्गे समिदाधानादित्यग्निसद्भावनया वेदाध्वर्यव पूर्वकानि कार्याणि। समिधोनाशदोषादावाध्वर्यवं हुत्वासादनादिभिः संस्कारैः संस्कृत्य समिदाधानं कुर्यात्। अवधेरूर्ध्वं सर्वत्राध्वर्यवमेव न तस्य करणं मन्त्ररहितस्य प्रैषरहितस्य करणे चाध्वर्यवमात्रम्। इति।

## ।। अथ चातुर्मास्येषु प्रतिपदार्थमवचारे प्रायश्चित्तानि ।।

तत्राग्नेयसौम्यादिसौर्यान्ताः सर्वे यागाः प्रधानकर्मणि। चातुर्मास्य यजत इति शब्दसमानाधिकरणात्। चातुर्मास्यशब्दवाच्यान्यपि तान्येव। अतस्तेषां मध्ये एकैकस्य द्वयोर्वा बहूनां विस्मरणे आध्वर्यवपूर्वकं विस्मृतस्यानुष्ठानं कुर्यात्।

दर्विहोमानां पूर्णा दर्वी करम्भपात्रत्र्यम्बकादीनां विस्मरणे च तेषां नानुष्ठम्। यजतित्वेपि वैश्वानरपर्जन्ययोरङ्गत्वमेव तयोरन्वारम्भणीयास्थाने विधानादन्वारम्भणीयावदङ्गत्वात्। अतस्तयोरपि विस्मृतौ शुनासीरीयारम्भादकरणम्। ततः प्रागध्वर्यपूर्वकं करणम्। वाजिनयागौण्यङ्गप्रयाजादिवत्। वाजिनस्य नाशादौ अनादिष्टं हुत्वा लौकिकेन वाजिनेन यागः। आज्येन वा प्राक्कर्मापवर्गात्। अग्निमन्थने शकलनिधानाकरणे अग्निमन्थनादूर्ध्वमनादिष्टमेव। अग्न्युत्पत्तेः प्राङ्निधानं कुशतरुणयोरनिधानेप्येवम्। जातस्याग्नेर्नाशादौ आध्वर्यवं हुत्वा पुनर्मन्थनं प्रासनं च विस्मृतेः प्रागन्त्ययागात्। होमश्च चतुर्थप्रयाजादूर्ध्वं प्रभृतयश्चत्वारः। पञ्चमस्यैवाभ्यासः तत्रैकस्य विनाशस्याभ्यासः पञ्चम आवर्त्तत इति कर्कगदाधरौ। विनष्टस्यैवादत्तिरिति याज्ञिकाः। अनुयाजसमिष्टयजुषामप्ययमेव न्यायः वपने गोदानोदनं तृणान्तर्धानं च प्राग्वपनात्। अनपत्यवपनात्। क्षुरदानं च वपनं प्राक्पौर्णमासारम्भात्। वैश्वदेवीकवाससां नाशादौ पादावनादिष्टं हुत्वा वरुणप्रघासेप्यन्यान्यहतान्येव परिधेयानि। तान्यपि अवभृथान्ते देयानि इति याज्ञिकाः। नेति कर्कः। अधःशयनादिनियमलोपे आध्वर्यवं वरुणप्रघासेषु समारोप निर्मन्थनाकरण आध्वर्यवं हुत्वा प्राक्कर्मापवर्गायाः कुर्यात्। कुतः अग्निमन्थनस्याग्निसंस्कारार्थत्वात्। अग्नेश्चाङ्गप्रधानार्थत्वात्। उत्तरवेद्यादौ प्रणीतेष्वग्निषु तेषामेव समारोपः मथित्वा च पुनःप्रणयनादिकार्यः तत्राग्न्यन्वाधानं परिस्तरणमाहवनीयकल्पनं परिधीपरिधानंस्पृश्यानुपस्पृश्येष्वाराधानम्। सूर्यस्त्वेति जपः सामिधेनीप्रैषः सामिधेन्युच्चारणम् इध्माधानम् उपवाजनं सम्मार्गश्चेति संस्काराः पुनः कार्याः उद्वासनं च कर्मापवर्गायाः आलभमानं प्रागुत्तरवेदिनिर्वापात् प्रहरणादिपुरीषं निर्वपनान्तं च। अन्वारम्भे कृते आध्वर्यवमात्रम् उत्तरवेदिकरणप्राक् तत्राग्निनिधानात्। ताभिश्च पञ्चगृहीतं प्राग्व्याघारणात्। आज्याद्युद्यमन्तं प्राक्तत्तत्कार्यात्। प्रैषाकरणेत्वाध्वर्यवमात्रं प्रोक्षणीव्याघारणे प्रागग्निस्थापनात्। पैतुदारवाद्यकरणे प्राप्तौगौपदेशिकाङ्गप्रधानाहुतेस्तत्करणमग्निसंस्कारकृतत्वात्। तेषां हविः संस्कारत्वात्। मेषमेष्योर्नाशादौ पुनरुत्पादनं पयस्यायागादूर्ध्वमनादिष्टमेव पयस्या संस्कारत्वात् जुहोति पक्षे प्राक्कर्मापवर्गात्केवल्योर्होमः। कर्कमते मेषमेष्योखदानविस्मरणे केवलीभ्यामपि यागः कार्यः प्राक्समिष्टयजुषः सान्निपातिकैरङ्गैर्युक्तः ऊर्ध्वं तु प्राक्शुनासीरीयान्तान् यदा स्मर्यते तदाध्वर्यवं हुत्वा समारोपादिभिः सान्निपत्योपकारकैरुत्पाद्य साङ्गपाङ्गो यागो देशभेदेन कार्यः। साकमेधादितन्त्रमध्ये चेत्स्मर्यते तदोत्पाद्य तन्त्रेण सह यागः। मेषीमात्रान्तराये तु विरोधाभावादध्वर्युः कर्त्ता उत्तरवेद्याः करम्भां च आग्नेयादीनां हविर्विस्मरणे त्वयमेव त्यागः अयन्तु

विशेषः आग्नेयादीनां पञ्चानां वैश्वदेवधर्मा भवन्ति। वरुणप्रघासिकाश्च ऐन्द्राग्नीनामन्तराये च त्रेधा बर्हिवासः प्रस्तरदेशादयो वैश्वदेवधर्मा भवन्ति। समारोपनवप्रयाजमन्थनादयो वरुणप्रघासिका भवन्ति। एवं साकमेधेश्वथैन्द्राग्न-माहेन्द्रवैश्वकर्मणां द्रष्टव्यम्। केन चरसीत्यादीनां होमार्थगमतपरियन्तानां प्राग्घोमात्। जपोनुवाचनं प्राक्सम्मार्गात्। करम्भपात्रहोमः प्राक्कर्मापवर्गात्। करम्भपात्रमेषीमारुतीपयस्यायं बद्धपदार्थस्यान्यथाभावे प्रतिपस्थानभक्तेनाज्यस्थाली स्रुक्स्रुचवदादिना प्रायश्चित्तहोमो दक्षिणाग्नौ दक्षिणाहवनीये वा। नोत्तरवेदिस्थे। प्रदापनात्पाक्प्रतिपस्थानककर्मणो अन्यथाकरणे तु मध्याहवनीये एव ततः पृषदाज्यस्कन्दने अयाविष्टामित्यनेन मन्त्रेणाध्वर्युः दक्षिणेनाहवनीये सकृद्गृहीतं जुहोति। ॐ अयाविष्टाजयत् करवराणिसहिवृणिरुर्वरामगातुः। सप्रत्यदैद्वरुणो-मध्वोअयंस्वायांयन्यान्नुमैरयतु स्वाहा। इदं वरुणाय०। भूमिभूमीत्यनेनाभिमर्शनम्। ततः अयामवक्रमणं प्राक्स्नानान्तनिष्कायनाशादावाज्येवरुणाग्निवरुणयोश्चतु-र्गृहीताभ्यां यागः। स्थालीमज्जनप्रागपर्वात्। नाशादावाध्वर्यवमेव स्नानं समिदाधानं च। प्रागपर्वात् साकमेधे समारोपावकरणेवरुणप्रघासान् पित्र्यायामध्वर्यव एव होमभुव इति होमस्त्वन्न इत्यादिहोमश्च दक्षिणाग्नावेव। क्रियमाणं पदार्थोपचारे सव्येन। अपसव्येन क्रियमाणपदार्थापचारे तदङ्गत्वेन तदर्द्धमनुरोधात्। सोमवद्यागे पुरोडाशावदानमेव यागसाधनम्। धानामन्थनयोखदाने तु तत्संस्कारके अतश्च तया ग्रहणविस्मरणे यागस्य नावृत्तिः संस्कारकत्वात्। एवं बर्हिषद्यागे धानावदानमेव यागसाधनमग्निष्वात्तयागे च मन्थीवदानमेव यागसाधनं कव्यवाहनयागे च त्रीण्यवदानानि सदृशानि। तत्रैकैकविस्मरणे तेन कव्यवाहनयागावृत्तिः। परिषिच्यावनेजनं प्राक्पिण्डदानात् पिण्डदानं प्रागपर्वात्। द्रव्यनाशादौ द्रव्यान्तरेणापि सदृशेन पिण्डदानं कर्त्तव्यं तस्यार्थकर्मत्वात्। संस्पर्शनयोरुपस्थानं प्रागपर्वात् जपावनेजनादि च। त्र्यम्बकेषु चाध्वर्यवहोमो मन्त्रेण न तूष्णीम्। भुव इति दक्षिणाग्नौ त्वन्न इत्यादिचतुष्पयः नीतेग्नौ ततः प्राग्दक्षिणाग्नावेव। अत्रोदङ्मुखेन प्रायश्चित्तं होतव्यम्। एकः कपालानामेकैकस्य होमस्य विस्मरणे निर्वपनविस्मरणे च निर्वपण्यासयवना भवति। चतुष्पथेग्निशान्तौ पुनर्दक्षिणाग्नेरुल्मुकदानादि। अग्निपरिगमनं पुनर्न भवति। इति।

## ।। अथ प्रायश्चित्तार्थमित्रविन्देष्टिः ।।

तदुक्तं—

चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च।
मित्रविन्दा पशुश्चैव सकृन्मासत्रयं तथेति।

अन्यत्रापि—

मित्रविन्दापशुश्चैव पवित्रेष्टिस्तथैव च।

ऋतावृत्तौ प्रयुञ्जानः पुनाति दशपूरुषमिति।।

ऋतावृत्ताविति विष्ट्यानित्यत्वं चास्याबोधितं तथैव पशोः। पवित्रेष्टिश्च तथा पवित्रेष्ट्या विशुद्धानि सर्वे घोराः प्रतिग्रहाः। अथवा च मृगारेष्ट्या कदाचिन्मित्रविन्दयेति। अथ मित्रविन्दा श्रीराष्टमित्रायुःकामस्य विहिता। तत्राचमनं प्राणायामत्रयान्ते मित्राविन्दयेदुतह्यन्ते तदङ्गतया विहितं स्वस्तिपूर्वकं नान्दीश्राद्धं करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनमहं करिष्ये। इति सङ्कल्पं कृत्वा पुनर्देशकालकीर्त्तनान्ते मित्रविन्देष्ट्याहं भूम्भनिमित्तमन्वारम्भणीयेष्ट्याहं यक्ष्ये इति सङ्कल्पं कृत्वा यजमानः पुनर्देशकालकीर्त्तनान्ते पापक्षयकामो वा राष्ट्रकामो वा मित्रकामो वा आयुःकामो वा परमेश्वरकामो मित्रविन्देष्ट्याहं यक्ष्ये। तत्र ऋत्विजो वृणे इति सङ्कल्प्य ब्रह्महोताध्वर्यवाग्नीध्रो वृत्वा उद्धरणं यजमानः षट् समिधो गृहीत्वा सर्वत्रोपांशुदेवतापदानि। अग्निमष्टाकपालेन पुरोडाशेन सोमं चरुणा वरुणं दशकपालेन पुरोडाशेन यवमयचरुणा वा मित्रचरुणा इन्द्रमेकादशकपालेन पुरोडाशेन बृहस्पतिं चरुणा सवितारं द्वादशकपालेनाष्टकपालेन वा पुरोडाशेन पूषणं चरुणा त्वष्टारं दशकपालेन पुरोडाशेन सद्योहं यक्षे। पञ्चदशो वज्रः। व्रीहिभिर्यागः। दशदक्षिणा ममाग्नेपक्षः। उत्तमे काले व्रतोपायनं शेषं पूर्ववत्। पात्रासादने कपालान्येकपञ्चाशत् वारुणस्य चरुपक्षे एकचत्वारिंशत् सवितुरष्टाकपालपक्षे सप्तत्रिंशत् दक्षिणास्थाने दशगावः। उपकल्पने चरुपात्रपञ्चकं वारुणस्य चरुपक्षे षट् तावन्ति मेक्षणानि ग्रहणे उपांशुः। अग्नये जुष्टं० सोमाय० वरुणाय० मित्राय० इन्द्राय० बृहस्पतये० सवित्रे० पूष्णे० सरस्वत्यै० त्वष्ट्रे० प्रोक्षणे त्वाधिकः कणान्ते चर्चकः। इदं सोमस्य इदं मित्रस्येत्यादि० पिष्टावायन्ति चरुषु सपवित्रेषु पृथक्-पृथक् तण्डुलावापो मन्त्रेण। संयवनान्ते समं विभज्य इदं मग्नेः पक्षे इदं वरुणस्य इदमिन्द्रस्य इदं सवितुः इदन्त्वष्टुः प्राणदाने अग्निं गच्छ सोमङ्गच्छ वरुणं मित्रं इन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारं गच्छ। होतुः पञ्चदशसामिधेन्यः आवाहने। अग्निमग्न० सोममा० उपांशु अग्निं० सोमं वरुणं० मित्रम् इन्द्रं बृहस्पतिं सवितारम् पूषणं सरस्वतीं त्वष्टारम् उच्चैः आवह पञ्चमे प्रयाजे ये यजामहे स्वाहाग्निं स्वाहा सोमाय स्वाहा उपांशु अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं षूषणं सरस्वतीं त्वष्टारं स्वाहा देवा आज्यपा जुषा० त्यागेपि यजमानः। इदमग्नये सोमाय इत्युच्चैः। अथोपांशु अग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे देवेभ्य आज्यपेभ्यो

अग्नये स्विष्टकृते च न मम। पञ्चममपुष्टिमन्तावाज्यभागौ अग्निनारयिमवतमो इति पुरोनुवाक्या। द्वितीयस्य गयस्फानो अ० भवोम् नित्ये आज्ये। अथ प्रधानयागे अध्वर्युरुपांशु:। अग्नये सोमाय वरुणाय मित्राय इन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे अथोच्चै: अनुब्रूहि। होतोपांशु:। अग्नि: सोमो वरुणो मित्र इन्द्रो बृहस्पति: सविता:य: सहस्त्री पूषाणो गोभिखसासरस्वती त्वष्टारूपाणि समनक्तयज्ञै: उच्चै:। ॐ अथाध्वर्यु: जुह्वामुपस्तीर्याग्नेयादिदशानां मध्यात्पूर्वार्द्धाच्चा-वदायाभिघार्य हवींषि प्रत्यभिघार्यातिक्रम्याश्राव्य प्रत्याश्राविते उपांशु अग्निं सोमं वरुणं मित्रम् इन्द्रं बृहस्पतिं सवितारं पूषाणं सरस्वतीं त्वष्टारम् उच्चै: यज ये यजामहे उपांशु:। त्वष्टारं सरस्वतीं पूषाणं सवितारं बृहस्पतिमिन्द्रं वरुणं सोमामग्निं त्वष्टारूपाणि ददाति सरस्वती पूषा भगं सविता मे ददातु। बृहस्पतिर्ददिन्द्रो बलं मे मित्र: क्षत्रं वरुण: सोमो अग्नि: उच्चै: वौषट्। यजमान: इदमग्नये सोमाय० त्वष्ट्रे न मम। स्रुचावन्यस्मै प्रदाय जुहोति स्थाने उपविश्य स्थाल्या: स्रुवेणोपजुहोति। अग्निरन्नादोन्नपतिरन्नमस्मिन्यज्ञे मयि दधातु स्वाहा यजमान: इदमग्नयेन्नादायान्नपतये न मम। अध्वर्यु: सोमो राजा राजपतीराज्यमस्मिन्यज्ञे मयि दधातु स्वाहा इदं सोमाय राज्ञे राजराजाय न मम। वरुण: सम्राट् सम्राट्पति: साम्राज्यमस्मिन्यज्ञ० इदं वरुणाय सम्राजे सम्राट्पतये न मम। मित्र: क्षत्रं क्षत्रपति: क्षत्रमस्मिन्यज्ञे० इदं मित्राय क्षत्राय क्षत्रपतये न मम। इन्द्रो बलम्बलपतिर्बलमस्मिन्यज्ञे० इदमिन्द्राय बलाय बलपतये० बृहस्पतिर्ब्रह्मणोधिपतये ब्रह्मवर्चसमस्मिन् यज्ञे० इदं बृहस्पतये ब्रह्मणे ब्रह्मवर्चसे०। सविता राष्ट्रं राष्ट्रपति: राष्ट्रमस्मिन्यज्ञे० इदं सवित्रे राष्ट्रपतये पूषा भगं भगपति: भगमस्मिन्यज्ञे० इदं पूष्णे भगाय भगपतये न मम। सरस्वती पुष्टिं पुष्टिपति: पुष्टिमस्मिन् यज्ञे० इदं सरस्वत्यै पुष्ट्यै पुष्टिपतये०। त्वष्टा रूपाणां रूपकृद्रुपपतीरूपिणे पशुमस्मिन्यज्ञे० इदन्त्वष्ट्रेरूपकृते रूपपतये न मम। इत्युपहोम:। इत्युपस्विष्टकृत्। तत्र प्रेद्धो अग्ने० जोयज्ञ इति विराजौ संयाज्ये सहस्रवेत्यौवा। अग्नयेस्विष्टकृतेनु० होतानूनोरास्वसहस्रवतोकवत्युष्टिमद्वसु। द्युमदग्नेसुवीर्यं वर्षिमनुपक्षितो। अग्निं स्विष्टकृतं यज ये ॐ अग्निं स्विष्ट-कृत्मयाडग्निरग्ने: प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्। उपांशु: अग्ने: सोमस्य० त्वष्टु: उच्चै: प्रियाधामान्ययाट् देवाहविरुन्ननो ब्रह्मन् हविषा उक्तेषु देवहुत्तम: शन: सोवामरुद्वधोग्ने सहस्रसातमावौषट्। दक्षिणास्थाने प्रजापतेर्भागस्थोर्जस्वाण्प्राणापानौमिपातसमानव्यानौ मे पानौदानव्यानौ मे पातगावस्थोर्जमयिधृताक्षितिरसिमायेक्षेध्वर्यमुत्राअस्मिंल्लोक इह च। अस्या इष्टे: समृद्ध्यर्थं दशगाव दक्षिणाब्रह्मादयो ऋत्विज: इमा गावो यथाविभागं प्रतिगृह्यताम्।

इति तन्मूल्यदानम्। व्यूहने अग्नेः सोमस्य॰ त्वष्टुरुज्जितिम॰ अग्निः सोमो॰ त्वष्टातमपनुदन्तु। सूक्तवाके। अग्निरिदंह॰ कृत। उपांशु। अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता पूषा सरस्वती त्वष्टा उच्चैः इदं हविः उपांशु। आजुषतावीवृधत उच्चैः महोज्यायः उपांशु अकृत। एकामेव संस्तुयादिति सूत्रितत्वादेकवचनेनैवायं प्रयोगः देव आज्यपा इत्यादिदोषं प्रकृतिवत्। **इति मित्रविन्देष्टिः।**

## ।। अथान्त्येष्टिप्रयोगः ।।

सायं होमं कर्तुमशक्तो यजमानः समीपे उपविश्य त्यागात्करोति। सायं होमेकृते प्रातर्होमादर्वाक् यदि यजमानमरणं भवति तदा उन्नयनात्पूर्वं होमद्रव्यस्य गार्हपत्ये प्रक्षेपः। उन्नयनान्तरमाहवनीये प्रक्षेपः। पौर्णमासे दर्शे वा क्रियमाणे यदि यजमानमरणं तत्रापि पौर्णमासे कृते दर्शात्पूर्वं यदि यजमानमरणंशंका तदैव दर्शयागः कर्तव्यः। यागासम्भवे आज्यं संस्कृत्य पुरोनुवाक्ययाज्याभ्यां सह स्वस्वहविषा प्रधानदेवतानां होमः। तदसम्भवे केवलाज्येन प्रधानदेवतानाममात्रेण जुहुयात्। हविर्ग्रहणानन्तरं प्रागासाद् गार्हपत्ये हविषां दाहः आसादनानन्तरं प्रधानहोमात्पूर्वं चेत्तदाहवनीये हविषां दाहः। शेष कर्मलोपः। ततः पुत्रादिस्नातः कृतापसव्यं सकृत्सकृत्परिसमूहनादिसंस्कारपूर्वकं दाहार्थसन्तापजाग्न्युत्पादयिष्ये 'आहवनीयदक्षिणाग्न्युद्धरणं' ततः गार्हपत्याहवनीयदक्षिणाग्न्योरुपरि उषाधि-श्रयणम्। दक्षिणाभिमुखेन सर्वं कर्त्तव्यम्। सभ्यावसस्थायोर्नोषाधिश्रयणम्। तौ प्रत्यक्षावेव स्थाल्यां मध्ये निधाय सर्वासु स्थालिषु **नामलेखनादि चिह्नकरणम्।** ततो मरणस्थानादि **एकोदिष्टविधिना श्राद्धं सर्वं पूर्ववत्।** पाकस्तु लौकिकाग्नौ कर्त्तव्यः। ततः **श्मशाने गत्वा** शवस्य **दक्षिणशिरःस्थापनम्।** ततः सर्वाणि तीर्थानि मनसा ध्यात्वा शवस्य स्नपनम्। ततः पुत्रादिस्नानं प्राचीनावीती गार्हपत्यादिखरसाधनम्। दक्षिणाभिमुखेन गार्हपत्याहवनीयदक्षिणाग्निस्थापनेषु सकृद् भूसंस्कारान् कृत्वाग्निस्थापनम्। सभ्यावसथ्ययोरुत्तरतः सप्तसु प्रक्रमेषु स्थापनम्। ततो गार्हपत्याहवनीययोरन्तरालेन प्रागायतां चितिं चिनुयात्। ततः प्रेतस्य केशश्मश्रुलोम्नां छेदनम्। केशादीनां निखननम्। चितौ प्रायश्चित्तमुत्तरलोमकृष्णाजिनमास्तीर्य तस्मिन्प्राक्**शिरसमुत्तानं प्रेतं निदध्यात्।** प्रेत-सम्बन्धिवस्त्रं द्विधा कृत्वा एकखण्डेन प्रेतशरीरमाच्छादयेत् खण्डान्तरं च श्मशानवास्यर्थं भूमौ निरस्येत्। ततः प्रेतस्य करे प्रेतनाम्नैव पिण्डदानम्। कुम्भदानं च आज्येनाभ्यञ्जनं सप्तसु प्राणप्रतप्तेषु मुखे दक्षिणोत्तरनासिका चक्षुः श्रोत्रेषु यथाक्रममेकैकहिरण्यशकलप्रक्षेपः। ततः प्रागग्र्यत्वानादि सर्वाणि पात्राणि

वक्ष्यमाणविधिना प्रेतशरीरे निदध्यात् 'पात्रप्रतिपत्तिः'। सव्ये पाणौ रिक्तां प्रागग्रमुपम्भृतम्। हृदये प्रागग्रां रिक्तां ध्रुवां प्रागग्रमुत्तानं कर्णयोः प्राशित्रहरणे। शिरसि रिक्तं प्रणीताप्रणयनं चमसं कपालानि शिरसि अप्सु वा पार्श्वयोः शूर्पमैष्किकम्। द्वितीयं वरुणप्रघासिकं एकं चेत् द्विधा कृत्वा पार्श्वयोरेकैकखण्डमासादयेत्। उदरे पृषदाज्यवतीमिडां प्रागग्राम्। शीर्ष्णि समीपे अधोमुखमुलूखलमूसलम्। आज्यस्थाली पिष्टपात्री उपवेष खण्डवतानि। शृतावदानपुरोडाशपात्री पूर्णपात्रकूर्चब्रह्मासनप्रमुखानि सर्वाणि यज्ञपात्राण्यनुक्तस्थानान्यूर्वोर्मध्ये आसादयेत्। स्मार्तपात्राणि सहितानि वरुणप्रघासशम्यं प्रागग्रम्। अण्डयोः समीपे अरणिम् उदगग्रां तत्समीपे तत्रैवासादयेत्। **स्थालीकपालानां पाषाणमयानां च वृषदानामप्सु प्रक्षेपः**। लोहमयानां पात्रौ बलीकपट्टिका कीलकादीनां च **ब्राह्मणाय** दानमप्सु प्रक्षेपो वा। आज्यस्थाल्यपि मृन्मयी चेत् अप्सु प्रक्षेपः ततः आहवनीयादिभ्याममुं मन्त्रं पठेत्—

कृत्वा सुदुष्करं कर्म जानता वा न जानता।
मृत्युकाले वशं प्राप्य नरं पञ्चत्वमागतम्।।
धर्माधर्मसमायुक्तं लोभमोहसमावृतम्।
दहेयं सर्वगात्राणि दिव्यालोकान् स गच्छतु।।

ततश्चन्दनपुष्पाक्षतैरग्निं सम्पूज्य—

त्वं भूतकृज्जगद्योने त्वं लोकपरिपालक।
उक्तसंस्कारस्तस्मात्त्वमेनं स्वर्गे मृतं नय।।

ततो अग्निभिश्चिते सन्दीपनम्।।

ततो मृतस्य पुत्रो भ्राता वा अन्यो ब्राह्मणो वा कृतापसव्यो दक्षिणाभिमुखो गार्हपत्ये आज्यं संस्कृत्याहवनीयं परिस्तीर्य समिधमाधायास्मात्त्वमधि जातोसीति मन्त्रेण जुह्वा सकृद्गृहीताज्याहुतिं जुहोति मन्त्रेण असावित्यत्र प्रथमान्तममुकस्वर्गायेति प्रेतनामग्रहणम्। इदमग्नयेति त्यागः। स्त्रियामप्यस्यान हः। ततो जुहूं तेन पूरयित्वा प्रेतस्य दक्षिणहस्ते प्रागग्रं सादयति। खादिरस्रुचं सव्यनासिकायां प्रागग्रमुत्तानं स्फ्यं दक्षिणहस्ते पात्रविशेषादाज्यस्थाल्या ऊर्वोरन्तरे प्रक्षेपः। मृण्मयीचेदप्सु प्रक्षेपः। दक्षिणाग्रैर्दर्भैः परिश्रितेराच्छादनं ततः कपालमदान्तरमुदकपूर्णं कुम्भ सव्यस्कन्धोपरि धृत्वा प्रेतपादसमीपे दक्षिणाभिमुखोवस्थाप्य अन्येन सपिण्डेन पाषाणेन कुम्भस्य छिद्रे कृते तेन छिद्रेण अवच्छिन्नामुदकधारां सिञ्चन् अप्रदक्षिणं चिते समन्तात्सर्वैः सगोत्रैः सकृत् भ्रमणं

कृत्वा चितेः पूर्वभागे स्वपुरतः पाषाणेन घटं स्फोटयित्वा लौकिकप्रैषपूर्वकं गाढरूदनं कृत्वा ततो दक्षिणहस्तेन सप्तसमिधमादाय चितिं प्रदक्षिणीकृत्य क्रव्यादाय नमः अनेन मन्त्रेणैकैकासमिधं चितौ प्रक्षिप्य उल्कायामेकं प्रहरं कुठारेण कुर्यात्। एवमेव प्रतिप्रदक्षिणा एकैकसमित्प्रक्षेपनम्। एकैकमेकवारमुल्कोपरि कुठारप्रहारः। यावत्सप्तप्रदक्षिणाः सप्त कुठाराश्च भवन्ति ततः स्नानार्थं नद्यादौ गच्छन्ति। पृष्ठतोऽनवलोकयन्तोरिति कनिष्ठपूर्वा यमगाथां गायन्तो यमसूक्तं जपन्तः अन्यत्सर्वं पूर्ववत्। पत्नीमरणेऽप्येव विधिः कर्त्तव्यः। भर्तुः पूर्वे पत्नीमरणे तस्याः त्रेताग्निना यथोक्तविधिना दाहं कृत्वा यजमानस्य वैराग्याभावे पुनर्विवाहं कुर्यात्। अथवा पूर्वपत्नीमरणे गार्हपत्यैकदेशे न तस्याः दाहः कृत्वा पत्न्यन्तरेण कुशमयी वा यावज्जीवमग्निहोत्रानुष्ठानं कर्त्तव्यम्। यदि पूर्वं भर्तृमरणकाले गार्हपत्योल्मुकं पृथक् कृत्वा उल्मुकस्थमग्निं नूतनारण्योः समारोप्य पत्नीमरणपर्यन्तम् अरणीं रक्षयित्वा पत्नीमरणसमये अग्निं निर्मथ्य तेनाग्निना पुत्रादिभिर्दाहः कर्त्तव्यः। अथवा लौकिकाग्निना पत्नीदाहः कर्त्तव्यः। पत्नी ज्येष्ठा वा कनिष्ठा वाधिकारिणी। एवं समिद्।

द्वितीयां चैव ये भार्यां दहेद्वैताग्निभिस्त्रिभिः।
जीवत्यां प्रथमायां तु सुरापानसमा हि तत्॥

अयं निषेधोऽनधिकारिणि द्वितीयस्त्रीविषये बोध्यम्। अथ वर्षादिना चिताशमनेर्द्धे दग्धारण्यादिवैधकाष्ठेष्वग्निं मथित्वा तेन दाहः कर्त्तव्यः। वैधकाष्ठालाभे गार्हपत्योल्मुकं मथित्वा तेनाग्निना दाहः कर्त्तव्यः। उल्मुकस्याप्यभावे गार्हपत्यभस्म यत्किञ्चित्काष्ठेनाग्निं मथित्वा तेन तस्या दाहः अथवा लौकिकाग्निं पञ्चभूसंस्कारपूर्वकं प्रतिष्ठाप्य आज्यं संस्कृत्य ॐ भूर्भुवः स्वाहेति धृताहुतिर्हुत्वा तेन लौकिकाग्निना तस्या दाहः कर्त्तव्यः। महाजले वा अर्धदग्धे देहस्य प्रक्षेपं कर्त्तव्यम्। एवमनाहिताग्निरौपासनिनापिनस्यात्तुल्यत्वादिति मदनपारिजातकारः।

'**अथ सूतिकामरणे विशेषः**—ब्राह्मणेभ्यः पञ्चदशप्राजापत्यात्मकस्य प्रायश्चित्तस्य। आज्ञां गृहीत्वा और्ध्वदेहिकं पुत्रादिभिः आचमनममन्त्रकं प्राणायामत्रयं देशकालौ सङ्कीर्त्य अमुकस्याः सूतिकायाः सूतिकावस्थामरणनिमित्त-प्रत्यवायपरिहारार्थम् और्ध्वदैहियोग्यत्वार्थम् अमुकप्रत्याम्नायद्वारा पञ्चदशप्राजापत्यानहं करिष्ये। पुण्या ऋग्गमभिमन्त्रितपञ्चगव्ययुक्तकुम्भजलेन शूर्पेणाष्टोत्तरं स्नानानि करिष्ये इति सङ्कल्प्य प्रायश्चित्तप्रत्याम्नायभूतं गवादिकं दत्त्वा नूतनकुम्भे शुद्धमुदकं प्रक्षिप्य आपो हि ष्ठा॰ इदमापः पुनन्तु मा।

चित्पतिर्मा।।२।। इमं मे वरुण।।४।। इत्यादिभिः पुण्या ऋग्भिः ब्राह्मणैः स्वयं चाभिमन्त्र्य तेनाभिमन्त्रितकुम्भोदकेन शूर्पेण शतवारं सूतिकां स्नापयित्वा पूर्ववस्त्रं परित्यज्य शुद्धवस्त्रेण सर्वं शरीरं वेष्टयित्वा दहेत्। एवमेव रजस्वलायाः रजस्वलावस्थामरणनिमित्तप्रत्यवायपरिहारार्थम् इति सङ्कल्पे विशेषः। तस्य प्रेतस्य रजस्वलायाः सूतिकायाश्च स्पर्शो जातस्याप्ययमेव विधिः कर्त्तव्यः। अत्रापि अमुकशर्मणो प्रेतस्य सूतिकारजस्वलायाः स्पर्शजनितप्रत्यवायपरिहारार्थं और्ध्वदैहिकयोग्यत्वार्थं चेति सङ्कल्पे विशेषः। अयं श्रौतोल्लासः सूर्यपुरनिवासिनोऽग्निहोत्रिणः गिरिजाशङ्करात्मज चिन्तामणि—शङ्करमहाराज-सकाशाल्लब्धः। यथा तस्मिन् ग्रन्थे लिखितमासीत्तथैवास्माभिः प्रकाशितम्। तेषामुपकारो सानन्दं मन्यमानो विरमामि। विदुषां कृपाभिलाषी जगन्नाथ परशुराम द्विवेदी।

## ।। अथ प्रवासस्थिताग्निहोत्रिणो मरणविधिः ।।

तत्र प्रेतागमनपर्यन्तं मृताग्निहोमः कर्त्तव्यः। तत्रायं विशेषः। सर्वं कर्म प्राचीनावीतिना कर्तव्यम्। आहवनीयखरे सकृत्परिसमूहनादिसंस्कारपूर्वकम् आहवनीयस्यैवोद्धरणम्। कूर्चस्थापनाभावः। पूर्वपश्चिमयोः पूर्वाग्रैर्दक्षिणोत्तरस्य दक्षिणाग्नेर्दर्भैराहवनीयस्यैवाप्रदक्षिणं पर्युक्षणमुदकधारायाः अभावः गार्हपत्योले भस्मतो गर्हपत्यखरमध्ये एव दक्षिणतो नयंन सन्धिनीं गां दोहयित्वा तस्या दु' धस्योले भस्मन्यधिश्रयणमवद्योतनम्। आसेकाभावः उद्वास्य सकृदेव प्रैषरहितेषु वा ग्रहणम्। स्रुगधोभागे एवं गुल्याद्येतस्ति समिद्धारणम्। गार्हपत्ये दक्षिणेनैवाह-वनीयं प्रतिनयनम्। तूष्णीं समिदाधानं सव्यजानुनिपातः अपसव्यं स्रुवं कृत्वा स्रुचि गृहीतस्य पयसः सकृदाहवनीये प्रक्षेपनम्। अत ऊर्ध्वं द्विः प्रकम्पेत्यादिकं किमपि न भवति समाप्तौ तत्कर्म। अन्यत्स्मार्त्तहोमपिण्डपितृयज्ञदर्शपौर्णमासेष्टि यथादिक् न भवति धारणान्तमेव भवति। **इति मृताग्निहोत्रहोमविधिः**।

अथ प्रोषितमृतस्य शरीरस्यैव चेदापनं तदा पुत्राधिकारी पराकद्वयं वा प्राजापत्यकृच्छ्राष्टकं प्रत्याम्नायद्वारा प्रोषितमरणजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तं कृत्वा स्वयं च शरीरशुद्ध्यर्थं प्रायश्चित्तं पूर्वोक्तविधिना पात्रन्यासपूर्वकं सन्तापजाग्निभिः मृतमग्निहोत्रचितिं दहेत्। यदा स्थानं तदैव विधिः। प्राग्ग्रीवोत्तरलोमकृष्णाजिनास्तरणं तदुपरि अस्थि यथास्थानस्थापनेन प्रेताकारकरणम्। सर्वस्याकारस्य ऊर्णाभिराच्छादनम्। प्रेताकारस्याज्येनाभि-घारणम्। पूर्ववदेव च पात्राणि योजयित्वा पूर्वोक्तप्रकारेण सन्तापजाग्निदाहः। ततो दाहदिनमेव प्रथमदिनं कृत्वा सर्वमिदं शुचकर्मकरणम्। इति।

## ।। अथास्थिनाशे दाहविधिः ।।

षष्ठ्यधिकशतत्रयं ३६० सङ्ख्या पालाशवृतैः कृष्णाजिने प्रेताकारकरणम्। तद्यथा शुचिभूमौ कृष्णाजिनमास्तीर्य तदुपरि एकशरः दक्षिणोत्तरस्थापनीयः। तदुपरिशरखण्डद्वयं करस्थाने स्थापनीयं शरखण्डद्वयं जङ्घास्थाने स्थापनीयम्। ततश्चत्वारिंशत् ४० पलाशवृन्तानि शिरःस्थाने ग्रीवास्थाने दश दक्षिणबाहुस्थाने पञ्चाशत् ५० तथा वामबाहुस्थाने पञ्चाशत् सर्वासु कराङ्गुलिषु दश हृदये त्रिंशत् ३० जठरे विंशति शिश्नौ चत्वारि ४ एकैकस्मिन्वृषणयोः २ त्रीणीति षट् ऊर्वोः प्रत्येकं पञ्चाशत् ऊरुद्वयाधः पादाङ्गुल्यसम्बन्धि एकैकस्मिन्पादे पञ्चदश पञ्चदश इति मिलित्वा त्रिंशत् सर्वासु पादाङ्गुलिषु दश एवं षष्ठ्यधिक पालाशवृन्तानि तत्तत्स्थाने च दत्वा ऊर्णासूत्रेण शरेण सह सर्वत्र बध्वा जलमिश्रेण यवपिष्टेन लेपयित्वा कृष्णमृगचर्मणा तद्वै वेष्टनम्। मृतनाम्ना देवदत्तोयमिति निर्देशः। आज्येन प्रेताकारस्य मञ्जनं ततः सन्तापजाग्निनिष्पादनप्रभृतिपूर्वोक्तविधिना पात्रयोजनपुरःसरं सन्तापजाग्निभिर्दाहः कर्त्तव्यः। दाहश्च तथा कर्त्तव्यो यथा सञ्चयनार्थं पालाशवृन्तावयवानामेव शेषो मूर्द्धादिस्थाने कदलीफलादिस्थपनं कैश्चिल्लिखितं तत्प्रतिष्ठितग्रन्थकारैरलिखितादुपेक्षितम्। अत्रापि दाहदिनमारभ्यैवाशौचं उदकादिक्रिया च। यदि च दाहान्तरं सूतकानन्तरं पुनरस्मिन्नेवाहनि। उदकादिक्रियारम्भः। पलाशवृन्तानामलाभे कुशैः प्रतिकृतिकरणम्। साग्निकस्य पलाशवृन्तैः इतरस्य कुशैरिति व्यवस्थां केचिदाहुः। पलाशवृन्तप्रेताकारस्य अग्निदाने कृते यदि गार्हपत्यादग्नयः शान्ता भवेयुः तदार्धदग्धवैधकाष्ठेनाग्निं मथित्वा दाहः कर्त्तव्यः। बौधाभावे अर्द्धदग्धकाष्ठान्तरेण मथित्वा दाहः। तस्याप्यलाभे पर्णशरस्य जले प्रक्षेपणम्। इति।

**'अथ उच्छिन्नाग्नेः पुनराधाने'**—अकृते अकस्मान्मरणे सूत्रान्तरोक्तं प्रेताधानप्रयोगः। पूर्वम् अग्निविच्छेदनिमित्तं प्रायश्चित्तकरणं तत्रादौ आवसथ्यस्य प्रेताधानं पश्चात् श्रौताधानं कार्यम्। अग्न्यागाराभावे तत्कर्णां गार्हपत्यादिकखरकरणम् अग्निस्थानेषु सकृतत्सकृत्परिसमूहनादिं खरकरणं प्रेतस्य स्थाप्यासने उपवेशनम्। गार्हपत्यागारे प्राग्ग्रीवं कृष्णाजिनमास्तीर्य तदुपरि अरणिं निधाय तदुपरि यन्त्रादिधारणं कृत्वा यस्याग्नयो जुह्वतो मां सकामाः सङ्कल्पयन्तु ते यजमाना मासं स्वादन्तु ते बर्हिषि सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु। अनेन मन्त्रेणाग्निं मथित्वा गार्हपत्ये स्थापयित्वा आहवनीयं तूष्णीं जुहुयात्। ततस्तूष्णीं दक्षिणाग्निमुद्धृत्य पूर्ववत्सन्तापजाग्निं सम्पाद्य पूर्वोक्तविधिना पात्रन्यासपूर्वकं दाहः। पश्चादुदकदानादि एवमेव विधिना स्मार्तमुत्पाद्य दाहः

कर्त्तव्यः। यदि विच्छिन्नाग्नेर्मृतस्य पूर्वे अरणि निरस्तस्तदा अरणीमानीय तयोररण्योः प्रेतस्य दक्षिणहस्ते निधाय पुत्रादिकर्त्ता अयन्ते योनिरिति समारोपमन्त्रं जपित्वा मृताग्न्याधानकर्मादिहोमान्तकर्म कृत्वा पूर्ववद्दाहः। अनेनैव प्रकारेण स्त्रीमरणेऽपि दाहः। **इति प्रेताधानम्।**

'अथातोग्नौ समारूढे यजमाने'—मृते अरण्योः प्रेतस्पर्शे कृत्वोपावरोहणं मन्त्रं च पठित्वा अग्निं मथित्वा तूष्णीमाहवनीयमुद्धृत्य आज्यं संस्कृत्य द्वादशगृहीतं गृहीत्वा तूष्णीमाहवनीये हुत्वैवाधिश्रयणादिकं कुर्यात्। जातवेद इदं प्रेतं स्वर्गाय लोकाय नय प्रेताहुतिं वास्य जुषस्व स्वाहा। इदमग्नये०। पश्चाद्दाहः कर्त्तव्यः एवं स्मार्तेऽपि। इति।

'अथाग्निषु शान्तेषु अरण्योः नाशे'—स्वात्मनो मरणेऽन्यैः अरणीं आनीय तस्योपरि प्रेतहस्ते निधाय समारोपमन्त्रं पठित्वा मृताधानं कृत्वा उस्वाधिश्रयणादिकं कुर्यात्। सर्वेषां सन्तापजाग्नीनां नाशे गार्हपत्ये मथित्वा आहवनीयदक्षिणाग्निं विहृत्य प्रायश्चित्तं हुत्वा पुनरूद्धृत्योखाधिश्रयणं कुर्यात्। स्थालीस्थानुगमे स्थालीस्थ एव दक्षिणाग्नादौ नैमित्तिकहोमो भूमौ निधाय च एकस्य गार्हपत्स्य नाशे तं मथित्वा अनादिष्टं हुत्वोखापूर्ववदधिश्रित्योत्पादयेत्। आहवनीयदक्षिणाग्न्योरेकैकस्य नाशे द्वयोर्वा नाशेऽनादिष्टहोमार्थमुद्धृत्य हुत्वा पुनरुद्धरेत्। न पुनरुखामधिश्रित्य सन्तापेनोपशान्तमुद्धृत्यासादयेत्। इति।

## ।। अथ साग्नेर्धनिष्ठापञ्चकमरणविधिः ।।

हीराकमौक्तिकवैडूर्यपुष्पराजेन्द्रनीलं वा पञ्चरत्नानि पञ्चकमृतस्य साग्निकस्य मुखे प्रक्षिप्य वह वपां जातवेदः अनेन मन्त्रेण मुखे एव आज्येनाहुतित्रयं दत्वा निर्वर्हणादिदाहान्तं कर्म कुर्यात्। शुद्ध्यनन्तरं शान्तिकरणम्। **अग्निहोत्र-व्यतिरिक्तस्य** पञ्चकमरणे तु भूमौ **निखननं जले वा प्रक्षेपणमिति मुख्य-शास्त्रार्थः। इदानीन्तनास्तु दाहमपि कुर्वन्ति। तत्र मूलं तैरेव द्रष्टव्याः।** इति।

'अथ तस्यैव **त्रिपादनक्षत्रे मरणविधिः**'—त्रिपादनक्षत्रमृतस्य साग्नेः मुखे हिरण्यशकलं कार्पासकुसुमं च **प्रक्षिप्य** यवपिष्टमयं **पुरुषत्रयं कृत्वा प्रतिमुखं** वह वपामिति मन्त्रेण एकैकामाहुतिं हुत्वा निर्बर्हणादि कर्म कुर्यात्। **वह वपां जातवेदः** पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके। मेदसः कुल्या उप तान्त्स्रवन्तु सत्या एषामाशिषः सन्नमन्तां स्वाहा। **साग्निकस्त्रीमरणे तु पिष्टमयस्त्रीत्रयं कृत्वा शुद्ध्यन्तरं** शान्तिकम्। इति।

## ।। अथ त्रिपुष्करविधिः ।।

**तत्रादौ त्रिपुष्करप्रयोगः प्रदर्श्यते।** आदित्यवारे द्वादशी मघायोगः। सोमे एकादशी विशाखायोगः। भौमे दशम्यामार्द्रायोगः। शुक्रं द्वितीयायां रोहिणीयोगः। बुधे तृतीयायां मूलयोगः। गुरौ षष्ठी सत्तारकायोगः। शनौ सप्तमीपूर्वाषाढायोगः। **एते सप्तत्रिपुष्करयोगाः।** सूर्यभौमगुरुवाराणामन्यतमे वारे भद्रातिथित्रि-पादनक्षत्रयोगो वा त्रिपुष्करयोगः। एवं द्वयोर्योगे द्विपुष्करयोगः।

मुहूर्त्तचिन्तामणौ तु—

> भद्रातिथि रविजभूतद्वयार्कवारे द्विशार्यमाजचरणादिति वह्निविश्वे।
> त्रैपुष्करो भवति मृत्युविनाशदग्धौ त्रैगुण्यदो भवति।।

यवपिष्टमयं पुत्तलत्रयं प्रेतसमीपे स्थापयित्वा दाहः कर्त्तव्यः। द्विपुष्करे तु मुसलद्वयमिति विशेषः। शुद्ध्यनन्तरं शान्तिकरणम्। **इति त्रिपुष्करद्विपुष्कर-मृतदाहविधिः।**

'अथ दाहानन्तरं प्रथमदिनमारभ्य'—दशदिनपर्यन्तं नवश्राद्धं सर्वं पूर्ववत्। विशेषस्तु अस्मत्कृते प्रेतमुक्तावल्याग्रन्थे च द्रष्टव्यम्। तदुक्तम्—

> अस्थिसञ्चयनादर्वाक् आहिताग्नेर्द्विजन्मनः।
> अयुग्मान् भोजयेद्विप्रान् नवश्राद्धं तदुच्यते।।
> साग्निकैस्तु द्वितीये चतुर्थदिने सञ्चयनं कर्त्तव्यम्।।

तदुक्तं गृह्ये—

अस्थिसञ्चयनं कुर्यात् द्वितीये वा चतुर्थे इत्याह आश्वलायनः। इति विशेषः। अन्यत्सर्वं पूर्ववत्। **इति श्रौताल्लासे साग्निकमरणविधिः।**

**।। समाप्तोऽयम् आचार्ययुगलकिशोरमिश्रसम्पादितः श्रौतोल्लासः ।।**

## परिशिष्टम्- ३

# स्मार्ताधान

उपासना के निमित्त अग्नि के परिग्रह को 'अग्न्याधान' कहते हैं। अग्नि परिग्रह के दो प्रकार हैं। श्रौत अग्निपरिग्रह और स्मार्त अग्निपरिग्रह। स्मार्त अग्नि के परिग्रह को स्मार्ताधान कहते हैं। स्मार्ताधान के बिना श्रौताधान नहीं हो सकता। अत: स्मार्ताधान का प्रथमत: परिचय दिया जा रहा है।

उपनयन-संस्कार के पश्चात् विधिवत् वेदाध्ययन कर लेने पर आचार्य की अनुज्ञा से ब्रह्मचारी का समावर्तन संस्कार किया जाता है। तत्पश्चात् वह स्नातक विवाह करके गृहस्थाश्रम में प्रवेश करता है। सहधर्मिणी पत्नी के साथ ही अग्नि का परिग्रह किया जा सकता है, अन्यथा नहीं।

पाणिग्रहण संस्कार होने पर द्विज, अग्नि के अधान का अधिकारी हो जाता है[१]। परिस्थितिवश यदि उस समय वह अग्निपरिग्रह के सौभाग्य से वञ्चित रह जाय तो शास्त्रकार ने उसे एक अवसर और दिया है। वह समय है कुटुम्ब में विभाजन होने पर जिस समय वह अपने दाय भाग को ग्रहण कर अपना स्वतन्त्र चूल्हा जलाता है, उस समय भी वह अग्नि का परिग्रह कर सकता है। स्मार्ताग्नि का परिग्रह कर लेने पर उसे स्मार्ताग्नि की उपासना करनी होती है। अब वह स्मार्ताग्नि पर की जाने वाली सात पाक-संस्थाओं (यागों) का अनुष्ठान करने का अधिकारी हो जाता है। उन सात पाक संस्थाओं का विवरण इस प्रकार है।

## सप्त पाकयज्ञ-संस्था

औपासनहोम, वैश्वदेव, पार्वण, अष्टकाश्राद्ध, मासिश्राद्ध, श्रवणाकर्म और शूलगव—ये सप्त पाकयज्ञ-संस्थाएँ हैं। इनका अनुष्ठान परिगृहीत स्मार्ताग्नि पर किया जाता है, उनका विवरण इस प्रकार है—

### औपासनहोम

स्मार्ताग्नि पर प्रतिदिन सायङ्काल और प्रात:काल किये जाने .वाले हवन को औपासन होम कहते हैं। यह हवन सायङ्काल और प्रात:काल दोनों समय

---

१. आवसथ्याधानं दारकाले। दायाद्यकाल एकेषाम्। (पा.गृ. १.२.१-२)
भार्यादिरग्निर्दायादिर्वा। (गौ.ध. १.५.६)
कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही। दायकालादृते वापि श्रौतं वैतानिकाग्निषु।।
(या.स्मृ. ५.९७)

हुत्वाग्नीन् सूर्यदैवत्यान्। (या.स्मृ. ५.९९)

स्मार्ताग्नि पर किया जाता है। सायङ्काल के देवता अग्नि और प्रातःकाल के देवता सूर्य हैं। दोनों ही समय स्विष्टकृत् स्थानीय प्रजापति संज्ञक देवता को द्वितीय आहुति दी जाती है। सायङ्काल और प्रातःकाल दोनों समय के कर्म को मिलाकर एक कर्म माना गया है। इसीलिए दोनों समय के हवन का हविर्द्रव्य और हवनकर्त्ता एक ही होना चाहिए। यह कृत्य सपत्नीक यजमान को यावज्जीवन करना विहित है। स्मार्ताग्नि को 'आवसथ्याग्नि' भी कहते हैं। इसी अग्नि का कुछ अंश ले जाकर पाकशाला में जो पाक तैयार होगा वही यजमान और यजमान पत्नी का भोजन होगा। पुनः पाकशाला से अग्नि को लाकर 'आवसथ्याग्नि' में मिलाना होता है।

### वैश्वदेव

प्रातःकालीन आह्निक कृत्य और औपासन होम करके वैश्वदेव किया जाता है। इस वैश्वदेव अनुष्ठान में स्मार्ताग्नि पर ओदन की आहुति दी जाती है और समस्त देवों के निमित्त आहुतियाँ और पितरों के लिए बलि प्रदान होता है[1]।

### पार्वण

अमावस्या के दिन पितृ, पितामह, प्रपितामह के निमित्त किया जाने वाला श्राद्ध पार्वण के नाम से प्रसिद्ध है[2]।

### अष्टकाश्राद्ध

हेमन्त और शिशिर ऋतु में, मार्गशीर्ष शुक्ल पूर्णिमा के अनन्तर चार अष्टमी को कर्त्तव्य श्राद्ध 'अष्टकाश्राद्ध' के नाम से प्रसिद्ध है[3]। इनमें इन्द्र, विश्वेदेवा, प्रजापति और पितृ निमित्तक अपूप और शाक से अनुष्ठान होता

---

१. अथातः पञ्चमहायज्ञाः। वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात्॰ पितृभ्यः स्वधा नमः यथार्हं भिक्षुकानतिथींश्च सम्भजेरन्। बालज्येष्ठागृह्या यथार्हमश्नीयुः। पश्चाद् गृहपतिः, पत्नी च। (पा.गृ. २.९.१-१४)। बलिकर्म भूतयज्ञः। स्वधा पितृयज्ञः। होमो देवयज्ञः। स्वाध्यायो ब्रह्मयज्ञः। अतिथिसत्क्रिया मनुष्ययज्ञः। एते पञ्चमहायज्ञा अहरहः कर्त्तव्या नित्यत्वात्।
(या.स्मृ.मि. १.१०२)

२. अपरपक्षे श्राद्धं कुर्वीत। (श्रौ.सू. १.१)

३. अष्टकास्तिस्रो भवन्ति। वर्षे च तुरीयाष्टकेति। (पा.गृ.क.भा. ३.३.१) प्रथमाष्टका आग्रहायणी समनन्तरपक्षाष्टम्यां भवति। मध्यमाष्टका पौषस्य कृष्णाष्टम्याम्। मध्यावर्षे तुरीया शाकाष्टका। (पा.गृ.ज.भा. ३.३.१)। प्रथमा ऐन्द्री। द्वितीया वैश्वदेवी। तृतीया प्राजापत्या। चतुर्थी पित्र्या। (पा.गृ.ह.भा. ३.३.१) अपूपा मण्डकाः, शाकङ्कालशाकम्। (पा.गृ.वि.भा.

है। कलियुग में गोमांस वर्जित है। अन्य शाखा में गोमांस का प्रतिनिधि कहा है। अतः अन्य शाखा वाले प्रतिनिधि द्रव्य से वर्तमान काल में भी इस अनुष्ठान को करते हैं। कात्यायन मतावलम्बी माध्यन्दिनशाखा वाले इस समय इसे नहीं करते।

### मासिश्राद्ध

पितरों के उद्देश्य से प्रत्येक मास किया जाने वाला श्राद्ध 'मासिश्राद्ध' के नाम से प्रसिद्ध है[१]।

### श्रवणाकर्म

इस कृत्य में सायङ्काल के समय सर्प को बलि दी जाती है। इस अनुष्ठान को श्रावण की पौर्णमासी को करने का विधान है[२]।

### शूलगव

'शूलगव' संज्ञक अनुष्ठान में रुद्र देवता के निमित्त हवन किया जाता है[३]। पारस्करगृह्यसूत्र में प्रतिनिधि द्रव्य का विधान न रहने से माध्यन्दिनी शाखा वाले, वर्तमान काल में इसका अनुष्ठान नहीं करते। अन्य शाखा वाले प्रतिनिधि-द्रव्य से अभी भी इसका अनुष्ठान करते हैं[४]।

## श्रौताधान

स्मार्ताग्नि के परिग्रह के बाद अच्छे समय में श्रौतविधि से श्रौताग्नि का परिग्रह करना चाहिए[५]। एक बार अग्नि का आधान कर लेने पर आहिताग्नि

---

३.३.१)। ऊर्ध्वमाग्रहण्यास्तिस्रोऽष्टकाः॰ मध्यावर्षे च तुरीया शाकाष्टकाः। (पा.गृ. ३.३.१-१३)

१. मासि मासि वोऽशनम्। (श्रौ.सू. १.१) तथा च श्रुतिः-अथैनं पितरः प्राचीनावीतिन इति। अनेन च श्रुत्युक्तहेतुना, अपरपक्षेऽमावास्यायामवश्यकर्त्तव्यत्वमुक्तम्। (श्रौ.का. १.२३)

२. श्रावणशुक्लपञ्चदश्यां भवति। (पा.गृ.ग.भा. २.१४.१) प्रथमप्रयोगे मातृपूजापूर्वकं नान्दीमुखं श्राद्धं कृत्वा आवसथ्ये कर्म कार्यम्। (पा.गृ.ग.प. २.१४.१)। अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्याम्। (पा.गृ. २.१४.१-२)

३. शूलगवः। स्वर्ग्यः पशव्यो पुत्र्यो धन्यो यशस्य आयुष्यः। रौद्रं पशुमालभेत। साण्डम्॰। (पा.गृ. ३.८,१-३)

४. ईशानाय स्थालीपाकं श्रपयित्वा। (आप.गृ. ७.१९.१३)

५. विशिष्टकाले, विशिष्टदेशे, विशिष्टपुरुषेण, विशिष्टैर्मन्त्रैर्गार्हपत्याद्यग्न्युत्पत्त्यर्थं यदङ्गाराणां निधानं तदग्न्याधेयमुच्यते। अग्नीनामाधेयमन्वाधानं तत्कर्त्तव्यमित्यर्थः। (आ.श्रौ.टी. ३.१.९)

के सकल दैनिक अनुष्ठान, सायं प्रातः हवन को प्रमुख मानकर ही हो सकते हैं और वह अग्नि आमरणान्त घर में सजीव रहती है। उसी श्रौताग्नि के द्वारा समस्त देवपितृकार्य सम्पादित किये जाते हैं। आहिताग्नि-दम्पती में से प्रथम जिसका भी महाप्रयाण होता है, उसका अन्तिम संस्कार भी उसी श्रौताग्नि से होकर अग्नि विसर्जित हो जाता है। आहिताग्नि ही अग्निहोत्र तथा इतर श्रौत याग भी कर सकता है। अतएव उसे 'अग्निहोत्री' भी कहते हैं।

'अग्निहोत्रं जुहुयात् स्वर्गकामः' इस विधिवाक्य के अनुसार प्रत्येक गृहस्थाश्रमी द्विज को स्वर्गादि इष्ट की प्राप्ति के लिए नित्य अग्निहोत्र का अनुष्ठान करना चाहिए। यह द्विजन्मा के लिए ऐसा नित्यकर्म है, जिसके न करने पर प्रत्यवाय होता है और करते रहने पर दिव्य ऐहिक और आमुष्मिक श्रेय मिलता है। आहिताग्नि के लिए यम, नियम बहुत कठोर हैं और इसकी साधना कण्टकाकीर्ण है। श्रद्धा, विश्वास और धैर्य के साथ इन अनुष्ठानों को करते रहना चाहिए। यही मानव का श्रेष्ठतम कर्तव्य है।

यह नरजन्म गुलाब के फूलों की सेज नहीं है। अलौकिक प्रेयः साधन करने के लिए श्रद्धा और विश्वास के साथ कष्ट झेलना ही धीरोदात्त मानव का कर्त्तव्य है। भागवत में कहा है—

**ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते।**
**कृच्छ्राय तपसे वापि प्रेत्यानन्तसुखाय च।।**

ऐहिक सुखों के साथ-साथ पारलौकिक सुखावाप्ति के लिए ज्योतिष्टोमादि अनेक अनुष्ठान वेद विहित हैं। जिनके सम्पादनार्थ अग्नि का परिग्रह आवश्यक है। सकल श्रौतयाग केवल आहिताग्नि के ही लिए हैं। अनाहिताग्नि को यदि कभी याग करवाने की उत्कण्ठा हो तब वह आहिताग्नि को याजमान कार्य सौंपकर उसके द्वारा ही श्रौत यज्ञानुष्ठान करवा सकता है। श्रौत की दृष्टि से वस्तुतः अग्न्याधान एक आधिकारिक कर्म है। अतः सर्वप्रथम उसका विवेचन आवश्यक है। अग्नि के आधान के लिए निम्नलिखित प्रक्रिया महर्षि कात्यायन ने बतलायी है—

जब गृहस्थ अग्नि परिग्रह करने का निश्चय कर ले तब कृष्णपक्ष की अमावस्या अथवा शुक्लपक्ष की पूर्णिमा के दिन वह अग्नि का परिग्रह कर सकता है[1]। वैकल्पिक रूप से यह भी बतलाया है कि जिस दिन कृत्तिका,

---

१. अमावास्यायां पौर्णमास्यां वादधीत। (शां.श्रौ., २.१.७)
अमावास्यायामेवाग्नी आदधीत। (श.ब्रा. ११.१.१.६)

रोहिणी, मृगशिरा अथवा फाल्गुनी प्रभृति देव नक्षत्र हों उस दिन भी अग्नि का आधान हो सकता है[१]।

कामना विशेष की दृष्टि से भी अग्न्याधान का समय निर्धारित है। यदि किसी वस्तु के लाभ की कामना हो तो गृहस्थ हस्त नक्षत्र में और क्षत्रिय चित्रा में अग्न्याधान करे।

इस सम्बन्ध में ऋतु का भी माहात्म्य है। ब्रह्मवर्चस् की कामना हो तो ब्राह्मण के लिए वसन्त[२] ऋतु, श्री की कामना हो तो क्षत्रिय के लिए ग्रीष्म[३] ऋतु, वर्षा ऋतु वैश्य के लिए और प्रजा एवं पशु की कामना हो तो वैश्य एवं रथकार के लिए वर्षा ऋतु का समय श्रेयस्कर समझा गया है[४]। शास्त्रानुसार सभी वर्णो के लिए शिशिर ऋतु में अग्न्याधान हितकर है। यदि अग्न्याधान के साथ ही सोमयाग का अनुष्ठान करना निश्चित कर लिया हो तो किसी प्रकार का मुहूर्त्त जानने की आवश्यकता नहीं है। वह किसी भी समय अग्न्याधान कर सकता है[५]। अग्न्याधान से पूर्व शरीर संस्कार के हेतु सपत्नीक गृहस्थ को अग्न्याधान के दिन से पूर्व दिन उपवास करना आवश्यक है। उदाहरणार्थ, यदि शुक्लपक्ष की पूर्णिमा को आधान अभिप्रेत हो तो शुक्लपक्ष की चतुर्दशी को उपोषण करना चाहिए और यदि अमावास्या के दिन अग्न्याधान का मुहूर्त्त है तो पहले दिन चतुर्दशी को उसे व्रती रहना होगा।

---

अमावास्यायामग्न्याधेयम्। (का.श्रौ. ४.७.१)
यदहरस्यश्वो वाग्न्याधेयं स्याद् दिवैवाश्नीयात्। (श.ब्रा. २.१.४.१)
यदहरेवैष न पुरस्तान्न पश्चाद् दृश्येत तदहरुपवसेत्। (श.ब्रा. ११.१.१.४)
अमावास्यायां पौर्णमास्यां वा आधेयः। (आप.श्रौ. ५.३.१६)

१. कृत्तिकासु रोहिण्याम्। (आ.श्रौ. २.१.१)
कृत्तिकारोहिणीमृगशिरःफल्गुनीषु। (का.श्रौ. ४.७.२)

२. वसन्ते ब्राह्मणस्याग्न्याधेयम्। (शा.श्रौ. २.१.१)
वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः। (का.श्रौ. ४.७.५)

३. ग्रीष्मे क्षत्रियस्य। (शा.श्रौ. २.१.२)
ग्रीष्मः क्षत्रियश्रीकामयोः। (का.श्रौ. ४.७.६)

४. वर्षासु वैश्यस्य। शिशिरःसर्ववर्णानाम्। (शा.श्रौ. २.१.३-५)
वर्षाः प्रजापशुकामवैश्यरथकृताम्। (का.श्रौ. ४.७.७)

५. सोमेन यक्ष्यमाणो नर्तुं पृच्छेन्न नक्षत्रम्। (आ.श्रौ. २.१.१)
याथाकाम्यमृतूनां सोमेन यक्ष्यमाणस्य। (शा.श्रौ. २.१.६)

## अग्न्याधान से पूर्वदिन का कृत्य

अग्निपरिग्रह से पूर्व अग्निशाला की रचना सम्पन्न करें[क]। वस्तुतः वास्तुशास्त्र एवं शिल्पविधि से अग्निशाला का निर्माण तो सूत्रोक्त प्रकार से पूर्व में ही सम्पन्न हो जाना चाहिए तथापि अग्निशाला का प्रसाधन तो अग्न्याधान के ही दिन करना उचित है।

## गार्हपत्यागार एवं आहवनीयागार

गार्हपत्य एवं आहवनीय की पृथक्-पृथक् शाला बनाने का एक प्रकार शास्त्रों में कहा है। ये दोनों मिलकर एक अग्निहोत्र शाला कही जाती है। इसमें गार्हपत्यागार यजमान पत्नी का और आहवनीयागार यजमान का होता है। एक आगार में से दूसरे में जाने के लिए गार्हपत्यागार के पूर्व में और आहवनीयागार के पश्चिम में एक-एक द्वार होता है। अन्य वेदि और खर प्रभृति दर्शपौर्णमासयागविहार के समान होना चाहिए। मानचित्र[ख] निम्नवत् है—




---

(क) अग्निशाला की विस्तृत जानकारी के लिए मेरे द्वारा सम्पादित 'मा. शतपथब्राह्मणम्' (प्रथम खण्ड) की भूमिका में दर्शपौर्णमासयाग प्रकरण देखें।

(ख) १. यजमानपत्नी का गार्हपत्यागार, २. यजमान का आहवनीयागार, ३. गार्हपत्यखर, ४. दक्षिणाग्निखर, ५. आहवनीयखर, ६. गार्हपत्य और आहवनीय की मध्यरेखा, ७. सभ्यखर, ८. आवसथ्यखर, ९. वेदिस्थान।

### अग्न्याधान का कार्यकलाप

अधिकारप्राप्त्यर्थ प्रायश्चित्त, ऋत्विजों का वरण, अरणीग्रहण, अग्निमन्थन, ब्रह्मौदनप्रदान, अज उपस्थापन, अश्वपरिक्रमण, सामगान, पूर्णाहुति, अग्निहोत्रहवन, पवमानेष्टि, द्विहविष्केष्टि, आदित्येष्टि, शेषविधि।

### अग्न्याधान की सामग्री

प्रायश्चित्तार्थ द्रव्य, मातृपूजन सामग्री, आभ्युदयिक (श्राद्ध) सामग्री, ऋत्विज, अज, अश्व, अरणी, पूर्णाहुति सामग्री, अग्निहोत्रहवन सामग्री, पवमानेष्टि सामग्री, द्विहविष्केष्टि सामग्री, आदित्येष्टि सामग्री।

### कार्यारम्भ

यजमान और पत्नी नवीन और धौतवस्त्र पहने[1]। पूर्वद्वार से यजमान और दक्षिणद्वार से पत्नी यज्ञशाला में प्रविष्ट हों[2]। ऋत्विज लोग यज्ञशाला में पूर्व द्वार से प्रविष्ट हों। सपत्नीक यजमान पूर्वाभिमुख बैठे। ब्रह्मा, होता, अध्वर्यु और आग्नीध्र ये चार ऋत्विज यजमान के निकट बैठें।

इष्टदेवता का चिन्तन कर कार्यारम्भ करें। प्रारम्भ में देहशुद्धि पूर्वक अधिकार प्राप्ति के निमित्त निश्चित द्रव्य लेकर सङ्कल्प करे। मातृपूजन और आभ्युदयिक श्राद्ध करे[3]। अनन्तर बायें हाथ में वज्र और दाहिने हाथ में यव ले। दाहिने हाथ से ऋत्विजों की दक्षिण जानु को छूकर क्रमशः वरण करे[4]। ब्रह्मा, होता, अध्वर्यु और आग्नीध्र का क्रमशः वरण करे। यही ऋत्विजों के वरण का क्रम प्रत्येक स्थान पर जानना चाहिए। वरण के अनन्तर ऋत्विजों का अर्चन और सत्कार करे। ऋत्विज लोग यजमान को आशीर्वाद प्रदान करें।

---

१. क्षौमे वस्तेऽहते पत्नी च। (का.श्रौ. ४.७.१२)

२. दक्षिणपूर्वे द्वारे। (का.श्रौ. ४.७.१०)

३. मातृपूजा और आभ्युदयिक श्रौतसूत्र में नहीं पाया जाता। इनका वर्णन पद्धतिकारों ने किया है—'मातृपूजापूर्वकम्'। (दे.प.पृ. ९८)

४. अमुकसगोत्र अमुकनाम शर्मन् नित्यनैमित्तिककाम्यकर्मानुष्ठानार्थं श्रौताग्नीनहमाधास्ये। तत्र मे त्वं ब्रह्मा भव। (दे.प.पृ. ९८)। अथ वितानस्य ब्रह्मा कर्मणि ब्रह्मवेदविद्दक्षिणतो विधिवदुपविशति वाग्यतः। (वै.श्रौ. १.१)

अध्वर्यु शमीगर्भ अश्वत्थकाष्ठ की अरणी यजमान को दे[१]। यजमान और पत्नी मन्थन करके अरणी से अग्नि को प्रकट करें। आवश्यकतानुसार अग्निमन्थन कार्य में अध्वर्यु सहायक हो। अथवा किसी सदाचारी वैश्य के घर से, भ्राष्ट्र (भडभूजे) से या रसोई घर से अग्नि ले आवे। गार्हपत्यखर पर अग्निस्थापन करे[२]। सूर्यास्त के समय यजमान आहवनीय खर के पूर्व में बैठकर देव और पितृ का आह्वान करे। अग्निशाला में बकरी बाँधे। बकरी यदि यजमान की निजी हो तो दूसरे दिन प्रातःकाल आग्नीध्र को समर्पित करे[३]। चातुष्प्राश्य संज्ञक भात पकाकर ऋत्विजों को प्राशनार्थ दें[४]। ऋत्विजों को वरदान दे। इतना कृत्य प्रथम दिन समाप्त करे।

स्मार्ताधान के अनन्तर वैकल्पिक ठीक एक वर्ष के पूरे होने पर भी श्रौताग्नि का आधान किया जा सकता है[५]। प्रारम्भ में गार्हपत्य खर से पश्चिम में अरणी से अग्निमन्थन करके अग्नि को प्रकट करें। मन्थन के समय गार्हपत्य से पूर्व में अश्व खड़ा रहे[६]। अग्नि उत्पन्न होने पर अध्वर्यु को वरदान दे[७]। यजमान अग्नि पर अपना श्वास छोड़े और अग्नि की ज्वाला अपने मुँह में ले[८]। अध्वर्यु ब्रह्मा को रथन्तर सामगान करने के लिए प्रैष करे। ब्रह्मा उपर्युक्त साम का गान करे। गार्हपत्य में से अग्नि लेकर आहवनीय में स्थापित करे। इस अवसर पर ब्रह्मा वामदेव्य साम का गान करे। अश्व को घुमावे। इस समय ब्रह्मा बृहत्साम का गान करे। अश्व के पद-चिह्न पर अग्नि रखकर तब आहवनीय में रखे। यदि गार्हपत्य की तरह आहवनीय खर में भी सतत अग्निरक्षण का पक्ष स्वीकार करना हो तो पहले गार्हपत्य में से जो अग्नि

---

१. अश्वत्थशमीगर्भारणी प्रयच्छति। (का.श्रौ. ४.७.२०)

२. गार्हपत्यागारे निर्मथ्याभ्यादधाति। वैश्यकुलाम्बरीषमहानसाद्वा। (का.श्रौ. ४.७.१५) अग्निप्रणयनमन्त्र, यत्वाक्रुद्धाः प्रचक्रुः.। (अ.सं. १२.२.५)

३. विद्यमानं प्रातरग्नीधे दद्यात्। (का.श्रौ. ४.८.१)। अश्वपदानुमन्त्रण मन्त्र—समध्वरायोषसो नमन्त०। (अ.सं. ३.१६.६)

४. चत्वार ऋत्विजः प्राशनन्ति। (का.श्रौ. ४.८.६)। ब्रह्माणं देवमुद्दिश्य होमार्थं ब्राह्मणानामृत्विजां च प्राशनार्थं च पच्यमान ओदनो ब्रह्मौदनः। (तै.ब्रा.भा. १.१.९)

५. संवत्सरं वा पुरस्तात् कुर्यात् ततः सर्वानादधीत। (का.श्रौ. ४.८.९)

६. स्थितेऽश्वे पुरस्तात्। (का.श्रौ. ४.८.२३)

७. जाते वरदानम्। (का.श्रौ. ४.८.२४)

८. उच्छ्वासोऽमृतं प्राण आदधे। (का.श्रौ. ४.८.२७)

